# चारुचरितचर्चा



लेखक :

आचार्य रमेशचन्द्रशुक्लः, एम. ए., पी-एच. डी.

श्री वार्ष्णेय कालेज,

भू. पू. आचार्य, संस्कृत-विभाग,

अलीगढ़

...चार्य [illegible]

१. प्रबन्ध रत्नाकरः
२. नाट्य-संस्कृति-सुधा
३. गान्धि गौरवम् ( उत्तरप्रदेशशासनपुरस्कृतम् )
४. लालबहादुरशास्त्रि चरितम्
५. भरतचरितामृतम् (उत्तरप्रदेशशासनपुरस्कृतम्)
६. विभावनम्
७. बंगलादेशः
८. गीतमहावीरम् ( उत्तरप्रदेशशासनपुरस्कृतम् )
९. संस्कृत वैभवम्, सम्पादितो ग्रन्थोऽभिनन्दनात्मकः
१०. संस्कृत प्रबन्ध प्रभा
११. इन्दिरा यशस्तिलकम्

प्राप्तिस्थानम्—

(अ) सुधाकमल ग्रन्थालयः,
२६३, उत्तरी गान्धी कालोनी,
मुजफ्फर नगर, (उ. प्र.)

(आ) वाणी-परिषद्, आर-६,
उत्तम नगर, वाणी-विहार,
नई दिल्ली-११००५९

**श्रीः**

**अलीगढ़ संस्कृत-परिषदो नवमं पुष्पम्**

**चारुचरितचर्चा**

*** "शिक्षा-समाजकल्याण मन्त्रालय, भारतशासन-प्रदत्तार्थिक ६०% सहायतया प्रकाशिता चारुचरितचर्चा" ***

*

प्रकाशने वितरणे चाधिक्रियते—
**सुधाकमल-ग्रन्थालयः**
२६३, उत्तरीगान्धी कॉलौनी,
**मुजफ्फर नगर—२५१००१**

*

मुद्रक :
**श्री हर्षगुप्त**, राष्ट्रीय प्रेस, मथुरा

*

संस्करणम् प्रथमम् : १९७७-७८
**मूल्यम्** :
37/-

*

लेखक :
**डा० रमेशचन्द्र शुक्लः**, एम. ए., पी-एच. डी.
**सांख्य योगाचार्यः, साहित्याचार्यः, साहित्यरत्नम्**

CHARU CHIRITA CHARCHA
(Sanskrita Prose)

By :—Shukla, Ramesh Chandra.

Rs : 37/-



# प्रणमनम्—

भूत्वा यत्र हरि श्चकार जगतः कल्याण हेतोः प्रियाः
लीलाः कल्मषहारिणीः रघुपतिः श्रीजानकीवल्लभः
कृष्णश्चापि भवन् स लोकहितकृद् धर्मं नयं शाश्वतं
सर्वत्र त्यतनोच्छुभञ्च शरणं श्रीवासुदेवप्रभुः

जेतुं यस्य यशो न भूमिभुवने देशो न कोऽपि क्षमो
नोत्कर्षं न च गौरवं शुचितमं नो संस्कृतिं पावनीम्
ऐतिह्यं न महोज्ज्वलं ह्यनुपमं ज्ञानं न तेजो महत्
वन्दे तत् प्रियभारतं सविनयं श्रेयस्करं दैवतम्,





## समर्पणम्

भक्तानां भरतावनेः कृतिरियं तेषां मया सादरं
सेवायां विनयाञ्चितेन मनसा येषां शुभैः पावनैः
आचारैर्जगतीहितैकपरकैः श्रेयस्करैरर्प्यते
संसारः सकलोऽभवच्छिवपथारूढः सदाचारवान्

समर्पयिता—**रमेशचन्द्रः शुक्लः**

※ श्री ※

# निवेदना


लेखकः

येयं 'चारुचरितचर्चाभिधाना रचना पत्रपुष्पफलपयस्त्वेन मातुः सरस्वत्याः श्री चरणयोः सप्रश्रय मर्प्यते; तस्या मेतस्यां कतिपयानामेव महापुरुषाणां सतां महात्मना माचार्याणां विद्वद्वराणां कवीनां राजनीतिज्ञानाञ्च मतिमतां लोककल्याणकारीणि पावनानि चरित्राणि संस्कृतभाषायां गीतानि सन्ति । विश्वस्यान्यान्यभाषासु चिरत्रचित्रणपरकाणि पुस्तकानि भूयांसि प्राप्यन्ते; परं गीर्वाणवाण्यां कदाचित् तद्विधानि सन्ति न्यूनान्येव । अतः कृति रियं कृतास्ति । एतादृशं ग्रन्थ मधीत्याध्येतृष्ववदाततरस्य सच्चरित्रस्य समुन्मेषः सद्गुणानाञ्चोद्भवः सम्भव, एतावदेव न, भगवति धर्मे संस्कृतौ, राष्ट्रे च तेषां भक्तेः समुन्मीलनं सम्भवम् । येनोद्देश्येन पुस्तक मिदं विरचितं तत्र चेदेतत् सफलता मभ्युपैति तदा लेखक आत्मानं कृतकृत्य मवगच्छेत् ।

अस्मदीयानां तेषां पाठकानां संख्या परितोषावहा विद्यते ये पुरातनेषु ग्रन्थेषु नैजं चेतो रमयन्ति; परं नवासु रचनासु मनागपि तेऽभिरुचिं निदधति । न च प्रायेण प्रत्नानां नूतनानाञ्च पुस्तकानां संग्रहणे तेष्वौत्सुक्यं जागर्ति । छात्राः परीक्षासु नियतान् ग्रन्थानेवाधीयते न च तदितरान् । ईदृशी प्रकृति र्वा प्रवृत्ति र्नूनं संस्कृताभ्युत्थानपथे प्रत्यवायान् जनयति । संस्कृतपुस्तकानां क्रयणेन नवीनानामनवीनानाञ्च पुस्तकाना मनुशीलनेनाध्ययनेन प्रणयनेन पाठनेन च संस्कृतवाङ्मयस्य संवर्धनं जायते; नवलेखकाना मुत्साह एधते देवगवी च स्वजीवनाय प्रौढतरं बल मधिगच्छति । अपि किमिदं न सत्यम् ?

अस्माकं संस्कृतवाङ्मयं परमविशालम् । तदनन्यगं गरिमाणं विभर्ति । तत्र सन्ति परः सहस्राणि पुस्तकानि विविध विषयविभूषितानि, परं तानि पुस्तकान्यन-

धीतान्येव भूत्वा पुस्तकालयेषूपसंहृतजीवनानि भवन्ति । न तद्दिशायां कोऽपि स्वां दृष्टिं क्षिपति । कश्चिद् विरल एव तत्र दृष्टिमस्यति स्वकीयाम् । किमिद मनृतम् ?

प्रमादादेवास्मदीयात् सा सर्वाङ्गसम्पन्ना समृद्धसाहित्यसुसेविता भारतनिधिभूतेयं संस्कृतभाषा राष्ट्रभाषार्हतां जुषाणापि हन्त, राष्ट्रभाषत्वेन न मता भवति अयमस्माकमेवापराधो यद्धेतो स्त्रिभाषासिद्धान्तिभिः सावज्ञायते । नेदं किमनितथम् ?

अस्माभि र्भारतीयै र्विपश्चिद्भिस्तथा प्रयतितव्यं यथा संस्कृतभारती स्वदेशे समुचितं सम्मानं लभेत व्यवहारे च परिणतं जायेत ।

आशासे, चारुचरितचर्चायां संस्कृतजगती स्वानुग्रहं प्रदर्शयिष्यति तत्रत्याश्च तास्तारशुद्धी रपि क्षंस्यते या मम मुद्रणालयीयाक्षर नियोजकानाञ्च प्रमादात् मुद्रणालये च संस्कृतग्रन्थमुद्रणापेक्षिप्रतिपत्त्यभावाच्च सञ्जाताः सन्ति ।

एतस्याश्चारुचरितचर्चायाः मुद्रापण—प्रकाशनप्रयोजनेन केन्द्रीयशिक्षा समाजकल्याणमन्त्रालयेन प्रतिशतं षष्ठिरूप्यकाणि प्रदाय लेखकोऽयं रमेशचन्द्रः शुक्लोऽनुगृहीतः कृतोऽस्ति । अतः लेखकः पुनः पुनः भारतशासनश्रीचरणयो र्नैजं कृतज्ञताञ्जलिं प्रणतिपूर्वकमर्पयति । न पुस्तकस्य तादृशं प्रकाशनं कर्तुं महं प्रभावं यादृशंमनमनोऽभिलषते स्म । तत्र कारण मस्ति ममाकिञ्चनत्वम् । नाहं पुस्तकं सचित्रं विधातुं मशकं न च मानसाकर्षकसौन्दर्याधायककलाकलितम् । शासनन्तु यदपि धनं प्रयच्छति तत् तदा ददाति यदा पुस्तकं मुद्रितं प्रकाशितञ्च भूत्वा तत्सेवाया मुपस्थितं जायते । एतस्यां दशायां शासनदास्यमानधनावाप्तेः प्राक् लेखकस्य सकाशे तावता धनेन भवितव्यं यावता मनोऽभिमतरीत्या पुस्तकं प्रकाशितं भवितुं मर्हेत् । अपि किं मादृशेषु दरिद्रेषु लेखकेषु न्यायं स्वकीयं कृपाञ्च स्वकीयां कर्तुं कदापि नैजं हृदय मावर्जयेत् ?

ग्रन्थस्यास्य मुद्रणादिकार्याणि 'राष्ट्रीयप्रेस' संज्ञकेन ( डैम्पियर नगर, मथुरास्थितेन) मुद्रणालयेन कृतानि सन्त्यतस्तदधीश्वरं श्रीमन्तं हर्षगुप्तम्प्रति लेखको भूयोभूयः धन्यवादान् व्याहरति ।

अथ च चेन्मदीयोऽनुज आयुष्मान् प्रो० चिन्तामणिः शुक्लः साहित्यकारोऽनुकूलताप्रदानि साधनानि नोपास्थापयिष्यत् तदा ग्रन्थस्यैतावत्या समीचीनतया प्रकाशनमपि सम्भवं नाभविष्यत् । तस्मान्मामकीनास्तस्मिन् मुहु र्मुहुः शुभाशंसाः ।

**रमेशचन्द्र शुक्लः**

ए—१।२०३, जनकपुरी,
नई दिल्ली—११००५८

※ श्री ※

# अनुक्रमः

## (ए)

———

:: श्री ::

# वाक्

यदायं लोको वेदालोक मासाद्य बभूव ज्योतिष्मांस्तदा प्रादुर्भूतेषु बहुषु महर्षिषु कश्चिद् अम्भृणो नाम महर्षि र्भुव मिमा मपुनात् । तस्यैवासीत् कन्या वाक् । सर्वकारणैकभूतायाः सच्चिदानन्दाख्यायाः शक्तेः सा आत्मनोऽपृथक्त्व मजूघुषत् । आमनति स्म सा—

ॐ अहं रुद्रेभि र्वसुभिश्चराम्यह मादित्यै रुत विश्वदेवैः
अहं मित्रावरुणाभा बिभर्म्यह मिन्द्राग्नी अहमश्विनोभा
अहं राष्ट्री संगमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम्
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्राँ भूर्यावेशयन्तीम् ॥

( ऋक्० १०, १२५, १, ३ )

वाग् अद्वैत सिद्धान्त मुपन्यस्यन्ती, ब्रह्मद्वेषिणः संहर्तुं रुद्रस्य शरासनं सज्यं विदधती, जन्यानां वितानं वितन्वन्ती च समशोभत । तदीयं पावनं चरित्र मृग्वेद कालवर्तिनीनां भामिनीना मुदग्रतमां स्थिति मस्मत्पुरतः आकृतिमती मनुतिष्ठत् समुपतिष्ठति ।

अहह, तदीयं शक्तिमत्स्वरूपं, प्रसन्नाननत्वं, स्वतन्त्रतोपासकत्वम्, अद्भुतज्ञान शेवधित्वञ्चास्मन्मनसि परामेव मुदं जनयन्ति ।

अहो, बभूव सास्माकं राष्ट्रस्य दिव्यो महिमा महीयाँश्च गरिमा ।

नमामि तां वाच महं श्रुति श्रितां
जगत् सुहृन्मन्त्रविभाप्रकाशिनीं
महीयसीं ब्रह्मनिलीनमानसां
सरस्वतीं ज्ञानमहोमहोज्ज्वलाम्



# मनुः

आर्य जनताया युगान्तरव्यापिनो जीवनस्य स्थिराया धर्मशिलायाः प्रतिष्ठापकेषु महापुरुषेषु मनुः अप्रतिमेन तेजः पुञ्जेन विद्योतते । मनुः प्रथमः प्रजापतिः । प्रजानां संवर्धनाय वाञ्छितताना मपेक्षितानाञ्च प्रशस्तानां नियमाना मुदाराणाञ्च जीवनक्रमाणां कृते मनोर्नाम आर्यं संस्कृत्यां सुन्दर प्रतीकत्वाय कल्पते । अस्मदीयस्य सहस्रमुखस्य जीवनस्य शासकत्वान्मनो, र्वस्तुतः श्रेयस्कता तमेव याति; न चान्यं कमपि ।

मनुः केषाञ्चन सुस्पष्टानां सुनियतानाञ्च निदर्शनानां प्रतिनिधित्व मनु-तिष्ठति । चेद् वय मादरणीयानां प्राप्तव्यानां राजपथेऽग्रेसरा बुभूषवस्तदा मनुप्रतिपादितस्य धर्म-स्यावगमनं सम्यक् च परीक्ष्य तं, तस्य व्यवहरण मतितरामभिकाङ्क्षणीयमस्ति । ऐतिहासिकात् तिथिक्रमान् मनु र्वर्तते परस्तादेव । तन्नाम्नि सत्युपस्थिते सभ्यता यास्तत् तुषारार्द्रं प्रभातं दृग्गोचरतां प्रपद्यते यत्रोषः कालवर्तिनां सवितृरश्मीणां प्रकाशे देवो मानवश्च—उभावपि—युगपद् विचरन्तौ प्राप्येते । तस्य युगस्य गाथानां निकुरम्ब मुच्छेद्यैतिहासिकस्य तथ्यस्य, पुराणानाञ्च कल्पनाया विश्लेषणं दुष्करं कार्यम् । इयं हि दुष्करता न भारतस्यैव पुरः, अपि तु जगतोऽन्येषामपि देशानां समक्षे सन्तिष्ठते । यदि वयं स्वकीयं कौतूहलं वशीकर्तुं प्रभवेम तदा मानवजातेः पूर्वआनधिकृत्य सत्यस्य कल्पनाया श्च मिश्रणं न हानिविशेषाधायकम् । तदीयं यत् प्राणवच्चित्रण मस्मदिष्टं तदस्मन्मनोराज्येऽखिलस्यापि जातीयस्य जीवनस्य विराड् वस्तु भवत् सम्पूर्णकालगामितयाभिव्याप्तं पर्यवलोक्यते ।

मनु रस्मदीये जातीये जीवने दवीयसीं भुवमभिव्याप्य विराजते । तत्प्रतिपादितस्य धर्मस्य सान्द्रतरः प्रभावोऽस्माकं सामाजिकं वैयक्तिकञ्च जीवनं दीपयति । देशान्तरीयेष्वितिहासेषु ईदृशानि नामानि प्राप्यन्ते यानि मनु-नामसाम्यं बिभृति । केषाञ्चन विदुषां मतेन बवेरु (बेविलान) सु-मेरुदेशीयग्रन्थेषु खृैस्त-यवनधर्म श्रितेषु च ग्रन्थेषु वर्णितस्य नूहस्य शतपथब्राह्मणोद्गीतपयःप्रलय समयवर्तिना मनुना सार्धं मवश्यमेव कोऽपि सम्बन्धः प्रतीयते । पुरातनस्य क्रीठद्वीपस्यादिमः सम्राट् 'मिनौस्' अपि मनुमनुहरति । मिश्रदेशस्य परम्परायाञ्च प्रथमो राजा 'मेंनौज' प्राप्तो भवति ! एतेषां मूले कस्यचनैकस्यैव मनोः परम्परा प्रच्छन्नेव प्रतिभाति ।

भारतीये वाङ्मये सन्ति चतुर्दश मनवः । तन्नाम्ना मन्वन्तराणि प्रख्यातानि सन्ति । मन्वन्तराणां कालविभागस्य प्रचलितत्वं कस्य नामाविदितम् ?

मानवसृष्टेः प्रवर्तको मनुः स्वयम्भुवः पुत्रो मतस्तस्मादसौ स्वाय म्भुव इत्यभिधीयते । स्वायम्भुवो मनु धर्मशास्त्रञ्चकार, कृतवांश्च धर्मोपदेशमिति पाञ्चरात्रागमो ब्रवीति । अस्मदीय वर्तमानं मन्वन्तरं येन मनुना प्रसिद्ध्यति स वैवस्वतो मनु रिति निगद्यते । भारतीयश्रुत्यनुसारं वैवस्वतो मनु रेव सुविदितस्येक्ष्वाकुकुलस्यादिमः सम्राट् । वैवस्वतमनु-सम्बद्धस्येक्ष्वाकुवंशस्य राजपरम्परैव प्रत्नस्य भारतीयतिथिक्रमस्य मेंरुदण्ड इति वक्तु सुशकम् । वेदेषु प्रणव इव नृपतिषु मनुः ।

मनुः धर्मं निरूप्य भृगु माचारं निर्वक्तु मनूनुदत् । वर्तमानाया मनुस्मृतेः संस्करणं भृगुवंशधराणामाचार्याणां कृति रिति विद्वांसो मन्यन्ते । जर्मनीयो विश्रुतो दार्शनिको नित्से 'मनुस्मृतिः बाईविलाद् गरीयसी; सा महामस्तिष्कस्य समुद्भव' इति वदति ।

मनुपरिकीर्तितस्य धर्मस्य महनीयता मनुस्मृता वितथमुपश्लोकिता––

यः कश्चित् कस्यचिद् धर्मो मनुना परिकीर्तितः ।
सः सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः ।। २।७

धर्मे हि किं प्रमाण मित्यत्रोक्तम्––

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।
आचारश्चैव साधूना मात्मन स्तुष्टि रेव च ।। २।६

स्वाध्यायादिकत्वस्य मोक्षे कारणत्वमाम्नातं तत्र––

स्वाध्यायेन व्रतै र्होमैस्त्रैविद्येनेज्यया सुतैः ।
महायज्ञैश्च यज्ञैश्च ब्राह्मीयं क्रियते तनुः ।। २।२८

संस्कारैः पापानि नश्यन्तीत्येतदस्मिन् विषये उक्तम्––

गार्भैः र्होमै र्जातकर्म चौलमौञ्जीनिबन्धनैः ।
बैजिकं गार्भिकं चैनो द्विजानामपमृज्यते ।। २।२७

जीवनं तदैव श्रेयः प्रेयश्च पश्यति यदेन्द्रियसंयमः क्रियते––

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्न मातिष्ठेद् विद्वान् यन्तेव वाजिनाम् ।। २।८८
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ।। २।९३

मनूक्तः श्लोक इहैको निधीयते यत्र मानवमात्रस्य कल्याण मुपस्थापितम्––

न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ।। २।९४

वेदाध्ययन-यज्ञ-तपोदानादिकानि तदैव सफलानि भवन्ति यदा हि मानवस्य मनो भवति विषयभोगभावनानासक्तम्

वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥ २।९७

एकस्यापीन्द्रियस्य विषयलीनत्वाद् बुद्धिर्नश्यति—

इन्द्रियाणान्तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥ २।९९

प्रातः सायञ्च संध्योपासना कर्त्तव्यैव—

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम् ।
स शूद्रवद् वहिष्कार्यः सर्वस्माद् द्विजकर्मणः ॥ २।१०९

विद्यास्ति विप्रस्य शेवधिः—

विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाश्च मां मा दास्तथा स्यां वीर्यवत्तमा ॥ २।११४

शिक्षकस्य मान्यता सर्वाभ्योऽपि मान्यताभ्यो गरीयसी—

लौकिकं वैदिकं वापि तथाऽऽध्यात्मिकमेव च ।
आददीत यतो ज्ञानं तं पूर्व मभिवादयेत ॥ २।११७

वृद्धाः सन्ति बन्दनीयाः । यस्तान् बन्दते स आयुः विद्यां यशो वलञ्च लभते—

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशोवलम् ॥ २।१२१

मातु र्गरीयस्कत्वं गीयते—

उपाध्यामान् दशाचार्य आचार्याणां शतं पिता ।
सहस्रन्तु पितॄन्माता गौरवेणातिरिच्यते ॥ २।१४५

अनूचान एवास्माकं महान्—

न हायनै र्न पलितै र्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ २।१५४
न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाऽप्यधीयानस्तं देवाः स्थविरं विदुः ॥ २।१५६

मातुः पितुश्च ऋणात् कदापि सन्ततिं निष्कृतिं प्राप्तुं न प्रभवति, तावथ चाचार्यः सदैव निषेवणीया; ते सन्ति परमं तपः इत्येतच्च ब्रुवाणो मनु स्तेषां श्रेष्ठत्वं सर्वस्वत्वञ्च निदधाति—

त एव त्रयो लोकास्त एव त्रय आश्रमाः ।
त एव हि त्रयो वेदास्त एवोक्ता स्त्रयोऽग्नयः ॥ २।२३०

न नार्यः कदाप्यवमाननीयाः—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥ ३।५६

पञ्च यज्ञान् प्रतिपादयन् मनु स्तेषां कर्तव्यत्वं निर्दिशति—

अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो वलि र्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ३।७०
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः ।
स गृहेऽपि वसन्नित्यं सूनादोषै र्न लिप्यते ॥ ३।७१

गृहस्थाश्रमः सर्वाश्रमेभ्यः श्रेष्ठः—

यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ ३।७८

आचारः कल्याणानामास्पदं, सः सदैव रक्षणीयः—

आचाराल्लभते ह्यायु राचारादीप्सिताः प्रजाः ।
आचाराद् धन मक्षय्य माचारोहन्त्यलक्षणम् ॥ ४।१५६

धर्म एव मानव मनुयाति—

मृतं शरीर मुत्सृज्य काष्ठलोष्टसमं शितौ ।
विमुखा बान्धवा यान्ति धर्म स्तमनुगच्छति ॥ ४।२४१

राज्ञो धर्मं निरूपयन् मनु र्दण्डस्योपकारकत्वे प्रकाशं क्षिपति—

दण्डः शास्ति प्रजाः सर्वा दण्ड एवाभिरक्षति ।
दण्डः सुप्तेषु जागर्ति दण्डं धर्मं विदुर्बुधाः ॥ ७।१८

मनो दृष्टि रासीत् सूक्ष्मदर्शिनी दूरगामिनी च । स वर्णाश्रम-संस्कारराजधर्म-वाद-विवाद-धर्मार्थकाममोक्षादिकान् सर्वानपि विषयान् सम्यक् स्पष्टतयोपपादयन् तास्ताः सर्वा अपि समस्याः समीचीनतया समाधत्ते ।

तत्कृतायां स्मृत्यां तदीयाया मेधाया स्तिग्मत्वं साध्ववगतं जायते । धियः सर्वे गुणा स्तत्प्रतिभायां व्यलसन् । आसीत् स विश्वस्य परमोपकर्तैत्यत्रन संशयः ।

संसारमङ्गलविधायकवृत्तनिष्ठं
सन्नीतिमञ्जुलगुणं जगदेक बन्धुं
मान्यं मनुं निखिलधर्म रहस्य विज्ञं
वन्दामहे सविनयं हि शुभंयुधीरम् ॥

———

# याज्ञवल्क्यः

अस्ति भारत मृषिमुनीनां धरित्री। युगे युगे, काले काले चात्रेदृशाः पुरुष-श्रेष्ठाः सञ्जायन्ते ये सकलाः सम्पदः सर्वविधानि च सुखान्यपि परित्यज्य ज्ञानमवरिषत। तैं विरागिभि र्मनीषिभिः समुद्भाविते ज्ञानप्रकाश एव भारतीय समाजश्चिरात् स्वकीयमध्वानं निश्चिन्वानः परिलक्ष्यते। ते महापुरुषाः सांसारिकेभ्यो वन्धनेभ्य उन्मुक्ता भवितु॑ यतमाना नैजं जीवनं समाज श्रेयसे समर्पितवन्तः। यान् संश्रित्य समाजो युगयुगान्तं यावद् धर्मार्थकाममोक्षानधिगन्तु मर्हेत् तानुत्कृष्टान् सिद्धान्तान् ते प्रादौदृशन्। वैदिकस्यानेहसोऽन्यतमविभूति र्याज्ञवल्क्योऽपीदृशेषु महापुरुषेषु गण्यते।

याज्ञवल्क्यो ज्ञानमण्डलस्य यान् विविधान् बहुलांश्च भागान् समुद्भासयन् संलक्ष्यते तानवलोक्य तु 'स बहुज्ञ आसीदि' त्येतदपि कथनं तम्प्रति न पर्याप्तं प्रतिभाति। यदा वृहदारण्यकोपकिषदि तद् दर्शनं लभामहे तदा सोऽध्यात्मविद्यायाः साक्षादवतार इव प्रतीयते। यदा च वयं तं याज्ञवल्क्यस्मृता वीक्षामहे तदा स महान् समाजशास्त्री धर्मव्यवस्थाकृद् विधिविधातेव प्रतिभासते। न कापि सामाजिकी समस्या तद्दृष्टया आत्मानं निह्नोतु मशकत्। आसीत् स वस्तुतो लौकिकताया अलौकिकतायाश्च गरीयान् समन्वयः।

याज्ञवल्क्यो मिथिलामध्युवास। आसीत् तस्य पिता वाजसेनी। प्रथमं स उद्दालकादारुणे र्गुरो र्विद्यामाददे। ततश्च सः स्वमातुलस्य महर्षिवैशम्पायनस्य शिष्यो वभूव। परमेकस्या घटनाया घटितत्वात् स वैशम्पायन मजहात्। एकदा सः पितृश्राद्धे संलग्नत्वात् ऋषिगोष्ठ्यां नान्वेतु मात्मानं प्रबभूव। अतः स वाचिकीं ब्रह्महत्यामुपेयिवान्। सः स्वकीयान् सर्वानपि शिष्यांस्तदघमर्षणाय प्रायश्चित्तमनुष्ठातु मादिदेश। महर्षे र्भगिन्याः सुतत्वाद् याज्ञवल्क्यस्य प्रगल्भतातितरां वृद्धिं गतासीत्। सर्वैश्छात्रैः प्रायश्चित्तपरै र्न भाव्य महमेकाक्येव प्रायश्चित्तं विधास्यामीति स यदवदत् तत्तस्य प्रगल्भत्वं मत मभूत्। अतस्तस्मै वैशम्पायनोऽक्रुध्यत्। स न ब्राह्मणान्तेवासिना मपमानं सोढुं शशाक। श्रुतेरध्ययने प्राप्त मुपाधिपत्रं तस्य परिगृहीत मभूत्। याज्ञवल्क्य इदं सहर्ष मसहत। ऋषयस्तित्तिरास्तस्माद्ज्ञानधाम्नो यद् ज्ञानमविन्दन् तद् यजुषस्तैत्तिरीयशाखेति नाम्ना प्रथते।

याज्ञवल्क्यः प्राप्ते श्रुतिशास्त्रपरकज्ञाने नातुष्यत् तत्र सः पूर्णां विद्वत्ता मवाप्तुं सुदृढं सङ्कल्पं विदधौ। ज्ञाने वैदग्ध्यमधिगन्तुं न कमपि गुरूञ्चकार; स्वयमेव तदर्थं

मात्मानं कठोरतरे श्रमेन्यपातयत्। ज्ञानलब्धिनिमित्तेन कोऽपि देव आराधनीय इत्येतद विचिन्त्य सः सूर्यमुपास्त। स गच्छतानेहसा सञ्जातो महांस्तेजस्वी ज्ञानवतामग्रणीर्विद्यासु विपश्चित्प्रवरः। स जगति अपरः सूर्य इव बभासे। यद् ज्ञानं स व्यतानीत् तत् सूर्य प्रकाश इव समुज्ज्वलम्। तद्रचिता बाजसनेयशाखेति कथ्यते।

ज्ञानेन ज्ञायते मानवो निरभिमानः। अगाधज्ञानार्णवो हि याज्ञवल्क्य आसीद तितरां प्रह्वः। मिथिलेश्वरो विदेहोऽपि तस्माद् अध्यात्मविद्यां परिजग्राह।

याज्ञवल्क्यस्य द्वे भार्यें आस्ताम्। मैत्रेयी, कात्यायनी च। मैत्रेयी ज्ञानलोकालोकिता महिलाऽऽसीत्। अस्ति वृहदारण्यकोपनिषदि रुचिरा कथैका संन्यासग्रहणात् प्राक् स मैत्रेयी माहूयाभ्यधात् 'अह मिदानीं संन्यासं जिघृक्षामि। युवयो र्मध्ये कलहो न प्रवर्तेत इत्येतद्धेतोः समस्तामपि सम्पदं स्वकीया मर्धामर्धांविधाय विभजेयम्। निशम्येदं मैत्रेयी समग्रामपि वसुधां लब्ध्वापि किमहं तत्सकाशादमृतत्वमधिगन्तु शक्नुयामिति प्राब्रवीत्। याज्ञवल्क्योऽभिदधौ नेति। धनवतीं वसुमती मवाप्य त्वदीय जीवनमर्थवद् भवितु मर्हति परं नामृतत्वमुपनतं भवेत्। मैत्रेयी प्रावोचत् 'यत्प्राप्य न मरणादुन्मुक्ति र्भवितुं शक्नोति तदवाप्य को लाभः? येन धनेन भवानात्मानं मन्यते धनवन्तं तत्कृपया मह्यं प्रददातु। आकर्ण्येदं याज्ञवल्क्यः प्रससाद। स ब्रह्मवादस्य–आत्मवादस्य–गूढं ज्ञानं तदीयं गूढतमं रहस्यंन्यरूपयत्। वृहदारण्यकोपनिषदि शोभमानं याज्ञवल्क्योपदिष्टं गूढज्ञानरहस्यं भारतीयस्यदर्शनस्यास्ति प्रमुखमङ्गम्।

अन्यश्च प्रेरणाप्रदः पेशलः संस्कर्ता प्रसङ्गो वृहदारण्यकोपनिषदि परिस्पन्दतेऽयम्––

एकदा मिथिलाधिपति र्ज्ञाननिधि र्जनको प्रभूतदक्षिणं महायज्ञमायूयुजत्। यज्ञे कुरुपाञ्चालादिप्रदेशेभ्योऽपि ब्राह्मणास्तपोधना आययुः। राजा जनको विप्रेभ्यो विपुलां भूयसीञ्च दक्षिणां प्रायच्छत्। सर्वश्रेष्ठं ब्रह्मविदं ज्ञातुं विदेहो धरेशो गोशालातः सहस्रं धेनू रानेतु मादिदेश ताः सर्वा अपि क्षीरिण्यो दशदश दीनार दीप्र विशाणा आसन्। जनको योऽस्ति ब्रह्मतत्वविषयके ज्ञाने पण्डितप्रकाण्डः सः सर्वा अपि एताः पयस्विनीः गृहणीयादित्यजूंघुषत्। न कोऽपि ब्राह्मणो गो-ग्रहणाय साहसं कर्तुं मशकत्। अन्ततो याज्ञवल्क्यः स्वशिष्यं गाः स्वीकर्तुं माज्ञापयामास। विलोक्येदं ब्राह्मणेषु कोलाहल उदतिष्ठत। याज्ञवल्क्यस्य तत्कार्यं ते नान्वमंसत। ते तस्य कर्मेदं स्वकीयां निकृतिं मज्ञासिषुः। तदादाने न सोऽधिकारीति तेषां मति रासीत्। तस्मात् प्रथमम् अश्वलो नाम ऋत्विक्र तद्वैदुष्यं परीक्षितुं बहून् प्रश्नांश्चकार। तेषु सर्वेंष्वपि प्रश्नेषु सत्सु समाहितेषु ऋतभागपुत्र अतिभागो, लह्मपुत्रो भुज्युः, चक्रपुत्र उषस्तः,

कुषीतकपुत्रः कहोलः, वचक्नु पुत्री गार्गी, अरुणपुत्र उद्दालकश्चानेकान् प्रश्नांस्तं पप्रच्छुः। याज्ञवल्क्यः सर्वेषामपि प्रश्नाना मुचिततरं युक्ततरञ्चोत्तरं प्रदत्तवान्। ततश्च महाविदुषी गार्गी पर्यनुयूयुत्। महर्षे र्याज्ञवल्क्यस्योत्तराणि गार्गी मतूतुषन्। शकलस्य सुतं शाकल्यमपि सोऽभिभ्यवत्। सर्वा अपि ककुभो 'याज्ञवल्क्यो जयतु जयतादित्येतेन गगनभेदिघोषेण पर्यपूर्यन्त। एतेन याज्ञवल्क्यस्याजेयवैदुष्यत्वमनायासेनैव ज्ञातताम‍ुपैति। आसीदसौ ब्रह्मवादिषु मूर्धन्यः। न कोऽपि तत्सदृश आसीत्। शुक्ल यजुर्वेदस्य शाखाया; द्रष्टृत्वं तस्य, तस्यावदाताया विचारणायाः, अभिताया दीप्रायाश्च प्रतिभाया अतः परस्तात् किन्नाम भवेद् देदीप्यमान प्रमाणम्? याज्ञवल्क्यस्याध्यात्मज्ञानलाभाय द्रष्टव्यास्ति वृहदारण्यकोपनिषत्।

युधिष्ठिरस्य राजसूययज्ञेऽध्वर्यु त्वं व्यदधादिति श्रूयते। यजुर्वेद पाठकर्ता विद्वान् अध्वयु रित्यभिधीयते। यज्ञाखिलानुष्ठानविधायकत्वादध्वर्यु र्यज्ञे प्रधानत्वेन मतो भवति।

स्मृतिकारो याज्ञवल्क्योऽध्यात्मवादिनो याज्ञवल्क्याद् भिन्न इत्येतत् तदैव स्वीकरणीयं भवितु मर्हति यदेतिहासस्य तद्भिन्नत्वाभिधायकत्वं दृष्टं स्यात्। यावन्न मान्यं प्रमार्णं प्राप्तं भवेत् तावदाध्यात्मिको याज्ञवल्क्य एव स्मृतिकारो याज्ञवल्क्य इत्येतदेवाभ्युपगमनीय मस्ति।

स्मृतिकारो याज्ञवल्क्यः समाजस्यैकैकस्यां समस्याया मभिज्ञो बभूव। तत्कृतायां स्मृत्यां ब्रह्मचर्य–गार्हस्थ्य–राजव्यवहार–स्त्रीधर्म–न्यायाधिकरण–वानप्रस्थि–संन्यासि कर्तव्य—चतुराश्रमधर्म—वर्णव्यवस्था-प्रायश्चित्तोपायादिनिखिललोकव्यवस्था वर्णिता निरूपिता च वर्तते। याज्ञवल्क्यस्य व्यवस्था नास्त्यनुच्छ्रिता; अस्ति सोच्छ्रिता परमगम्भीरा च। सः सर्वेषामपि संस्काराणां व्यवस्था सम्यक् कुर्वाणः प्रतिलक्ष्यते।

पुरुषार्थ चतुष्टयस्यावाप्तिनिमित्तेन शरीरं नीरोगं सुपुष्टञ्चापेक्ष्यते। शरीरस्य तद्विधत्वं ब्रह्मचर्यं विना कुतः सम्भव मतः स्मृतौ याज्ञवल्क्यस्य 'ब्रह्मचर्येस्थितः' इत्येतदाचाराध्याये (श्लो. ३२) अभिहितम्। आजीवनं पालितं ब्रह्मचर्यं ब्रह्मलोकप्रदम्—

अनेन विधिना देहं सादयन् विजितेन्द्रियः।
ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः॥ (प्र०, ५०)

गार्हस्थ्यं सर्वेषामप्याश्रमाणा मुपजीव्यत्वाय कल्पते। अतः गृहस्थस्तथां प्रयतेत यथा तत्तदाश्रमिणां सेवा भवितु मर्हेत्। न गृहस्थ आत्मन एवान्नं पचेत् न पचेदन्नमात्मने। (आ. अ. श्लो. १०४) गृहस्थस्यकृते तत्र निर्देशोऽयम्।

ब्राह्मे मुहूर्त्ते चोत्थाय चिन्तयेदात्मनो हितम्।
धर्मार्थ कामान् स्वे काले यथाशक्ति न हापयेत्॥ (श्लो. ११५)

स्वाध्यायोहिगृहस्थेना निवार्यतया कार्यः--'स्वाध्यायः सततं कुर्यात्
(श्लो. १०४)

ये सन्ति शासनसूत्रधारिणो राज्यसत्तारूढास्ते कीदृशाः स्यु रित्येतस्मिन् विषये याज्ञवल्क्य आह—

ये राष्ट्राधिकृता स्तेषां चारैः र्ज्ञात्वा विचेष्ठितम् ।
साधून् संमानयेद् राजा विपरीतांश्च धातयेत् ।। ३३८ आ. अ.

उत्कोचजीविनो द्रव्यहींनान् कृत्वा विवासयेत् ।
सदानमान सत्काराञ्श्रौत्रियान् वासयेत्सदा ।। ३३९ ,,

अन्यायेन नृपो राष्ट्रात्स्वकोशं योऽभिवर्धयेत् ।
सोऽचिराद् विगत श्रीको नाशमेति सबान्धवः ।। ३४० ।।

प्रजापीडन सन्तापात्समुद्भूतो हुताशनः ।
राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा न निवर्तते ।। ३४१ ।।

व्यवहाराध्यायो हि याज्ञवल्क्यस्मृते रध्येतव्यो वर्तते तत्र व्यवहारमधि कृत्योक्तम्—

व्यवहारान् नृपः पश्येद् विद्वद्भि र्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभ विवर्जितः ।। (व्य. अ. १)

रागाल्लोभाद् भयाद् वापि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्-पृथग् दण्ड्या विवादाद्द्विगुणं दमन् ।। ( ,, ४)

दानप्रकरणे दानं कस्मै देयम् ? ब्राह्मणः कीदृशाः स्युः ? इत्येतदादिविषय-मादाय तत्राभिहितम्—

तपस्तप्त्वाऽसृजद् ब्रह्मा ब्राह्मणान् वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्म संरक्षणाय च ।। (दान प्र. १९८)

सर्वस्य प्रभवो विप्राः श्रुताध्ययनशीलिनः ।
तेभ्यः क्रियापराः श्रेष्ठास्तेभ्योऽप्यध्यात्मवित्तमाः ।। ( ,, १९९)

न विद्यया केवलया तपसा वापि पात्रता ।
यत्र वृत्त मिमे चोभे तद्धि पात्रं प्रकीर्तितम् ।। ( ,, २००)

गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् ।
नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छता ।। ( ,, २०१)

याज्ञवल्क्यस्मृते दायविभाग-प्रायश्चित्तप्रकरणादिकाध्ययनेन तस्या महत्त्वं महनीयत्वञ्च ज्ञाततां याति । विषय विन्यासदृष्ट्या याज्ञवल्क्य स्मृति विद्यते प्रशस्ततरा । एतस्या व्यावहारिकं महत्त्वं गुरूतरं वर्तते । अत्र विषयविवेचनं सूक्ष्मतया स्पष्टतया च कृतमस्ति । एतस्याः स्मृते ष्टीकासु मिताक्षराटीका महत्त्व मतिशयं भजते । विश्वरूप–विज्ञानेश्वरापरार्क-शूलपाणय एते चत्वारो व्याख्यातारः सुविदिताः सन्ति ।

आधुनिक विद्वांसो 'याज्ञवल्क्यस्मृतिसमय ईशवीयाब्द प्रवर्तनात् प्राग्वर्तिप्रथमशतकादीशवीय तृतीयशतकप्रवृत्तेरन्तराले वर्तते' इति मन्यन्ते ।

द्रष्टास्ति शुक्ल यजुष स्तपसां निधिर्यः
कर्ता च यः शतपथस्य जगद्धितार्थी
आरण्यकञ्च नयतिस्म पुरः समेषां
सः स्तूयते सविनयं वुध याज्ञवल्क्यः ॥



# आदिकवि र्वाल्मीकिः

भास्वद्वंश वतंसकीर्तिरमणीरङ्गप्रसङ्गस्वनद्
वादित्र प्रथमध्वनि विजयते वल्मीकजन्मा मुनिः
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किमप्-
याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ।।

हिमाद्रेः गङ्गेव यस्य वदनाच्छन्दोमयी वाक् समुद्वभूव स आदिकवि र्वाल्मीकि र्यमनेहसं स्वतपः पूतजीवनेन अपुनात् तस्यानेहसो व्यतीतस्य सहस्रशो वर्षाण्यतिक्रान्तानि । रामस्य जीवनकाल एव सः स्वकीयं वेदोपमं पावन ममरकाव्य रामायणं विरचटय तत् रामस्यैव सूनुभ्यां लव-कुशाभ्यां तद् राजसभायां गापयामासेत्येतत्तथ्यं सर्वविश्वविदितम् । स आसीत् प्रचेतसः पुत्रः[1] अतः प्राचेतस इत्येतेन च नाम्ना प्रथते । प्रचेता वसिष्ठनारद पुलस्त्यादीनां बन्धु रासीत्[2] । सः जन्मान्तरे व्याधो वभूव इत्येतत् स्कन्धपुराणाद् विदितं जायते । शंखर्षि सान्निध्यात् रामनाम जपं कृत्वा स व्याध आगामिनि जीवने विप्रकुले जन्म जग्राह परं प्राक्तन संस्कारवशात् पुनः असत्कर्मण्येव व्यापृतोऽजायत सप्तर्षि-सत्सङ्ग स्तु तं पुनः सन्मार्गारूढं चकार । कठोरं तपश्चिरं चचार तेन तदीयं सर्वमपि संहननं वल्मीकावृतं समजायत अतएव स 'वाल्मीकि' रित्येतेन नाम्ना प्रसिद्धि मवाप[3] ।

वाल्मीकिः संसारस्य समक्षे कवेः स्वरूपं निदधौ । जगदिदं महाकाव्यस्य महत्त्वं तद्रचिताद् रामायणनामकात् महाकाव्यादवागमत् । वाल्मीके रभावे कवे र्यथार्थरूपस्यावगतिः सम्भवा नासीत् न चाभिरामादर्श एवावगतो भवितुं शक्य आसीत् । रामायणादेव तदीयाल्लोको महाकाव्यस्य माहात्म्यं गौरवं च ज्ञातुं समर्थः सञ्जातः । समग्रस्यापि कविसमाजस्य वाल्मीकि रूपजीव्यः । कालिदास भवभूति प्रभृतयो वाल्मीके रामायणमवगाह्यैव तत्सम्यगनुशील्यैव 'कवि' रित्येतेन महता गरिम्णा आहूता अभूवन् । वस्तुतो वाल्मीके र्महाकाव्यं रामायणं विशालतम वट वृक्ष

---

१—एतदाख्यानमायुष्यं सभविष्यं सहोत्तरम् । (रामायणे, उत्तरकाण्डे)
कृतवान् प्रचेतसः पुत्रस्तद् ब्रह्माप्यन्वमन्यत ।। १११।११

२—मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम् ।
प्रचेतसं वसिष्ठं च भृगुनारदमेव च ।। (मनुस्मृतौ, १।३५)

३—कल्याणे, स्कन्दपुराणाङ्के, पृ० ३८१, ७०६, १०२४

इव प्रतिभाति। सोऽयं रामायण वटवृक्षः स्वकीयया शीतलयाच्छायया भारतस्य सकलानपि मानवान् सम्प्रीणयन् जगति स्व शिर उन्नमयन् संशोभते। तं संश्रित्य सर्वेऽपि जनाः स्वकीयं जीवनं सुख समृद्धिमयं विधातुं समर्थाः सञ्जायन्ते। वस्तुतस्तद्रामायणं प्रकाशस्तम्भ इव, ततः प्रकाश मवाप्य जनाः स्वस्वकर्त्तव्यधर्मपथं निश्चेतुं शक्नुवन्ति। रामायणे रामस्यादर्शचरित्रं रसात्मिकायां रीत्या मालिखति वाल्मीकिः। स तत्र सुखदानां वर्णानां विन्यासमेव न विधाय सचेतसां चेतांस्यावर्जयितुं यतते शब्दानां विलासांश्च प्राचुर्येण प्रस्तवीति। रामस्य जीवनं कृत्स्नमपि कर्मपरायणं प्रदर्श्य स लोकं कर्मठीभवितुं प्रेरयति। चारित्र्यादेव मानवताया भवति बोधः। अतः स तदेव निकषमिव मन्यते। को हि मानवश्चारित्र्यवानित्येतस्य तत्त्वस्य मार्गणं तस्य च वैशद्येन वर्णनं रामायणस्यास्ति मुख्यमुद्देश्यम्। तस्मात् सः स्वजिज्ञासां नारदस्य पुनः समुप स्थापयति–'चारित्रेण च को युक्त' इति।

चरित्रं मानवं देवत्वं प्रापयति। इदं चरित्रं यस्मिन् पूर्णतया विकास मवाप सोऽस्ति मर्यादापुरुषोत्तमो रामः। वाल्मीकिस्तस्य चरित्रे मानवतायाश्चरमाभिव्यक्तिं वीक्ष्य तच्चरित्रं गातुं रामायणं नाम काव्यंचकार। सच्चरित्रस्य चरित्रं निशम्याधीत्य च मानसं शुध्यति; रागद्वेषलोभमात्सर्यादिदोषा हीयन्ते; तस्य प्रभावान्मानवः कुपथं विहाय सुपथं गृह्णाति। प्रवृत्त्युन्मुखी तदीया प्रवृत्ति निवृत्त्युन्मुखी सञ्जायते। सः परापकार परकं कर्म परित्यज्य परोपकार निष्ठं सत्कर्मकर्तुं प्रक्रमते। रामायण-श्रवण-पठन-चिन्तनावगाहनेभ्यः प्राक् यो मानवः पापपरायणोऽदृश्यत स एव पुण्यपरायणोऽवलोक्यते अतएव तूक्तम्—

रामायणं महाकाव्यं सर्ववेदेषु सम्मतम्।
सर्वपापप्रशमनं दुष्टग्रह निवारणम्॥
दुःस्वप्ननाशनं धन्यं भुक्तिमुक्तिफल प्रदम्।
राम चन्द्र कथोपेतं सर्वकल्याणसिद्धिदम्॥ (रामायण मा. १।१६-२०।

वाल्मीके र्महर्षेः रामायणं गार्हस्थ्यजीवनस्य विस्तृतं विपुलं च शब्दार्थँसुनिबद्धं परमाभिरामं चित्र मस्ति। मातृ-पितृ-भ्रातृ-भर्तृ–भृत्यभार्या-मित्रप्रभृतीन् यान् यान् आदर्शान् वाल्मीकिः स्वशब्दतूलिकयाऽऽलिलेख तेसर्व एव गृहधर्म-पराएव चित्रिताः प्राप्यन्ते। एतावदेव न कवि र्वाल्मीकी राम-रावणयो र्भीषणं युद्धमपि स्वस्य काव्यस्य मुख्य मुद्देश्यं न मनुते। स तु सत्पतेः सत्पत्न्याश्च पावनं प्रेम एव स्वकाव्यस्य प्रमुखोद्देश्यं मत्वा युद्ध वर्णनं तदुपकरणत्वेन प्रयुङ्क्ते। या हि भारतीया सभ्यता स्वाभिव्यक्तेः प्रमुख साधनत्वेन रामायण मुररीकरोति तस्याः प्रतिष्ठास्ति गृहस्थाश्रमः। कवि र्स्यैव गार्हस्थ्यस्य पूर्णाभिव्यक्तिप्रयोजनेन रामायणं नाम महाकाव्यं प्रणिनाय। विभिन्नासु विषमविषमतरासु परिस्थितिषु मानवः स्वकीयस्य

शीलस्य सौन्दर्यस्य च रक्षां केन प्रकारेण कर्तुं शक्नोतीत्येतत् कवि र्वाल्मीकिरस्मान् सम्यगवगमयति । चेत्कविरयं रामचरित्रस्य चित्रणं नाकरिष्यत् तदा कथं नु मञ्जुलानां तेषां गुणानां दर्शनं प्राप्त मभविष्यत् । कवि रादर्श चरित्र श्रवणोत्सुक चित्तस्य मानवस्योत्कटाभिलाषं तर्पयितुं काव्यमेतदररचत् ।

वाल्मीकि रासीन्महाकवि स्तद्रचितरामायणस्य सुन्दरकाण्डं वीक्ष्य तस्य उत्कृष्टतमं कवित्वं विदितं जायते । सः कवितायाः सत्यं स्वरूपं प्रस्तवीति । तस्य काव्ये उपमोत्प्रेक्षाणां विशालः परमाभिरामः प्रासादो दृग्गोचरी भवति । क्वचिदपि तत्र वलक्षं सरसं हृदयं न निगूढं दृष्टं भवति । सर्वत्र काव्यापेक्षिता सुषमा शोभते; प्रसादस्य पेशलता तत्रत्या सचेतसाँ चेतांसि चोरयति । यादृशानां शब्दार्थानां सन्निवेशः काव्ये आकाङ्-क्ष्यते कविस्तादृशानेव शब्दार्थान् प्रमुञ्जानो दृश्यते । इह द्वित्रिश्लोका निधीयन्तेः—

हंसो यथा राजतपञ्जरस्थः सिंहोयथा मन्दरकन्दरस्थः ।
वीरोयथा गर्वितकुञ्जरस्थ श्चन्द्रोऽपि वभ्राज तथाम्वरस्थः ।। ५।५।४
उष्णार्दिताः सानुसृतास्रकण्ठीं पुरा वरार्होत्तमनिष्ककण्ठीम् ।
सुजातपक्ष्मामभिरक्तकण्ठीं वने प्रनृत्तामिव नीलकण्ठीम् ।। ५।५।२५
अव्यक्तरेखामिव चन्द्रलेखां पांसुप्रदिग्धामिव हेमरेरखाम् ।
क्षतप्ररूढामिव वर्णरेखां वायुप्रभुग्नामिव मेघरेखाम् ।। ५।५।३६

कविः प्रकृतेश्चित्राणि च चारु चारुतराण्यालिखन् संलक्ष्यते । समुद्रस्य वर्णनं वीक्ष्यताम्—

सशैलसागरानूपं वीर्यवानवलोकयन् ।
नाना पुष्पफलै वृक्षै रनु कीर्णं सहस्रशः ।।
शीत मङ्गलतोयाभिः पद्मिनीभिः समन्ततः ।
विशालै राश्रमपदै र्वेदिमद्भिरलङ्कृतम् ।। ३।३५।११, १२।

सम्प्रति हेंमन्तश्रीःप्रेक्ष्यताम्—

अत्यन्तसुखसञ्चारा मध्याह्ने स्पर्शतः सुखाः ।
दिवसाः सुभगांदित्या श्छायासलिलदुर्भगाः ।।
मृदुसूर्याः सुनीहाराः पटुशीताः समारुताः ।
शून्यारण्या हिमध्वस्ता दिवसा भान्ति साम्प्रतम् ।। ३।१६।१०।११

संवादेषु संलापेषु चाद्भुतमेव वैदग्ध्यं कविरयं निदधाति । सम्भाषण पद्धत्यां च मनोरमं चातुर्यं तस्य दृष्टं जायते । 'अद्य चन्द्रोऽभ्युपगमत् पुष्यात् पूर्वं पुनर्वसुम् । श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैव चिन्तकाः' (२।४।२१) इत्येतदादिकैः श्लोकैःवेक

ज्योतिः शास्त्रे रुचिराभिज्ञता च ज्ञाततां याति। युद्धकाण्डे एकनवतितमे च सर्गे कवेः आयुर्वेद कौशलं विदितं भवति। 'शस्त्राणि शहपत्राणि समिधोऽथ विभीतकाः। लोहितानि च वासांसि स्रवं कार्ष्णायसं तथा' इत्येतदादिकाः पङ्क्तयस्तस्य तन्त्रशास्त्रे च विशारदत्वं प्रथयन्ति (६।७३।२४)। वस्तुतः प्रतिपदं कवे र्विचार-प्रवणता, अप्रतिम-वुद्धिमत्ता च प्राप्येते। को हि स यो न कवेरस्य मनोविज्ञानपटीयस्कतायां रज्यति ? हनुमत्सुग्रीवादि वार्तासु सम्यङ् मनोविज्ञानस्य श्रीः सम्प्रेक्षिता भवति।

त्रयाणां पञ्चधा योगं कर्मणां यः प्रपद्यते।
सचिवैः समयं कृत्वा स सम्यग् वर्तते पथि ।। ६।६३।७

यथागमं च यो राजा समय च चिकीर्षति।
बुध्यते सचिवैबुद्ध्या सुहृदश्चानु पश्यति ।। ६।६३।८

धर्ममर्थं हिं कामं वा सर्वान् वा रक्षसां पते।
भजेत पुरुषः काले त्रीणि द्वन्द्वानि वा पुनः ।। ६।६३।९

त्रिषु चैतेषु यच्छ्रेष्ठं श्रुत्वा तन्नाववुध्यते।
राजा वा राजमात्रों वा व्यर्थं तस्य वहु श्रुतम् ।। ६।६३।१०

इत्येतदादिश्लोकैः कवेः राजनीति कुशलत्व ज्ञातं भवति।

विक्लवो वीर्यहीनो यः स दैवमनुवर्तते।
वीराः सम्भावितात्मानो न दैवं पर्युपासते ।। २।२३।१६

दैवं पुरुषकारेण यः समर्थः प्रबाधितुम्।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ।। २।२२।१७

द्रक्ष्यन्ति त्वद्य दैवस्य पौरुषं पुरुषस्य च।
दैवमानुषयोरद्य व्यक्ता व्यक्ति र्भविष्यति ।। २।२३।१८

इत्यादिश्लोकेषु कविः कियताप्र गाढेनौजसा पुरुषार्थं गायति—

धर्मार्थकामा खलु जीवलोके समीक्षिता धर्मफलोदयेषु।
ये तत्र सर्वे स्यु रसंशयं मे भार्येव वश्याभिमता सपुत्रा ।।
यस्मिंस्तु सर्वे स्युरसंनिविष्टा, धर्मो यतः स्यात् तदुपक्रमेत।
द्वेष्यो भवत्यर्थपरोहि लोके, कामात्मता खल्वपि न प्रशस्ता ।।
गुरुश्च राजा च पिता च वृद्धः, क्रोधात् प्रहर्षादथवापि कामात्।
यद् व्यादिशेत् कार्य मवेक्ष्य धर्मं, कस्तं न कुर्यादनृशंस वृत्तिः ।।
न तेन शक्नोमि पितुः प्रतिज्ञा मिमां न कर्तुं सकलां यथावत्।
(२।२२।५७-६०)

स ह्यावयोस्तात गुरुर्नियोगे देव्याश्चभर्ता स गतिश्च धर्मः ।।

एतैः श्लोकैः कवी राममुखेन भार्याया धर्मार्थ काम साधनत्वं 'पति रेव नार्याः गतिर्धर्मश्च' इत्येतत् तत्त्वमथ च पित्राज्ञा पालनानिवार्यत्वं श्लक्षणया प्रौढया प्रकृष्टौजः परिपूर्णया रीत्या समुपस्थापयन् दृष्टो जायते ।

चपलस्येहकृत्यानि सहसानुप्रधावतः ।
छिद्रमन्ये प्रपद्यन्ते क्रौञ्चस्य खमिव द्विजाः ।। ६।६३।१६

स सुहृद् यो विपन्नार्थं दीनमभ्युपपद्यते ।
स बन्धु र्योऽपनीतेषु साहाय्यायोपकल्पते ।। ६।६३।२७

निःश्रेयसफलावेव धर्मार्थावितरावपि ।
अधर्मानर्थयोः प्राप्तं फलं च प्रात्यवायिकम् ।। ६।६४।८

इत्येतदादि श्लोकेषु कविरेषोऽर्थशास्त्रनीतिशास्त्रानुमोदितानि वाक्यानि निदधद् वीक्ष्यते ।

तपस्ययैव सकलानि कार्याणि सिद्ध्यन्ति; तपस्ययैव शरीरं मानसं वौद्धिकम् आत्मिकं च वलं वर्धते-इत्येतद्धेतोः कविरयमिच्छति मानवं तपः पूत विलोकयितुम् । स भगीरथ–विश्वामित्रादिकानां तपोवृत्तं निधाय स्वकीयमुक्तं भावमेव प्रकटीकरोति—

(क) तपोदीर्घं समातिष्ठद् गोकर्णे रघुनन्दन ।। १।४२।१८।

(ख) पश्चिमायां विशालायां पुष्करेषु महात्मनः ।
सुखं तपश्चरिष्यामः सुखं तद्धि तपोवनम् ।। १।६१।३।

(ग) रामो ददर्श दुर्धर्ष स्तापसाश्रम मण्डलम् ।। ३।१।१।

× × ×

शरण्यं सर्वभूतानां सुसम्मृष्टाजिरं सदा ।
मृगै र्बहुभिराकीर्णं पक्षिसंघैः समावृतम् ।। ३।१।३

इत्येतदादिकं कवि र्वर्णयित्वा भारतीयायाः संस्कृते स्तपोयज्ञाश्रमनिष्ठत्वं सूचयन् भारतं स्वकीयं तपोयज्ञाश्रमधर्मपालनपरं द्रष्टुभाकाङ्क्षति ।

नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ।। २।१०५।१५

सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ।। २।१०५।१६

यथागारं दृढस्थूणं जीर्णं भूत्वोपसीदति ।
तथावसीदन्ति नरा जरामृत्युवशं गताः ।। २।१०५।१८

यथा मृत स्तथा जीवन् यथा सति तथा सति ।
यस्यैष बुद्धिलाभः स्यात् परितप्येत केन सः ।। २।१०६।४

इत्येतद्विधाः सहस्रशः श्लोकाः अस्य महाकवेः काव्ये रामायणे राजन्ते । कविस्तानुल्लिख्य स्वदेशस्य किं वा विश्वस्य जीवन माध्यास्मिकं विलोकयितु मतितरा मुत्सुकहृदयोऽस्ति । वस्तुतः कवि रयं स्वरचितस्य ग्रन्थस्य रामायणस्य प्रथमाच्छ्लोकादन्त्यं श्लोकं यावत् लोकं शुभानि कर्माणि सतत मनुष्ठातुं जीवनञ्चाध्यात्मिकतायां नियोजयितुं सस्नेहं सदय ञ्चोपदिशन् दृश्यते ।

कवि र्वाल्मीकिः 'शास्ता अस्ति धर्म सत्ययो रुद्भवस्थलम् । अस्ति तस्य कर्त्तव्यं प्रजारञ्जनम् । सः सततं लोकहितं चिन्तयेत् अभीक्ष्णं भवेत् तदभ्युदयपरः' इति वाञ्छति । अतएव तु स राज्ञो रामस्य चरित्रं सर्वेषामपि शासकानां पुरः प्रस्तवीति । अहो, अस्त्ययं कवि र्वस्तुतस्तु स्वराष्ट्रहितचिन्तको महान् कविः ।

स्यु र्भारतेऽखिलजना भुवि सच्चरित्राः, कृत्वा विचारमिति रामचरित्ररम्यम् ।
यो गायति स्म तमहं प्रणतो नमामि, वाल्मीकिनामक महर्षिकुलाभिवन्द्यम् ।।

———

# कृष्णद्वैपायनो वेदव्यासः

कतिपयानां प्रधीप्रवराणां मतेन व्यासस्य सञ्जातस्य खखवसुगुणवर्षाण्य तीतानि, परं हस्तिनापुरे कृतादुत्खननाद् वैदिक युगावसानानन्तरं चतुर्विंशत्यधिकैकोन त्रिंशच्छताव्दव्यापी कालोऽतिक्रान्त इति ज्ञायते ।

यस्याः 'सरस्वती' सरितस्तटे वैदिकमन्त्राणां प्रादुर्भावो बभूव;—ऋषयस्तेषां विरचनं चक्रु-स्तस्या अपि साम्प्रतं न दर्शनं भवति । सान्तर्हिता जातास्ति । इदानीन्तु तस्याः पुनीता स्मृति रेवास्माकं मानसे जागर्ति किञ्चेतिहासागमादिषु तन्नामोल्लेखः प्राप्यते ।

वैदिक जीवनस्य तेषु पावनेषु दिवसेषु सञ्जाते हि वसिष्ठाख्ये वैदिकर्षिकुले येषां मन्त्राणा मवतारणा समजायत ते मन्त्रा ऋग्वेदे विराजन्ते । इदं वसिष्ठकुलं स्वयुगस्य परमप्रकृष्टं पूजनीयतमं महनीयं कुल मभूत् । इदमेव तत्कुलं यदीयं तेज अनार्या न सोढुं शेकुस्ते पराजिताश्च तत्पुरतोऽजायन्त । विजयिन्यार्यजातिस्तस्मिन् पुरातनतरयुगे स्वकीयं साम्राज्यं गङ्गायमुनयोस्तटेषु नवीकृत्य प्रतिष्ठापयामास । 'भरत' इत्येतदाख्यया ख्यातोऽन्ववायश्चिरं तस्मिन् प्रत्नेऽनेहसि वसुन्धरामेतामशिसत् ।

तस्मिन् पुरातने काले महतोहि वसिष्ठस्य 'पराशर' संज्ञकं पौत्रं नावा यमुनां तरन्त मेका सुन्दरीं धीवर कुमारिकां ददर्श । सा तस्मिन् प्रणयं निबबन्ध । सा सत्य-वती इत्येतेन नाम्ना अप्रथत । तस्यां यः सुतः पराशरेण लब्धस्तस्यैव चारुतरं चरित मिह निबन्धनीयमस्ति ।

पराशरात्मजः सः 'कृष्ण' इति नाम प्राप । उत्तरप्रदेशे हम्मीरपुरेमण्डले 'काल्पी' इत्येतदाख्ययाधुनिके काले ख्यातायाः पुर्याः सकाशे प्रवहन्त्यां यमुनायां द्वीपे समुत्पन्नत्वात् तस्य नाम 'द्वैपायन' इत्येतच्च प्रथितं बभूव । कृष्णद्वैपायनोऽद्भुता-मेव दिव्यां प्रतिभां जुषते स्म । सः अचिरादेव परमगम्भीरयाप्रौढयाकृष्टतमया च वन्दनीयया विद्वत्तया स्वकीयस्य विश्वविदितस्य वंशस्य गरिमाण मतितरामेवोद-नीनमत् । तदीयं ज्ञान मनन्तं भूत्वा बभ्राजे; तदीया धी शक्ति रप्रतिहताऽऽसीत् । शब्दार्थयोः सः अतिद्वय माचार्यत्वं निदधौ । स वस्तुतः सर्वाङ्गीणतया पूर्ण एव भवन् भुवि विबभौ । सः स्वकीयमखिलमेव जीवनं तपस्वितायां मेव प्रवर्तयामास को न वेत्तियत् तस्य श्रेष्ठस्य तपस्विनः सुतः शुकस्तु जनुष एव विरजस्कतां गत आसीत् ।

वदरीवने चिरं तपसश्चरणहेतोर्निवासं स्वयं चक्रे तस्माञ्जगति बादरायण इति नाम्ना पप्रथे ।

कृष्णद्वैपायनो वैदिकान् मन्त्रान् संजग्राह; तान् स व्यवातिष्ठिपत्; व्यासीकृत्य च स तान् सर्वानपि लोके स्थापयामास। एवं विधस्य महतो महनीयस्य कार्यस्य कर्तृत्वात् स वेदव्यास इत्येतया आख्यया च तस्मादेव कालात् ख्यातोऽस्ति। सर्वस्मिन्नपि संसारे स 'व्यास' इत्येतयाभिधयाभिधीयते। सोऽस्माकं कृतेऽमरभारतीय संस्कृतेः स्रोतोभूतं तं ग्रन्थं प्रददौ योऽस्त्यसंख्याताब्दानां ग्रन्थः। अयं व्यासः स यं भारतसन्तति स्तस्मात्कालादजस्रं भक्त्या श्रद्धया चार्चन्ती दृश्यते यस्य कालस्य व्यतीतस्य पञ्चसहस्रवर्षाणि, प्रतीच्यानां पण्डितानामपि मतेन त्रिसहस्रवर्षाणि व्यत्यगुः।

संस्कृत वाङ्मयम्प्रति तदीयं दानं वर्ततेऽधिकतमम्। न स इवान्यः कोऽपि तथाविधं गुरूतमं दानं कर्तुं शशाक, संस्कृत वाङ्मये यः पुराणनिधिः संशोभते सोऽप्यनेनव महर्षिणा प्रदत्तोऽस्ति। एतान्यष्टादश पुराणानि विरचय्य स मानवानां पुरतः सर्ग प्रतिसर्ग-मन्वन्तरवंशादिकानां सर्वेषामपि विवरणं सविस्तरं प्रस्तवीति। चेत् तेषामखिलानामपि पुराणाना मध्ययनं सूक्ष्मया गवेषणात्मिकया च दृष्ट्या कृतं स्यात् तदा अनेकशोरहस्यान्युन्मीलितानि भवितुं शक्यानि सन्ति। स महाभारतं लिलेख। अस्ति तदस्मदीयो राष्ट्रिय इतिहासः। तत्र स धर्म मर्थं कामं मोक्षञ्च प्रतिपादयति स्म सर्वेषामपि हिताय। नान्यदीदृशं यत् तत्र न विद्यते तस्मादस्ति तदतितरामेवोपादेयम्। तदधिकृत्योक्तमिदम्—

अष्टादश पुराणानि धर्मशास्त्राणि सर्वशः।
वेदा साङ्गास्तथैकत्र भारतं चैकतः स्थितम्॥

उपनिषदां तत्त्वमवगमयितुं स ब्रह्मसूत्रं प्रणिनाय। इदं ब्रह्मसूत्रं तदस्ति यत्र अस्मद्देशस्य शङ्कर-रामानुज-बल्लभ-मध्व-निम्बार्कप्रभृत्याचार्या भिन्नभिन्नानि भाष्याणि रचयित्वा विद्वज्जगतो वन्दनीयतां ययुः सञ्जाताश्चामरयशस्काःपुराणेषु यद्यपि श्रीमद्भागवतस्य भवत्यन्तर्भावः परं तत् पुराणेषु सकलेषु मूर्धन्यम्। यद् यद् वैशिष्ट्यं तन्निदधाति तदन्यन्नैकमपि। तदीयो महिमा तत्रत्याभ्यामेवश्लोकाभ्यां गीयते—

धर्मः प्रोज्झित कैतवोऽत्र परको निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम्।
श्रीमद्भागवते महामुनिकृते किं वा परै रीश्वरः
सद्योहृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणात्॥
निगमकल्पतरो र्गलितं फलं शुकमुखादमृतद्रवसंयुतम्।
पिवत भागवतं रसमालयं मुहु रहो रसिका भुवि भावुकाः॥

'व्यासस्मृतिः' इत्येतेन नामधेयेन विश्रुता स्मृतिरपि स्मृतिषु दृश्यते । तन्नाम्ना तस्याः एतत्कृतत्वं विदितं भवति । तदेवं भारतीयं वाङ्मयं किञ्च भारतीयां संस्कृति म्प्रति महर्षे र्व्यासस्य नितरामेव सभाजनीयं योगदानं वरीवर्ति । श्रुति स्मृति-पुराणोक्तस्य सनातनधर्मस्य सः (व्यासः) अस्त्येकः प्रधानो व्याख्याता । न तदुपकारात् कदापि भारतीया उन्मुक्ता भवितु मर्हन्ति । सन्ति यावद् भारतीयाः; भारतीया च संस्कृति र्यावज्जीवति तावदितिहासे व्यासस्य नामाप्यमरं भवत् सन्तिष्ठेत । अस्ति वस्तुतोऽसौ संसारस्य महान् पथप्रदर्शकः शिक्षकश्च तस्य । अत एव तु स 'जगद्गुरुः' इत्येतद् गौरवमयं पद भजते । गुरुपूर्णिमाया मास्तिक एकैको भारतीयो गृहस्थ स्तम-र्चति । जगदिदं गीतारत्नमपि तत्कृपयैव लभते स्म । भगवद्गीताया अनुपमत्वं सर्व-विदितम् । भगवतः कृष्णस्य अमरं सदुपदेशं महाभारत संहितायां संगुम्फ्य सोऽयं महर्षिः सकलसंसारसुलभं विदधौ ।

आसीद् व्यासो महर्षि स्त्रिकालदर्शी; सर्वेषां हृदयस्य भावान् स जानाति स्म । अप्रतिहतगतिकः स आसीद् यत्रापि स गन्तुमियेष तत्र स आत्मानं प्रापयितुं शशाक । जाते सति जनुषि सः तपसे वनं यदा गन्तु मुद्यतो बभूव, मातरं सोऽब्रवीत् 'यदा कदापि अह मपेक्ष्येय; स्मरणीयोऽहं मातः; अहं तदानीमेव भवत्सेवाया मुपस्थितः स्याम्' । एकचक्राख्यां नगरीं, यदा पाण्डवा लाक्षाभवनात् स्वासून् संरक्ष्य, गता स्तदा समुपस्थितान् पाण्डवान् प्रति 'द्रौपदीं भवन्तः प्राप्स्यन्ति' इति यदुवाच; इन्द्रप्रस्थे युधि-ष्ठिरकृतराजसूययज्ञे युधिष्ठिरं 'त्रयोदशवर्षानन्तरं क्षत्रियाणां महासंहारो भविता' इति यद् अवोचत्; वनमधिवसतः पाण्डवान् हन्तुं दुर्योधनकृतं कुविचारं स्वदिव्यदृष्ट्या विज्ञाय धृतराष्ट्रं निकषाऽऽगम्य भाविनं यमनर्थं तम्प्रति प्रादीदृशत् तत् सर्वमपि तदीय त्रिकालदर्शित्वे ज्वलत्प्रमाणम् ।

न केवलं वेदव्यासस्त्रिकालदर्शी, तदीयं सामर्थ्यमपि परमाद्भुतमभूत् । सोऽर्जु-नाय प्रतिस्मृतिविद्या मुपदिदेश तया विद्यया अर्जुनोदेवदर्शनक्षमता मवाप । एतावदेव न, सः सञ्जयाय दिव्यदृष्टि मपि प्रददौ, यत्प्रभावात् सः (सञ्जयः) युद्धघटिता घटनाः अवजगाम; श्रीकृष्णस्य दिव्यं विश्वरूपं द्रष्टु मशकदथ च तद्गीतां गीतां च श्रोतुं प्रबभूव ।

एकदा महाभारतायोधनावसाने यदा धृतराष्ट्रो गान्धार्या सह वन मध्युवास तदा व्यासमागतं सः (धृतराष्ट्रः) निर्विण्णो भूत्वा अहं समरे हतान् सर्वानपि स्व कुटुम्बिनः किञ्च स्वमित्राणि द्रष्टुमिच्छामि' इति प्रार्थयाञ्चक्रे । व्यास स्तत्प्रार्थनां स्वीकृत्य गान्धारीमुवाच 'अद्य निशामेव भवन्तः सर्वे सुप्तोत्थित जन इव सर्वानपि स्वकीयान् महामृधे हतान् बन्धून् द्रक्ष्यन्ति' इति । सः सायं नित्यकर्म विधाय सर्वानपि

गङ्गातट मागन्तुमादिदेश । सर्वेऽपि तदाज्ञया तत्रागताः सः गङ्गायाः पवित्रे पयसि प्रविश्यं रणहतान् सर्वानपि कौरव-पाण्डवपक्षयो र्वीरगतिप्राप्तान् वीरानुच्चै राजुहाव; तस्मिन्नेव क्षणे जले तद्विध एव कोलाहलोऽश्रूयत यद्विघो महायुद्धे कुरुक्षेत्रे श्रुतोऽभूत् । ततश्च द्रोणभीष्मपुरस्सराः सर्वेऽपि राजानो राजकुमाराश्च सलिलाद् वहि र्निर्गच्छन्तोऽदृश्यन्त । तेषां वेष-ध्वजा वाहनादिकानि यादृशान्यासंस्तादृशान्येव सर्वाणि दृक्पथाधिरूढान्यभूवन् । स एवं तान् प्रति सर्वानपि हतान् जनान् दर्शयाम्बभूव; एवमेव स जनमेजयम्प्रत्यपि स्वर्गीयं तत्पितरं परीक्षित मपि दर्शयाञ्चकार। एतेन तस्य (व्यासस्य) अलौकिकसामर्थ्यवत्त्वं स्फुटतयैवास्मत्समक्षे समुपस्थितं जायते।

श्रीमद्भागवतं भगवता व्यासेन भक्तियोगप्रधानं विधाय सृष्टं येन तद्द्वारेण किं वा तत्संसेव्य मानवाः संसार-सागर मुत्तीर्यानन्तसुखशान्तिधामभगवन्तं प्राप्नुयुः । साधारणोऽपि जनो विनाऽऽयासं कठोरं भगवद्भक्त्या स्वकीय मनसो रागद्वेषादिमलं विनाश्य विषयेभ्य स्तदाकृष्य तद् भगवच्चरणयो रासक्तीकर्तुं शक्नोति । मोक्षलाभ एव मानवस्य चरमं लक्ष्यं वर्तते । शरीरस्य सर्वोत्तमः श्रेष्ठ उपयोगः कः ? इत्यस्य प्रश्नस्य अखिलात्मनि भगवति नियोजनं शरीरस्यैतदेवोत्तरमस्ति । श्री वेदव्यासो महर्षिः श्री मद्भागवते ब्रूते—

योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरति र्यत्र दुःखस्य च सुखस्य च ॥ १३

चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये ॥ १५

अहं ममाभिमानोत्थैः कामलोभादिभि र्मलैः ।
वीतं यदा मनः शुद्ध मदुःखमसुखंसमम् ॥ १६

तदा पुरुष आत्मानं केवलं प्रकृतेः परम् ।
निरन्तरं स्वयं ज्योति रणिमान मखण्डितम् ॥ १७

ज्ञानवैराग्ययुक्तेन भक्ति युक्तेन चात्मना ।
परिपश्यत्युदासीनं प्रकृतिं च हतौजसम् ॥ १८

न युज्यमानया भक्त्या भगवत्यखिलात्मनि ।
सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥ १९

प्रसङ्गमजरं पाश मात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वार मपावृतम् ॥ २० (स्क. ३, अ. २५)

भक्तियोगो हि त्रिविध इति स तत्रैवामनति—

अभिसन्धाय यो हिंसां दम्भं मात्सर्य मेव वा ।
संरम्भी भिन्न दृग्भावं मयि कुर्यात् स तामसः ।। ८

विषयानभिसन्धाय यश ऐश्वर्य मेव वा ।
अर्चादावर्जयेद्यो मां पृथग् भावः स राजसः ।। ९

कर्मनिर्हार मुद्दिश्य परस्मिन् वा तदर्पणम् ।
यजेद् यष्टव्य मिति वा पृथग् भावः स सात्त्विकः ।। १० (३।२९)

को निर्गुणभक्तियोग इत्यत्र स आचष्टे—

मद्गुण श्रुतिमात्रेण मयि सर्व गुहाशये ।
मनोगति रविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ।।११।।

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ।।१२

सालोक्य सार्ष्टिसामीप्य सारूप्यैकत्व मप्युत ।
दीयमानं न गृहणन्ति विना मत्सेवनं जनाः ।।१३

स एव भक्ति योगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ।।१४ (३।२९) तत्रैव.

भगवतो भक्ति रजितेन्द्रियमपि संसारविषयवाध्यमानमपि जनमुद्धरति । सा सर्वाण्यप्येनांसि भस्मसात् करोति । तयैव भगवान् भवति ग्राह्य स्तां विहाय वस्तुतो भगवत्प्राप्ते र्नोपायान्तरम्—

बाध्यमानोऽपि मद्भक्तो विषयैरजितेन्द्रियः ।
प्रायः प्रगल्भया भक्त्या विषयै र्नाभिभूयते ।।१८

यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषयाभक्ति रुद्धवैनांसि कृत्स्नशः ।।१९

न साधयति मां योगो न सांख्यं धर्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो यथा भक्ति र्ममोर्जिता ।।२०

भक्त्याहमेकया ग्राह्यः श्रद्धयाऽत्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि सम्भवात् ।।२१(११।१४)
तत्रैव,

श्रीमद्भागवताध्ययनाद् तत्रत्यासु भ्रमरगीति–वेदस्तुति-हंसोपदेशादिषु चाव गाह्य महर्षे वेदव्यासस्य अद्भुतायाः कवित्व प्रतिभायास्तदीस्य सागरादपि गभीररतरस्य

हिमाद्रेरप्युत्तुङ्गतरस्य पाण्डित्यस्य ज्ञानं सञ्जायते। तदीयमिमं ग्रन्थं, यत्र महामहापण्डितानामपि प्रतिभायाः गतिः कठिनतयैव प्रवेशं प्राप्तु मर्हति न कश्चित् पूर्णतयावगन्तुमीष्टे। अस्ति तदीयोऽयं ग्रन्थः समाधि भाषायां विरचितो ग्रन्थः। ग्रन्थेऽस्मिन् लिखितानिशतशो भाष्याणि सहस्रशष्टीकाश्च महर्षे रनन्तमगाधं विश्वविद्वन्मूर्धन्यवंद्यं वैदुष्यं प्रथयन्ति।

महाभारतञ्च तत्प्रणीतं ग्रन्थं वीक्ष्य तस्य महासामर्थ्यसम्पन्नलेखकत्वमभिव्यज्यते। अस्ति तदीय एष ग्रन्थ रहस्यज्ञानस्य महाननवधिको निधिः। ग्रन्थोऽयं ग्रन्थानां रत्नाकरः। अस्त्ययं महतां महतां विशालसंख्यानां किरातार्जुनीयनैषधशिशुपालवधादिकाव्यानां, चम्पूभारत-नलचम्पू प्रभृति चम्पू ग्रन्थानां, वेणीसंहार–प्रचण्डपाण्डवाभिज्ञानशाकुन्तनादिनाटकानामाविर्भावयिता ग्रन्थः। न ज्ञायतेऽत्र कियत्यः कियत्यो विविधाः कथा-सरितः प्रवहन्ति। अयं सारस्वतनन्दनवनस्य धर्मार्थकाम मोक्षफलप्रदः कल्पतरुः; ज्ञानसिन्धोरुल्लासनपरश्चन्द्रः; रसानां रसायनम्; उदधिरानन्दस्य; अक्षयं शरीरं महापुरुषाणां, सूर्योऽज्ञानान्धकारनिमग्नमानवानां मार्गप्रदर्शकश्च भवाटवीभ्रान्तानाम्। संसारसागरतारिणी गीता भगवत्यत्रैव विराजते।

औपनिषदेषु सिद्धान्तेष्वापाततः प्रतीयमानान् विरोधान् परिहर्तुं तत्र चैकवाक्यतां दर्शयितुं वेदव्यासो बादरायणो ब्रह्मसूत्रनामकं यं ग्रन्थ मररचत् ग्रन्थोऽसौ वेदान्तसिद्धान्तानामाकरः। समन्वयाविरोध साधनं फलाख्येषु चतुर्षु अध्यायेषु लेखकेन ग्रन्थ एष विनिबद्धः। तर्कयुक्तीनां सूक्ष्मतां लेखकस्य वीक्ष्य, प्रतिपक्षिसिद्धान्तानां तदीयां मार्मिकसमीक्षां च विलोक्य विस्मयो भवति; भवति च विद्वच्चक्रचूडामणीनाञ्चमौःलिःप्रणतः। धन्येयंभरतमही यत्र व्यासो बभूव।

नमोऽस्तुते व्यास महर्षिमान्य, विद्योदधिस्त्वं श्रुतिशास्त्रशास्तः,।
कृतीः स्वकीया विरचय्य दिव्या, लोकः कृतार्थो विहितस्त्वयायम्॥

———

# नचिकेताः

ऋग्-यजः-सामाथर्ववेदानां नामानि क ईदृग् भारतीयो, यो न जानाति ? सर्वेऽपि ते स्तोक मस्तोकं वावश्यमेवाभिज्ञत्वं निदधति। तेषाममितज्ञानस्रोतस्कत्वं, लोकोत्तरं महिमानं, मनोमेधावागम्यत्वञ्च तेषां सविस्तरं विद्वद्धौरेया विदन्ति। ऋग्वेदस्य शाकलसंज्ञिकाः, यजुषः शुक्लकृष्णादिकाः, साम्नो राणायनीप्रभृतयोऽथर्वणश्च पिप्पलादप्रमुखाः सन्ति संहिताः इत्येतस्मिन् विषये वैदिकसाहित्यानुरागा बुधवराः परिचयविशेषं, परं, बहवो निदधते इत्येतदाशास्यते। सन्ति श्रुतयोऽनेकशाखावत्यः; प्रतिशाखमुपनिषदश्च विभिन्नाः।

उप-निपूर्वकस्य विशरणगत्यवसादनार्थकस्य षद्लृधातोः क्विबन्तस्य रूपमुपनिषदिति। उपनिषत्पदं ब्रह्मात्मैक्यसाक्षात्कार विषयकम्। अस्त्युपनिषद् ब्रह्मविद्या सा संसारसारतामर्ति सादयति; परमश्रेयोरूपं परब्रह्म सादयति (गमयति), जन्ममाणरदिदुःखमूलमज्ञानं च सादयति (उन्मूलयति) अत उपनिषदिति गीयते। उपनिषदेका न, तस्या बहुलसंख्याकत्वं प्राप्यते। शतद्वयादप्यधिका स्ताः। परं तासु पुरातन्यः प्रमाणभूताः सर्वत्रोद्धृत प्रायाः सन्ति द्वादश—

ईशकेनकठ प्रश्नमुण्डकमाण्डूक्यतैत्तिरिः।
छान्दोग्यम् ऐतरेयं च बृहदारण्यकं तथा॥
कौषीतकिश्वेताश्वतरयोश्च तत्र उपसंख्यानम्॥

एतासु उपनिषत्सु कठोपनिषन्नाम या उपनिषत् तस्यां नचिकेतसो नवयूनश्चरितं गीतं वर्तते। अत्र तच्चरित्रवर्णनमेवाभीष्टम्।

गौतमान्ववायसम्भवोऽरुणो नाम ऋषि र्महोदारमना बभूव। अन्नदाने स भृशमभिरुचिं निदधौ। सः स्वजीवनेऽपरिमितस्यान्धसो दानञ्चकार। अतः स जगति 'वाजश्रवाः' इत्येतेन नाम्ना प्रख्यात आसीत्।

अरुणस्यर्षे रात्मज 'उद्दालक' आसीत्। सः स्वकीयं मनः क्रतुषु न्यबध्नात्। एकदाऽसौ यज्ञफलाभीप्सु र्भवन् 'विश्वजित्' इत्येतन्नामधेये मखे सर्वस्वं दक्षिणायां प्रददौ।

उद्दालकस्य सूनु 'र्नचिकेताः' आसीत्। नचिकेताः यज्ञ-दान-तपः परायणस्य वंशस्य सुत आसीत्। तस्मात् तस्य शैशवादेव स्वान्तं पुण्यकर्मसु श्रद्धत्तेस्म। सः स्वपितरं गवादिदानं विदधतं यदा यदा प्रैक्षिष्ट तदा तदा तन्मनो नितरामप्रीयत। एकदा ब्राह्मणै र्यज्ञे दक्षिणाकल्पितासु पयस्विनीषु नीयमानासु, तद्धृदये श्रद्धाऽऽवि-

वेश। "पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रिया गाः प्रददन्नरोऽनन्दान् नाम लोकान् गच्छति; पितुर्मेते माऽभूवन्निति सः पितरं द्विः त्रिः प्रोवाच। पितः, मां कस्मै दास्यति भवान्? पुनः पुनः साभिनिवेशं तत् पृच्छति तस्मिन्, पिता प्रबलं संरम्भं प्रकटीचकार। अहं त्वां मृत्यवे दास्यामीति सः शशंस। मया यमस्य किमपि कर्त्तव्यमिति नूनं मन्यते ममपितेति निश्चित्य सः तत्सविधे प्रयातु मत्यन्त मौत्सुक्यमभिव्यानक्। अनुशयानल-दग्धः सन्नपि सः स्वापत्यस्य सत्यासक्ततां निर्भयताञ्च विलोक्य तमनुमेने।

यम (धर्म) भुवनं प्रस्थितो नचिकेता धर्मराजं कुत्रचिद् गतमाकर्ण्य दिनानि त्रीणि आहार मगृहीत्वैवावतिष्ठत। निवृत्य च धर्मराजोऽतिथेर्नचिकेतस आहार मगृह्णत स्त्रीणि अहानि यातानीति ज्ञातवान्; सः सत्वर मेवार्घ्यपाद्यादिभिः सम्पाद्य सपर्यां, वृणीष्व त्रीन् वरांस्त्वं, यतोहि अकृतभोजनस्य तवात्र दिवसत्रितय मतीत मित्यब्रवीत्। "त्वत्प्रसृष्टं मां तावत् वीतमन्युर्मे पिता प्रतीतोऽभिवदेदिति" प्रथमस्तेन वरो वृतः। धर्मराजस्तथास्त्विति भणंस्तं वरं प्रदत्तवान्। ततो द्वितीयेन वरेण स्वर्ग प्राप्तिसाधनभूतस्याग्नेः सम्यग् ज्ञानं ययाचे नचिकेताः। यतः—

"स्वर्गे लोके न भयं किञ्चन अस्ति,
न तत्र त्वं (मृत्युः) न जरया बिभेति (जनः)।
शोकातिगो मोदते स्वर्गलोके। पुनश्च
स्वर्ग लोका अमृतत्वं भजन्ते" इति।

अविनाशिनो लोकस्यावाप्तिसाधनमग्नि (यज्ञम्) विदुषां बुद्धिरूपिण्यां गुहाया निहितं निवेद्य तस्य चयने इष्टका संख्या रचनाप्रकारश्च सम्यग् निरूपितो देवेन। यथावच्च तत्सर्वं तत्क्षणमेव तम्प्रत्यवदन्मेधावी नचिकेताः। तेन प्रीयमाणोऽसौ "अयमग्निस्तवैव नाम्ना इतः परं ख्यातो भवेद्" इति वरम्, अनेकरूपां रत्नमालाञ्चै कामुपहारीकृतवान् तस्य। तृतीयं वरं ब्रूहि इति च तं निजगाद।

मनुष्ये उपरते सति, अस्ति इत्येके, न अयम् अस्ति इति चान्ये इति येयं विचिकित्सा प्रचलति कृपयेमां विचिकित्सां निरस्यतु भवान्। सा जिज्ञासैव तृतीय वरत्त्वेन तेन निहिता नचिकेतसा। तन्निशम्य चेतसि मुदितोऽपि यम उपदेशस्य पात्रतां परीक्षितुकामस्तं परावर्तयन्निव प्राह—

"देवैः अत्रापि विचिकित्सितं पुरा
न हि सुविज्ञेयः अणुः एषधर्मः
अन्यं वरं नचिकेतो वृणीष्व
मा आग्रहं कुरु—त्यजैनं वरम्"

आत्मज्ञानस्य दुष्प्राप्यता मवगम्यापि निर्भीकोऽसौ जिज्ञासु र्नचिकेताः न मन्दोत्साहो बभूव। सः सनिर्बंधमाह—विषयोऽयं देवैरपि न ज्ञायते, न भवादृक्

कोऽप्यस्त्यन्यो यो विषय मिममवगमयेत् संशयञ्च पराणुदेत्; नास्ति चानेन वरेण सम इतरो वरः कोऽपि। श्रुत्वैतत् अन्तको विविधैः सांसारिकैः प्रलोभनैस्तं प्रलोभयन् अभाणीत्—

"शतायुषः पुत्रपौत्रान् वृणीष्व,
बहून् पशून् हस्तिहिरण्यमश्वान्,
भूमे र्महदायतनं वृणीष्व,
स्वयं च जीव शरदः यावदिच्छसि
वृणीष्व वित्तं चिर जीविकां च ...
कामानां त्वां कामभाजं करोमि—

मर्त्यलोके दुर्लभान् कामान्, मनुष्यै र्नलम्भनीयाः सरथाः सतूर्याः रामाः (अप्सरसः) च ददामि तुभ्यम्। मरणस्वरूपं तावन्मा प्राक्षीः। विरक्तचेतसा नचिकेतसा स्वनिश्चयं सयुक्तिकं समर्थयता प्रत्युक्तम्—भगवन्, प्रत्याश्रुताः सर्वेऽपि भोगाः क्षणभङ्गुराः इन्द्रियाणां तेजो जरयन्ति; अपि च सर्वं जीवित मल्पमेव; नाहमिच्छामि तानखिलान् भोगान्; क्षणभङ्गुरञ्ज जीवनम्। न अपरिमितु मसंख्यातञ्च धनं कदापि मानवं तोषयति। धनं जीवितञ्च सर्व मेव सुलभम्। भवादृशाना मजरामराणां सन्निधि मवाप्य वर्ण-रति-प्रमोदान् अभिध्यायन् अतिदीर्घेऽपि जीवने को रमेत मर्त्यः? अतस्तदेवालौकिकदुर्विज्ञेयं मृत्युस्वरूपमवगन्तुमिच्छामि कृपया निरुपयतु भवान् यथा प्रत्याश्रुतवान्।

साम्प्रतं ते नवयुवानः क्व दृश्यन्ते ये नचिकेता इव न भौतिकेषु पदार्थेयु अनुरागवन्तः, ये दारेषु, धनेषु, वैभवेषु, विलासेषु, पदेषु, पुत्रेषु, ऋद्धिषु, समृद्धिषु, इन्द्रिय ग्राह्येषु च विषयेषु न सन्त्युत्कण्ठावन्तः। अद्यतनेऽनेहसि तु युवानः सांसारिकाणि वस्तून्युपभोक्तुं तानि प्राप्तुं तेषामुपरि स्वकीय मधिकारं निधातुं सर्वविधान्यप्यनुचितानि गर्हणीयानि निन्दनीयानि च कर्माणि विदधतोऽधिगम्यन्ते। ते सन्तीद्रियाणि प्रीणयितुं दुष्कर्मस्वासक्ताः। सन्ति तेऽद्य दुराचारनिलीनाः। ते मनस्तोषकरं वस्तुनिकर मधिगन्तु मिन्द्रियकिङ्करा भवितुं किं नानुतिष्ठन्ति। तेऽनृतं भाषन्ते, ते निरपराधान् निघ्नन्ति, तेऽन्यायमाचरन्ति; ते यत्र न पक्षपात उचितस्तत्र पक्षपातं कुर्वन्ति। क्व एतस्मिन् भारते उत्पन्ना एते तरुणाः क्व चास्मिन्नेव भारते देशे उद्भूतो नचिकेताः। भरतवसुमती, हन्त, एतान् स्ववक्षसि विहरतो दुरितासक्तान् यूनः सम्प्रेक्ष्य क्रन्दति, रोदिति, दूयते, व्यथते च।

यद् भारतं सदाचारे, सच्चारित्र्ये, सन्नीत्यां, सत्यवादितायां, सत्कर्मपरतायां, धर्मानुष्ठाने, समयपरिपालनेऽनुशासनवर्तितायाञ्च समग्रेऽपि संसारे विश्रुतं बभूव; तत्तत्सद्गुणनिष्ठत्वात् तस्य, यद् भूमण्डलस्य सर्वे मानवा एव न, देवा अपि वन्दन्ते

स्म; अद्य तदेव भारतं प्रत्नकालवर्तिस्वकीयरूपाद् भिन्न मेव सञ्जात मस्ति । भारतस्य धनं धनं न, तस्य धनं पदप्रतिष्ठैश्वर्यादिकं न, भारतस्य धनं सर्वेषामम्प्युपरि स्वप्रभुत्व-स्थापनं न, भारतस्य धनं तद् वैदुष्यं किं वा पाण्डित्यं न यदस्त्याचारविहीनम् । अतः भारतीयानां युवकाना माद्यं कर्त्तव्य मिदमेव यत् ते पुनः नचिकेता इवाध्यात्मिकता-वन्तो भवन्तः स्वकीयं पूज्यं स्वकीयं माननीयं स्वकीयं प्रियं राष्ट्रं सदाचाराध्यात्मि-कताश्रीसमुच्छ्रितं विधाय भूयः सर्वस्या अपि संसृत्यास्तदभिवादनीयतां नयेयुः ।

अस्तु, नचिकेतसः पात्रतां विज्ञाय परमप्रीतो यम (धर्म) राजस्तस्मै आत्म-ज्ञानमुपदिदेश । यथाहि श्रेयः प्रेयसी मनुष्यं बध्नीतः । तयोः स्वरूपं परस्परविरुद्धम् । तयोः श्रेय आददानस्य साधु भवति । हीयते अर्थात् य उ प्रेयो वृणीते । अविद्या विद्या च विपरीते भिन्नफले च । तत्राविद्यायाम् अन्तरे वर्तमानाः स्वयं धीराः पण्डितम्म-न्यमानाः । दन्द्रम्यमाणाः (योनिषु भ्रमन्तः) परियन्ति मूढाः अन्धेनैव नीयमानाः यथान्धाः । ते पुनः पुनः वश मापद्यन्ते मृत्योः । नैषा तर्केण मति रापनेया; प्रोक्ताऽन्ये-नैव सुज्ञानाय प्रेष्ठः । यां त्वमापः सत्यधृति र्वतासि त्वादृङ् नो भूयान् नचिकेतः प्रष्टा ।

एवं स नचिकेताः यमाद् अग्नि (यज्ञ) विद्या मात्मज्ञानञ्च प्राप्य तद्रहस्यं सर्वजगतः पुरो निधाय प्राणिमात्रस्य तमुपकारं चकार येनोपकारेण समो नान्यः कोऽप्युपकारो भवितु मर्हति । वस्तुतस्तु नचिकेताः सर्वेषामपि जनानां कृते ज्ञाप-यामास—

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥

× × ×

अणो रणीयान् महतो महीयानात्माऽस्य जन्तो र्निहितो गुहायाम् ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमान मात्मनः ॥

× × ×

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूँ स्वाम् ॥

आसीन्नचिकेता ज्ञानमूर्तिः । तदीयं चरित्रं यज्ञेन तपसा दानेन च देदीप्यमान मासीत् ।

इयं भूयान्माता भरतवसुधाऽऽध्यात्म विभया
भृशं स्फूर्जद् दीप्ता जगति सकले शान्तिसुखदा
युवानः सर्वे स्यु र्यमनियमवन्तः शुचिधियो
भवेयुस्तेऽस्माकं सुकृतिनचिकेता इव युवा ॥

—

# पतञ्जलिः

यं मुनिवरं कश्चन धीमद्धुरीणः श्लोकेन श्रद्धयानेन भक्त्या च नमस्यन् श्रुतो भवति—

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिनानतोऽस्मि ॥

स मुनि र्भारतस्यास्यैव न, अपितु सकलस्यापि संसारस्य महाविभूति र्भूत्वा त्रिबभौ। स योगदर्शनं नाम यद् दर्शनं ज्योति र्भारते प्रज्वालयामास, तेन दिव्येन ज्योतिषा भारतं ज्योतिष्मद् सत् समस्यापि विश्वस्य श्रेयः सम्पादयत् संशोभते। स योगदर्शनं विरचय्य भारतस्य कृते तं दिव्यं निधिं प्रददौ यस्यनिधेः साम्यं न निध्य-न्तरं कर्तुं मर्हति; अतः भारतं वस्तुतो भूभुवनवर्तीन्यखिलानि राष्ट्राण्यन्यान्यतिशय्य देद्युतीति। तदेतन्निधिमासाद्य समेषामपि देशानां वन्दनीयतां गतमस्ति। सर्वेऽपि मानवास्तदीयं प्रकाशं संश्रित्य स्वकीयं वर्तमानं भावि च जीवनं कृत्स्नतया नीरोगं सबलञ्च विधाय तद् धर्मार्थकाममोक्षार्जनोचितं कर्तुं शक्नुवन्ति।

नूनं भारतम्प्रति पतञ्जले राविर्भावः सर्वगौरवातिशायिगौरवस्य प्राप्तेः कारणं सञ्जातः। साम्प्रतमत्र विचारणेयं वर्तते यद् योगदर्शनकर्ता पतञ्जलिरेव महा-भाष्यस्याथचायुर्वेदशास्त्रविषयिकायाश्चरकसंहितायाः प्रणेता वर्तते अथवा महाभाष्य-स्य कर्ता तस्माद् भिन्नः किञ्च चरकसंहितायाः स्रष्टा तस्मादपीतरः। 'पतञ्जलिः' इत्येतन्नाम्ना प्रख्याताः कतिपये विपश्चित्प्रवरा यथाकालं भारतं विभूषयाम्बभूवुरिति भारतीयवाङ्मयपर्यालोचका आमनन्ति। सप्तानां पतञ्जलीना मुद्भवो भारते जात इत्येतत् ते वदन्ति। तथाहि—

योगसूत्रकारः प्रथमः, व्याकरणमहाभाष्यप्रणेता द्वितीयः,
चरकसंहिताप्रतिसंस्कर्ता तृतीयः निदान सूत्ररचयिता चतुर्थः,
परमार्थसारप्रवक्ता पञ्चमः, सांख्यव्याख्याग्रन्थेषु विद्यमानानां
केषाञ्चन सन्दर्भाणां निर्माता षष्ठः, कोषकारश्च सप्तमः पतञ्जलिः।

योगसूत्र–व्याकरणमहाभाष्य-चरकसंहिताख्यग्रन्थानां 'कर्ताऽऽसीदेक एव पतञ्जलि रित्येषा मान्यता परमबलवती नितरां पुरातनी च। एतन्मान्यतापवादिनी न कापि

भणितिः सुविदिता प्रश्रूयते । यस्माद् 'योगस्यचित्तेन पदेन वाचाम्........इत्येतदाद्युक्तेः सत्यत्वं विरोद्धुं न कस्यापि सन्देहस्य लवोऽपि उत्तिष्ठति । भवतु नाम परमार्थसारादिकर्तृषु पतञ्जलिषु विभिन्नतेत्येतद् बहूनां लब्धवर्णानां विमर्शणम् ।

योगसूत्रकारः पतञ्जलिः परमप्राचीन स्तस्माद् व्याकरणमहाभाष्यकारात् पतञ्जले भिन्न इत्येतद् उदयवीर शास्त्री अनुसन्धत्ते । स ब्रूते—

"नैतानि योगसूत्राणि व्याकरणमहाभाष्यकर्त्रा पुष्यमित्रं याजयित्रा हि विरचितानीत्यत्र विषये खल्वेकमप्युपोद्वलक संक्षेपधिया समुपलभ्यते । महाभाष्यकर्ता कोऽप्यन्यः पतञ्जलिः । महर्षि वेदव्यासो ब्रह्मसूत्राणि ससर्ज इत्यत्र नास्ति कस्यापि वैमत्यम् । तत्र द्वितीयाध्यायस्य प्रथम पादे तृतीयं सूत्रम्—'एतेन योगः प्रत्युक्तः' इति ब्रह्मसूत्रभाष्यकारो भगवान् शङ्कराचार्यः सूत्रमिदमित्थं प्रत्याचख्यौ—'एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्मृति रपि प्रत्याख्याता द्रष्टव्येत्यतिदिशति' अत्र योगाङ्गानां यमनियमादीना मनुष्ठेयतयाङ्गीकारोऽपि कापिलसांख्यपरिकल्पितः प्रधानकारणवादः स्वातन्त्र्येण योगेऽपि सम्प्रतिष्ठापित इति । तस्यैव विशेषेणात्र प्रत्याख्यान मतिदिश्यते । एवञ्च यद् योगशास्त्रं कापिलसांख्याभिमतं प्रधानकारणवादं सर्वात्मनाऽनुसरति तदेवात्र वेदान्तसूत्रे योगपदेन ग्राह्यमिति भगवच्छङ्करपादानामभिप्रायः । तच्चाधुना समुपलभ्यमा न पातञ्जलं योगशास्त्रमेव सम्भवति । एतानि पातञ्जलयोगसूत्राण्यतिरिच्य नान्यच्छास्त्रं योगामिधं कस्यापि दृष्टिपथमवतीर्णम् । यत्र कापिलसांख्याभिमतप्रधानकारणवाद स्तथा सम्प्रतिष्ठापितो भवेत् । एवं च ब्राह्मसूत्रकारस्य महर्षे व्यासस्य हार्दो यदि प्रमाणभूत आचार्यो भाष्यकारस्तात्विकतयाऽवागच्छत् तदात्र सूत्रे सांख्य स्मृति प्रत्याख्यानदिशा योगस्मृतिप्रत्याख्यानभूतेनातिदेशेन पातञ्जलयोगसूत्राणामेव सङ्केत इति निश्चीयते । अन्यथा शङ्करभगवत्पादभणिति भ्रान्तिरेव स्यात् । तथा च ब्रह्मसूत्रप्रणेतृवेदव्याससमयात् प्रागेव पातञ्जलयोगसूत्राणामवस्थितिरिति स्थिरम् । एवं व्याकरणमहाभाण्यकर्ता पतञ्जलि विक्रमाब्दारम्भात्प्राग् द्वितीये तृतीयस्मिन् वा शतके वर्तमानो द्वापरान्ते प्रसूतस्य महर्षे व्यासस्य काले विधीयमानानां योगसूत्राणां प्रणेता न सम्भवतीति निर्णीयते । तस्मादसावन्य एव पतञ्जलि र्महाभाष्यकर्तुरिति मन्तव्यम्" ।

युधिष्ठिर मीमांसको महाभाष्यकर्तुः पतञ्जले राविर्भावकालं लक्ष्यीकृत्याह-यदा तस्योदितस्य द्वादशशतवर्षाणि व्यत्यगुस्तदा वैक्रमसम्बत्सरस्य जनुः सञ्जातम् । तथा सत्त्वेऽपि वेदव्यासस्तु ततोऽप्यतितरां प्रत्नः । तस्य (व्यासस्य) काले समुद्भूतो योगसूत्रकर्ता पतञ्जलि र्महाभाष्यकारः पतञ्जलिर्न सम्भवति ।

विदुषां मतमिदमपि—योगसूत्रकर्ता पतञ्जलिः स न यमधिकृत्य महाराज समुद्रगुप्तः स्वग्रन्थे विदुषां नमस्यः पतञ्जलि र्मुनिवरो व्याकरणमहाभाष्यं, चरके रोगमुषो रोगान्, योगदर्शनव्याख्यानभूत मद्भुतं योग शास्त्रञ्च विरचयामास इति वक्ति स्म। यो हि पतञ्जलि र्योगसूत्रस्य व्याख्यानभूतमध्यात्मशास्त्रं प्रणिनाय तस्य पतञ्जले र्ग्रन्थस्तु कालेन कवलितो, नाद्य स उपलभ्यते।

आतिवाहिकशरीरविषयक सिद्धान्तो यश्चरकसंहितायां सः शारीर स्थाने द्वितीयाध्याये परिवीक्ष्यते, स तस्य पतञ्जलेः प्रतीयते यो हि योगशास्त्रव्याख्यानभूत-मध्यात्मशास्त्रं लिलेख। तेन चरकसंहिताप्रतिसंस्कर्ता पतञ्जलि र्योगसूत्रव्याख्यान-भूताध्यात्मशास्त्रप्रणेता पतञ्जलिर्न भिन्न इति निश्चीयते। विपश्चितां वर्गश्चैकश् 'चरकाचार्य इति पतञ्जले रपरं नाम इति च मन्यते। हेमचन्द्रेण निजग्रन्थेऽभिधान-चिन्तामणौ असकृत् पतञ्जलिः स्मृत् स्तेन कश्चित् पतञ्जलिः कोषकारोऽपि बभूव इति प्रतीयते। तदेवं बहूनां पतञ्जलीनां समये समये सञ्जातत्वं सिद्ध्यति। अस्तु, इह यस्य वर्णन मस्माकमिष्टं सोऽस्ति योगसूत्ररचयिता महर्षि पतञ्जलिः। यदि योग सूत्रकारात् पतञ्जले र्व्याकरणमहाभाष्यकर्ता पतञ्जलि र्भिन्न स्तदा भवतु नाम। अयं व्याकरणमहाभाष्यकर्ता पतञ्जलि र्यन्महनीयं कार्यं चकार तत्र सन्ति सर्वेऽपि राष्ट्रस्य विश्वस्य च वैयाकरणाः कृतज्ञाः। तत्कार्यं विधाय महाभाष्यकारोऽपि पतञ्जली राष्ट्रस्य वाङ्मयम्प्रति परमप्रकृष्ट महर्घरत्नं प्रदत्तवान्। न स्यात् भारतं तदीयादेत स्माद् ऋणात् कदाप्युद्धृतम्। अथ च यश्चरक संहिता प्रतिसंस्कर्ता बभूव पतञ्जलिस्त स्योपकारोऽपि वन्दनीयोऽभिनन्दनीयश्च। सर्वविधा साधना शरीराधीना। शरीरे सति स्वस्थे चतुष्टयं निष्पद्यते सम्पद्यते च। अत स्तद्विधं शास्त्रं प्रणीय सः पतञ्ज-लिरपि मानवमात्रस्य महती मेव कामपि सेवां विदधौ। एवमेव परमार्थसारादिरच-यितृतत्तत्पतञ्जलिकृतानि कार्याणि च सन्ति स्तुत्यानि।

सांख्यदर्शने पुरुषस्य प्रकृतेश्च निरूपणं कृतमस्ति। तयोः किं स्वरूपं, किञ्च लक्षणं किञ्च तयोः कार्य मित्येतदादिकस्य सभीचीनतया स्पष्टतया च विचारः कृतोऽस्ति। महर्षिणा पतञ्जलिना सांख्यस्य सर्वे सिद्धान्ता आदृताः सन्ति; परं तेन पुरुषस्य प्रकृतेश्च भिन्नतायाः सम्यक् ज्ञान मवाप्तुं स्वकीये योग दर्शने चित्तवृत्ति निरोद्ध मुपायाः प्रतिपादिताः सन्ति; तानुपायानाश्रित्य निर्विकल्पकसमाधिस्थितः सञ्जायते योगीत्येतत् सर्ववैशद्येन निरूप्य तेन प्रकृति-पुरुषयोः सम्यग् ज्ञानमवगन्तुं तद्विषयकाणि साधनानि प्रतिपादितानि सन्ति। तानि तानि साधनानि उपन्यस्यता तेनेदृगेकः पुरुषविशेषः प्रदर्शितोऽस्ति यः प्रकृतेः क्लेश-कर्म-कर्मफल-संस्कारादिबन्धन-हेतुषु न लिप्तो भवति न च संसक्तः। तस्य पुरुषविशेषस्य प्रणिधानेन ध्यानेन धारणया च चित्तवृत्तीनां निरोधो भवितुं शक्य इत्येतद्भिदधत् सः पुरुष विशेषं तम् 'ईश्वर'

इत्येतेन नाम्ना निर्दिशति । सः सांख्यमतानि पञ्चविंशति तत्वानि मन्वानःषड् विंशति-तमम् 'ईश्वर' इत्येतन्नामकं तत्वमपि स्वीकुरुते ।

मानवो ज्ञानेन मुक्तिं प्राप्तुं शक्नोति इति यत् कपिलेनोक्तं तत्सत्यं परं तस्य ज्ञानस्य प्राप्तेः साधनमस्ति योग इत्येतद् ब्रुवाणः पतञ्जलिः कथयति प्रथमं विषयेषु विरक्ति रपेक्ष्यते; वैराग्यवतो मानवस्य चित्तवृत्तीनां निरोधो भवितुं शक्यो भवति । सति चित्तवृत्तिनिरोधे ज्ञानलाभः सम्भवः; यत्र ज्ञान ज्योति र्भवत्युद्दीप्तं स मुक्तिं लभते ।

'योग' शब्दस्यास्त्यर्थो द्वयोः प्रकृतिपुरुषयोः संयोगः । प्रकृति-पुरुषसंयोगाद् यद् भवति सांसारिकं बन्धनं तद् बन्धना ज्जायन्ते बहूनि विविधानि च दुःखानि । योगदर्शनं प्रकृति पुरुषयोस्तद्बन्धन (योग) च्छेदनाय किञ्च तत्र सफलताधिगमनाय साधनान्यनेकानि ज्ञापयति । तैस्तैरुपायैः योगशास्त्रं प्रकृतिपुरुषयो र्योग मुच्छिनत्ति तस्माद् अस्मिन् शास्त्रे प्रयुक्तमिद 'योग' पदं समाध्यर्थकं वर्तते । तस्याभिप्रायोऽयम् अविद्यया पुरुष (द्रष्ट्र) प्रकृत्योः (दृश्य) यः संयोगो जायते स भवति दुःखहेतुः । स दुःखहेतुः संयोगः, समाधिनावाप्ते सति ज्ञाने, नश्यति । इत्थं 'योग' पदप्रयोग इह सार्थकत्वं भजते । अस्मिन् योगदर्शनप्रयुक्तयोगपदे कियन्मधुर मुक्तम्—

पतञ्जलि मुनेरूक्तिः काप्यपूर्वा जयत्यसौ ।
पुम्प्रकृत्यो र्वियोगोऽपि योग इत्युच्यते यया ॥

योग सूत्रस्याधः स्थितानि सूत्राणि 'संयोगम्' 'अविद्याम्' 'कैवल्यम्' (बन्धन-च्छेदः) इत्येतेषां पदानां भावं स्पष्टीकृत्य निदधतिः—

(अ) द्रष्टृदृश्ययोः संयोगो हेयहेतुः । साधन पा० १७
(आ) तस्य हेतुरविद्या हेयहेतुः । साधन पा० २४
(इ) तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् साधन पा० २५

उत्तमाधिकारिणां कृतेऽष्टसाधनानि पतञ्जलिनाधः स्थितैः सूत्रैरुपस्थापितानि सन्ति । उपरि सङ्केतेन चर्चा विहितापि वर्तते—

(१) अभ्यास वैराग्याभ्यां तन्निरोधः (२) ईश्वर प्रणिधानाद्वा, (३) प्रच्छर्दनविधारणाभ्यां वा प्राणस्य, (४) विषयवती वा प्रवृत्ति रुत्पन्ना मनसः स्थिति निबन्धिनी, (५) विशोका वा ज्योतिष्मती, (६) वीतरागविषयं वा चित्तम्, (७) स्वप्ननिद्रा ज्ञानाऽलम्बनं वा (८) यथाभिमतध्यानाद्वा ।

सामान्यजनानां हिताय अष्टाङ्गयोगः प्रतिदादितः । योगस्याष्टाङ्गानीमानि—

यम-नियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः ।

मनोवृत्तयो भवन्ति क्लिष्टा अक्लिष्टाश्च । अविद्याऽस्मिता रागद्वेषाभिनिवेशाख्य, पञ्चक्लेशेम्य आत्मानं दूरीकृत्य क्लिष्टा अपि अक्लिष्टतां यान्ति । मोक्षार्थं सर्वविधानामपि वृत्तीनां लयोऽपेक्ष्यते । सर्वविधतया वृत्तयो यदा स्वस्वकार्यमुज्झन्ति तदा तासां निरोध इति ज्ञेयः योगसूत्रप्रतिपादितोपायानववलम्ब्य मानवो गच्छता कालेन सञ्जायते मोक्षाधिकारी । पुनः पुनः पतञ्जलि रभिवन्द्यते यत्प्रदर्शितेन—

योगेन लभ्यते स्वास्थ्यं, योगेन रुध्यते मनः, योगेन चात्मनो लब्धिः (अतः) सततं योगमभ्यसेत् ॥

अन्ततश्च—

दुःखानि येन सकलानि विनाशितानि, पुंसां समग्रवसुधाभुवनस्थितानाम् ।
कृत्वा कृतिं भवतरीं निज योगसूत्रं वंद्यो न कस्य मनुजस्य पतञ्जलिः सः ॥



# यास्कः

वेदाः प्राचीनतमाः ! तेषा मर्थस्यावगमनं कठोर श्रम साध्यम् तदीयस्यार्थस्य विलष्टतमत्वात्, भावानाँ गम्भीरतमृत्वाद्, भाषायाश्च पुराततनीत्वद् रहस्यानाञ्च परमनिगूढ़व्यङ्‌्य लक्ष्यार्थं निष्ठत्वादथ चाध्यात्मिकाधिदैविकाधिभौतिकतास्वरूप-सुदृढ़प्राकारपरिवेष्टितत्वात् तेषां बुधा साधनापरायणास्तपस्विनः स्वाध्यायशीला वीतरागास्तत्र गतिमन्तो भवितु शक्नुवन्ति, येषाञ्चोपरि भगवतः कृपा किंवा सन्ति ये परे`श चरण समर्पित जीवनास्ते ततः प्रकाश मवाप्तु क्षमा जायन्ते ।

वेदाः सन्त्यस्मदीयसंस्कृतिस्रोतोभूताः । वेदार्थावगमनप्रयोजनेन वेदाङ्ग-साहिन्यस्य प्रौढ़ ज्ञानमपेक्ष्यते । वेदाङ्गसाहित्यमस्ति शिक्षा-व्याकरण-निरुक्त-कल्प-च्छन्दोज्यौतिषात्मकम् । एतेषां षण्णां सहायता वैदिकपदानां गूढ़ गूढ़तहरभाव जिज्ञासूनां पुरः प्रस्फुरिता भवन्तः समुपस्थिता भवन्ति ।

षट्‌त्स्वपिवेदाङ्गेषु प्रथमं व्याकरणस्याध्ययनमपेक्षितं भवति । तद् ( व्याकरणम् ) भाषाज्ञानलाभाय सर्वेषामप्यष्टानां शक्तिग्राहकाणां मध्ये मूर्धन्यं स्थान-मध्यास्ते । तस्याध्ययनेन विभक्तिपरिणामस्यापि बोधो जायते, न च सर्वैर्लिङ्गैर्न सर्वाभिर्विभक्तिभिर्वेदमन्त्रा भवन्ति निगदिताः । तेऽवश्यमेव यज्ञगतेन यथा यथं विपरिणमयितव्या भवन्ति । नावैयाकरणस्तान् यथा यथं परिवर्तयितु प्रभवति । अतस्तद् ज्ञान मेवादौ कर्त्तव्यम् ।

अत्र यस्य चरित मुपश्लोकयितु मुपक्रम्यते तेन यच्छास्त्रं प्रणीतं तद् 'निरुक्तम्' इत्यमिधीयते । इदं वेदाङ्गेष्वन्यतमम् । शब्दार्थनिर्वचन ज्ञानस्य तदधीनत्वात् । तस्य परमोपादेयत्वंहि कस्य नाम सुधियोऽविदितम् । तद् निघण्टुनाम्नो वैदिकशब्दकोष-स्यास्ति विस्तृतं विवेचनं, व्याख्यानं वा टीका ग्रन्थः । निरूच्यते निश्शेषेणोपदिश्यते तत्–'निरुक्तम्' । अथवा अर्थाववोधनाय पदजातं यत्र निरूच्यते तद् 'निरूक्तम्' इत्यभिधीयते । वैदिकपदानां व्युत्पादनं तस्य विषयः तद् दुरूहपदानाम् अर्थावगमनाय, वैदिकपदव्याख्यानाय च विरचितमभूत् । यथा शब्दलक्षणपरिज्ञानं सर्वशास्त्रेषु व्याकरणात् तथैव शब्दार्थ निर्वचनम्—अभिज्ञानम्—निरूक्ताद् भवति । भाषा-शास्त्र दृष्ट्या निरूक्त मनुपमं रत्नम् । निरूक्तमन्तरेण वेदार्थज्ञानमसम्भवम् । पञ्चाध्यायिनिघण्टु–भागत्रयनवाध्यायनिरूक्ताश्रयणेनैव वेदमन्त्रा ज्ञानगोचरतां गच्छन्ति । समाम्नायो हि निघण्टुः—"निगमा इमे भवन्ति छन्दोभ्यः समाहृत्य

समाहृत्य"। महर्षि यस्कि: शंसति—"साक्षात् कृतधर्माण ऋषयो वमूवुस्तेऽवरेभ्योऽसाक्षात्कृतकर्मभ्य उपदेशेन मन्त्रान् सम्प्रादुः, उपदेशाय ग्लायन्तोऽवरेभ्यो विल्मग्रहणाय इमं ग्रन्थं समाम्नासिषुर्वेदञ्च वेदाङ्गानि च"।

महर्षिर्यास्क: प्राचीनतमेषु महर्षिषु गण्यते । तत्काल: पाणिनिकालादपि प्राक्तन:। महाभारते शान्तिपर्वणि—

यास्को मामृषि रव्यग्रो नैक यज्ञेषु गीतवान् ।
शिणिविष्ट इति ह्यस्माद् गुह्यनाम धरोह्यहम् ॥
स्तुत्वा मां शिणिविष्टेति यास्क ऋषिरुदारधी: ।
मत्प्रसादा दहो नष्टं निरुक्तमभिजग्मिवान् ॥

[ अध्याय: ३४२. श्लोक ७२-७३ ]

इत्येतयो: श्लोकयो र्निर्दिष्टोऽस्ति। एतेन तदीय: कालो महाभारतकालात् प्राग्वर्त्येव सिद्धयति। मैकडानलस्तु तस्येशवीयाब्द प्राग्वर्तिनि पञ्चमे शतके तदवस्थितिं मन्यते।

वैदिक व्याख्या कारेषु यास्क उच्चतम:। ब्राह्मणग्रन्थेषु प्रणीतेषु सत्सु ये ग्रन्था विरचिता अभूवंस्तेषु अग्रगण्य:। तस्मात् तस्य [ यास्कस्य ] माननीयतां परिवर्तिन: सर्वेऽपि वेदव्याख्यातार: सप्रश्रयं स्वीकुर्वते। अस्ति न कोऽपीदृक् भाष्यकारो यं न तत्प्रभाव: शरव्यीकरोति। वेदभाष्यकारेषु आचार्य: सायण: सुविदित: स: कृत्स्नतया तदृणेनात्मानं ऋणवन्तं मन्यते। यत्र तत्र स्वकीयमर्थंपातुं स यास्काभिमत मर्थं मुद्धृत्य तं प्रमाणत्वेन निदधाति। आधुनिको वेदव्याख्याकार ऋषिदयानन्दोऽपि तस्य महत्तां, स्पष्टतया स्वीकुरुते। एतावदेव न, प्रतीच्या अपि वेदानुसन्धातार स्तस्य भाष्यपद्धतिमनुसरन्त: प्रतिलक्ष्यन्ते। सहर्षं तेऽपि यास्कस्य महनीयता मङ्गीकुर्वन्ति।

यास्ककृतस्य निरुक्तस्य टीकाकारो विश्रुतो विद्वान् दुर्गाचार्य आमनति "निरुक्तान्यासंश्चतुर्दश। यास्कस्य निरुक्ते द्वादशनिरुक्तकाराणां मतानि निर्दिष्टान्याप्यन्ते। साम्प्रतं यन् निरुक्त मधिगम्यते तस्य रचयिता यास्क एव। तदेव वेदाङ्गस्य प्रतिनिधित्वाय कल्पते। निरुक्तमस्ति द्वादशाध्यायात्मकम्। द्वादशसु अध्यायेषु आदिमाअध्याया स्त्रयो 'निघण्टु' रित्येतेन नाम्नाभिधीयते। चतुर्थ: पञ्चम: षष्ठश्चाध्यायों नैगम" इति प्रोच्यते। निरुक्तं वस्तुत: स्वयमेव मूलतो भाष्यम्। परं नितान्तदुरूहत्वाट्टीकाकारास्तदर्थावगमनाय कठोरतरं श्रमं कृतवन्त: निरुक्तप्रतिपादिता विषया अध:स्थितेन श्लोकेनोपस्थाप्यन्ते:—

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्ण विकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्च विधं निरूक्तम् ।।
यास्को वेदमन्त्रभाष्यानेहसि द्वे पद्धती स्वीकुरुते—

१. नैरुक्तकपद्धतिः, २. ऐतिह्यपद्धतिः ।

प्रथमायां पद्धत्यां पदानि निरुच्य धातुप्रत्ययादिका निर्दिश्यन्ते, मूलस्य चार्थः स्पष्टीक्रियते । यथा दुहितेत्येतत्पदस्य निरुक्तिः—दूरे हिता भवति, दोग्धि वा । द्वितीयास्ति ऐतिह्यपद्धतिः; अत्रेतिहासोऽनुसृतः । देवताः अपि ऐतिहासिकपुरुषत्वेन मताः सन्ति । वेदेष्वस्तीतिहासोऽनुस्यूत इति यास्क मन्यते । "तत्रेतिहासमाचक्षते" इत्येतद् यत्र तत्र निर्दिष्टम् । सः [ यास्कः ] वेद मन्त्राणां त्रिविधत्वं प्रतिपादयति—

आधिभौतिकः, आधिदैविकः, आध्यात्मिकश्च ।

यास्कः शब्दनिर्वचने शब्दानां त्रिवृत्तिमत्वमाख्याति । ता इमाः—परोक्षवृत्तिः, अतिपरोक्षवृत्तिः, प्रत्यक्षवृत्तिः ।

नामाख्यातोपसर्गनिपातात्मक शब्दराशिं मन्त्रेभ्यः सञ्चित्य निघण्टुर्विरचितः । निघण्टुः अतिपरोक्षवृत्तिनिष्ठः शब्दोऽतिपरोक्षवृत्तितः प्रथमंपरोक्षवृत्तिगामी क्रियते, ततः प्रत्यक्षवृत्तावुपस्थाप्य निरुच्यते सः वेदेषु देवतानां स्तवनं परोक्षवृत्यां वर्तते । अस्ति निरुक्तस्यायं सिद्धान्तः—"नामान्याख्यातजानि" ।

निगमन-समाहनन-समाहरणात्मिकास्तिस्रः क्रियाः सन्ति निघण्टौ निरूपिताः । नामाख्यातोपसर्गनिपातेषु नाम आख्यातञ्च अन्यापेक्षि न । स्वयं स्वस्वार्थं प्रकटी कुर्वंति ।

निरुक्तकारो देवतानां त्रिविधत्वं मन्यते । "तिस्र एव देवताः इति नैरुक्ताः । अग्निः पृथिवीस्थानो, वायु र्वा इन्द्रो वा अन्तरिक्षस्थानः सूर्यो द्युस्थानः । अतः परस्तादुक्तम्—"महाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति" । तेषां नामानीमानि ये समये समये निरूक्तं विरचयाम्बभूवुः—

१ औपमन्यवः, २ औदुम्बरायणः ३ वार्ष्यायणिः, ४ गार्ग्यः, ५ आग्रायणः, ६ शाकपूणिः, ७ और्णवायः, ८ तैटिकिः, ९ गालवः, १० स्थौलाष्ठीविः, ११ क्रौष्टुकिः, १२ कास्थक्यः, १३ यास्कः, १४ कौत्सव्यः ।

प्राचीना आचार्या निघण्टुं स्वयमेव अररचन् । ते स्वयं तद्व्याख्यां च विदधिरे । तत्परवर्तिनश्च परम्परामिमामानर्चुः तेऽपि स्वयं निघण्टोः प्रणयनं

कृतवन्तः। यास्कोऽपि स्वकीयं निघण्टुं लिलेख। व्याख्याञ्च स विदधाविति तत्व विदो वदन्ति।

अत्र प्रसङ्गानुरोधेन शिक्षादीनां वेदाङ्गानां समासेनोल्लेखो विधीयते—

**शिक्षा—**

शिक्षाभिधं वेदाङ्गमपि वेदार्थावगमने साहाय्यं करोति। वर्णस्वराद्युच्चारणप्रकारो यत्र विविच्य प्रतिपाद्यते सा 'शिक्षा' इति कथ्यते। ऐतरीये शिक्षाध्याये वर्णस्वरोच्चारणप्रक्रिया विजृम्भितास्ति।

कल्पः—

कल्पश्च वेदार्थावगमने साहाय्यकृद् भवति। आश्वलायनापस्तम्ब-बौधायनादि सूत्राणि 'कल्प' इति नाम्नाभिधीयन्ते। यज्ञसम्पादनविधिस्तत्र विविच्यास्ति प्रतिपादितः

छन्दः—

वेदविद्यास्ति छान्दसी विद्या। तस्मात् तदर्थं छन्दोऽङ्गमप्यध्येतव्यं वर्तते। छन्दोऽङ्गे छन्दसां लक्षणानि, तदव्याख्याश्च सन्ति। अस्ति तदङ्गं छन्दोविज्ञानम्।

ज्यौतिषम्—

को यज्ञः कस्मिन् काले कर्त्तव्यः, तदनुष्ठानार्थं को हि कालोऽतितरा मुपकारकोऽथ चाभिमतफलप्रदाता इत्येतदादिज्ञानाय ज्यौतिषमध्ययनीयम्।

वेदार्थबोधो वेदाङ्गज्ञानमन्तरेण न सम्भवम्। वेदाङ्गेषु यन्निरूक्तं नाम वेदाङ्गं तद् वैदिकपदव्याख्यां कुरुते। एतत् कार्यार्थं तदन्यानि च शिक्षादिकाण्यङ्गानि सहकारित्वेन च संश्रयति। एतद्विधं महत् कार्यं निरुक्तेन विधीयते। इदमेव निरुक्तं यास्कश्चकार।

यस्य हि वेदस्य भारतीयसंस्कृतीतिहासे परमगौरवमण्डितं पदं, योहि वेदो भारतीयस्य धर्मस्य सभ्यतायाश्च आधारो वर्तते, यस्मिन् हि वेदे आर्याणाम् आचारा विचाराः वसनम्, अशनम्, धर्मः, कर्म च समुल्लसन्ति, यो हि वेदोऽध्यात्मशास्त्रस्य तत्वानां विशालो विमलश्च शेवधिः, योहि तपोनिष्ठमहर्षीणां पवित्रे हृदये प्रास्फुरत्। यश्चालौकिकतत्वरहस्यबोधकं किमप्यद्भुतं साधनम्. प्रत्यक्षानुमानागम्य भावाववोधनकरः—

"प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एतं विदन्ति वेदेन तस्माद् वेदस्य वेदता ।।

तद्विधमहिमशालिनो वेदस्यार्थावगमने क्षमं यो यास्को निरुक्तं चक्रे तदुपश्लोकनं कथं क्रियेत् ।

विद्या विनोदि ऋषि विश्रुतमान्य यास्को
ग्रन्थं जुगुम्फ विदुषां निकषं निरुक्तं
विज्ञा अधीत्य खलु यस्य हि वेद वन्द्ये
लोके भवन्ति निपुणा स्तमहं प्रणौमि ।।

---

# मातृ-सीता

भारतीयनारीणां पुरः या भारतीयनारीत्वं निदधौ; पतिव्रतधर्मो यस्या मात्मानं परिणमय्यावततार; या मातृ-पितृवंशं भर्तृवंशञ्च नैजेन निर्मलेन चरित्रेणो दतिष्ठिपत्, या नात्र भुवि स्वकीय मुपमानं निदधाति; यस्याः करकमलयो र्हरिद्रा पि न परिमृष्टा परं या वननिर्वासितं स्वभर्तारमन्वगमत् सास्ति मिथिलाधिराजतनया जानकी। यदा हि स्वकान्तेन रामेण सार्धं सा महर्षे रगस्त्यस्याश्रममाययौ तदा तामुद्दिश्य महर्षि रगस्त्यो यदुवाच तेन तस्याश्चरित्रस्योदात्ततमता पवित्रतमता च विदिततां याति—

एषा च सुकुमारी च खेदैश्च न विमानिता।
प्राज्यदोषं वनं प्राप्ता भर्तृस्नेहप्रचोदिता ॥ (अरण्य काण्डे, १४।३)
एषा हि प्रकृतिः स्त्रीणा मासृष्टे रघुनन्दन।
समस्थ मनुरज्यन्ते विषमस्थं त्यजन्ति च ॥ (अरण्य काण्डे, १४।५)
शतहृदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा।
गरुडानिलयोः शैघ्र्य मनुगच्छन्ति योषितः ॥ (अरण्य काडे, १४।६)
इयन्तु भवतो भार्या दोषै रेतै र्विवर्जिता।
श्लाघ्या च व्यपदेश्या च यथा देवीष्वरुन्धती ॥(अरण्य काण्डे, १४।७)

मुनिना विश्वामित्रेश सह राम लक्ष्मणयो र्मिथिला मागतयोः सतोश्चारुतम चारित्र्यचारुतासमुल्लसितायाः सींतायाः श्रीवाल्मीकिरामायणे वाल्मीकिना वीर्य शुल्कत्व माख्यातम्। तद्धि तस्या वीर्यशुल्कत्वं स्फुटतयैव तस्या असामान्यत्वं वन्दनीय ञ्च वैशिष्ट्यं ज्ञापयति। तस्यां राजमाना मनन्यगां शक्तिश्रियं वीक्ष्यैव तस्याः पिता राजा जनको विश्वामित्रं 'वीर्यशुल्केति मे कन्या' यो नृपो नृपकुमारो वा शैवशरासनस्यो त्तोलने क्षमः स्यात् स एव सीता मुद्वोढुं शक्नुयात् मदीयामिमां घोषणा माकर्ण्य विश्वस्य प्रख्याता वीर्यवन्त इहागताः परं कार्मुकोत्तोलने न ते प्राभूवन्नतः प्रतिख्याता-स्ते' इति निवेदयाम्बभूव।

रामो यद्यपि तस्य जनकस्य हृदयं जहार परं प्रत्याश्रुत्यनुरोधेन स तस्मा अपि चापारोपणमन्तरेण प्रदातुं नार्हत्। स मुनिं विश्वामित्रं स्पष्टतयैवाचकथन्—

"यद्यस्य धनुषो रामः कुर्यादारोपणं मुने।
सुता मयोनिजां सीतां दद्यां दाशरथे रहम् ॥
(बाल काण्डे, ६६।२६)

सीता देवपूजानुरागाऽऽसीत् । सा राजधर्मेषु च प्रवीणतां पर्यपुष्णात् । अतएवोक्तम्—

देवकार्यं च सा कृत्वा कृतज्ञा हृष्टचेतना ।
अभिज्ञा राजधर्माणां राजपुत्री प्रताक्षते ।। (अयोध्याकाण्डे, २६।४)

आकृतिं विलोक्यैव सा हृद्गतं शोकमशोकश्च ज्ञातु मशक्नोत् । कृतवनगमननिश्चयो रामः सीतामाप्रष्टुं यदा तद्भवन माजगाम तदा तं वीक्ष्यैव सा वेपाञ्चक्रे । आसीत् सा प्रभूतानां सद्गुणानां निधिः । कदा क्व किं वक्तव्य मित्यत्र सा कृत्स्नतया कुशलतां निदधौ । उदासीनं राम मालोक्य सा यदवोचद् तत् स एव जनो वक्तुं शक्नुते यो भवति हृदयेऽभिज्ञानवान् वचसि च पटीयान् ।

"अहं गमिष्यामि महावनं प्रिये । त्वया हि वस्तव्य मिहैव भामिनि" (तत्रैव, २६।३०)

इत्येतन्निशम्य सा यदभणत् तेन तस्याः पतिभक्तिपरत्वं, पतिप्राणत्वं, पतिसेवानुरागित्वञ्चैव न ज्ञायन्ते अन्याश्च त्रिविधा विशिष्टता ज्ञाता भवन्ति । कर्त्तव्यपालन पथे आगतानि दारुणतमानि कठोरतमानि च कष्टानि सा तृणाय मेने । सा कापुरुषत्वं मनसा निनिन्द । सा भीतिभ्यो न कदाप्यविभेत् । तस्यामद्भुतमेव सत्साहसमशोभत । सा शौर्य्ये, धैर्य्ये, धर्मे च नितरामेवारज्यद् । वस्तुतो रामस्य भार्य्यायां यादृशा गुणाः अपेक्ष्यन्तेस्म तादृशा स्तस्यां सर्वएव व्यराजन्त ।

वीराणां राजपुत्राणां शस्त्रास्त्रविदुषां नृप ।
अनर्हमयशस्यं च न श्रोतव्यं त्वयेरितम् ।। (तत्रैव, २७।३)

भर्तुर्भाग्यं तु नार्येका प्राप्नोति नरर्षभ ।
अतश्चैवाह मादिष्टा वने वस्तव्य मित्यपि ।। (तत्रैव, २७।५)

न पिता नात्मजो वात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ।। (तत्रैव, २७।६)

अहं दुर्गं गमिष्यामि वनं पुरुषवर्जितम् ।
नानामृगगणाकीर्णं शार्दूलगणसेवितम् ।। (तत्रैव, २७।११)

सुखं वने निवत्स्यामि तथैव भवने पितुः ।
अचिन्तयन्ती त्रीँल्लोकाश्चिन्तयन्ती पतिव्रतम् ।।(तत्रैव, २७।१२)
शुश्रूषमाणा ते नित्यं नियता ब्रह्मचारिणी ।। (तत्रैव, २७।१३)

अनन्यपरायणां तां यदा रामोविपिनं नेतु मचीकमत तदा यत् सा प्राह तेन ज्ञायते यदसौ पतिं स्वं परमपौरुषसम्पन्नं विपत्स्वप्यविचलंःतेजस्विनं द्रष्टु मभिलषते

स्म। सा आत्मविश्वासाऽऽसीत्। यः पतिः काननस्य बहुभयावहान्तरायजुष्टत्वात् स्वपत्नीं नेतुं नैव कामयते तं पतिं सा शैलूषामेवामन्यत।

सीताकृतप्रार्थना मानवस्य मानसं यत्र रमते तत्प्रकटीकरोति—

चतुर्दश हि वर्षाणि समग्राण्युष्य कानने।
भ्रात्रा सह मया चैव पुनः प्रत्यागमिष्यति॥
ततस्त्वां देवि सुभगे क्षेमेण पुनरागता।
यक्ष्ये प्रमुदिता गङ्गे सर्वकामसमृद्धिनी॥ (तत्रैव, ५२।८४-८५)

सीता तदेवाभ्यलषत तदेव तामप्रीणात् येन तद्भर्तुर्यशो वर्धेत। सा गङ्गां याचमाना निजगाद—

पुत्रो दशरथस्यायं महाराजस्य धीमतः।
निदेशं पालयत्वेनं गङ्गे त्वदभिरक्षितः॥ (तत्रैव, ५२।८३)

तदीयो भर्ता वनवासविषयकव्रतपालनेऽश्नुवीत क्षमतां तत्र सः सफलता मधिगच्छेदित्येतदेव तरणितनूजां न्यग्रोधञ्च ययाचे "पारयेन्मे पतिर्व्रतम्"; "नमस्तेऽस्तु महावृक्ष पारयेन्मे पति र्व्रतम्" (तत्रैव, ५५।१६, २४) शाखिसरिदादिष्वादरभावनास्मद्देशस्यास्यातितरां चिरन्तनीत्येतच्चावगमयन्तीमाः पङ्क्तयः। पत्यौ सीता कीदृशीमुदात्ता मवदाताञ्च श्रद्धां न्यदधादित्येतत् सर्वं तदीयेभ्यस्तेभ्यो वचनेभ्यो ज्ञायते यानि सानसूयां निवेदितवती। अनसूयाकृतं सीतासम्माननञ्च सीतायाः श्रेष्ठं पतिव्रतत्वमुत्कृष्टतमञ्च नारीत्वं विनिगमयति—

इदं दिव्यं वरं माल्यं वस्त्रमाभरणानि च।
अङ्गरागं च वैदेहि मह्यार्हं मनुलेपनम्॥
मया दत्त मिदं सीते तव गात्राणि शोभयेत्। तत्रैव
अनुरूप मसंक्लिष्टं नित्यमेव भविष्यति॥ ११८।१८-१९

अरण्ये सीतोक्तपरुषवचोवाणविद्धस्य सुमित्रानन्दनस्येदं वचः—

"वाक्य मप्रतिरूपं तु न चित्रं स्त्रीषु मैथिलि।
स्वभावस्त्वेष नारीणा मेषु लोकेषु दृश्यते"॥ (अरण्यकाण्डे, ४५।२६)

स्वभावस्य दुस्त्यजत्व मभिव्यनक्ति।

सीताया आतिथ्यप्रियत्वं तां हर्तुं लङ्केशे आगते सति ज्ञातं भवति। सा ब्रूते—

"इयं वृसी ब्राह्मण काम मास्यतामिदं च पाद्यं प्रतिगृह्यतामिति।

इदं च सिद्धं वनजात मुत्तमं त्वदर्थमव्यग्र मिहोपभुज्यताम् ॥
(तत्रैव, ४६।३६)

आत्मानं जिहीर्षुं पर्यवलोक्य दशवदनं सीता यदब्रवीत् तत् तद्हृदयस्याभीरुत्वं दृढीयस्कत्वञ्च व्यनक्ति; लङ्केश्वरकृतं च तदसत्कार्यं किमनिष्टं पातयिष्यतीत्यत्र तन्मनसोनिश्चयात्मकं ज्ञानं सूचयति। सावादीद्—

अवश्यं विनशिष्यन्ति सर्वे रावण राक्षसाः।
येषां त्वं कर्कशो राजा दुर्बुद्धि रजितेन्द्रियः॥
अपहृत्य शचीं भार्यां शक्यमिन्द्रस्य जीवितुम्।
न हि रामस्य भार्यां मामानीय स्वस्तिमान् भवेत्॥
(तत्रैव, ४८।२२-२३)

कञ्चित्सहायक मपश्यन्ती रावणेन ह्रियमाणा सीता सानुमच्छ्रङ्गस्थान् पञ्च प्लवङ्गमान् प्रेक्ष्य 'यदि रामाय शंसेयु' रिति विमृश्य सालङ्कारमम्ब्रमक्षिपत्। तदीयं तत्कार्यं तस्या दूरदर्शित्वं विवेकित्वञ्च बोधयति। सामान्य नारीतु साधारणमपि पुमांसं किमपि बक्तुं न शक्नोति, परं सीता सत्यप्येकाकिनी तं रावणं, यः सर्वविश्वविजेतृशौर्यधरः प्रचण्डपराक्रम आसीत्, निर्भयभावेन कठोरैर्वचनै रगर्हयदकुत्सयच्च, न सा ततोऽपि मनागप्यत्रासीत्। इदं तस्या वीरहृदयत्व मेकतोऽभिव्यनक्त्येकतश्च तस्याः सच्चरित्रत्वम्। रावणस्ता भूयसीः सम्पदोऽनन्त मैश्वर्य मसीमानि सुखानि सर्व विधानि चाकर्षणानि प्रदर्श्य आक्रष्टु मियेष परं न सीता धर्मपथादात्मान मंस्रंसयत्। तृणमन्तरतः कृत्वा तस्या रावणेन सह प्रभाषणं तस्याः पतिव्रतौचित्यं दर्शयति।

यश्चन्द्रं नभसो भूमौ पातयेन्नाशयेत वा।
सागरं शोषयेद् वापि स सीतां मोचयेदिह॥
गतासुस्त्वं गतश्रीको गतसत्त्वो गतेन्द्रियः।
लङ्कावैधव्यसंयुक्ता त्वत्कृतेन भविष्यति॥ (तत्रैव, ५६।११-१२)

एतानि वचांसि कियन्ति निर्भीकानि वीरताहृदयवन्ति सन्ति।

इदं शरीरं निःसंज्ञं बन्ध वा घातयस्व वा।
नेदं शरीरं रक्ष्यं ये जीवितं वापि राक्षस॥ (तत्रैव, ५६।२१)

इत्येतेन श्लोकेन सीतायास्तत्वज्ञता क्षणभङ्गुर शरीरेचानास्था ज्ञायेते। वस्तुतः सीतायां दिव्यं साध्वीत्वम्, असामान्यं दुःखविपदादिसहिष्णुत्वमाश्चर्यकरं मतिमत्त्वं ज्ञानवत्वञ्चासाधारणमेव वीरमहिलोचितस्वभावसौष्ठवं व्यभास त।

रामवियोगानलसन्तप्ता सीताऽशोकोद्याने मलिनसंवीतोपवासकृशा पुनः पुनः निःश्वसन्त्येव दृष्टाऽभवत् । अनभ्यासेन क्षीणतां गतां विद्वद्विद्यामिव तां तत्र हनुमान् नाचिराद् बोद्धुमशकत् । सः—

यदि रामः समुद्रान्तां मेदिनीं परिवर्तयेत् ।
अस्याः कृते जगच्चापि युक्तमित्येव मे मतिः ।।
राज्यं वा त्रिषु लोकेषु सीता वा जनकात्मजा ।
त्रैलोक्यराज्यं सकलं सीताया नाप्नुयात् कलाम् ।।
(सुन्दर काण्डे, १६।१३-१४

रावणप्रेरिता राक्षस्यः सीतां भाययन्त्योऽपि न सफलतामगुः । सा निर्भयं प्रोवाच—

चरणेनापि सव्येन न स्पृशेयं निशाचरम् ।
रावणं किं पुन रहं कामयेयं विगर्हितम् ।। (तत्रैव, २६।८)

सा तु रामविरहात् असूनपि हातु मुदयुङ्क्त—

"साहं त्यक्ता प्रियेणैव रामेण विदितात्मना ।
प्राणांस्त्यक्ष्यामि पापस्य रावणस्य गतां वशम् ।।(तत्रैव, २६।४९)

रावणे हते सति, आहूतायां सीतायां रामकथितानि वचनानिः—

"रावणाङ्कपरिक्लिष्टां दृष्टां दुष्टेन चक्षुषा ।
कथं त्वां पुन राद्द्यां कुलं व्यपदिशन्महत्" ।। (युद्ध काण्डे, ११५।२०)

इत्येतानि निशम्य सीतया यद् अमलिनचरितपतिव्रतोचित वाक्यमुदीरितं तदपि श्रूयताम्—

पृथक् स्त्रीणां प्रचारेण जातिं त्वं परिशङ्कसे ।
परित्यजैनां शङ्कां तु यदि तेऽहं परीक्षिता ।। (तत्रैव, ११६, ७)
यदहं गात्रसंस्पर्शं गतास्मि विवशा प्रभो । ,, ८)
कामकारो न मे तत्र दैवं तत्रापराध्यति ।।
मदधीनं तु यत् तन्मे हृदयं त्वयि वर्तते । (तत्रैव, ११६, ९)

सा स्वकीयां चारित्र्यशुद्धतां विभावसौ निपत्य प्रमाणीचकार । सर्वेऽपि ऋषयो देवा गन्धर्वा यज्ञे पूर्णाहुतिमिव तां हुताशने प्रविशन्तीं ददृशुः । तदा रक्षसां शाखामृगाणाञ्चाद्भुतोपमो हाहेति तारस्वनः समुद्बभूव ।

लोकापवादं निशम्य रघुनन्दनोऽन्तर्वत्नीमपि जानकीं कान्तारे निरवासयत्

तदा सा लक्ष्मणद्वारेण रामस्यकृते यं सन्देशममरं प्राहिणोत् सः सर्वलोकनमस्करणीयः [१] ।

वसिष्ठ-वामदेव-जावालि-काश्यप—विश्वामित्रदुर्वासः-पुलस्त्य प्रभृति बहुसंख्यर्कार्षमहर्षीणां समुपस्थितौ महर्षि वाल्मीकिः सीतायाश्चरित्रस्य शुद्धतां समर्थयंस्तां पुनः पुनः श्लाघयामास । वस्तुतः मातृसीता पावनेन चरित्रेण नैजेन भारतस्य गौरवं विधातुः सृष्टेः सत्तां यावत् संस्थापयन्ती स्वकीयैः शुभैराचारै भारतीयानां भामिनीनां शिरः समुन्नमयन्त्यद्यापि प्रेक्षिता भवति । सीतामधिकृत्य मुनि वाल्मीकि र्यदाह तच्छ्रूयताम्—

बहुवर्षसहस्राणि तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥
मनसा कर्मणा वाचा भूतपूर्वं न किल्विषं ।
तस्याहं फल मश्नामि अपापा मैथिली यदि ॥

(उत्तर काण्डे, ९६।२०-२१)

अन्ततः—

या रामस्य पुनीतचारुचरिता कान्ता विदेहात्मजा ।
गच्छन्तं रघुनन्दनं प्रियतमं प्रीत्या वन चान्वगात् ॥
पादाब्जं विपिने हृदा स्मृतवती त्यक्तापि पत्यानिशम् ।
सीता भारतकीर्तिगौरवकरी भक्त्या मया नम्यते ॥



१—रघुवंशे, १४।६०-६७

# रामः

आविर्भूतस्य तस्य लक्षशो वर्षाणि व्यततानि परमद्यापि देशेऽस्मदीये भारते, नगरे-नगरे, ग्रामे-ग्रामे, गेहे-गेहे सर्वत्रैव तस्य पावन चरित्राणि सहर्षं भक्तिभा पूर्वकं प्रबलेनोत्साहेनोल्लासेन च जना गायन्ति, तस्य कथां निशम्याधीत्य च ते 'वयं धन्याः पुण्यात्मानः मुक्तिनश्चेति' मन्यन्ते, तेषां श्लाघनीयं कार्य मेत तु प्रायेण प्रत्यहं चलत्येव ते प्रत्यब्दं सकृत्तु अवश्यमेव तस्य लीलानां दर्शनार्थं भव्य विशालं समारोह मायोजयन्ति नाटकानि च वहून्यारचयन्ति। तन्नाम्नः कीर्तनं श्रवणञ्च तत्कथायाः पठनं पाठनं च तच्चरित्राणां स्तवनं गानञ्च नितरामेव श्रेष्ठं धर्मं पुण्यञ्च कर्माव-गच्छन्ति। न भारत एव, संसारे प्रायेण सकलेष्वापि देशेषु तत्रत्या जनाः सम्मानपूर्वकं तम्प्रति स्वकीयं श्रद्धाञ्जलिं स्वकीयां वरिवस्याञ्च समर्पयन्तः प्रतिलक्ष्यन्ते। अस्म-द्देशस्य जनतायास्तु धमन्यां धमन्यां स वसति; जनता प्रतिकार्यं स्वकीयं शुभं तन्नाम गृहीत्वा प्रारभते। जना यदा स्वपन्ति, यदा जाग्रति, यदा क्वापि गच्छन्ति, यदा परस्परं मिलन्ति तदा ते 'रामो राम' इति ब्रुवन्ति अस्ति वस्तुतोऽसौ भारतीया या जनताया सर्वस्वमेव, जीवनमेवात्मा परमात्मा च। तल्लीलानां कल्मषघ्नानां चरित्राणां च वर्णनं यासु कृतिषु कृतं वर्तते तासां संख्यास्ति विशाला। भारतेऽस्ति नैतादृश्येकापि भाषा यस्यां भाषायां तच्चरित्रपरका रचनाः न स्युः। संस्कृत भाषायां तु तल्लीला जीवनचरित्रादि सम्वन्धीनि शतशः काव्यानि, शतशः आख्यायिकाः, शतशः कथाः, शतशो रूपकाणि शतशश्चम्पू काव्यानि शतशश्चान्यविधा ग्रन्थाः शोभन्ते। भारतीयाः कवयः आख्यायिकानाटकादिकारा एव न तदीय चरित्र विषयकान् ग्रन्थान् अजग्रन्थन्नपितु देशान्तरेऽपि विद्वांसो लेखकाः कवयश्च तच्चरित्रं पावनं स्वस्वरचनासु निबध्नन्तो दृश्यन्ते। इद भारतं धन्यं सर्वेषामपि देशानां शिरो-भूषणं परम प्रकृष्ठं गौरवानन्य शोभामानं यद्धि सः स्वकीयेन जन्मना पुनाति स्म, स्वकीयास्तास्ताः सर्वा लीलाश्च विधाय यद्गौरवगिरिशिखरं प्रापयतिस्म। सोऽयमी-ड्यते विश्वगुणाभिरामो दशरथनन्दनो रामः।

आसीद् रामो नियतात्मा वशी, धीरो महावीर्यश्च, बुद्धिमत्तायां नीतिमत्तायां वाग्मितायाँ शत्रुनिवर्हणे चोपमानविहीनः। स वेदेषु वेदाङ्गेषु च पारदृश्वा धनु-र्वेदेच महान् कुशल आसीत्। सर्वोऽपि लोकस्तस्मिन् प्रीयतेस्म। तस्य प्रतिज्ञा कदापि वितथतां न गता, धर्मस्य तत्वं सः सम्यग् विवेद, प्रजानां कल्याण एव सततं निरतो-

ऽदृश्यत हृदये स उदारो विचारे स उदात्तः स्वभावे सोऽदीनः प्रकृत्या च साधु रासीत् सः शरणागतवत्सलः । धन्यो हि सः, यं तदीयपिता प्रशंसन्नित्थं श्रूयते—

शुश्रूषां गौरवं चैव प्रमाणं वचन क्रियाम् ।
कस्तु भूयस्तरं कुर्यादन्यत्र पुरुर्षभात् ।।२६।।
बहूनां स्त्रीं सहस्राणां बहूनां चोपजीविनाम् ।
परिवादोऽपवादो वा राघवे नोपपद्यते ।।२७।।
सान्त्वयन् सर्वभूतानि रामः शुद्धेन चेतसा ।
गृहणाति मनुजव्याघ्रः प्रियैर्विषयवासिनः ।।२८।।
सत्येनलोकञ्जयति द्विजान् दानेन राघवः ।
गुरूञ्छुश्रूषया वीरो धनुषा युधि शात्रवान् ।।२६।।
सत्यं दानं तपस्त्यागो मित्रता शौच मार्जवम् ।
विद्या च गुरुशुश्रूषा ध्रुवाण्येतानि राघवे ।।२०।।
क्षमा शक्ति स्तपस्त्यागः सत्यं धर्मः कृतज्ञता ।
अप्यहिंसा च भूतानां तमृते का गतिर्मम ।।३३।।

(रामायणे, अयोध्याकाण्डे, द्वादशे सर्गे)

रामोऽर्थपरो भूत्वा न लोक मावस्तु मुत्सेहे । आसीत् स ऋषिभिस्तुल्यः स महान् पितृभक्तः सुत आसीत्, सः पितृहिताय सर्वमपि कर्तु मशकत, सर्वमपि त्यक्तु मशकत्, प्राणेभ्यः प्रियं किमपि न भवति, स तानयि प्राणान् पितृ प्रीत्यै हातुं क्षम आसीत्—

यत् तत्रभवतः किञ्चिच्छक्यं कर्तुं प्रियं मयां ।
प्राणानपि परित्यज्य सर्वथा कृतमेव तत् ।। तत्रैव १६।२१

सः पित्राज्ञापालनात् ज्यायो न किमपि धर्माचरण ममंस्त—

न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ।। २२ [ तत्रैव ]

सः पितुर्वचनं धर्मं मेने । वननिवासाय दत्तां हि तदीयामाज्ञां धर्मसंश्रिता मेव मत्वा तत्पालनाय क्षणव्यापिनमपि विलम्बं प्रियं नामन्यत । स विलपन्तीं मातरं कौसल्या मुवाच—

नास्ति शक्तिः पितुर्वाक्यं समतिक्रमितुं मम ।
प्रसादये त्वां शिरसा गन्तुमिच्छाम्यहं वनम् ।।३०

धर्मोहि परमोलोके धर्मे सत्यप्रतिष्ठितम् ।
धर्म संश्रितमप्येतत् पितुर्वचनमुत्तमम् ।।४२ [तत्रैव, २१ सर्गे]

यदा हि कौसल्या पितु राज्ञा पालनाय वनं गन्तु मुद्यतमेव ददर्श तदाहमपि त्वया सह गमिष्यामीति वदन्तीं मातरं स भार्याया भर्तारम्प्रति को धर्म इत्येतत् सविनयं प्राबोधयत्--धर्मार्थिकाम सम्पादनाय भार्या भर्तुः साधनभूता भवति, न तत्कर्म कदापि हेयं यत्र सर्वेषामपि पुरुषार्थाणां सन्निवेशो भवति, कामात्मता न कदापि प्रशस्ता, चेत् पिता क्रोधात् प्रहर्षादथवा कामादपि आज्ञापयति तदापि तामाज्ञां धर्मं मेव मन्येत पुत्रः[1] ।

रामो महांस्त्यागी वभूव । न तत्र लोभो मनागप्यविद्यत । स धर्मं रक्षितुं राज्यस्वर्गादित्यागमपि समुचित ममन्यत—

नैवाहं राज्यभिच्छामि न सुखं न च मेदिनीम् ।
नैव सर्वानिमान् कामान् न स्वर्गं न च जीवितम् ।। [तत्रैव, ३४।४७]

रामः प्रजानां परमप्रिय आसीत् । यदा पौराङ्गनाः रामविहीनं सुमन्त्राधिष्ठितं वनान्निवृत्तं स्यन्दनं ददृशुस्तदा स्त्रियोऽतिदुःखिता भूत्वा परिदेवनां कर्तुं मारेभिरे—

वातायनगतानां च स्त्रीणा मन्वन्तरापणम् ।
राममेवाभितप्तानां शुश्राव परिदेवनाम् ।।१५।।
[ अयोध्याकाण्डे, ५७।१५ ]

जनाः क्व राम इति पृच्छन्तः सूतमभ्यद्रवन्—

सुमन्त्रमभिधावन्तः शतशोऽथ सहस्रशः ।
क्व राम इति पृच्छन्तः सूतमभ्यद्रवन् नराः ।।६।।

अहोधिगिति निःश्वस्य हा रामेति विचुक्रुशुः ।।११।। [तत्रैव]

रामस्य स्नेहः स्वकीयेषु भरताद्यनुगेषु आसीदसीमः । स तेषु भृशं वात्सल्य निदधौ स धर्म मर्थञ्च कामञ्च पृथिवीं च बन्धूना मर्थे ऐच्छत् । यस्यार्थस्य प्राप्ति र्बान्धवान् सुहृदश्च विनाश्य भवति तं स विषभोजन मिव मेने—

यद् द्रव्यं बान्धवानां वा मित्राणां वाक्षये भवेत् ।
नाहं तत् प्रतिगृह्णीयां भक्ष्यान् विषकृतानिव ।।४
धर्ममर्थं च कामं च पृथिवीं चापि लक्ष्मण ।
इच्छामि भवतामर्थे एतत् प्रतिशृणोमि ते ।।५(तत्रैव, ९७ तमसर्गे)

१—रामायणे, अयोध्याकाण्डे, २२।५७-५९ ।

यदा हि सैन्यादिभिः सह चित्रकूटं भरत आयातीति लक्ष्मणः शुश्राव तदा स तस्मिन् अन्यथा भावं शङ्कमानः परं क्षोभं क्रोधश्च प्रकटीचकार। रामस्तं परिसान्त्वयन् प्रोवाच—

विप्रियं कृतपूर्वं ते भरतेन कदा नु किम्। ईदृशं वा भयं तेऽद्य भरतं यद् विशङ्कसे ॥

× × ×

यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥
उच्यमानो हि भरतोमया लक्ष्मण तद्वचः।
राज्यमस्मै प्रयच्छेति वादमित्येव मंस्यते ॥(तत्रैव, १४, १७, १८)

रामस्य राजनीतिविचक्षणत्वं वाल्मीकि रामायणस्य ततृतत्स्थलेभ्यस्तु ज्ञातंभवत्येव परमिह अयोध्या काण्डस्य शततमः सर्गो विशेषेण निर्दिश्यते। रामेण कुशल प्रश्नव्याजेन भरतम्प्रति राजनीतिसम्बन्ध्युपदेशो यः प्रदत्तः स राजनीति रुचिमता मध्येतव्यमेव वरीवर्ति।

मन्त्रो विजयमूलं हि राज्ञां भवति राघव।
सुसंवृतो मन्त्रिधुरै रमात्यैः शास्त्रकोविदैः ॥१६
कच्चिन्मन्त्रयसे नैकः कच्चिन्न वहुभिः सह।
कच्चित्ते मन्त्रितो मन्त्रो राष्ट्रं न परिधावति ॥१८
अमात्यानुपधातीतान् पितृपैतामहान्शुचीन्।
श्रेष्ठाञ्छ्रेष्ठेषु कच्चित् त्वं नियोजयसि कर्मसु ॥२६
कच्चिदष्टादशान्येषु स्वपक्षे दश पञ्च च।
त्रिभिस्त्रिभिरविज्ञातै वेत्सि तीर्थानि चारकैः ॥३६

× × ×

कच्चित् त्वं वर्जयस्येतान् राजदोषांश्चतुर्दश ॥६७
दशपञ्चचतुर्वगान् ···· ···· यथावदनुमन्यसे ॥६८-७०

इत्येतदादीन्प्रश्नान् निधाय रामोऽद्भुतमेव स्वकीयं राजनीतिनिपुणत्वमभिव्यनक्ति। रामस्य सीतायां यदासीत् पावनं प्रेम तदपि सर्वथैव वन्दनीयम्। हृतायां सत्यां स यदमित मगाधं दुःखं प्राप तत्—

सीतया रहितोऽहं वै नहि जीवामि लक्ष्मण।
वृतं शोकेन महता सीताहरणजेन माम्।
परलोके महाराजो नूनं द्रक्ष्यति मे पिता ॥(अरण्यकाण्डे, ६२।६)

इत्येतदादिश्लोकेभ्यः स्पष्टमेव विदितं जायते।

न मद्विधो दुष्कृत कर्मकारी, मन्ये द्वितीयोऽस्ति वसुन्धरायाम्
शोकानुशोको हि परम्पराया, मामेति भिन्दन् हृदयं मनश्च ॥३
राज्यप्रणाशः स्वजनै र्वियोगः पितु र्विनाशो जननीवियोगः।
सर्वाणि मे लक्ष्मण शोकवेग मापूरयन्ति प्रविचिन्तितानि ॥५(अरण्यकाण्डे,६३)

इत्येताभ्यां मानवप्रकृतिसुलभविशिष्टतास्तस्य ज्ञानपथाधिरूढा भवन्ति।

हनुमान् सीताम्प्रति राममधिकृत्य—

तेजसादित्य संकाशः क्षमया पृथिवीसमः।
वृहस्पतिसमो वुद्ध्या यशसा वासवोपमः॥(सुन्दरकाण्ढे, ३५।९)

इत्येतदादिकं यदुक्तवांस्ततः 'सः कीदृङ् महान् तेजस्वी लोकोत्तरगुणसम्पन्न आसीदित्येतद् विदितं सञ्जायते। तदीये साम्राज्ये सर्वत्रापि सुखं, शान्तिः, समृद्धिः सदाचार इत्येतदादिकानां सर्वासामपि आढ्यतानां यत् सद्भाव आसीत् तस्मात् तस्य तेजस्यादित्य संकाशत्वं स्फुटतयैव ज्ञातं भवति। यः कोऽपि तं शरणं प्रपन्नः स तेन रक्षितोऽभवत् प्राप्तवांश्च तस्मात् सर्वमभिमत मित्येतेन तस्य क्षमाशीलत्व मवगततां याति; पित्रादेशपालने, सुग्रीवस्य सुहृत्त्वेन स्वीकरणे, प्रजापालनकर्मणि अन्येषु च तेषु तेषु कर्मसु तस्य बुद्धेः प्रकृष्टत्वं ज्ञापितं भवति, अतस्तद् विषये 'वृहस्पति समोवुद्ध्या' इत्येतत्कथनं सत्यमेव। धर्म परत्व सदाचारनिष्ठत्व-सन्मार्ग गामित्व-लोकोत्तर पौरुषादिभि र्मानवस्य यशः समग्रेऽपि जगति दशस्वपि दिशासु व्याप्तं भवति, रामे तु गुणाः सर्व एव ते शोभन्ते स्म तस्मादेव कारणात् तदीयं यशस्तु तद् यस्याधिकारी तं विहायान्यः कोऽपि न भवितु मार्हत्। हनुमांस्तदीयं शौर्यं मधिकृत्याचचक्षे—

तत्र यद्यन्तरा मृत्युर्यदि देवा महासुराः।
स्थास्यन्ति पथि रामस्य स तानपि वधिष्यति॥

(सुन्दर काण्डे, ३६।३६)

वस्तुतो रामे अनन्त बलं विभ्राजते स्म अतएव खरदूषणादिकान् सहस्रशो राक्षसान् निहत्य रावणञ्चान्ततो गत्वा व्यापाद्य धरित्री मिमांराक्षसरहितां कर्तुं सर्वानपि ऋषिमुनीँश्च पातुं क्षमो वभूव। रावणस्य व्यापादनात् प्राक् रामः—

अद्य पश्यन्तु रामस्य रामत्वं मम संयुगे।
त्रयो लोकाः सगन्धर्वाः सदेवा सर्षिचारणाः॥५५
अद्य कर्म करिष्यामि यल्लोकाः सचराचराः।
सदेवाः कथयिष्यन्ति यावद् भूमि र्धरिष्यति।
समागम्य सदा लोके यथा युद्धं प्रवर्तितम्॥५६

(युद्धकाण्डे शततमसर्गे)

इति यदवोचत् तत् सर्वमपि सत्यं भूत्वाघटत ।

रामो बन्धौ लक्ष्मणे भृश मस्निह्यत् । यदा लक्ष्मणं शक्ति र्न्यपातयत् तदा अगाधे शोकसागरे निमग्नः सः प्राब्रवीत्—

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥(युद्धकाण्डे, १०१,१५)

रामः सीतायाः सच्चरित्रतां साधु विवेद । न तस्याश्चरित्र मधिकृत्य तु तन्मनो मनागपि कदापि सन्देहं चकार । सासीद् वस्तुत स्तज्जीवनम् । विना तां सः क्षणमप्येकं न सुखेन स्थातु मशकत् । यदा सीता लङ्काया मासीत् तदा रामस्य का स्थिति रासीत् सा हनुमन्मुखकथितादेतस्माद् वाक्याद् विदिता भवति—

नित्यं ध्यानपरो रामो नित्यं शोकपरायणः ।
नान्यच्चिन्तयते किञ्चित् स तु कामवशं गतः ।।सुन्दरकाण्डे,३६।४३

लक्ष्मणो यदा वने सीतां परित्यज्यागतस्तदा रामः कीदृश आसीदित्येतद् दृश्यताम्—

स दृष्ट्वा राघवं दीन मासीनं परमासने ।
नेत्राभ्या मश्रु पूर्णाभ्यां ददर्शाग्रजमग्रतः ।। उत्तरकाण्डे, ५२।६
रामो मनस्तः सीतां न निरस्यति स्म;
कौलीनभीतो हि स तां गृहान्निरास्थत् ।

"कौलीनभीतेन गृहान्निरस्ता न तेन वैदेहसुता मनस्तः" रघौ,१४।८४

सः सीतां पूर्णतया आद्रियते स्म । तस्याः परमपवित्रचरित्रत्वात् स तस्यां गौरवधियं निदधा वत एव सोऽश्वमेधयज्ञे तदीयां सुवर्णमयीं प्रतिमां निजसव्यभागे प्रतिष्ठापयामास कालिदास आह—

सीतां हित्वा दशमुखरिपु र्नोपयेमे यदन्यां
तस्या एव प्रतिकृति सखो यत्क्रतूनां जहार ।
वृत्तान्तेन श्रवणविषय प्रापिणा तेन भर्तुः
सा दुर्वारं कथमपि परित्यागदुःखं विषेहे ।। रघौ, १४।८७

हन्त, राम इव प्रजारञ्जनकृद् भूभर्ता राजा नान्यः कोऽपि जगति सञ्जातः ।

नमामि रामं जनताप्रियं तं
जुगोप यो मानवमान्यधर्मं
चरंश्च शश्वच्छ्रुति शास्त्रमार्गे
निहत्य पापानवति स्म साधून् ।।

×—×

# भरतः

रामप्रियं तं भरतं नमामः
नासीन्मनाक् स्वार्थलवोऽपि यत्र
त्यागे च भक्तौ विनये चरित्रे
आसीदसौ नून महोऽद्वितीयः ॥

जगति सच्चरित्रचारवो ये सहस्रशो मानवसत्तमाः सञ्जातास्तेषु दथरथ-नन्दनस्य रामानुजस्य भरतस्यैव चरित्र मीदृश मुज्ज्वलं पवित्र ञ्च लोचनगोचरी-भवति यत्र दोषस्य कस्यापि अणीयानपि कणो नावर्तत । आसीत् सः साधुशिरोमणिः, महानद्वितीयः प्रभु-भक्तो महात्मा निःस्पृह हृदयो भक्तिप्रधानः कर्मयोगी । आसीत् स धर्मस्य वेत्ता नीत्याञ्च निष्णातः । तस्मिन् संयमस्त्यागः सदाचारः प्रेम विनयः, श्रद्धा, प्रतिभा च कामपि दिव्यामेव आभां परिगृह्य दिदीपिरे । वैराग्यं तत्र कामाप्य निर्वचनीया मेव श्रियं संश्रित्य, सत्यं किमप्यद्भुत मेव सौन्दर्यं समासाद्य क्षमा कामपि विचित्रा मनवद्यता मवलम्ब्य, तितिक्षा कामप्याश्चर्यावहां द्युति माश्लिष्य, दया कामपि कमनीयामेव कान्ति माकलय्य, वात्सल्यं किमपि लोकोत्तर माकर्षण माकृष्य, धैर्य्यं किमपि विस्मयप्रद मेव वर्च आदाय, शौर्यं किमपि उत्कृष्टतम मेवाजेयं वरं प्राप्य, गाम्भीर्य्यं मलौकिकी मेवागाधता मालिङ्ग्य, सारल्यं श्रेष्ठं किमपि तत्त्व मधिगम्य, सौम्यत्व मसाधारण मेव तेजः किमप्यङ्गीकृत्य, माधुर्यं किमप्यसीम पावनत्व मवगाह्य, अमानिता कामप्यच्छा मेवच्छवि अभिव्याप्य, सुहृद्भावश्च भव्यामेव कामपि भूषा माधृत्य व्यद्योतन्त । भ्रातृप्रेम्णस्तु सः प्राणवती पावनप्रति-मैवासीत् ।

उद्वाहानन्तर मेव भरतो मातामहनिकेतनं प्रयातस्तस्माद् रामायणे तस्य पितृ भक्तेर्वर्णन विशिष्टं नोपलभ्यते परं मित्राणां सन्निधौ स्व दुःस्वप्न मभिधाय तत्र वसता तेन पितरम्प्रति यद् दुःख प्रकटीकृतं, ततोऽयोध्यामागम्य मातुः पितृ दिवंगततां निशम्य तच्छोकाज्जाता तदीया दशा, पितरम्प्रति तत्कृतो विलापश्च तस्य श्रद्धामय मवितथं पितृप्रेम स्फुटतया विशदतया च अवगति मागच्छति । धैर्य्यधारणार्थं मभि-हितोऽसौ मात्रा यदा, सोऽब्रवीत् तदा—

अभिषेक्ष्यति रामं तु राजा यज्ञं नु यक्ष्यते ।
इत्यहं कृतसङ्कल्पो हृष्टो यात्रा मयासिषम् ॥ २।७२।२७

तदिदं ह्यन्यथाभूतं व्यवदीर्णं मनो मम ।
पितरं यो न पश्यामि नित्यं प्रिय हितेरतम् ।। २।७२।२८
न नूनं मां महाराजः प्राप्तं जानाति कीर्तिमान् ।
उपजिघ्रेत तु मां मूर्ध्नि तातः संनाम्य सत्वरम् ।। २।७२।३०
क्व स पाणि सुखस्पर्शस्तातस्यक्लिष्ट कर्मणः ।
यो हि मां रजसा ध्वस्त मभीक्ष्णं परिमार्जति ।। २।७२।३१

पितरि शोकाश्रूणि वर्षतोऽजस्रं तस्य हृदये राम-प्रेम सरयं समुत्थितमजायत्त स्मारं स्मारं तं स व्याहरत्—

यो मे भ्राता पिता बन्धुर्यस्य दासोऽस्मि सम्मतः ।
यस्य मां शीघ्र माख्याहि रामस्याक्लिष्टकर्मणः ।। २।७२।३२
पिताहि भवति ज्येष्ठो धर्म मार्यस्य जानतः ।
तस्य पादौ ग्रहीष्यामि स हीदानीं गतिर्मम ।। २।७२।३३

मातुः कैकेय्या मुखात् रामस्य लक्ष्मणस्य सीतायाश्च च वनगमनं यदासावश्रौषीत् तदा सोऽसीमदुःखमवाप । शोकाकुलहृदयो भूत्वा स मातरं शशंस—

लुब्धाया विदितो मन्ये न तेऽहं राघवं यथा ।
तथा ह्यनर्थो राज्यार्थं त्वयानीतो महानयम् ।। २।७३।१३

पितुरन्त्येष्टिकर्म विधाय, श्राद्धादिकाच्च निवृत्तो भूत्वा यदा हि राजसभाऽऽसीन आसीत् स वसिष्ठोऽन्ये च सभासदस्तं पितृप्रदत्तं राज्य मङ्गीकर्तुं सनिर्बन्ध मन्वरौत्सुस्तदा स आमनत् वसिष्ठं गुरुम्—

"राज्यं चाहं च रामस्य धर्मं वक्तु मिहार्हसि' ।। २।८२।१२
ज्येष्ठः श्रेष्ठश्च धर्मात्मा दिलीपनहुंषोपमः ।
लब्धु मर्हति काकुत्स्थो राज्यं दशरथो यथा ।। "।"।१३
राम मेवानुगच्छामि स राजा द्विपदां वरः ।
त्रयाणा मपि लोकानां राघवो राज्य मर्हति ।। २।८२।१६
यदि त्वार्यं न शक्ष्यामि विनिर्तवयितुं वनात् ।
वने तत्रैव वत्स्यामि यथार्यो लक्ष्मण स्तथा ।। २।८२।१८
सर्वोपायं तु वर्तिष्ये विनिवर्तयितुं बलात् ।
समक्ष मार्यमिश्राणां साधूनां गुणवर्तिनाम् ।। २।८२।१९

तस्य धर्मसंयुक्तं वचः श्रुत्वा सर्वेऽपि सभासदो हर्षादश्रूणि मुमुचुः । आत्मनि सन्दिहानं निषादराजं गुहं सोऽवोचत्—

"माभूत् स कालो यत् कष्टं न मां शङ्कितु मर्हसि ।
राघवः स हि मे भ्राता ज्येष्ठः पितृसमो मतः ।।२।८५।९
तं निवर्तयितुं यामि काकुत्स्थं वनवासिनम् ।
बुद्धिरन्या न मे कार्या गुह सत्य ब्रवीमि ते ।।२।८५।१०

तद् वचन माकर्ण्य गुहो यदाचचक्षे तदपि श्रोतव्यमस्ति––

धन्यत्वं न त्वया तुल्यं पश्यामि जगतीतले ।
अयत्नादागतं राज्यं यस्त्वं त्यक्तु मिहेच्छसि ।।२।८५।१२

महर्षि भरिद्वाजस्य—

कच्चिन्न तस्यापापस्य पापं कर्तुं मिहेच्छसि ।
अकण्टकं भोक्तुमना राज्यं तस्यानुजस्य च ।।२।९०।१३

इत्येतद् वचो निशम्य भरतस्य हृदयं नितरां दुःख मवाप । सोऽश्रु नयनो वभूव । सः संरुद्धकण्ठोऽवधूनितरसनः सन् उवाच—

हतोऽस्मि यदि मामेव भगवानपि मन्यते ।
मत्तो न दोष माशङ्के मैवं मानुशाधि हि ।।१५ २।९०
न चैतदिष्टं माता मे यदवोचन्मदन्तरे ।
नाह मेतेन तुष्टश्च न तद्वचन माददे ।।१६ २।९०
अहं तु तं नरयाग्र मुपयातः प्रसादकः ।
प्रतिनेतु मयोध्यायां पादौ चास्याभिवन्दितुम् ।।१७ २।९०

सोऽतितरां विलपन् इत्थं बहून् हृद्भावानभिव्याञ्जीत् । मुनि भ रद्वाजः श्रुत्वा तद्-वचः प्रसीदन्भरतं प्रशंसन्नशंसत्—

जाने चैतन्मनः स्थं ते दृढीकरणमस्त्विति ।
अपृच्छं त्वां तवात्यर्थं कीर्ति समभिवर्धयन् ।। २।९०।२१

भरतस्योदात्ताया भावनायाः अभिनन्दनीयाया भक्तेः, पुनीतस्य भावस्य, स्पृहणीयायाः निरवलिप्तातायाः, आदर्शत्यागस्य च दर्शनं तदापि भवति यदा हि स मुनिभरद्वाजयोगवलरचिते राजसौधे आसन मर्चन् रामं प्रणमन् चामरहस्तो भूत्वा मन्त्र्यासनमधिष्ठितो दृष्टो भवति ।

ससेनभरतागमनं ज्ञात्वा लक्ष्मणं भरते शङ्कमानं चित्रकूटे रामो यदाचष्ट तेन भरते रामस्य कीदृगगाधोविश्वास आसीत् स (रामः) तदीय गुणाचरण प्रेमसद्व्यवहारादिषु कियान् आसीत् प्रसन्न इत्येतत्सर्वं सम्यग् विदितं जायते—

प्राप्तकालं यथैषोऽस्मान् भरतो द्रष्टु मर्हति ।
अस्मासु मनसाप्येष नाहितं किञ्चिदाचरेत् ॥१३
विप्रियं कृततूर्वं ते भरतेन कदानुकिम् ।
ईदृशं वा मयं तेऽद्य भरतं यद् विशङ्कसे ॥१४
न हि ते निष्ठुरं वाच्यो भरतो नाप्रियं वचः ।
अहं ह्यप्रियमुक्तः स्यां भरतस्याप्रिये कृते ॥१५
यदि राज्यस्य हेतोस्त्वमिमां वाचं प्रभाषसे ।
वक्ष्यामि भरतं दृष्ट्वा राज्यमस्मै प्रदीयताम् ॥१७
उच्यमानो हि भरतो मया लक्ष्मण तद्वचः ।
राज्यमस्मै प्रयच्छेति वाढमित्येव मंस्यते ॥१८ २।९०।

पर्णशालायां मृगचर्मासीनं चीरवल्कलवाससं जटामण्डलधारिणं रामं विलोक्य भरतो भृशं दूनोऽभवत् "मद्धेतोरेव मम ज्येष्ठो बन्धुरियद्दुःख सहते; अस्म्यहं कियान् क्रूरः; लोकनिन्दितं मदीयं जीवनमिद्धिक्" इत्यभ्यधात् ।

भरतस्य तद् भ्रातृ-प्रेम प्रेक्ष्य सर्वेऽपि वनौकसोऽपि रोदितु मारेभिरे । रामं प्रणम्य पितुश्च दिवंगततां संसूच्य भरतो बभाण प्राञ्जलि र्वाक्यम्—

तथानुपूर्व्या युक्तश्च युक्तं चात्मनि मानद ।
राज्यं प्राप्नुहि धर्मेण सकामान् सुहृदः कुरु ॥१० २।१०१
एभिश्च सचिवैः सार्धं शिरसा याचितो मया ।
भ्रातुः शिष्यस्य दासस्य प्रसादं कर्तुं मर्हसि ॥२।१०१।१२

यावद् मम स्वामी मयि न प्रसीदेत्, यावच्च न सोऽयोध्यां निवृत्त्य राज्य सिंहासन मलङ्कुर्वीत तावदहं नान्नं जलं च ग्रहीष्यामि; यदि त्ववश्यं वस्तव्यं पितु र्वचश्च कर्त्तव्यं तदाऽहमेव चतुर्दश समाः वनमधिवत्स्यामीत्येतत् सानुनयं सविनयं सानुरोधञ्च भरतेन प्रार्थ्यमानो हि रामो भरतमभ्यदधात्—

जानाभि भरतं क्षान्तं गुरु सत्कार कारिणम् ।
युक्त मुक्तं च कैकेय्या पित्रा मे सुकृतं कृतम् ॥२।१११।३०
अनेन धर्मशीलेन वनात् प्रत्यागतः पुनः ।
भ्रात्रा सह भविष्यामि पृथिव्याः पति रुत्तमः ॥२।१११।३१
वृतो राजा हि कैकेय्या मयातद् वचनं कृतम् ।
अनृतान्मोचयानेन पितरं तं महीपतिम् ॥२।१११।३२

इत्थं रामेणोक्तस्यापि भरतस्य मनो नातुष्यत् । सः पुनः "आर्य, नाहं राज्य मिदं रक्षितुं शक्नोमि; स्वीकृत्य भवांस्तत् तद्रक्षणभारं वोढुं कमप्य न्यं योजयतु"

इत्येतदभिधाय तच्चरणयोः पपात। ततो रामस्तं स्वोत्सङ्गे उपवेशयन् मधुर मुवाच—

आगता त्वामियं बुद्धिः स्वजा वैनयिकी च या।
भृशमुत्सहसे तात रक्षितुं पृथिवीमपि ॥२।११२।१६

तेजसाऽऽदित्य संकाशस्य रामस्य शिक्षापूर्णां गिरां निशम्य, विलोक्य तत्र तदीयं दाढर्यं स भरतोऽभिदधौ—

अधिरोहार्य पादाभ्यां पादुके हेमभूषिते।
एते हि सर्वलोकस्य योगक्षेमं विधास्यतः ॥२।११२।२१

धन्यो हि भरतस्यैष उच्चतमो भावः! अथ भरतः 'अहमपि चतुर्दश समाः चीरवल्कलभृद् जटाधृच्च भूत्वा केवलं फलमूलादिकं गृह्णन् भवत आगमनं प्रतीक्षमाणो नगराद् वहि रेव वत्स्यामि। परंतप, एतावन्तं कालं राज्यस्य सर्वमपि भारं भवच्चरणपादुक एव धारयिष्यतः। रघुवंशभूषण, अतीतेषु सत्सु चतुर्दशवर्षेषु भवद्दर्शनाप्राप्ते सति अहं प्रज्वलिते पावके निपतिष्यामीति चरणयोस्तस्य प्रणमन् निवेदयामास।

भरतस्य तन्निवेदन मन्यच्च सर्वं तदीया मुदात्ता मुदाराज्य विचारावली माकर्ण्यं मंत्रिभिः सह गुरु र्वसिष्ठो जगाद—

सुभृशं श्लाघनीयं च यदुक्तं भरत त्वया।
वचनं भ्रातृवात्सल्यादनुरूपं तवैव तत् ॥२।११५।५
नित्यं ते बन्धुलुब्धस्य तिष्ठतो भ्रातृ सौहृदे।
मार्गमार्यं प्रपन्नस्य नानुमन्येत कः पुमान् ॥२।११५।६

अयोध्या मागम्य भरतः "मम भ्रात्रा सौहृदादयं न्यासो मयि निक्षिप्तः। तमिमं राघवागमनसमयं यावत् पालयिष्यामि। वनादागताय तस्मै गुरवे राज्यं निवेद्य गुरुवर्तितां भजिष्ये। भवन्तश्छत्रं धारयन्तु। एते पादुके ममार्यस्य पादा वेवेत्यहं मन्ये। भ्रातुः पादुकाभ्या माभ्यां राज्ये धर्मः स्थितः स्यात्" इति सर्व मपि प्रकृति मण्डल मगादीत्।

ततो भरतोऽसौ मुनिरिव स्वजीवनं चतुर्दश वर्षाणि यावद्व्यत्येतुं तत्परो बभूव। भरत इव रामभक्तो वस्तुतो जगत इतिहासे भरत एव। तस्य त्यागभक्तिसंयमादिसर्वे गुणाः सन्ति आराधनीयाः। निष्कामभावेन भक्तिपूर्वकं गार्हस्थ्येस्थितस्य प्रजापालनकार्यं क्वान्यत्र कदापि केनापि दृष्टम्? गोतुलसीदासः सत्यमेवाह—

"होत न भूतल भाउ भरत को। अचर सचर चर अचर करत को"।



# हनुमान्

रामायणे यानि पात्राणि पाठकस्य वा श्रोतुः सन्निकृष्टता मायान्ति तेषु 'हनुमान्' इत्येतन्नामकं पात्र मस्त्येताद्दशमेकतमं पात्रं यद् राम-लक्ष्मण-भरत-सीता-भिधानां पात्राणा मनन्तरं प्रसभं पाठकस्य श्रोतुर्वा मानस मावर्जयत्यतितराम् । हनुमान् निदधाति स्वकीयान् यान् यान् गुणान् या याश्च विशिष्टतास्तेते गुणा स्तास्ताश्च विशिष्टताः वस्तुतस्तदीया एव भूत्वा तत्र राजन्ते । तत्तद्गुणविशिष्टतावत्वात्, सोऽस्त्युपमानविहीनः सोऽतिद्वयमेवव्यक्तित्व मभिव्याप्य अनन्यप्राप्तपद मध्य.स्ते । सः स्वकीयात् प्रथमादेव दर्शनात् द्रष्टुश्चेतसि नैज मद्‌भुतं प्रभावं प्रतिष्ठापयन् प्राप्तो जायते । आसीत् स वाक्य कोविदो[1] हृद्गतभावाभिज्ञतायां निपुणः, इङ्गितानां प्रकारै रूपेण, व्याभाषणेन च अमुकः प्राणी कीद्दश इत्येतज्ज्ञातुं नितरामेव श्लाघनीयां चातुरीं निदधौ[2] । यदा हि वयं तं सर्वप्रथमं लोचनगोचरीकृत्य धन्या भवाम स्तदा सः सुग्रीव-सचिवासनाधिष्ठितः संलक्षितो भवति । सचिवत्वात् तस्य, मेधावित्वं विद्यावत्वं राजनीति कुशलत्वञ्चानायासेनैव विदितता मुपयान्ति । सुग्रीवम्प्रति वुद्धिविज्ञानसम्पन्न, इङ्गितैः सर्वमाचर, नह्यबुद्धि गतो राजा सर्वभूतानि शास्ति हि' ।। ( ४।२।१८ ) इत्येतद् ब्रुवाणोऽसौ अस्माकं मानसे राजनीतिज्ञतायाः प्रभावं सफलतापूर्वकं प्रतिष्ठापयन् समुपस्थितः सञ्जायते । हनुमान् सर्ववेदज्ञो वक्तृतायां परमनिपुणः सुयोग्यवाग्गमी आसीत् । स महान् वैयाकरणो वाक्यवित् पण्डित आसीत् । स हृदयहारिणीं विचित्रां श्लक्ष्णां च वाचं प्रायूयुजत् । चिरं भाषमाणस्यापि तस्य वाचायां कदाप्येको न्यूनतमोऽपि दोषो न प्राप्यत । उच्चारणं तदीय मतितरां प्रियं शुद्धञ्च श्रुतमभूत् । यो हि तदीयां वाणीं शुश्राव, तस्य हृदयं भृशमप्रीयत । यस्य वाणी यस्य विद्वत्ता च राममपि नितरामतूतुषत् तस्य वाग्विशारदताया विद्वत्तायाश्च प्रकृष्टतरता सरलतयैव ज्ञाता भवितुं शक्यास्ति । रामस्तत्प्रशंसायां यदाह तच्छ्रूयताम्—

नानृग्वेदविनीतस्य ना यजुर्वेदधारिणः ।
नासामवेदबिदुषः शक्यमेवं विभाषितुम् ।। ४।३।२८
नूनं व्याकरणं कृत्स्न मनेन बहुधा श्रुतम् ।
बहु व्याहरतानेन न किञ्चिदपशब्दितम् ।। ४।३।२९

---

१—४।२।१३ २—४।२।२४-२५

अविस्तरमसंदिग्ध मविलम्बित मव्यथम् ।
उरः स्थं कण्ठगं वाक्यं वर्तते मध्यमस्वरम् ॥ ४।३।३१

संस्कार क्रम सम्पन्ना मद्भुता मविलम्बिताम् ।
उच्चारयति कल्याणीं वाचं हृदयहर्षिणीम् ।।२।३।३२

अनया चित्रया वाचा त्रिस्थानव्यञ्जनस्थया ।
कस्य नाराध्यते चित्त मुद्यतासेररे रपि ॥ ४।३।८२

हनुमति भव्यं ज्ञान ज्योतिर्दिदीपे । सः किं सत्यं किं न सत्यं किं नित्यं किन्ननित्यमिति सम्यग् विवेद । ताराम्प्रति तदुक्तानि वाक्यानि तस्याध्यात्मिकत्व मभिव्यञ्जन्ति—

गुणदोषकृतं जन्तुः स्वकर्मं फलहेतुकम् ।
अव्यग्रस्तदवाप्नोति सर्वं प्रेत्य शुभाशुभम् ॥ ४।२१।२
जानास्यनियता मेवं भूताना मागतिं गतिम् ।
तस्माच्छुभं हि कर्तव्यं पण्डितेनेह लौकिकम् ॥ २।२१।५

आसीद् हनुमात् शास्त्रसिद्धान्तेषु पारदृश्वा, अर्थतत्वेषु कोविदः, कालधर्म विशेषविच्च । यदाहि सुग्रीवो रामकृपया निवृत्तकार्यः सिद्धार्थश्च सञ्जात स्तदा स राज्य-दारादि सुखानि प्राप्य तस्यैव रामस्य सेवां विसस्मार यस्य साहाय्येन, अनुकम्पया वलेन च राज्यं, समृद्धि पत्नीं च प्राप । स राजलक्ष्मी मधिगम्योन्मत्तो बभूव, स्त्रीसुखे नितरामेव लिप्तः सञ्जातः । मित्रस्य कर्त्तव्यं तद्ध्यानपथाद् अभ्रंशत । हनुमान् उचिते हि समये तं यदुपदिदेश तेन तस्य कालधर्मविशेषविज्ञत्वेन सहैव अर्थतत्वाभिज्ञतादिसद्गुणसमृद्धत्वं पूर्णतया विदितं जायते । स सुग्रीवमाचचक्षे—

राज्यं प्राप्तं यशश्चैव कौली श्रीरभिवर्धिता ।
मित्राणां संग्रहः शेषस्तद् भवान् कर्तुं मर्हति ।।
यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ।
तस्य राज्यं च कीर्तिश्च प्रतापश्चापि वर्धते ।।
यस्य कोशश्च दण्डश्च मित्राण्यात्मा च भूमिप ।
समान्येतानि सर्वाणि स राज्यं महदश्नुते ।।
तद् भवान् वृत्तसम्पन्नः स्थितः पथि निरत्यये ।
मित्रार्थ मभिनीतार्थं यथावत् कर्तुं मर्हति ॥ ४।२९।९-१२

हनुमान् इत्येतदभिधाय सुग्रीवं 'यः सर्वं कर्माण्यपि हित्वा मित्रकार्यसाधनार्थं उत्साह विशेष पूर्वकं क्षिप्रतया कार्येषु न संलगति स भवत्यवश्य मनर्थभाक् । कार्य

साधनार्थ मुपयुक्ते काले सत्यतीते यो हि कार्यार्थमात्मानं संयोजयति स गुरुतर कार्याणि सम्पाद्यापि मित्र-प्रयोजनसाधयिता न मतो भवति । रामोऽस्त्यस्माकं परम-सुहृत् । तत्कार्यकालोऽय मत्येति । अतः सीता-परिमार्गणं क्रियताम्' इत्येतदुवाच ।

रामकार्ये दर्शितप्रमादं सुग्रीवं निकषा लक्ष्मणं रोषाविष्ट मागच्छन्तं निशम्य हनुमान, सुग्रीवं यदाह तत्र तदीयं विवेकित्वनयज्ञत्वादिकं पुनः अस्मत् पुरतः समुपस्थितं सञ्जायते—

प्राप्त मुद्योग कालं तु नावैषि हरिपुङ्गव ।
त्वं प्रमत्त इति व्यक्तं लक्ष्मणोऽयमिहागतः ॥ ४।३३।१५

आर्तस्य हृतदारस्य परुषं पुरुषान्तरात् ।
वचनं मर्षणीयं ते राघवस्य महात्मनः ॥ ४।३३।१६

कृतापराधस्य हि ते नान्यत् पश्याम्यहं क्षमम् ।
अन्तरेणाञ्जलिं वद्ध्वा लक्ष्मणस्य प्रसादनात् ॥ ४।३३।१७

हनुमान् महान् सुयोग्यो ज्ञानिनामग्रगण्योऽतुलितवलधाम सकलगुणनिधिः दनुजविनाशनशक्तिसम्पन्नः सच्चरित्रः साधुसत्तम आसीत् । अर्थसाधने तु स अमोघां क्षमतां निदधौ । तस्य सामर्थ्यप्रतिद्वन्द्वि किमपि तत्वं न भुवनत्रयेऽप्यवर्तत । सः सर्वलोकाभिज्ञतां न्यदधात् । तत्तेजोऽभिभवने न कोऽपिक्षम आसीत् । तत्र वलं, वुद्धिः पराक्रमो देशकालानुवृत्ति र्नयश्च व्यराजन्त । अतएव रामः प्रीतो भूत्वा स्वनामाङ्को-पशोभितमङ्गुलीयमभिज्ञानं तस्य प्रददत् 'अनेन त्वां हरिश्रेष्ठ चिह्नेन जनकात्मजा । मत्सकाशादनुप्राप्त मनुद्विग्नानुपश्यति' (४।४५।१३) इति प्राब्रवीत् ।

सीतां विचिन्वन्तः सर्वे हि अङ्गदादिकाः बिलमेकं प्रविविशुः । तस्मात् ते सर्वे हि कदापि जीवन्तो निर्गन्तुं नाशक्ष्यन् यदि हनुमांस्तत्र तपश्चरन्त्याः स्वयंप्रभाया स्तापस्याः प्राप्तप्रसादो नाभविष्यत् । अयं हनुमानेवासीत् यो विद्याविनयबलात् संभाषणकलाकुशलत्वाच्च तस्या स्तापस्याः कृपां प्राप्तु मशकत्; या स्वप्रभावात् क्षणेनैकेन सर्वानपि हरियूथपान् विलाद् वहिः कृत्वाताननुकूलं स्थानं प्रापितवती । अयं हनुमानेवासीद् यश्चतुर्ष्वप्युपायेषु भेदमुपवर्ण्य स्ववाक्यसम्पदा सर्वानपि वानरान् भेदयित्वा अङ्गदमपि कोपोपायसमन्वितै र्भीषणै र्वाक्यै रभीषयत् । अन्ततो गत्वा सः स्वप्रयासे सफलता मवाप । अङ्गद स्तद्वचनं पालयितु मुद्यतो जातः । तं (अङ्गदम्) प्रति तत्कथितानि 'विगृह्यासनमप्याहु र्दुर्बलेन बलीयसा । आत्मरक्षाकरस्तस्मान्न विगृह्णीत दुर्बलः' ४।५४।१२ इत्येतदादीनि वाक्यानि तस्य (हनुमतः) भेदनीतिविच-क्षणत्व मुल्वणतयैव प्रकटीकुर्वन्ति ।

हनुमतोऽसाधारण बलबुद्धितेजः सत्त्ववत्ता जाम्बवतः 'वलं बुद्धिश्च तेजश्च सत्त्वं च हरि पुङ्गव[१]' इत्येतदादिवचनैरपिसिद्ध्यति । स्वकीयाभि र्लोकोत्तर विशिष्टताभि रेव स बुद्धि-बल-समुद्रः समुद्रमपि तरीतुं प्रबभूव ।

हनुमतः सर्वेष्वपि ज्ञानेन्द्रियेषु कर्मेन्द्रियेषु मनसि च पूर्णोऽधिकार आसीत् । नैकमपीन्द्रियं तं सत्पथाद् भ्रंशयितुं क्षमं बभूव । वस्तुत आसीदसौ जितेन्द्रियाणां शिरोभूषणं महान् योगविच्च । सागरतरणानेहसि न कश्चिद्पि पदार्थ स्तं वशीकर्तुं समर्थोऽभूत् । सुरसया कृता स्तेते नानाविधाः प्रयत्ना अथ च तत्तत्प्रदर्शितानि तान्याकर्षणान्यपि न तं वशिनं वशीकर्तुं प्राभूवन् । तदीयं तादृशं मनोबलं शारीरं च वलं वीक्ष्य सा अतितरां प्रीताभूत्वा तमेतया शुभाशिषानुजग्राह—

अर्थसिद्ध्यै हरिश्रेष्ठ गच्छ सौम्य यथासुखम् ।
समानय च वैदेहीं राघवेण महात्मना ।। ५।१।१७

तदीयं तद् दुष्करं कर्म दृष्ट्वा 'साधु साधु' इत्यभिधाय सर्वाणि भूतानि तं प्रशशंसुः । मार्गे या कापि बाधाऽऽगता हनुमांस्तां विजित्य अग्रे प्रतस्थे । सिंहिकाख्यं महत्सत्त्वं यदा स जघान तदा सर्वेऽपि प्राणिन स्तस्य धृतिं दृष्टिं मतिं दाक्ष्यं च प्राशंसन् । ऊचिरे च ते—

"यस्य त्वेतानि चत्वारि वानरेन्द्र यथा तव ।
धृति र्दृष्टि र्मति र्दाक्ष्यं स कर्मसु न सीदति ।।" ५।१।२०१

लङ्कां समासाद्य हनुमान् भृशं चिन्तां प्रापद्यत । तदीया तत्काले तत्स्थाने च कृता चिन्तना स्फुटतयैव तस्य निशितविवेकवत्वं दूरदर्शित्वं किञ्च प्रकृष्टतमदूतकार्यसम्पादनपटीयस्कत्वं द्योतयति । केन प्रकारेण कार्यं मया कर्त्तव्यं येन रामस्य कार्यं न विनश्येत् जनकात्मजापि दृष्टा भवेदित्येतद् विचारयन् स दूतस्य किं कार्यं, कीदृशेन च दूतेन भाव्यमित्येतदधिकृत्य मनसि—

'भूताश्चार्था विनश्यन्ति देशकालविरोधिताः ।
विक्लवं दूत मासाद्य तमः सूर्योदये यथा ।। ५।२।३९
अर्थानर्थान्तरे बुद्धि र्निश्चितापि न शोभते ।
घातयन्तीह कार्याणि दूताः पण्डितमानिनः ।। ५।२।४०

इत्येतदादिकं गम्भीरतयाति विचारयामास ।

हनुमान् लङ्कायां नानाप्रहरणोद्यतान् महाकायान् उद्भटभटान् राक्षसान् अवलोकयामास परं न तान् दृष्ट्वा तस्य मनो मनागप्यबिभेत् । हेमजाम्बूनद चक्रवालं

१— ४ । ६६ । ७

महार्हमुक्तामणिभूषितान्तं परार्घ्यकालागुरुचन्दनार्हं रावणान्तः पुरमपि तस्य मानसे लोभं नाल्पीयांसमपि जनयितु मशकत् । स तत्र जितरति सौन्दर्याः हृदयहारिणीः, योगिनामपि चेतांसि योगान्निपातयितुं क्षमाः सुन्दरीः प्रेक्षाञ्चक्रे परं न तस्य मनः स्तोकमपि कामविकारमियाय । स तदा यम् आत्मविश्वासं यत्स्वहृदयवशवर्तित्वञ्चाभिव्यानक् तदद्याप्यस्माकं राष्ट्रं भारतं सहर्षं समुच्छ्रितभालं विदधाति । हनुमता स्वकीयेन तेन विस्मयावहेन सदाचारेण तदानीं स्वकीयो देशो यद् गौरवं प्रापितमभूत् तद् गौरवमधिगम्य साम्प्रतमपि राष्ट्रमस्मदीयं सकलान्यपि विश्ववर्तीनि राष्ट्राणि अधरीकुर्वदिव संलक्ष्यते । हनुमत इमानि वचनानि देशस्यास्मदीयस्य तरुणानखिलानपि दृढात्मविश्वासान् सच्चरित्रताचारून् सन्मार्गनिष्ठान् विदधीरन्नित्यस्ति हार्दिकी कामना—

न हि मे परदाराणां दृष्टि र्विषयवर्तिनी ।
अयं चात्र मया दृष्टः परदारपरिग्रहः ॥ ५।११।३६

कामं दृष्टा मया सर्वा विश्वस्ता रावणस्त्रियः ।
न तु मे मनसा किञ्चिद् वैकृत्य मुपपद्यते ॥ ,,।,, ।४१
मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥,,।,, ।४२
नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ।
स्त्रियोहि स्त्रीषु दृश्यन्ते सदा सम्परिमार्गणे ॥,,।,, ।४३

प्रतिपदं वस्तुतो हनुमतो बुद्धिमत्त्वं बलवत्त्वं प्रखरविवेकयुक्तत्वञ्च दृष्टं भवति । एतादृशं किमपि स्थलं न वीक्ष्यते; एतादृक् कोऽपि कालो न संलक्ष्यते यत्र तदीयायाः सुमतेः तदीयाया दिव्योरुसत्त्वताया स्तदीयाया श्चारित्र्यश्रियः सौन्दर्य्यं न दृग्गतं भवेत् । सीतां प्राप्य अशोकवाटिकायां हनुमान् ध्यानं तदीय मावर्जयितुं यमुपायं रामकथावर्णनात्मकमवललम्बे तत् कियन्मधुर मुत्तमञ्च वर्तत इति सचेतस एव ज्ञातुं शक्नुवन्ति । सीतायाः स्वान्ते स्वविश्वासोत्पादने, रामप्रदत्तमुद्रिकासमर्पणे, श्रीरामस्य सीता विषयकप्रेमवर्णने, प्रमदावन विध्वंसने, राक्षसानां संहरणे, रावणस्य पुरः श्रीरामप्रभावाऽऽख्याने, दूतधर्मस्य सर्वथैव साधुतया सफलतया च संरक्षणे लङ्कायाः दहने च यां वन्दनीयां चातुरीं सः प्रादीदृशत् सा कस्य न जनस्य मस्तकं तच् चरणयोः प्रणतीकरोति ? रावणम्प्रति निगदितानि तदीयानि—

'तद् भवान् दृष्टधर्मार्थस्तपः कृतपरिग्रहः ।
परदारान् महाप्राज्ञ नोपरोद्धुं त्वमर्हसि ॥ ५।५१।१७
न हि धर्मविरुद्धेषु बह्वपायेषु कर्मसु ।
मूलघातिषु सज्जन्ते बुद्धिमन्तो भवद्विधाः' ॥५।५१।१८

इत्येतदादीनि वचांसि, अहह, कियन्ति सन्ति धर्मसम्मतानि, वैदुष्यबन्धुराणि, निर्भयता-सत्यतादिसद्गुणश्रितानि समुज्ज्वलोत्कृष्टतरदूतत्वप्रदर्शकानि मनोभिरामाणि च। तत्कृतानि समुद्रतरण-सीतादर्शनादिकानि कार्याणि वस्तुतो महान्त्यासन्। न तान्यन्यः कोऽपि कर्तुं क्षम आसीदत एव तु रामोऽपि—

कृतं हनुमता कार्यं सुमहद् भुवि दुर्लभम्।
मनसापि यदन्येन न शक्यं धरणीतले ॥६।१।२

अप्रधृष्यां पुरीं लङ्कां रावणेन सुरक्षिताम्।
प्रविष्टः सत्त्वमाश्रित्य जीवन् को नाम निष्क्रमेत् ॥६।१।४

इत्येतद्वचोभिस्तं मुहुः प्रशशंस। अहो हनुमता तु रामोऽप्यधमर्णीकृतः—

इदं तु मम दीनस्य मनोभूयः प्रकर्षति,
यदिहास्य प्रियाख्यातु र्न कुर्मि सदृशं प्रियम् ॥६।१।१२

हनुमतोऽपरिमितस्य शौर्यस्य दर्शनं यद्यपि पुरापि असकृत् कृतं परं तदीयवलस्य दर्शनमकम्पन–निकुम्भादिव्यापादनकाले राक्षस-सेनासंहरणानेहसि च प्राप्तं जायते। हिमालयादेकदा राम-लक्ष्मणयो रुभयोरपि मूर्च्छापनयनायौषधानयनं किञ्चान्यदा लक्ष्मणस्य मूर्च्छाया अपहरणाय औषधाऽऽहरणमपि तत्कृतेषु तत् तद् गुरुतरेषु कार्येष्वन्यतम मुल्लेखनीयं कार्यमस्ति। इदं कार्यमपि तदीयं तद् यत् तमन्तरेण न कोऽपि कर्तुं समर्थः। अहो स हनुमान् केन प्रकारेश वर्ण्येत यत्र तेजो धृति र्यशो दाक्ष सामर्थ्यं विनयोनयः पौरुषं विक्रमो बुद्धि रित्येते सर्वेऽपि सद्गुणा अशोभन्त धन्येयं भारतमही या हनुमन्तं स्वोत्सङ्गे लालयितुं सौभाग्यश्रियमविन्दत्। गो. तुलसीदास-कृतेन स्तवेन प्रणम्यते सः—

अतुलित बलधाम स्वर्णशैलाभदेहं दनुजवनकृशानुं ज्ञानिनामग्रगण्यम्।
सकलगुणनिधानं वानराणामधीशं रघुपतिवरभक्तं वातजातं नमामि ॥



# श्रीकृष्णः

श्रीकृष्णो यस्मिन् कालेऽवततार तस्य कालस्य व्यतीतस्य वसुग्रहविधुविशिखवर्षाणि जातानि । तज्जन्मनः प्रागेव महाकठोरघोरविपदस्तं निषूदयितुं परमप्रकृष्ट वलेनामित प्रचण्ड साधन सम्पन्ना भूत्वा समुद्यता आसन् । माता पितरौ प्रभूत भौतिकसामर्थ्यजुषोद्धतेन कंसेन कारागारे वन्दिनौ कृत्वा निक्षिप्तावास्ताम् । सः प्रतिक्षणं तज्जन्म प्रतीक्षमाणः सन्तिष्ठते स्म येन स, यदैव सः ( श्रीकृष्णः ) उत्पद्येत तदैव तं यमलोकं प्रापयेत् । यदा स जनुर्जग्राह निशीथिनी परमभयावहा भूत्वा सर्वतो विततासीत् । आकाशं घनघटावृतं, दिशः सकला घोरांन्धकाराच्छन्नाः यमुनोल्लोलतरङ्गा गम्भीरविपुलजलप्रवाहवती भवन्ती च प्रवहमाना आसन् । तमिस्राया अर्द्धता तदा भयङ्कर नींरवतां वितन्वन्ती विजृम्भ माणासीत् । केन प्रकरेण तस्य क्रूरकालसमात् कंसाद् रक्षाकृतास्यादि त्येषा कठिन समस्या तस्य मातुः पितुश्च पुरः समुपस्थिताऽऽसीत् । तथा प्रयासः कृतो वभूव यथा तस्य सद्योजातशिशोः प्राणानां त्राणं भवितुमर्हेत् । तत्पिता वसुदेव स्तस्मिन्नेव घोरभयाक्रान्तानेहसि सर्वाण्यप्यवधानपूर्गानि साधनानि संश्रित्य तं गोकुलस्थितनन्दनिकेतनं प्रापयितुं क्षमोऽभवत् । तत्रापि अनुक्षणं विपद स्तं विनाशयितु मितस्ततो विचरितुमारभन्त । कंसेन ते सर्वेऽप्युपायाः परिगृहीता आसन् येहि तं शिशुं व्यापादयितुं क्षमा भवेयुः । येनापि केनापि प्रकारेण स प्राणहरणपटीयांसि कष्टानि विजित्य जीवनस्य दश वर्षाणि गमयितुं प्रवभूव । परं कंसस्तु एतावन्तं कालं तच्छिशु प्राणग्रहण चिन्तायामेव गमयाम्वभूव । परानिष्टचिन्तको न हि कदापि भद्रं पश्यति । किशोरावस्थापन्नोऽसौ कृष्णाभिधानो वालः क्षिप्रमेव लोकापकारपरं कंसं नाम नृपतिं निहत्य कारागारान् स्वमातरं पितरंच द्रागेवामूमुचत् ।

श्रीकृष्णः साधूनां परित्राणाय दुष्टानां च बिनाशनाय आत्मानं जनुः कालादेव प्रवर्तयाम्वभूव । तस्मिन् ऐश्वर्यं, यशः, धर्मः, श्रीः, ज्ञानं, वैराग्यञ्चेत्येतेषडपि भगाराजन्ते स्म । स कंसं व्यापाद्य वस्तुत स्तान् सकलानप्यन्याय परान्पापात्मनो दुर्जनान् उत्सादयितुं व्यापादयितुं च शिवसङ्कल्पवान् अभूत् यै र्धरित्री परिपीड् यमानासीत् ।

तदानीं जरासन्धो नाम मगधराजः परमकठोरः पापात्माधीश्वत्र्र आसी तेन अयुते द्वे शतान्यष्टौ राजानो गिरिद्रोण्यां वन्दीकृता आसन् । सः अन्ये च तदा

राजानो राज्यैश्वर्यमदोमत्ता अतिनिर्घृणाः प्रजानाशकारिण आसन् । भगवता कृष्णेन राजनीति बलपूर्णैरुपायै स्तेभ्यो भूपेभ्यो धराया उद्धारः कृतः । ये हि राजान स्तं शरण मागतास्तेषु सोऽनुजग्राह । सः शरणागतान् क्षितिपान् प्राह—

दिष्ट्या व्यवसितं भूपा भवन्त ऋतभाषिणः ।
श्रियैश्वर्य मदान्वाहं पश्य उन्मादकं नृणाम् ॥
हैहयो नहुषो वेनो रावणो नरकोऽपरे ।
श्रीमदाद् भ्रंशिता स्थानाद् देवदैत्यनरेश्वराः ॥
भवन्त एतद् विज्ञाय देहाद्युत्पाद्यमन्तवत् ।
मां यजन्तोऽध्वरैर्युक्ताः प्रजा धर्मेण रक्षय ॥ १०।७३।१६-२१
(श्रीमद्भागवते)

मगधराज जरासन्धेविजिते सति भगवतः कृष्णस्य यशः सर्वत्र व्याप्त मभवत् । द्वितीयोहि नरेशस्तदा शिशुपाल आसीत् । आसीत् स जन्मन आरभ्य दुर्बुद्धिः सत्सु द्वेषी असत्सुच नितरां स्नेही । प्रकृत्या दुष्टत्वात् प्रजा न तस्मिन् अतुष्यत् । युधिष्ठिरकृत राजसूययज्ञे सः परामेव कुटिलतां दुष्टताञ्च अदीदृशत्; श्रीकृष्णस्तत्कृतान्यागांसि शतं सेहे अन्तोगत्वा तस्मिव यज्ञे सुदर्शनचक्रेण तं जघान । राजसूययज्ञे युधिष्ठिरस्य, स्वेच्छया अङ्गीकृतं हि ऋषि-मुनि विप्रराजर्षिप्रभृतिस्म । महाभागानांचरण प्रक्षाल्नविषयकंकार्यं कृष्णस्य कमपि परमप्रशंसनीयं महनीयं विन यं ज्ञापयति ।

युधिष्ठिरस्य राजसूययज्ञं तदीयां श्री समृद्धि च वक्ष्यि दुर्योधनस्य हृदये ईर्ष्यानल उद्दीप्तोऽभवत् । सः स्वमातुलशकुनिसहायतया कुचक्रं स्रष्टु मारेभे । युधिष्ठिरो द्यूतार्थं मामन्त्रितोऽभूत् । शकुनिच्छलेन महाराजस्य सर्वमपि राज्यमपाहियत । द्रौपद्यपि द्यूतेजिता । सा प्रसभं राजसभायामाहूता वभूव । तत्र च दुर्हृदयदुर्योधन सङ्केतेन दशासनो भीष्म द्रोणादिषु सत्सूपस्थितेषु तां नग्नीकर्तु मुपचक्रमे । यदा हि दुःशासनस्तदौयंवास आक्रष्टुमारेभेसा—

गोविन्द द्वारकावासिन् कृष्ण गोपीजनप्रिय ।
कौरवैः परिभूतां मां किं न जानासि केशव ॥
हे नाथ हे रमानाथ ब्रजनाथार्तिनाशन ।
कौरवार्णवमग्नां मामुद्धरस्व जनार्दन ॥
कृष्ण कृष्ण महायोगिन् विश्वात्मन् विश्वभावन ।
प्रपन्नां पाहि गोविन्द कुरुमध्येऽवसीदतीम् ॥

(महाभारते, समापर्वणि ६८,४१-४३)

श्रीकृष्णस्तां ररक्ष; स दुष्ट दुःशासनः पूर्ण प्रवलं प्रयत्नं विधायापि न तां नग्नीकर्तुं शशाक। आसीद् वस्तुतः श्रीकृष्णो दीनार्तिहारी।

आसीद् भगवान् कृष्णोऽसन्मार्गगामिनां निग्रहीता, सन्मार्गगामिनां चानुग्रहीता। सोऽधर्मरुचीन् शतशोऽसुरान् निजघान मौखान् पाशांश्चिच्छेद; निसुन्दं नरकं च व्यापादयामास; प्राग्ज्योतिषपुरगामिनं पन्थानं कृतवान् निरुपप्लवं; जारुथ्या माहुतिं क्राथं च हतवान्; शैब्यं, शतधन्वानं, रुक्मिणम् इन्द्रद्युम्नं यवन जातीयं कसेरुमन्तं, सौभपतिं शाल्वं च जित्वा भोजं, गोपतिं तालकेतुं चावधीत्। इत्थं स वसुन्धराया बहून् अधमाचारविचारान् विनाश्य भुवं तद्भारविहीनां चक्रे।

यदा चैकदा पाण्डवा वनमध्यवात्सुर्दुर्योधनो दुरभिसन्धिवशात् ऋषिदुर्वासिसं वनं पाण्डवाधिष्ठितं प्राहिणोत्। यदा हि सः पाण्डवाना मावासस्थल मियाम, द्रौपदी भोजननिवृत्ता भूत्वा विश्रामे आसीत्। दुर्वासिसा सह दशसहस्र संख्यकाः शिष्या आसन्। युधिष्ठिर आदरपूर्वकं तमानर्च भोजनार्थ ञ्च प्रार्थयामास। ऋषिः स्नात्वा भोजनं ग्रहीष्याम इत्युक्त्वा स्नातुं नदीं गतः। इतो द्रौपदी चिन्तामापेदे। सः चिन्तयन्त्यपि यदान्नहेतुं नापश्यत्; कृष्णं सस्मार। कृष्णः सहायतार्थ मुपातिष्ठत्। समापतितात् तस्मादपि सङ्कटात् सः स्वभक्तान् पाण्डवान् उद्दधार। कृष्णस्य सर्वमपि जीवनमापन्नाना मापदो जहार।

वनवासस्य अज्ञातवनवासस्य चावधि र्यदावससौ, विराटनृपतिसभायां द्रुपद-सात्यकिबलरामप्रभृतयः पाण्डवैः सह सर्वेऽप्युपविष्टा आसन्। पाण्डवाः केन प्रकारेण राज्यं विन्देयुः इत्येषः प्रश्नः पुरः समुपस्थित आसीत्। सर्वेऽपि श्रीकृष्णस्याननं प्रेक्षमाणाः समतिष्ठन्त।

श्रीकृष्णः केन प्रकारेण छल मवललम्ब्य युधिष्ठिरस्य राज्यं हस्तसात्कृतं तत्सर्वमपि सविस्तरं निगद्य पाण्डवाः महान्ति कष्टानि सहित्वा द्वादश वर्षाणि वने उषित्वा किञ्च वर्षमेक मज्ञातवासजनितानि काठिन्यानि चानुभवन्तो न कदापि स्वधर्मं तत्यजुः; सदैव ते न्यायपरायणाः सुपथगामिनः सदाचारस्थिता एव व्यालोक्यन्त तासु तासु च घोरास्वापत्स्वपि। साम्प्रतं तथा भवद्भिः सर्वैरपि विचारणीयं यथा युधिष्ठिरो दुर्योधनश्चोभौ हितं शुभं चावाप्नुयाताम्। भवन्तो मार्गं तं मार्गयेतां यः कुरुकुलोद्भवानां यशो वर्धयेत, भवेच्च स धर्मानुकूलो न्यामसंगतश्च। युधिष्ठिरो धर्मविरुद्धं देवानामपि राज्यं न ग्रहीतुमिच्छति। परं तावत् कोऽपि निर्णयो न ग्रहीतव्यो भवेत् यावत् शत्रुपक्षः किमिच्छतीति न ज्ञातं स्यात्। कोऽपि धर्मशीलः कुलीनः पवित्रात्मा अप्रमत्तो दूतो हि तद्विचारज्ञानाय प्रेषणीयः। स दूतो दुर्योधनादीन् प्रबोधयेत् तदीयं रोषमावेशं च शान्तं विधाय पाण्डवानां कृतेऽर्धराज्यं दापयितुं तान् अनुकूलयितुं प्रभवेत्।

श्रीकृष्णस्य भाषणेनानेन स्पष्टतमैव तस्य नीते धर्मानुगत्वं सिद्ध्यति । स्ववक्तव्यमुपसंहरन् स आह—

किं तु सम्बन्धकं तुल्यमस्माकं कुरुपाण्डुषु ।
यथेष्टं वर्तमानेषु पाण्डवेषु च तेषु च ।। महाभारते, उद्योग प. ५।३

श्रीकृष्णः सर्वेषां शुभचिन्तक आसीत् । कौरवाः पाण्डवा उभयेऽपि भद्रं पश्येयुः तेषां कल्याणं भवेदित्येषा हि तस्य हार्दिकी बलीयस्याकाङ्क्षासीत् । परं दुर्योधनस्तु न हितकारीं वार्तां स्वीचकार सः शीघ्रमेव रणनिमन्त्रणं प्रदातुं तस्य (श्रीकृष्णस्य) सविधे प्रस्थितः । अर्जुनोऽपि तस्य सकाशे तदर्थं प्रयातः । तस्मिन् काले श्रीकृष्णो यदाह तदस्ति नितरामेवाभिनन्द्यम् । श्रीकृष्णः प्राह 'अहं कौरवपाण्डवयो द्वयोरपि साहाय्यं करिष्यामि, पर मेकतोऽहमेकाकी अस्मि, एकतश्च मम दशकोटिसंख्याका विशाला नारायणी सेनास्ति । अत्रेदमपि न विस्मरणीयं यन्नाहं योत्स्ये न च शस्त्रमेव धारयिष्यामि । सम्प्रति युवामुभौ (अर्जुनदुर्योधनौ) द्वयोर्मध्ये एकतरस्य वरणं स्वेच्छया विदधीयाथाम् । मामेकाकिनं निःशस्त्रं वरीतुं किंवा मम दशकोटि संख्याकां विशालां चमूं च स्वीकर्तुं युवां द्वावपि स्थः सर्वथा स्वतन्त्रौ' ।

द्वावपि पक्षौ युद्धार्थं मुद्यतौ स्त इत्येतद् विज्ञाय धृतराष्ट्रो भृश मुद्विग्नो जातः । सः सञ्जयं पाण्डवानां सविधे प्राहिणोत् । ततो निवृत्तः सञ्जयः सर्वामपि श्रुतां वार्तां धृतराष्ट्राय न्यवेदयदवदच्च—

यतः सत्यं यतो धर्मो ह्री रार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततोजयः ।।
स कृत्वा पाण्डवान् सत्रं लोकं सम्मोहयन्निव ।
अधर्मनिरतान् मूढान् दग्धुमिच्छति ते सुतान् ।।
(महाभारते, उद्योग प. ६८)

शान्तिप्रयोजनेन शान्तिदूतः श्रीकृष्ण एव सर्वनिश्चयेन प्रहितो वभूव । दुर्योधनः श्रीकृष्णं सभाजयितुं सर्वविधमपि श्रेष्ठं प्रक्रमं विदधौ परं तस्याधर्मपरत्वादन्यायनिष्ठत्वाच्च स तत्कृतं सत्कारं न स्वीचकार । यदा दुर्योधनः—

कस्मादन्नानि पानानि वासांसि शयनानि च ।
त्वदर्थ मुपनीतानि नाग्रहीस्त्वं जनार्दन ।।(महाभा, उद्योग प. ९१)

इति श्रीकृष्णं पप्रच्छ; तदा श्रीकृष्णो गम्भीरेण वचसा युक्तियुक्त मुत्तमं दैन्यरहितं वाक्यं प्राह—

कृतार्था युञ्जते दूताः पूजां गृह्णन्ति चैव ह ।
कृतार्थं मां सहामात्यं समर्चिष्यसि भारत ।। (तत्रैव)

पुनश्चाग्रे स आह—

नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद् वा धर्मं जह्यां कदाचन ।।
सम्प्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च सम्प्रीयसे राजन् न चैवापद्गता वयम् ।। (तत्रैव)

श्रीकृष्णः शान्त्यर्थं सर्वविधतया पूर्णशक्त्या च प्रयासं चकार पर दुरभिनिवेशो दुर्योधनो न तदीयं सर्वहितकरं वच आदृतवान् । सः सर्वमपि प्रस्ताव मवज्ञातवान् । कौरवसभायां कृतेन तदीयेन वक्तव्येन दौत्यस्योत्कृष्टतम मद्वितीय मलौकिकमनन्यगतेजो विभ्राजितातिद्वय वैदुष्य-विवेक-नीतिज्ञत्व त्रिकालानपेक्षाप्रतिहतज्ञान-महामहिममयं रूपं समुपस्थितं भवति ।

आसीद् भगवान् कृष्णः सर्वासां कलानां कान्तो योगस्येश्वरो शस्त्रेषु शास्त्रेषु नीतिषु, बले, पौरुषे, ज्ञाने चाद्वितीयो वेत्ता । तस्योपमानं कोऽप्यासीदेव न अतः सः स्वयमेव स्वकीयोपमान मवर्तत । महाभारतसमरे अर्जुनाय स यदुपदिदेश ज्ञानं, 'भगवद्गीता' नाम्ना तत् सर्वत्र प्रथते, तादृशं ज्ञानं क्वान्यत्र दृश्यते । यस्मात्कालात् तस्य ज्ञानस्योदयः सञ्जातस्तस्मादेव कालात् सर्वमपि जगतो ज्ञानिनां विद्वद्धौरेयाणां योगिना मनीषिणां मनस्विनां च मण्डलं तस्य पुरतो प्रणतमस्तकं वर्तते स्म, वर्तते, वर्त्स्यते च । तां भगवता गीतां गीतां निशम्य यो हि धनञ्जयः 'कार्पण्यदोषोपहत स्वभावः !........शाधि मां त्वां प्रपन्नम् । इत्यभिदधौ स एव 'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत स्थितोऽस्मि गतसन्देहः करिष्ये वचन तव' इत्यभिदधच्छ्रुतो जायते ।

श्रीकृष्ण आसीद् भक्तत्राता, भक्तहेतोः सः स्वप्रतिज्ञा मपि त्यक्तु मुद्यतो वभूव । भक्तं पातुं स युद्धे चक्रमपि धर्तुं सन्नद्धोऽभवत् । भीष्मश्चक्रपाणिं तं वीक्ष्य 'एह्येहि देवेश जगन्निवास नमोऽस्तु ते माधव चक्रपाणे'........इत्येतदादिस्तुतिं कुर्वाणः केन न दृश्यते ? अहो स भक्तजनहिताय जयद्रथ-कर्ण-द्रोणादिव्यापादनाय तां तां नीतिं मनोज्ञां च युक्तिं प्रदर्शयन् प्राप्तो भवति । स भक्तरक्षकः स्पष्टमेवाचचक्षे—'यः शत्रुः पाण्डुपुत्राणां मच्छत्रुः स न संशय. । (म. भा. भीष्म प. १०७।३२)

स विपद्भ्यः कदापि नाबिभेत् तत्र सः स्मितमुख एव प्रेक्षितोऽभूत् । तदीयं जीवन मजस्रं कर्मसु रतमेव प्रेक्षितं बभूव । स वस्तुतो जनुरारभ्य जीवनावसानं यावत् कठोरतमसंघर्षेषु जले कमलमिव प्रफुल्लन् विकसंश्च जगतावलोकि । सः सज्जनानां ब्राह्मणानां धेनूनां शास्त्रीयमर्यादाना मद्भुतोऽनुपम एव संरक्षकः सम्पोषकश्च बभूव । नारीषु तदीया परमादरधी रासीत् । न सः तासां मनागपि कष्टं द्रष्टु शशाक । स तासां मानसन्मानरक्षायै सर्वदैव समुद्यत एव दृष्टोऽजायत । सः परमोत्तमः सुहृदा-

सीत् । सुदाम्नः स्वमित्रस्य दारिद्रयं सः पूर्णतया जहार परं स्वाननेन न तम्प्रति अक्षरमप्येकं कथितवान् । न स आसीत् अहङ्कारवान् न चोन्मत्तो न चात्मप्रशंसकः । स महान् विनयवान् मानव आसीत् । यदा हि सः स्वमित्रस्य सुदाम्न आगमन मश्रौषीत् तत् क्षणम्—

'तं विलोक्याच्युतो दूरात् प्रियापर्यङ्क मास्थितः ।
सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा ॥
सख्युः प्रियस्य विप्रर्षे रङ्गसङ्गातिनिर्वृतः ।
(भागवते, १०।८०।१८, १६)
प्रीतो व्यमुञ्चदब्बिन्दून् नेत्राभ्यां पुष्करेक्षणः ॥

तदीयानि वाक्यानीमानि—

नन्वेतदुपनीतं मे परमप्रीणनं सखे ।
तर्पयन्त्यङ्ग मां विश्वमेते पृथुक तण्डुलाः ॥ (तत्रैव, १०।८१।६)

तदीयस्य हृदयस्य निरभिभानभावं सारल्यं, विनोदप्रियत्वं श्रेष्ठं मित्रत्वञ्चाभिव्यञ्जन्ति ।

श्रीकृष्णः परमसौम्य सरल मातृपितृ गुरुजनभक्तो बाल आसीत् । व्रजवासिन्यो गोप्यो गोपाश्च तस्मिन् परां प्रीतिं स्नेहं च निदधु रित्येतत् तदा ज्ञातं जायते यदोद्धवः किञ्च वलरामो व्रजं ययतुः । तस्मिन् काले व्रजवासिन्या जनतया सह या या वार्ता तयोः सञ्जाता सा वार्ता तत्र प्रमाणम् ।

श्रीकृष्णो महान् गुरुभक्त आसीत् । स गुरुकुलमधिवसन् भक्त्या श्रद्धया च गुरुं सिषेवे इत्येतदधः स्थितेन श्लोकेन ज्ञायते—

यथोपसाद्य तौ दान्तौ गुरौ वृत्तिमनिन्दिताम् ।
ग्राहयन्तावुपेतौ स्म भक्त्या देवमिवादृतौ ॥
(श्रीमद्भागवते, १०।४५।३२)

स गुरुदक्षिणायां तदेव प्रददौ यत् तस्य गुरुराचकाङ्क्ष ।

श्रीकृष्णः स्वकीयेऽग्रजे बलरामे महतीं भक्तिं न्यदधात् । वलरामोऽपि स्वकीयेऽनुजे परमवात्सल्यं निहितवान् । स तदेव चकार यत् तदीयोऽनुज आचकाङ्क्ष । महाभारत समरे सः स्वानुजेच्छावशादेव भागं न जग्राह । नात्र संशयो भगवान् कृष्णः स्वकीयान् स्वजनान् कुटुम्बिनश्च प्रति पूर्णतया नैजं कर्तव्यं पालयन् जगद्धिताय सर्वमपि कार्यं चकार ।

धर्म्यात्पथः प्रविचचाल न सः कदापि ।
आजीवनं विमल कर्मरतो व्यलोकि ॥
दुष्टान् विनाश्य सुजनांश्च सदा ररक्ष ।
भक्तिप्रियः स वसुदेवसुतोऽस्ति वंद्यः ॥

# गौतमबुद्धः

बुद्धो (सिद्धार्थः) यदा षोडशवर्षदेशीय आसीद्, विवाहितो बभूव। सञ्जातोद्वाहसंस्कारस्य द्वादश वर्षाणि यदातीतान्यभूवंस्तदा तस्य पुत्रः सम्बभूव। यदा तदीया तरुणताचन्द्रिका पूर्णिमातिथि माससाद तदा सः परिवव्राज। तदानीं स एकोनत्रिंशद्वर्षवयस्क एवासीत्। षड्वर्षाणि स महान्ति कष्टानि सेहे; बभूव च यदा सः पञ्चत्रिंशद्वर्षदेशीयस्तदा बुद्धत्व ज्योतिस्तस्मिन्नुन्मीलितं बभूव। पञ्चत्रिंशद्वर्षवय आरम्भ अशीतिवर्ष वयः पर्यन्तमनारतं भूतपुरुषार्थवर्षव्यापिनं कालं यावत् समीचीनतया कृत्स्नतया च सामाजिकीं सेवां सक्रियतया कर्तुमात्मानं स मनोयोगपूर्वकं समर्पयामास।

बुद्धोऽतिसौकुमार्य-सौन्दर्योल्लासलसितं पाटलपुष्पमिवासीत्। तत्र असामान्यमेव किमप्याकर्षणं व्यराजत। मानव प्रकृति सुलभा विशिष्टता स्तमवश्यमेव समस्पृशन्, जनसाधारण इव सोऽपि संन्यासावस्थायां किं वा त्यागदशायां या हि क्लान्तयः श्रान्तयश्च मार्गे निपतन्ति ता अवश्यमेव कष्टेनैव सोढुमशकत्। यावदालोकस्योन्मेषो न मयि समजायत तावदुदासीनता मासादयितुमहं सामर्थ्यं मात्मनि न प्राप्नुयामिति सः स्वयमेवाचकथत्। शीतोष्णसुखदुःखदा मात्रास्पर्शाः स्वकीयं प्रभावं तस्मिन्नवश्यमेव न्यपातयन्। स मोक्ष ममृतत्वं वावश्यमेव परमदुर्लभमेव मेने। यद्यपि सः स्वकीयं सर्वमपि राजवैभवं प्रेयसीं पुत्रञ्च पर्यत्यजत् परं वैराग्यंदयात् प्राक् यदा यदा शिशवः स्त्रियो मृग्योऽन्ये च तेते भावा स्तल्लोचनगोचरतां गताः स्तदा तदा सोऽवश्यमेव तद्दिशि आकृष्टः सञ्जातः। कौमारकलिका स्निग्धश्यामलरोलम्बावली तारुण्यस्य स्पन्दमान आह्लाद श्च सर्वाण्यपि एतानि तदीयं मनः प्रीणन्ति स्म; मातृपित्रोः क्रन्दनं विलपनञ्च तदापि तदीयं हृदयं नितरा मतुदन्। सुखं दुःखं, लाभमलाभञ्च तदापि सः समानमनुभवितुं न क्षमो जातः। विरक्तेरुदयात् प्राक् सोऽभिलाषाणां निरोधनेऽतितरामात्मानं दुर्बलममंस्त। असदर्थेभ्योऽभिलाषेभ्यश्च सः स्वमानसस्य निवर्तनं नानायासं कर्म अवागमत्। भिक्षार्जितमन्नं सः कठिनतयैव भोक्तुं शशाक। परमकाठिन्येनैव स तद्भिक्षाभोजनं स्वस्वभावानुकूलतायाः सकाशे आनेतुं प्रबभूव। अन्याश्च कठिनता स्तत्पुरः स्थिता बभूवुः। विजनस्थानं तं तदापि भृशं भाययतिस्म यदा हि सः स्वकीयं प्रासादं विहाय वनमशिश्रियत्। स तां विजनस्थितिमित्थ मवर्णयत्—'वने रहसि वसति र्हन्त कीदृशी दुस्सहा भवति; रहोवासात् प्रसन्नताया अनुभवनं नैव सुसाध्यं कर्म। वल्कलवासांसि, जटाधारणं, कुञ्जेषु निवासं;

शैत्य-तापप्रावृषश्च न प्रकृतिः प्रथमं वोढुं सोढुं चार्हति। यावच्चेतो न योगयुक्तं जायते तावत्तु साधु र्महतीमेव व्यथा मधिगच्छति; मृत्युभीति रिव भीति र्हृदयकम्पन कारिणी चाशङ्का तमभिभवितु मिव प्रक्रमेते। भीतयस्तं ग्रसितु मिव, मन्ये, मुखानि व्यादाय समुपस्थिताः सञ्जायन्ते। बुद्धो निरन्तरं तत्र तत्रात्मानं स्थितीकर्तु मभ्यस्यति स्म। सः कान्तारे चैत्यंशरणमयासीत्। पादपतले स्थित्वा स तथा प्रायस्यत् यथा वनकष्टानि कष्टानीव न प्रतीतानि स्युः। परम् आसीद् वस्तुतः स मानव एव। अतः यदा विपिने तमिस्रायां मृगोऽपि कश्चिदुपेतो वा विहगोऽपि कोऽपि उदडीयत वा वात प्रेरितं भूत्वा पत्रमपि प्राकम्पत तदासौ यतो मनोविभेति तदेवागतमिति विचिन्त्य चकम्पे। अयं हि योऽनुभवस्तेन स्फुटतयोदलेखि स तस्य निश्छलसरलहृदयत्वं व्यनक्ति। वस्तुतः सत्यं कपटरहितं वचो हि जगत्यां कस्य न मनो हरति।

सः पञ्चाशद्वर्षाणि यावत् कठोरतयोत्साहप्रकृष्टया ज्ञान ज्योतिः समासादनार्थं साधनायां संलग्न एव अवालोकि। सः प्रत्यूष वेलायामेवोतत्स्थौ, स्नानादि नित्यकर्माणि सर्वाणि विधाय पाणिं भिक्षापात्रसनाथं कृत्वा एकाकी सशिष्यो वा भिक्षायै निर्ययौ। कतिपयैः सम्माननीयै रातिथेयैः सार्धं भिक्षान्नं भुक्त्वा प्रवचनं च कृत्वा स्वकीय माश्रमं निववृते। गृहीतभोजनेषु सत्स्वाश्रमस्थेष्वनुयायिषु शिष्येषु चोपदेशं विदधौ। ध्यानविषयकान् नियमान् तत्परकांश्च विधीन् पालयितुमसावपेक्षितान् निदेशांश्च निर्दिदेश। उत्तराह्णे सर्वजनतायां स उपदेशं चकार; सायं च स्नानां ध्यानं च कृत्वा क्षपणकान् (परिव्राजकान्) प्रति ततः प्रवक्तिस्म; ध्यानं धारण चानुष्ठाय शिश्ये। इमां हि दैनिककर्त्तव्यसारणीं सः पूर्णतया कठोरतया च परिपालयाम्बभूव।

स भिक्षु रासीत् परं तच्चरणयो; राजानो महाराजाश्च प्रणतमौलयो भूत्वा समतिष्ठन्त। स आत्मानं सामान्यभिक्षुमेव मेने। यद्यपि स आसीत्, महान् ज्ञानराशिः, महान् आत्म स्वरूपस्थितः साधुः परं न तत्र अहङ्कारस्य लघीयस्यप्येका कणिका हि स्थातुं प्राभवत्। यं हि स जीवनस्य दीर्घतर कालं तपस्यनयत् तस्या एव सत्फलं तस्मिन् ज्ञानप्रकाशो भूत्वा उद्बभासे। तदीयं पुण्यं यशः सर्वत्र प्रससार; सर्वत्रापि संसारे तदीयनामस्मरणं जनः स्वकीयं परम सुकृत ममंस्त। पाणौ पात्रं निदधानं नीरवतापूर्वकं भिक्षार्थं गेहाद् गेहान्तरं यान्तं भिक्षा प्राप्ति निमित्तेन सन्तिष्ठमानं तं, क ईदृग् राजा राजाधिराजो वा यो न, नमश्चकार। तदीया प्रणतदृष्टिस्तदीया तेजस्विनी सौम्याकृति स्तदीयं तपः पूत रूपं सर्वेषामपि मनः प्रसभमचूचुरन्।

एकदा सः अलावीग्रामे शिंशपाकाननान्तर्गत पशुपथे किसलयतल्पे विश्राम्यन् दृष्टो बभूव तस्मिन् काले कठोरं शैत्यंप्रवृत्त मासीत् हिमपातपूर्वकम्; परं स ध्याना-

वस्थित एव तदापि प्राप्तोऽभवत् । शीतर्तोः सोत्कटतापि न तं स्वकर्त्तव्यात् स्र ंसयितुं शशाक । स तस्मिन्नप्यनेहसि अस्म्यहं प्रसन्नतापूर्वक मित्येव ब्रुवाणोऽश्रूयत ! दिवा स्वापोऽस्ति वर्जितः । एकदा ग्रीष्मर्तोः प्रचण्डतापात्क्लान्तो भूत्वा स यदा भिक्षातो निवृत्तः, सुष्वाप तदा अपि किं गौतमो दिवा स्वापार्थ माज्ञापयितु मर्हतीति कश्चिन् पप्रच्छ तम्; विना किमपि कैतवं, विना च पुष्पितां वाचं प्रगृह्य सरल स्वभावेन गौतम आ एव मह्यं प्रसुप्त इत्युदतरत् ।

आसीत् स पुरुषर्षभगुणसम्पन्नः । न तस्य क्वापि प्रमादो दृष्टोऽभूत् । अतः लक्ष्यप्राप्तिपथे मानव प्रकृति सुलभ दुर्बलताश्चिरं न स्थातु मशकन् । शनैः शनैः ता दुर्बलताः सम्यग् विजित्य सः स्वाभीष्टं लक्ष्यमधिगन्तुं समर्थः सञ्जातः चतुर्णामपि सत्यानां परिपालनादस्मदीय माभ्यन्तर मालोकितं सञ्जायते । तस्यालोकस्योदयो यत्र भवति तस्य न किमपि दुरासद जायते-इत्येतत् सः स्वजीवनद्वारेण जगतः पुरः प्रातिष्ठिपत् ।

सोऽतिपुरुषत्वस्य किञ्च दिव्यवलस्य प्रदर्शनं नैवोचित ममंस्त । रहस्यात्मकाना माश्चर्याणां जनसामान्यस्य समक्षे समुपस्थापनं नैव भवति साधकहितावहम् । अतः साधनास्थितेन सदैव सावधानेन भवितव्यम् । न स तद्व्यामोहे निपत्य योगादात्मानं कदापि भ्रंशयेत् । दैवानां गुणानां भविष्यद्घटनासूचकानां वचनानां सिद्धीनां च विज्ञापनं निकृष्टकलेति मत्वा स तन्निनिन्द । सत्यस्य सर्वत्र प्रसारः स्यादिति स मेने न च शिष्याणां संख्याया वृद्धौ सः स्वल्पामपि रुचिं निदधौ । तेषां सर्वेषामपि कार्याणा माचरणं सोऽतितरां विरुरोध यानि पुनर्जन्म, मृत्युः, अन्यानि च नानाविधानि कष्टानि जनयन्ति । स तु तान्येव कार्याणि कर्तुं सदैव प्रायतिष्ट, जनांश्चोपदिदेश, येषामाचरणेन हृदयं रागद्वेषादिरहितं जायते, आभ्यन्तरः प्रकाश उपलब्धो भवति, जराजन्म-मरणादिकष्टानि विनश्यन्ति, वर्तमानं भविष्यच्च सञ्जायेते मङ्गलमये शुभावहे च । अङ्गेषु, मगधेषु च जनान् जननायकांश्च, राजगृहे आश्रवाणां पञ्चशतीं, तदैवोपदेष्टुं सः स्वकीयं चरणमुत्थापयतिस्य यदाहि पूर्व निजागमनस्योद्देश्यं समसूसुचत् । न स तावत् निज सिद्धान्तान् स्वीकर्तुं कमपि जनं ववाधे यावद् तदीयोऽन्तरात्मा न तन्मार्ग मङ्गीकर्तुं प्रेरयामास । लिच्छिव्याः अधिनायकं तदैव सः स्वकीयः शिष्यो भवितु माज्ञापयामास यदा स निर्ग्रन्थजनानां संरक्षणात् स्वहस्तं कदापि न दूरीकरिष्यतीति प्रत्याशुश्राव । न सोऽवाञ्छत् यत्ते स्यु रसहायाः ।

नो बुद्ध आत्मविकत्थनायां मनो निबबन्ध । तदीया भक्ता अपि आत्मप्रशंसायां जुगुप्सेरन् इत्युपदिदेश सः । तत्प्रशंसां विदधानं सारिपुत्तं सः केन प्रकारेण न्यवारयत् इत्येतत् सर्वेषां विदित मेव । अपवादो निन्दा वा न तं कम्पयितुमपि शशाक ।

लिच्छिवि प्रमुख-सुनक्कखतस्य 'सामान्यजनो यावद् ज्ञानं निदधाति बुद्धस्तावदपि-नेत्येतद्वचो बुद्धस्य हृदये न मनागपिविकृतिमुत्पादयितुं क्षममभूत् । संरम्भवेगात् तेन तत्सर्व मभिहितमिति निगद्य स तूष्णीं बभूव । कामं कस्याभपि सभायां सहस्रशोऽपि जनाः स्युः पर स तामपि सभां साधुतया शास्ति स्म। तद्विधा याममपिविशालजन संख्यावत्यामपि सभायां नीरवता शान्तिश्च पूर्णतया दृष्टाभवत् । निःशब्दतासावर्तत यत्र श्वासोऽप्यश्रूयत । एकदा स्ववैद्य जीवकेन सार्धं नरेन्द्रो बुद्धाधिष्ठितासंख्यातजनां सभां सम्भावयितु यदेयाय तदा तत्रत्यां तां नीरवतां शान्ति च विलोक्य नितरामेव विस्मयं ययौ; पुष्करिणीमिव तदीयां सभां प्रेक्ष्य 'हन्त, ममात्मज उदयभद्द एतादृशीं शान्ति प्रतिष्ठापयितु मपि किंशक्नुयात् ? इत्येतद् ब्रुवाणस्य तस्य मानसं बुद्धस्य वक्तृत्वं, तर्कपाटवं, व्युत्पन्नत्वं, जनमनोगतभावावगमनक्षमत्वं चातितरां विस्मितं चक्रुः। प्रश्नः स्यान्नाम कीदृगपि ग्रन्थिलः परं प्रश्नकर्तारं विस्मयार्णवे निपातयन् सः (बुद्धः) तत्प्रश्नं समाधत्ते स्म । मृत्युशय्याशायी अपि स महोमहोज्ज्वलगरीयस्कतामेव निदधानः सालक्ष्यत । परिदेवमान मानन्दं वीक्ष्य स गम्भीरतया शान्त्या च शशंस—आनन्द, मास्म दुःखं गमः; प्रसादमेव याहि । मृत्युरप्यस्ति नैसर्गिक क्रम इति मया त्व मुपदिष्ट एव । अस्माभिः सर्वाण्यपि प्रियतराणि वस्तूनि हेयानीति मृत्योः शिक्षा प्राप्यते । प्रत्यासन्न जीवनावसानानेहसि 'तत्स्मृतिर्येन चिरमादृता स्यात् सः क उपायोऽवलम्बनीय इति शिष्येणानन्देन पृष्टः स आमनति स्म गुरुतराणिलघुतराणि च कर्त्तव्यानि यो बन्धुर्वा भगिनी सत्यतया सततं परिपालयति वस्तुतः स एव युक्ततया सत्यतया च मत्सम्मान-कर्ता स एव मम योग्यतम उपासकः । सत्यमेव स्वधर्ममेव च नैजं गुरुमवयन्तु भवन्तः ।

गतस्य तस्य महत आत्मनः शतकानां पञ्चविंशति रतिक्रान्ता । सः शाक्य वंशे कपिलवस्तुनगर्या राज्ञः शुद्धोदनस्यात्मजो भूत्वा जगदिदं पवित्रीचकार ।

निन्दसि यज्ञविधे रहह श्रुतिजातम् । सदयहृदयदर्शितपशुघातम् ।।
केशव धृतबुद्धशरीर जय जगदीश हरे ।।

:—:०—

# तीर्थङ्कर महावीरः

भगवान् महावीर स्तेषु विरल संख्यकेषु महापुरुषेष्वन्यतमो येषां प्रभावो युग-युगान्तरपर्यन्तं समस्त मपि विश्वं नैजलोकोत्तरालोकेन प्रकाशयन् सर्वतः समिन्धीत। वर्णनीयचरितो हि महावीरः स्वकीयं जीवनं सर्वेषामपि प्राणभृतां कल्याणार्थं समर्पयन् जिजीव। स्वकर्तव्यवलेन मानवो भगवानपि भवितु मर्हति-इत्येतस्य तथ्यस्य स विद्योत-मानं निदर्शनम्।

भगवतो महावीरस्य सञ्जातस्य द्विसप्तत्युत्तरपञ्चविंशतिशतसमाः व्यतींताः। सश्चैत्रे शुक्लपक्षे त्रयोदश्या माविर्बभूव। ज्ञातृवंश सम्भवो राजा सिद्धान्तः (सिद्धार्थः) तस्य पिता, विदेहजनपदाधीशस्य चेटकस्य राजतनया तस्य माता आस्ताम्। विहार प्रदेशान्तर्गत कुण्डलपुरं तज्जनुः स्थान मासीत्। तज्जन्मना राज्ये धनधान्यादिवृद्धिः प्रचुरतरा जाता सर्वत्र आनन्दो विपुलो भूत्वा प्रावर्द्धत। तस्मा-न्माता पितरौ तन्नाम वर्धमान इति चक्रतुः। गच्छतानेहसा स वर्धमानो महावीर इत्येतयाभिख्यया अपप्रथत्।

महावीरस्य वशे स्वावलम्वनं, स्वातन्त्र्यं, समानत्वञ्च भृशं महीयन्तेस्म। अतः प्रारम्भादेव तदीया वृत्ति स्ताभिर्विशिष्टताभि रनुप्राणिता अभवत्। समयान्तरे तद्वीजानि आध्यात्मकताभुव्यङ्कुरितान्यभूवन् सर्वेषाञ्च प्राणभृतां कृते फलदानि चाजायन्त।

त्रिंशद्वर्षाणि सः स्वराजभवन मध्यासाञ्क्रे। तारुण्यस्य, सौन्दर्यस्य, सम्प-दाञ्च विविधानां प्रभूतानां सत्ता तम्परितः सहावभावं विलसन्ती पर्यवेक्ष्यत। परं न तन्मन स्तत्र मनागपि आकृष्टं बभूव। धार्मिक्याः कुण्ठतायाः अवनताया नैतिकतायाः, सङ्कीर्णतायाः सामाजिकताया निराकरणाय सः चिन्तामापेदे। यथा यथा तन्मन स्तद् विषयकस्य चिन्तनस्य गम्भीरताया मवातरत् तथा तथा जनता-जीवन-परिवृत्ते रपेक्षणीयत्वं वर्तते इति स्फुटतयानुभवितु मारेभे। स तत्समयवर्तिनीनां दुःस्थितीनां निरसनं कर्मणां क्रान्त्यामेव सम्भवमिति विनिश्चकाय।

भगवान् महावीरस्तत्काल व्यापिनीषु भारतीय समाजपरकासु सम-स्यासु विमृश्य तदुद्गममधिजगाम। सर्वा अपि समस्याः मानव-हृदय- व्याप्तादज्ञानादुत्पद्यन्ते; यावत् तदज्ञानं तावत् ता एता विषमताः अपि समाहिता न भवितुं शक्नुवन्तीति निश्चन्वानः परोपदेशात् प्रागुपदेशोचिततत्वानामाचरणे स्वकीये सन्निवेशनं परिण-

मनञ्चापेक्षितं मन्वानोऽसा वजस्रं द्वादशवर्षाणि, मासांश्च षड् आत्मानं साधनायां न्ययूयुजत् । स तपांस्यन्ववर्तत; मौनं संश्रियाय; एकान्तवास मुररीचकार; अभयभावं परिजग्राह;तत्त्वानि चातितरामचिन्तयत् । अजायत स मनसि वचसि वपुषि च पूर्णतया पावनः । जातश्च स वीतरागः ।

साधनासु सिद्धि मासाद्य भगवान् महावीरो धर्ममुपदिदेश जनता मदीदृशच्च कल्याण पथम् । संन्यासिनां कृते महाव्रतधर्म सम्वन्धिनीं, गृहस्थानां कृते अणुव्रतधर्म विषयिणीं साधनां स उचिततराममंस्त । तदुपदेशानाममोघात् प्रभावात् महान्तो यज्ञ कर्मनिष्ठा इन्द्रभूतिप्रभृतिप्रभूतप्रधीप्रवराः, अभिमानिनो ब्राह्मणाः, स्कन्दकादिका भूयांसस्तापसाः, उदयनादिकाः पुष्कल प्रभाववन्तो महीपालाः, कलाकुशला वैश्याः, कृषि कर्मकुशलाः कर्षकाः, सेवामर्म्म विदः शूद्राश्च तस्य प्रह्वतया शिष्यता मगुः ।

भगवान् महावीरोऽहिंसायाम परिग्रहे सत्यवादितायाञ्च नितरां प्रगाढ़ा मभिरुचि निधातुं जनत. मुपादिशत् । कस्यापि प्राणिनो हत्यां यावत् स नाहिंसां सीमितां विदधौ; सोऽसच्चिन्तन मपि हिंसामेव मेने । अपरिग्रह इत्येतस्य तात्पर्यं सोऽर्थसंग्रहस्य हेयत्व मेव नान्वमन्यत । सतु कशिपौ ममत्वधीविसर्जनं वस्तुतोऽपरिग्रहमवजगाम । यस्यानेहसो गतस्य २५०० वर्षाण्यतिक्रान्तानि, तदानीं: सिद्धान्ताःस्तस्य मता यावद् आसन्नुपयोगिनस्तावदेव तेऽस्मिन् वर्तमाने कालेऽपि सन्त्युपकारिण उपयोगिनश्च । साम्प्रतं हिंसा, अर्थपरता, स्वस्त्र पक्षानुरागिता च भृशं वृद्धिं गताः सन्ति । विनाशकानामायुधानां निर्माणेन मानवसभ्यता संहारकूलम्प्रति सम्प्रत्याहृतास्ति । व्यक्तिकृतं व्यक्तिशोषण मेवनेदानी मपितु राष्ट्रं राष्ट्रान्तरं शोषयदभिवीक्ष्यते । जगदनेकानेकशिविरेषु विभक्तं भूत्वा स्वेष्ट मेव कृत्स्नतया संगतं मत्वा कठोरं दुर्निर्बन्धं निदधदवेक्ष्यते । एतादृश्यां शोचनीयायां स्थित्यां भगवतो महावीरस्य निर्दिष्टो मार्गोऽनुसरणीयः सञ्जातोऽस्ति ।

नासीद् वर्द्धमानः (महावीरः) कस्यापि नवस्य मतस्य संस्थापकः प्रवर्तको वा सतु जातपूर्वस्य पार्श्वनाथस्य मताना मासीन्मार्जनकर्ता ।

वर्द्धमानस्य शिष्या वा अनुयायिनोऽभिजात क्षत्रियवंश सम्भवा आसन् । तत्-समायोजिते बलवत्तरे संगठने महिलाः पुरुषाश्चोभये सदस्यतां जगृहुः वर्धमानस्य तेजस्विनः प्रभावात् संस्थायां (संगटने) तस्यां श्वेताम्बरस्य दिगम्बरस्य च सम्प्रदायस्यानुगामिनः समाविविशुः ।

बुद्धस्य वर्धमानस्य च जीवने, ताभ्यां प्रदत्तासु च शिक्षास्वद्भुतं साम्यं सम्प्रेक्ष्य वौद्धं मतं जैनञ्च मत मुभय मप्येक मेव; जैनमतं बौद्धमतस्यैव एको भेद इति च केचन कथयन्तः श्रूयन्ते । वार्थोऽमिधत्ते "वर्द्धमानस्य दिव्यं चरित्रं या विशि-

ष्टताः निदधाति ताभ्य एकैव व्यक्तिर्द्वयोरपि चरितयो र्नायकत्वं विदधातीति ज्ञातं जायते । द्वयो रपि जन्म राजवंशे बभूव ; द्वयौरपि शिष्याणां बन्धूनां च नामानि सामान्यान्येव प्रश्यन्ते; द्वयोरपि परम्परासु संगठनानि प्रायेण समानान्येव; द्वावपि (बौद्धजैनौ) मौर्यवंशस्य नृपाणा माश्रय दातृत्व मुद्गिरतः; विहार-प्रदेशस्य यन्मण्डलं वौद्धाः पवित्रभूमित्वेन मन्यन्ते तदेव जैना अपि पावनभूमि त्वेनावगच्छन्ति; द्वयोरपि तीर्थस्थानानि विहार-सौराष्ट्र-राजस्थानादिषु विद्यन्ते……. । सत्यामप्येतादृश्यां समतायां, सम्राजोऽशोकस्य बौद्धधर्मस्य समृद्धं साहित्यं; बौद्धधर्माद्दृता पालीभाषा, अन्याश्च विशिष्टता बौद्धधर्मस्य मौलिकत्वं प्रत्यायन्ति" । कोलब्रुकस्य कथनमन्यदेव स जैनधर्मो बौद्धधर्मात्प्रत्नतर इति मन्यते । एम. पौसिनश्च जैनधर्मस्य शक्तिशालिन्याः परिव्राजकतायाः प्रादुर्भावः शाक्यमुनेः प्रागेव समजायतेति वदन् जैनधर्मस्य पुरातनत रत्वं स्वीकुरुते ।

न कोऽपि जीवो यज्ञार्थं वा मनोरञ्जनार्थं वा प्रयोजनान्तरार्थं व्यापादनीयः कदर्थनीयश्च इत्यभिदधत् सर्वथैव हिंसां निनिन्द । शील, माचारं, साधनां, नीतविद्या, मध्यात्म विद्याञ्च यद्यपि सः स्वपूर्वजेभ्यः प्राप; परं तदीयो हि ज्ञानविषयकः सिद्धान्तस्तदीय एव, दर्शनशास्त्रेतिहासस्य छात्राणां तु स विशेषतोऽध्येतव्योऽस्ति ।

वर्धमानस्तपः साधनया समुपलेभेऽद्भुता मेव चारित्र्यचारुताम् । सा मानवम्प्रति विचिन्तनाय नवीनां दृष्टिं—नवं विवेकं—प्रायच्छत् । मनुष्यः सुखदुःखयो, रुत्थान पतनयोः, शास्त्रवाशात्रवयोः, सदसद्विचारयोः, रस्ति कर्ता भोक्ता च । सर्वमपि तदधीनम् । चेत् सः समृद्धः, सुखी, उदग्रपदासीन ऐश्वर्यवान्, विद्वान्, महात्मा वा बुभूषु स्तदा स भवितु मर्हति । सः स्वशक्तिं ज्ञातुं प्रयतत एव न; तां न सः प्रयुनक्ति । यदि स आत्मनिर्माणार्थं मात्म बोधार्थञ्च प्रयस्येत् तदावश्यमेव तत्र तत् सिद्धि मासादयितुं समर्थः । एतावदेव न, स जन्ममृत्यु जरादि सकल दुःखेभ्यो विमुक्तो भवितुं शक्नोति । एतत् तत्त्वमस्माकं पुरतो महानात्मा वर्धमानो न्यदधात् । मनुष्यो मानुषी वा कामपि जातिं किमपि कुलं कमपि वर्गं वा गत आत्मकल्याणा लाभाय अस्ति स्वतन्त्रः क्षमश्च । कल्याण द्वारं सर्वेषा मपि कृते विवृतं वर्तते इति स व्याजहार । स तेषु तीर्थङ्करेष्वन्यतमो बभूव ये निःस्पृहा आसन् । न साम्राज्ये, नैश्वर्ये, न प्रभुत्वे न च भौतिके कस्मिन्नपि सुखे स महावीरः कदापि स्वमनो न्यवध्नात् ।

महावीर आह–'मानव जीवनं तदैव सार्थकं भवति यदा तदात्मबोधकर्मणि व्याप्तं स्यात् । अहं कः ?, कस्माद् धेतोर्मां जरा मृत्युप्रभृति जनित कष्टानि निपीडयन्ति ?, मानव शरीर प्राप्तेः किमुद्देश्यम् ?, कस्मात् कारणान्मम मानसं रागद्वेषा दिदोषा अधिवसन्ति ?, इन्द्रियाणि कस्मात् प्रयोजनान्मां दुन्वन्ति ?, मम को धर्मः

किञ्च मामकीनं कर्त्तव्यम् ?, मनोबुद्धीन्द्रियशरीरादिषु नाहं मनो न बुद्धिर्न चेन्द्रियं न शरीरमेव; तर्हि कोऽह मित्येतज्ज्ञानाय मानवः स्वकीयं जीवनं प्रवर्तयेत् । मानवः जीवनस्य लक्ष्य मिदमेव ।

स मानव जीवनं प्रबोध्य तमहिंसा सिद्धान्तं जगतः समक्षे निदधौ यो हि सर्वेष्वपि सिद्धान्तेषु मूर्धन्यः । मानवस्तं स्व व्यवहारे परिणमय्य सर्वथैवात्मान मुत्थापयितुं शक्नोति ।

अहिंसा, मन्ये, महावीरो भूत्वावततार । पावनतया महावीरः संसारं जिगाय । तत्प्रतिपादिता अहिंसा सा, यया धर्मो धर्म इति कथ्यते । सा प्रधानो धर्मः । सा धर्मस्य जीवनम् । महावीरो मनसा वचसा कर्मणा चाहिंसां पर्यपुष्णात् । धर्मो नास्ति प्रथा चलनं वा; स तु वस्तुत; परमार्थता । सम्प्रदायस्य वाह्य संस्काराणां पूर्तिमात्रेण न निर्वाणस्य प्राप्तिः सम्भाव्या । तदधिगतिस्तु पारमार्थिकधर्मसंश्रयेणैव भवितुं शक्यास्ति; न धर्मो मानवेषु भेदधियं जनयति—इति मन्वानः सोऽहिंसायाः सिद्धान्तं सूक्ष्मतया सफलतया च प्रस्तवीतिस्म ।

महावीरस्य प्रादुर्भावानेहसि धर्मध्वजा उच्छृंखलता महम्मन्यतां च गता अदृश्यन्त । ते दर्पेण स्त्रीणां शूद्राणाञ्चाधिकारान्मानवीयानपजह्रुः । अहङ्कार नदस्तटं भङ्क्त्वा स्वैरी भूत्वा सर्वतो विचरन् लोकेऽवालोकि । विप्लवः समाजं पातयितुं प्लवमान आसीत् । जैनबौद्धवाङ्मयात् तत्कालघटितायाः क्रान्ते ज्ञानं स्फुटतयैव सञ्जायते । त्रिविंशतितमस्तीर्थङ्कर पार्श्वनाथो हि तस्या धर्मक्रान्तेः सवलः प्रहरी आसीत् । आसीत् स तस्याः क्रान्तेर्महानग्रणीः नेता । महावीरस्य ज्ञातृ क्षत्रिय-वंशजः पिता सिद्धार्थः पार्श्वनाथ परम्पराया आसीदनुगामी । तस्मान्महावीरो धर्म-क्रान्तेर्बीजानि पैत्रिक सम्पत्त्वेन प्राप्तवान् । स राजनीतिके, धार्मिके, सामाजिके च क्षेत्रे विप्लवं ददर्श । राजप्रसादा दुटजपर्यन्तं विततस्य तस्य विप्लवस्यामोघं प्रभावं सम्यग् विचिन्त्य स्वकीयेन तपः पूतेनात्मतेजोऽनलेन सः समाजं ररक्ष ।

महावीरः स्वकीयेन ज्ञानेन तपश्चरणेन पुरुषार्थेण लोक मामूलचूलमपुनात् "यज्ज्योतिरीश्वरे ज्वलति तदेव ज्योतिः सर्वात्मनि प्रज्वलति; नास्ति कोऽपि तद्-विहीनः । सर्वेष्वपि सैव श्रेष्ठतोद्वेल्लति या हि तस्मिन् तत्त्वे राजते यदीश्वर इत्ये-तेन नाम्ना प्रथते । केवलं तज्ज्योतिष उद्भवोऽपेक्ष्यते । प्रत्यगात्मा तां शक्ति निद-धाति यया तज्ज्योति रासाद्यते । सर्वेऽप्यात्मानः स्वसाधनाबलेन कर्मबन्धनानि भङ्क्त्वा मुक्ता भवितुं शक्नुवन्ति । मनुष्यो मनुष्य एव न, स ईश्वरोऽस्ति । पुरुषः पुरुषत्वान्महापुरुषत्व मवाप्तु मीष्टे । स नरान्नारायणो भवितु मर्हति । मानवस्य कर्त्तव्य मात्मनि सुप्तस्य ज्योतिष उद्बोधनम् । सः प्रथमं भवति ज्योतिर्मय स्ततः सः

समग्रमपि संसार मालोकेनालोकितं विदधाति । सः प्रदीप इव स्वयं प्रकाशते, विश्वञ्चाखिलं प्रकाशयती" त्येत्तद्दर्शनं सः (महावीरः) लोकाय समर्पितवान् ।

"आत्मवत् सर्वे सर्वेषु व्यवहरेयुः; न कोऽपि कमपि व्यथयेत्; शरीरे शरीर सम्बन्धेषु च मोहं विहाय विशाल हृदयताङ्गीकरण मेव सत्यं पारिमार्थिकं सुखम् । अहिंसा, सत्यम्, अस्तेयम्, अपरिग्रह इत्येतदादिकाः श्रेष्ठा गुणा मानवतां घटयन्ति । न धर्मजात्योः कोऽपि सम्बन्धः । धर्मस्त्वात्मनो वस्तु । आभ्यन्तराणां कालुष्याणां निराकरणं मनसश्च पवित्रीकरणं धर्मस्यास्ति मुख्यं लक्ष्यम् । सुखशान्तिमयं जीवनं नेतुं परकीयाधिकार रक्षण मस्मदीयं प्रमुखं कर्त्तव्य " मिति स आचकाङ्क्ष । एत दर्थमेव स तपश्चचार, कठोरतर साधना स्वात्मानं प्रावीवृतत् । एतत्प्रयोजनेनैव स जीवतिस्म ।

जगद्धितार्थं प्रबलं प्रयत्नं
व्यधाच्छुभं यो जिनवर्धमान ।
श्चलेज्जगत् तत्कथिते हि मार्गे
सुखञ्च शान्तिं नितरा मवाप्तुम् ॥

——

# भर्तृहरिः

अस्ति भर्तृहरिः समाजे शिक्षा-संसारे च सुविदितः। भारतमेव न समस्तापि जगती विदुषां सप्रश्रयं तं स्मरति। तस्य कवितां सचेतसो विद्वांसः समाजनेतारः सामान्याश्च जना बहवः श्रद्धया पठन्ति, प्रीत्या गायन्ति स्वाध्याये च तां प्रयुञ्जन्ति। परं हन्त तादृशीं लोकप्रियतां दधानस्यापि तस्य स्थितिकाल स्तस्य व्यक्तित्वञ्च नितरामेवाविदितमास्ते। प्रायेणास्मदीयाः प्राञ्च आप्तपूरुषर्षभा ज्ञानालोकालोकिता विपश्चिद्वरेण्याः स्वकीय जनुर्भूमि-स्थितिकालकुलादिकोल्लेखने निर्विण्णतामेव संश्रयन्तः प्राप्ता भवन्ति।

भर्तृहरि मधिकृत्येयं जनश्रुतिः—भर्तृहरि र्भुवोऽधीशस्य महाराजस्य विक्रमादित्यस्यासीद् ज्येष्ठो भ्राता। पितासीत् तस्य गन्धर्वसेनः। गन्धर्वसेनस्य द्वे राज्ञ्यावास्ताम्। तयोरेका भर्तृहरिं सुषुवेऽन्या च विक्रमादित्यम्। तदेवं भर्तृहरिविक्रमादित्यौ द्विमातृजौ भ्रातरावास्ताम्। विक्रमादित्यस्य माता धाराधिपस्य सुताऽऽसीत्। स (धाराधिपतिः) द्वावपि राजकुमारौ सर्वशास्त्रेषु शस्त्रेषु च पारदृश्वानौ चकार। उभयो रपि कुमारयो र्भृशं स्निह्यतोऽपि भूभृतो मनः कुमारे विक्रमादित्येऽजायत पक्षपाति। सः स्वयं निःसन्तान आसीदतः विक्रमादित्यमेव स्वसिंहासनासीनमसावचिकीर्षत्। परं सति ज्येष्ठे भ्रातरि, न विक्रमो राजा अबुभूषत्। सः सविनयं प्रत्यषेधत्। तदीयया तयोदारतया तेन च समुदाचारमर्यादाप्रियत्वेन पार्थिवोऽतितरामप्रीयत। स भर्तृहरिं राजानं विक्रमादित्यञ्च प्रधानमन्त्रिणञ्चकार। भर्तृहरी राज्य मासाद्य भोगविलासेष्वासजत्। विक्रमो भूयोभूयस्तं प्राबोधयत् परं भर्तृहरिस्तु तत्प्रतिबोधनं स्वकीयायां स्वच्छन्दतायां प्रत्यूह मिवामंस्त। स विक्रमं पदादच्योतयत्। विक्रमोऽपि देशाटने मनोन्यबध्नात्।

इतो नृपति र्भर्तृहरि र्विषयेषु निममज्ज ततः प्रजासु स्थितिरराजकतायाः समुत्पेदे। संयोगवशाच्चैका घटनेदृश्यघटद् या नार्याः कपट-कैतव कौशलं तस्य पुरः स्थापयाम्बभूव। कश्चित् सिद्धस्तपस्वी भर्तृहरये दिव्यं फलं प्रददद् 'एतत्फलं जग्ध्वा मक्षय्यञ्च तारुण्य मवाप्तं भवितुं शक्य' मित्यचकथत्। भर्तृहरिस्तत् फलं स्वराज्ञ्यै, यस्यां स प्रणयवानासीद्, ददौ। परं राज्ञी न तत् स्वयमघसत्। तत् सा स्वकीयायाभिक प्रणयिने प्रायच्छत्। परं राज्ञ्याः सः प्रच्छन्नच्छद्मप्रेयान् कस्याञ्चन वेश्याया-

मन्वरज्यत् । तस्मात् कारणात् स तस्यै (वेश्यायै) तत् प्राददात् । वेश्यात्वासीत् भर्तृहरि प्रेमपरायणा अतः सा श्रद्धया तद् दिव्यं फलं तस्मै (भर्तृहरये) समर्पितवती । स तत्फलं वीक्ष्यैव 'अस्ति फलमिदं तदेव यन्मया स्वराज्ञ्यै प्रदत्तमिति समस्मरत् । राज्ञ्या विश्वासघ्नता भर्तृहरे हृदये परुषं प्राहरत् । सञ्जातसर्वरहस्योन्मीलनत्वाद् राज्ञी आत्महस्तेनैवात्मानं निजघान । भर्तृहरिश्च ततो नवायां राज्यां पिङ्गलाया मनुराग मपुष्णात् । एकदा तां परीक्षितुं राजा सिंहेन हत इत्येतं सन्देशं प्रापयन् शोणिताक्तानि वासांसि राज्ञ्याः सकाशे प्राहिणोत् । ज्ञात्वैतत् शोकाकुला राज्ञी प्राणानजहात् । राजा यदेदमज्ञासीत् तदा सोऽपि तद्विप्रयोगे राज्यं हित्वा संन्यासं परिजग्राह । जीवनञ्च नैजं स तपसि गमयाम्बभूव । य आसीद्भोगी स योगी बभूव ।

किं वदन्तीमेतामाधारीकृत्य विक्रमादित्यस्येशवीयाब्दप्राग्वर्तिप्रथमशतके जातत्वे ऐतिह्यविदां मान्यतायाः स्थितत्वाद् भर्तृहरे रनेहाः स एव स्वीक्रियते ।

निर्विण्णता भर्तृहरिं गच्छताकालेन महात्मनि पर्यणीनमत् । तद्रचितानि शतकानि त्रीणि सन्ति—

(१) नीति शतकम्
(२) शृङ्गार शतकम्
(३) वैराग्य शतकम्

प्रतीच्यः प्रधीः कीथः सुविदितस्य व्याकरणग्रन्थस्य वाक्यपदीयस्य चायं भर्तृहरी रचनाञ्चकार इति वदति पर मितिहासकारा न तत्कथनं परिपुण्णन्तः प्राप्यन्ते । भर्तृहरि स्तस्य बिक्रमादित्यस्य चेद् बन्धु र्यश्चतुश्चत्वारिंशदधिकषष्ठशतकेशवीयाब्दे हूणान् जिगाय तदा तस्य (भर्तृहरेः) षष्ठशतके समुद्भवः सिद्ध्यति ।

भर्तृहरिः शृङ्गारशतके यत् शृङ्गारविषयकं वर्णनं कृतवान् तेन तस्य प्रत्यक्षानुभूतिकर्तृत्वं ज्ञातं भवति । वैराग्यशतके यद् यत् प्रतिपादितं तेन तेन सत्यं नित्यत्व ममृतत्वञ्च ज्ञाततामुपैति । मानवस्तस्मात् प्रकाशं प्राप्नुते श्रेयः प्रेयश्च लभते । अधीत्य निशम्य वा तद् भवति मनोवैराग्योन्मुखम् । नीतिशतकादध्येता नीतिं बेत्ति । जीवन कलां स जानाति, जानाति च लोकव्यवहारान् । वस्तुत स्त्रीण्यपिशतकानि सन्ति महर्घ रत्नसदृशानि । तेषु त्रिष्वपि पुनीता शिक्षा देदीप्यते । तत्रत्याः सन्त्युपदेशाः सन्मार्गप्रदर्शकाः । तत्रत्याः श्लोका हृदयस्य मलिनतां दूरीकृत्य तत् सर्वथैव पुनन्ति । शिक्षा जगत्यां तानि त्रीण्यपि प्रकाशस्तम्भा इव सन्तिष्ठन्ते । जना स्तेभ्यः स्वगन्तव्य दिशमभिजानन्ति । तानि मानव मज्ञानध्वान्तजनितविपद्भ्य उद्धर्तुं सन्ति क्षमाणि ।

भर्तृहरेः काव्यप्रणयन पद्धतिः प्रसन्ना गम्भीरा विशदा च वरीवर्ति । तद्रचनासु यत्प्रवाहसौन्दर्यं यदर्थगाम्भीर्यं यच्चाभिव्यञ्जनसामर्थ्यं शोभते तत् सर्वमपि ताः गीतिरचनासूत्तमासु सन्निवेशयति । छन्दसां विविधता, विषयस्य सुरूचिरता, निदर्शनाना मनुरूपता सूक्तीनाञ्च हृदयावर्जनशीलता तत्काव्ये कामपि परमहृद्यां रमणीयतां जनयन्ति ।

भर्तृहरे जीवनदर्शन मेकान्ततः स्वस्थं वर्तते । सः प्रवृत्तिनिर्वृत्यो रुभयोश्च स्वरूपं गुणं प्रभावञ्च जानाति तस्मात् तयो र्द्वयो रपि विश्लेषणं विदधति । संसारस्य वैषम्यं सम्प्रेक्ष्य तदाननादिमानि वचांसि निःसरन्ति—

क्वचिद्वीणावाद्यं क्वचिदपि च हाहेति रुदितम्
क्वचिद् विद्वद् गोष्ठी क्वचिदपि सुरामत्तकलहः

क्वचिद् रामा रम्याः क्वचिदपि गलत्कुष्टवपुषो
न जाने संसारः किममृतमयः किं विषमयः ।। (वै. श.)

अस्मिन् संसारे जितेन्द्रिया जना एव सुखेन स्वजीवनं यापयितुं तदुन्नमयितुं तेन च जीवनेन चरमलक्ष्य मुक्ति मधिगन्तु मर्हन्ति परं ये सन्ति इन्द्रियाणां दासाः, सुन्दरीणा मक्रीत किङ्करा स्ते तु कठोर कठोर तरासु विपत्सु निपतन्ति, संसारात् न ते कदापि उद्धृताः भवितुं शक्नुवन्ति । कवि र्भर्तृहरि रिदमेव कियत्या मनोऽभिरामभङ्ग्याभिदधाति—

संसार तव निस्सार पदवी न दवीयसी ।
अन्तरा दुस्तरा न स्यु र्यदि रे मदिरेक्षणाः ।। (शृं. श.)

जगति सत्पुरुषेषु निरीहेषु च मानुषेषु निष्कारणमेव वैरायन्ते जनाः—

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम्ः।
लुब्धकधीवर पिशुना निष्कारण वैरिणोजगति ।। (नी. श.)

शूरर्षभा अपि मन्मथस्य दर्पं दलयितुं न प्रभवन्तीत्येतत्सत्य मभिव्यनक्ति कविः—

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित्प्रचण्ड मृगराजवधेऽपि दक्षाः

किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्प दर्प दलने विरला मनुष्याः (शृं. श.)

रोगाणां प्रहारान् कठोरान् सहमाना अपि, जरया निपीड्यमाना अपि, दिनानुदिन मायुः परिस्रवदपि हा मानवोऽहितादन्यायाच्च न विरमति—

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम्
आयुः परिस्रवति भिन्न घटादिवाम्भो
लोकस्तथाप्यहित माचरतीति चित्रम् ॥ (वै. श.)

परोपकारिणः परगुणश्लाघिनो मनीषिणः सन्ति दुर्लभाः—

मनसि वचसि काये पुण्यपीयूषपूर्णाः
त्रिभुवनमुपकार श्रेणिभिः प्रीणयन्तः
परगुणपरमाणून् पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्तः सन्ति कियन्तः ॥ (नी. श.)

भर्तृहरौ काव्यप्रतिभा, दर्शनविद्याविभा द्वेऽपि विराजेते । तस्य काव्य हृदयहारिणीनां सूक्तीना माकरः—

(१) 'पीत्वा मोहमयीं प्रमादमदिरा मुन्मत्तभूतं जगत्'
(२) 'तृष्णा न जीर्णा वयमेव जीर्णाः,'
(३) 'सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः'
(४) 'विवेकभ्रष्टानां भवति विनिपातः शतमुखः'
(५) 'मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः'
(६) 'सन्दीप्ते भवने च कूप खननं प्रत्युद्यमः कीदृशः'
(७) 'नार्यः श्मशान-घटिका इव वर्जनीयाः'
(८) 'चलाचले च संसारे धर्म एकोहि निश्चलः' (वै. श.)

विद्यामधिकृत्य भर्तृहरिः किं ब्रूते, श्रूयताम्—

विद्यानाम नरस्य रूप मधिकं प्रच्छन्न गुप्तं धनं
विद्या भोगकरी यशः सुखकरी विद्या गुरूणां गुरुः
विद्या बन्धुजनो विदेश गमने विद्या परा देवता
विद्या राजसु पूज्यते न तु धनं विद्याविहीनः पशुः ॥(नी. श.)

महापुरुषेषु ये गुणा निसर्गतः प्राप्यन्ते तान् प्रदर्शयति—

विपदि धैर्य मथाभ्युदये क्षमा
सदसि वाक् ता युधि विक्रमः

यशसि चाभिरुचि र्व्यसनं श्रुतौ
प्रकृति सिद्ध मिदं हि महात्मनाम् ।। (नी. श.)

येषु महापुरुषेषु ज्ञानप्रकाशश्चकास्ति, येषु प्रगाढोऽनुभवो विभाति, येषु शास्त्र पाण्डित्यं परिस्पन्दते, येषां मनो महात्मनां संसर्गे रमते, येषां कालः स्वाध्याये व्यत्येति, येषां मानसे भगवत्प्रेम विद्योतते, येऽनिशं सत्यं शंसन्ति, येषा माचारोऽनवद्यो भवति येषां यवहारः सर्वत्र समानः, येषु रागद्वेषादि दोषाः स्व प्रभावं स्थापयितु मसमर्था स्तेषामेव महापुरुषाणां सान्निध्ये वयं सन्तिष्ठेमहि, तेषां चारुचारित्र्यं स्वकीये चरित्रे परिणमयितुं यतेमहि। भर्तृहरि रीदृगेवैको महान् बभूव। तत्साहित्य मस्माभि रध्येतव्यम् ।

नीतिं निगद्य मधुरां नयविद् वरेण्यः
श्रृङ्गार गीति मभिभाष्य च साधु धीमान्
निर्वेदभावललितं ह्यभिधाय विद्वान्
शास्ति स्म यो जगति भर्तृहरिः स वन्द्यः ।।



# महाप्रभु चैतन्यः

प्रमुदिताननस्य, कमलपत्रायतलोचनस्य, कदम्बकुसुमकिञ्जल्काम्वरस्य लसत्-रत्नहिरण्मयाङ्गदस्य, स्फुरदनेकमणिकिरीटकुण्डलस्य, योगिजनसततध्यातपादपल्लवस्य, कौस्तुभकन्धरस्य, अम्लानवनमालावक्षः स्थलस्य, मेखलाविभूषितकटिप्रदेशस्य, अङ्गलीयकसुशोभिताङ्गलिनिकुरम्बस्य, नूपुरसेवितचरणस्य, कङ्कणकलितकरस्य, स्निग्धामलाकुञ्चितनीलचिकुरस्य, मन्दस्मितमनोहरस्य, अदीनलीलाललितदातहासमधुरेक्षणोल्लसद्भ्रूभङ्गसूचितानन्तानुग्रहस्य लीलापुरुषोत्तमस्य गोपीवल्लभस्य राधाप्रियस्य श्रीकृष्णस्य सर्वसन्तापहरै र्विनाशिताखिलकल्यषै र्हतेर्ष्या मात्सर्यद्वेष-लोभमोहसंरम्भादिनिखिलहृद्दोषैः पावनता सञ्चारणपरै र्ज्ञानामृतवर्षणनिपुणैः कीर्तनै र्भारतभुवोऽष्टापि ककुभो भृशं गुञ्जयन् यो नैजजन्मना नवद्वीपं धन्यञ्चकार, वैष्णवं धर्ममुत्थापयामास, प्रौढया भगवद्भक्तिभावनया विश्वस्य मानवानां मानसान्यपुनात् स वंद्यचरित आसीद् महाप्रभुश्चैतन्यः ।

गुणगुणिनोर्वस्तुतोऽभिन्नत्वात् सत्यकामत्व–सत्यसङ्कल्पत्व-सर्वज्ञत्वाद्यनन्ता परिमितगुणा भगवांश्चं न भिन्नभिन्नः । ज्ञानवलादिसकलगुणानामर्थोऽस्ति भगवान् । अस्ति सः परमेश्वरो गुणात्मा तस्मात् स गुणेभ्यो व्यतिरिक्तो न । श्रीमद् भागवते ऽभिहितं—

गुणात्मनस्तेऽपि गुणान् विमातुं
हितावतीर्णस्य क ईशिरेऽस्य
कालेन यै र्वा विमिताः सुकल्पै
र्भूपांसवः खे मिहिका द्युभासः ।१०।१४।७।

भगवतो विग्रहस्तत्स्वरूपाकार एव । भगवतो विग्रहस्वरूपगुणेषु नास्ति पार्थक्यं परं वर्णने तत्र पृथक्त्व मुपतिष्ठते । तस्य (भगवतः) स्वरूपे गुणे च तादृगेव भेदो यादृग् भेदो जले तरङ्गे च विद्यते । तत्र भेदः प्रतिभासते वस्तुतस्तु भेदो न । एतद् विधान् विचारान् दधानस्य चैतन्यस्य भक्ति गङ्गा समस्तमपि संसार मद्यापि पवित्री कुर्वन्तीं दृग्गोचरतां याति । ब्रह्मसंहितायाम्—

पन्थास्तु कोटिशतवत्सरसंप्रगम्यो
वायोरथापि मनसो मुनि पुङ्गवानाम्

सोऽप्यस्ति यत् प्रपदसीम्न्य विचिन्त्यतत्वे
गोविन्द मादिपुरुषं तमहं भजाभि ॥

इति यदुक्तं तत्र चैतन्यस्य मतं प्रतिबिम्बीभवद् विभ्राजते । चैतन्यस्य भक्त्यान्दोलनं भगवतः किल्विषहारिणीषु लीलाकथासु जनान् प्रवर्तयितुं मुदयुङ्क्त-तद् बुद्धिनाशिनीभ्योऽर्थकाम सम्बन्धिनीभ्यो निन्दिताभ्यः कथाभ्यस्तान् वारयितुं प्रायतत येन ते घोरेषु निरयेषु न पतेयुः । श्रीमद्भागवते प्रोक्तम्—

यन्न व्रजन्त्यघभिदो रचनानुवादा
च्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः
यास्तु श्रुता हतभगै र्नृभि रात्तसारा
स्तांस्तान् क्षिपन्त्यशरणेषु तमः सु हन्त ॥ ३।१५।२३।

शङ्कराचार्यस्य मत मिव चैतन्य मत मपि ब्रह्मणः सजातीयत्वं, विजातीयत्वं, स्वगतभेदरहितत्वञ्चामनति । तत् (ब्रह्म) अखण्डं सच्चिदानन्दात्मकम् । 'सर्वत्र च स्वगतभेदविवर्जितात्मेति' वक्ति नारद पाञ्चरात्रः । भगवतोऽचिन्त्यापरिमेयत्वात् तत्र नानात्मकता प्रतीयते परं स एकात्मक एव भवन् सन्तिष्ठते । तदीयेयं शक्तिरस्मिन् मते 'विशेष' इत्युच्यते । माध्वमतमपीदमेव मन्यते । यत्र भेदाभावः सन्नपि भेदकार्यं प्रतिभासते तत्र विशेष इति कल्प्यते । विशेषो भेदव्यवहारनिर्वहणकृत् । परं भेदो भवति यथार्थः । भगवतो जीवात् प्रकृतेश्च पृथक्त्वं विशेषजन्यं; परं भगवतः स्वगुणेभ्यो विग्रहेभ्यश्च पृथग्भूतत्वं विशेषजन्यम् । गुणविग्रहाणां वस्तुतो भगवता सार्ध मेकाकारतैव । एतस्याः अचिन्त्यशक्तेः कारणाद् भगवान् मूर्तोऽपि सन् विभुः ।

भगवतः शक्तयः सन्ति तिस्रः प्रमुखा—१. स्वरूपशक्तिः, २. तटस्थशक्तिः, ३. मायाशक्तिः । स्वरूप शक्ति र्भगवद्रूपा । सा चिद् । चिद्भूता सा अन्तरङ्गशक्ति-रप्युच्यते । सच्चिदानन्दहेतो र्भगवत इयं स्वरूपशक्ति रेकात्मिका भवन्त्यपि त्रिषु रूपेष्वभिव्यक्तीभवति-१ 'सन्धिनी' । एतामाश्रित्य भगवान् स्वयं सत्तां विभर्ति, अपरेभ्यश्च सत्तां प्रददाति समस्तेषु च देशकालद्रव्येषु व्याप्तो जायते । २—संवित् । चिदात्मापि भगवान् एतयैवस्वयं वेत्ति; अपरेभ्यश्च ज्ञानं ददाति । ३—ह्लादिनी । एतया स्वयं भगवान् नन्दति, नन्दयति चापरान् ।

या शक्तिः परिच्छिन्नस्वभावानामणुत्वविशिष्टानां जीवानामाविर्भावस्य कारणं सा तटस्था वा जीवशक्तिरिति कथ्यते ।

माया शक्तिः प्रकृतिं जगच्चाविर्भावयति ।

एतासां तिसृणामपि शक्तीनां समुच्चयः परा शक्ति रित्यभिधीयते । भगवान् स्वरूपशक्त्या जगतो निमित्तकारणं, माया जीवशक्तिभ्यां स उपादानकारणम् । न

केवलं स निमित्त मपि तु अभिन्ननिमित्तोपादानकारणम्। धर्मं वर्धयितु मधर्मञ्च नाशयितुं भक्तानामभिरुचिं च प्रीणयितुं स भिन्नभिन्नावतारान् परिगृह्णीते। श्री कृष्णस्तु भगवान् स्वयम्।

चैतन्यो जगदिदं सत्यं मन्यते—तस्य सत्यसङ्कल्पस्य सर्वविदो हरि र्वहिरङ्गशक्ते विलासत्वात्। 'ईशावास्यमिदं सर्वम्........' इत्यादिना श्रुतिस्तस्य सत्यत्वं प्रतिपादयति। विष्णुपुराणञ्च (१।१२।५८) तस्याक्षयत्वमामनति। प्रलयकालेऽपि जगत् सूक्ष्मरूपं दधद् भगवति तथैव लीयते यथा निशि वने विहङ्गमा लीनीभवन्तः सन्तिष्ठन्ते। अनन्तशक्तिमत्वाद् भगवता सहायमेकान्तत्वेन भिन्नमेव भासते नाभिन्नमेव। अत एव चैतन्यमतस्याध्यात्मिकी दृष्टिः 'अचिन्त्यभेदाभेद' इत्येतां संज्ञां विभर्ति।

भगवतो वशीकरणाय सर्वश्रेष्ठममोघञ्च साधनं भक्तिरेव। कर्मणा चित्तं शुध्यति। शुद्धं चित्तं ज्ञानभक्त्यो रूपयुक्त आधारो भवति। ज्ञानप्रकाररूपा भक्तिः केवल ज्ञानान्नितान्तविलक्षणा। ज्ञानं भवति द्विविधम्—केवलज्ञानं विज्ञानञ्च। 'त्वं' पदार्थज्ञानेन कैवल्यज्ञान मुदेति; तत्पदार्थचिन्तनेन भगवत्प्रसादो लभ्यते सायुज्यादि मुक्ति रपि प्राप्यते। परं विज्ञानेन—भक्त्या—भक्तो न भगवत्प्रसादमेवाप्नोति अपितु भगवन्तमपि वशङ्गतं विदधाति। अतः, भगवद्वशीकारोत्पादकत्वाद् भक्ति रेव गरीयसी। संविद्ह्लादिन्योर्मिश्रणं भक्तेः सारः। एते द्वेऽपिशक्ती भगवत एव स्वरूपम्। तस्माद् भक्तिरस्ति भगवद्रुपिणी। भक्तेः स्वरूपात्मकत्वाद् भगवतः, सा तस्य विशेषणत्वाय कल्पते। सा भगवतोऽपृथग् विशेषणत्वेन भक्तानाञ्च पृथग् विशेषणत्वेन संवर्तते।

भगवतः स्वरूपे द्वे—ऐश्वर्यं माधुर्यञ्च। परमैश्वर्यस्य विकासोयत्र भवति तद् ऐश्वर्यम्। यत्र च नरतनुधारी भगवान् मनुष्य इव चेष्टते तदस्ति माधुर्यम्। ऐश्वर्यज्ञानं माधुर्यज्ञानाद् भिन्नम्। ऐश्वर्यज्ञानभाग् जीवो भगवतः सान्निध्ये स्वकीयं भावं विस्मृत्य सम्भ्रमेणादरेण चाभिभूयते। परं माधुर्यज्ञानयुक्तोजीवो वात्सल्य-सख्यादिस्वीयभावेभ्यो नात्मानं स्रंसयति।

भक्तिरपिद्विविधा—विधिभक्तिः, रुचिभक्तिश्च (रागः) विधिभक्त्यां भक्तिशास्त्र निर्दिष्टोपायावलम्बनं नितान्त मुपादेयं भवति। दृप्ता भक्ताः स्वप्रयत्नेन देययानमाश्रित्य सिद्धि मश्नुवते परम् आर्तभक्तेषु भगवतोऽहैतुकीकृपा भवति। सः स्वयं स्ववाहनेन तं परमधाम प्रापयति। विधिभक्तेः रुचिभक्तिः (रागात्मिका) नितरां श्रेयस्करी। अत्र भक्तो भगवन्तं स्वप्रियतमत्वेन गृह्णाति। अलौकिकमानन्दमास्वादयन् सः परमधाम प्राप्नोति। ब्रजगोपिकास्वेषैव भक्ति रभ्राजत। अस्या उत्तमभक्ते वर्णनं नारदपाञ्चरात्रे समीचीनतया कृतम्—

सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम् ।
हृषीकेण हृषीकेश सेवनं भक्ति रुच्यते ।।

भगवत्प्रीति र्भगवत आनन्दरूपा ह्लादिनी शक्ति रेवास्ति । इयं भक्ति र्दर्शनान्तर मिवोपायभूता न भूत्वोपेयभूता वर्तते । मुक्तात्मनां कृते इयमेव भक्तिः सेवानन्दरूपमाधाय व्यक्तीभवति । भगवतः श्रीकृष्णस्य चरणारविन्दं संसेव्य य आनन्द लाभो जायते तस्य मोक्षादपि गरीयस्कत्वात् तं पञ्चमपुरुषार्थत्वेन गौडीय-वैष्णवसम्प्रदाय आददाति । भक्ति रसस्यास्य साङ्गोपाङ्गकल्पना चैतन्यमतस्य विशिष्टतास्ति । रूपगोस्वामिना तद्विवेचनं पाण्डित्यपूर्वकं भक्तिरसामृतसिन्धौ कृत-मस्ति ।

चैतन्यमतस्य संक्षिप्तं निरूपणं श्रीविश्वनाथश्चक्रवर्ती सुन्दरतया विदधद् आसाद्यते—

आराध्यो भगवान् ब्रजेशतनयस्तद् धाम वृन्दावनम्
रम्या काचिदुपासना ब्रजवधूवर्गेण या कल्पिता ।
शास्त्रं भागवतं प्रमाणममलं प्रेमा पुमर्थो महान्
श्री चैतन्यमहाप्रभो र्मतमिदं तत्रादरो नः परः ।।

चैतन्य महाप्रभोरभिमतं गौडीयवैष्णवमतं श्रीरूपगोस्वामिनः श्रीसनातन-गोस्वामिनश्च ग्रन्थेषु प्रतिष्ठापितमस्ति । श्रीरूपगोस्वामिकृतोज्ज्वलनीलमणिभक्तिर-सामृतसिन्धु–लघुभागवताभृताख्यग्रन्थेषु चैतन्याद्दतस्य भक्तिरसस्य साङ्गोपाङ्गं, विवेचनं विभाति । श्रीकृष्णस्य ललितवृन्दावनलीलाश्चैतन्यमहाप्रभोः सर्वस्वभूता उपर्युक्तगोस्वामिविरचित––दानकेलिकौमुदी— ललितमाधव— विदग्धमाधवनाटकेषु दृग्गोचरतां यान्ति । सनातनगोस्वामिना वृहद्भागवतामृते, भागवतदशमस्कन्दस्य वैष्णव तोषिण्यां टीकायां हरिभक्तिविलासे च चैतन्यमतस्य सिद्धान्ताचाराश्च सविस्तरं वर्णिताः । जीवगोस्वामिनः षट् सन्दर्भश्चैतन्यस्य अचिन्त्यभेदाभेदस्य वन्धु-रत्वं विभावयन् विलसति । चैतन्यमतसम्मतं ब्रह्मसूत्रस्य गोविन्दभाष्यं बलदेव विद्याभूषणकृतं वर्तते कृतिषूत्तमासु । कृष्णदास कविराजस्य चैतन्व चरितामृते चैतन्यस्य जीवनं, भक्तिसिद्धान्तांश्चतदीयान् भावुका भक्ताः अधीयाना मुदं लभन्ते ।

चैतन्यमहाप्रभु रस्मदीयं राष्ट्रं कृष्णप्रेमसागरे निमज्जयामास । भावपक्षस्तत्र बलीयान् भूत्वा तस्मिन्नुद्बभूव । वल्लभाचार्येण तु भक्ते र्विधिविधाने ब्राह्मरूपे च तदीये वलं प्रददौ परं चैतन्येन तु राधाकृष्णयो र्भक्ति रेव महनीयत्वेन नीता । भावात्मकेन कीर्तनेन जनताहृदयं यावदावर्जितं तावन्नान्यः कोऽप्याचार्य इति कथनं कदाचिदुचितं परं स्यात् ।

चैतन्यस्य जन्म भूतवसु वेदसोमेशवीयवर्षे बभूव नदियामण्डले। तत्पितु र्नाम जगन्नाथमिश्रो मातुश्च नाम शचीदेवी आसीत्। चैतन्यो गौराङ्ग इत्येतेन च नाम्ना विश्रूयते। न चैतन्यः स्वसम्प्रदायम्प्रति व्यवस्थितं रूपं प्रदातु मयस्यत्; न च सः प्रस्थानत्रय्यां भाष्यमेंव लिलेख। तस्य भगवद्भक्ते र्बलीयस्कत्वात् तत्पुरतोऽन्यन् सर्वमपि कार्यमधरत्व मुपैति। भगवत्प्रेम्णः पुरः सः सर्वमपि न्यच्चकार। कियन्मधुरं तेनोक्तम्—

तृणादपि सुनीचेन तरोरपि सहिष्णुना।
अमानिना मानदेन कीर्तनीयः सदा हरिः॥

सः सर्वदा कृष्ण संकीर्तने निलीनः प्राप्तोऽभूत्। कीर्तनं भगवतो जयत्विति तदीया हृत्कामनावर्तत। स आह—

चेतो दर्पण मार्जनं भव महादावाग्निनिर्वापणम्
श्रेयः कैरवचन्द्रिकावितरणं विद्यावधूजीवनम्
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृताऽऽस्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसङ्कीर्तनम्॥

यस्य कृत्स्नमपि जीवनं कृष्णमयं भवद् व्यलसत् तस्येष्टदेवं श्रीकृष्णम्प्रति प्रणमनं तत्प्रणमनं स्यादतः श्रीकृष्णमेव—

"भक्त्या भजन्ति विगतच्छलदम्भमाना
भक्ता नितान्तसरला अभिमानहीनाः
सेधन्ति यं शरण मेव समर्पयन्तः
स्वं नूयते हि वृषभानुसुताप्रियोऽसौ"॥

इत्येतैः पदैः सविनयं नमामः।



# नानकः

विश्वस्य मानवानुत्थापयितु मुपकर्तु ञ्च तान् वसुन्धरायां येऽपि महान्तो मानवाः सञ्जातास्ते स्वकर्त्तव्यपालनमेव श्रेष्ठ ममंसत। सर्वानपि मनोजनितानुपप्लवांस्ते दृढेन सङ्कल्पेन, अविचलेन धैर्य्येण, कठोरेण तपश्चरणेन च पराभूय धर्म मगौप्सुः। ते तदेव विधातु प्राक्रमन्त यत् तेषामात्मानूनुदत्। ते सन्ततं स्वार्थं न्यक्कृत्य परार्थं निभृत मपुपूजन्। महापुरुषेषु समुपलभ्यमाना एते गुणा नानकेऽपि तदीयाद् बाल्याद्देद विलोकिता अभूवन्।

नवषष्ठ्यधिक चतुर्दशशततमेशवीयाब्दे पञ्चाल प्रदेशान्तर्गत शेखूपुरामण्डलवर्तिनीं तालवादीं स्व जनुषा नानकोऽपुनात्। तालवादी तदा नव पुष्प फलपल्लवपेशला वसन्तश्रीरिव, नृत्यन्मयूरा उद्यानावनिरिव, कूजत्कोकिला सहकारशाखेव, समुद्दीप्तनक्षत्रा यामिनीव, प्रफुल्लारविन्दा सरसीव, प्रकाशसमुज्ज्वला दिवसलक्ष्मी रिव शान्तिशुभ्रा निदाघसंध्येव, सर्वहितपरा सत्समृद्धिरिव, रत्न मौक्तिक मधुराम्बुधिकुक्षिरिव, कीर्तितहरिकथा साधुसभेव सा समजायत। इदानीं तालवांदी नानकाना साहिब इत्येतेन व्यपदेशेन व्यपदिश्यते। नानकस्य माता सरलस्वभावा परमसाध्वी महिलासीत्। पिता च तस्य वाणिज्यवृत्तिभूं मिपति रासीत्।

नानकः पठितुं पाठशालायां यदा प्रेषितोऽभूत्; शिक्षकं सः सविनयं 'तस्य मनो न पुस्तकेषु रमते तत्तु परमेश्वरं जिज्ञासतीति न्यवेदयत्। जगतः पदार्थेषु तस्यानासक्तिं धर्मे परमेश्वरे च विलोक्य अमितामभिरुचिं तत्पिता केन प्रकारेण स वत्सविशेषो वत्ससामान्याभिमतवृत्तौ सजेदित्येतस्यां गम्भीरायां चिन्तायां निपपात। सूनोर्मानसं स विरजस्कता तः सरजस्कतायां प्रवर्तयितुं प्रायतिष्ट ; भूसम्वन्धिषु कार्येषु स तं योजयितु मचेष्टत; वाणिज्ये च तदीयमनुराग मुत्पादयितु मीहाञ्चक्रे परमसौ न कस्मिन्नपि प्रयासे सफलता मियाय।

वस्तुतो यस्य दृष्टि रन्तर्मुखी संवृत्तास्ति परमार्थे च यः प्रीतिप्रगाढां निसर्गतो निबध्नाति स न कदापि भौतिकेष्वर्थेष्वावर्जितः कर्तुं शक्यः। सत्यमेवोक्तम्—

"आत्मेश्वराणां न हि जातु विघ्नाः समाधिभेद प्रभवो भवन्ति"।

एकदा नानकं तत्पिता सस्यराशिं विक्रेतु मापणं प्राहिणोत्। सः प्रयाय तं विचक्राय। आपणान्निवर्तमानोऽसौ कांश्चन क्षुत्क्षामकण्ठान् साधून् ददर्श साधवस्ते

तमयाचन् भोज्यम् । सः तत्क्षणमेव सस्यविक्रयावाप्तं सकलमपि धनं तेभ्यः प्रददौ येन ते स्वभोज्य सामग्रीं क्रेतु मीशीरन् । सत्यमेवाभिहितमिदं–"आदानं हि विसर्गाय सतां वारिमुचामिव" । गेहागतं तं तदीयो जनको धान्यविक्रयाल्लब्धं धनं क्व इति पप्रच्छ । स तदायदघटत तत् सर्व मपि निवेदितवान् । तत्सर्व माकर्ण्य तस्य पिता तस्मै भृशमक्रुध्यत् । तस्मिन् कृता हि तस्याशातितरां कृशतामगात् ।

कालू (तत्पिता) पुनः स्वमनोऽभीप्सितां दिशां तं नेतुं प्रायस्यत् परं न सः कृषिकार्ये न च वाणिज्ये तं संलग्नीकर्तु मक्षमत । तस्मान्न सः ततः परं नैजाकाङ्क्षितपथम्प्रति तमाहर्तुं मुद्युयुजे ।

नानकस्त्वासीज् जलधर समय इव प्रशमितरजः प्रसरः, उष्णदिवस इव क्षपित बहुदोषः, शन्तनुरिव प्रियसत्यव्रतः अश्वत्थामेव कृपानुगतो, ग्रहगण इव बुधानुगतः, अगुणरतोऽपि गुणानुरागी, स्वच्छन्दचारोऽपि दुर्गैकशरणम् ।

नानकः सर्वमपि नैजानेहसं भगवच्चिन्तन एव यापयितु मारभत । स्तोतुमीश्वरं स भक्तिभाव विभावित स्तुति प्रणयने स्वं प्रावीवृतत । हरिगुणगानं, तन्नामसकीर्तनं, तन्महिम्नः प्रकथन ञ्च तज्जीवनस्य सर्वस्वत्वेन बभूव । स तद्ध्याने प्रायेण स्वमपि विसस्मार । तस्यैषाऽविच्छिन्ना भगवद्रति स्तत्स्वास्थ्योपरि कमपि विचित्रमेव प्रभावं पातयाम्बभूव । जनसाधारण दृष्टि स्तम स्वस्थममंस्त । तत्पितरौ तच्चिकित्सायै भिषज माहूतवन्तौ । यदा स आगतं वैद्यमपश्यत् । स्वकीयं भावमेवं व्यानक्—

"कस्माद् वैद्य भवानत्र सम्प्राप्तो बुधसत्तम ।
औषधं भवतो नूनं हर्तुं नार्हति मद्रुजम् ॥
दैहिको नास्ति मद्रोगो वर्तते स तु मानसः ।
विस्मृतत्वाद् हरे र्विद्वन् रुजैषाऽऽपतिता ध्रुवम् ॥
एनसा दंड्यमानोऽस्मि मामकेनैव सर्वथा ।
हरेन्मदीय रोगन्तु दयावान् परमेश्वरः ॥

नानकोऽनिशं तेषां पुंसां सन्निधौ स्थातु मुत्कटोत्कण्ठामविभो ये स इव भगवति सिस्निहुः । सः कीदृशं प्रौढतरं प्रेम ब्रह्मणि निदधा वित्येतत्तु तत्प्रणीतादमरग्रन्थात् स्फुटतयाभिव्यक्तं जायते । स नासीद् विद्वान् वा अवाप्तोच्चशिक्षो विचक्षणः परं तस्य कविता भूयसां जनानां सचेतसां चेतांसि रमयन्ती तानि सन्मार्गे प्रवर्तयन्ती संलक्ष्यते । तेन तत्कविता मुद्दिश्य सत्य मेवाम्नातं—"मम कविता मन्मानसान्निर्गतास्ति न च मस्तिष्कात् । इहैका-कविता तद्रचनातः समुद्ध्रियते—

कहा मन विषयन सों लपटाई ।
या जग मैं कोउ रहन पावै, एक आवै एक जाई ॥
काको तन धन सम्पत्ति काकी, कासों नेह लगाई ।
जो दीखै सो सकल विनासै, जिउँ बादर की छाही ॥
तजि अभिमान शरण सन्तनगहु मुक्ति होहि छिन माही ।
जग नानक भगवन्त भजन विन सुख सुपनै भी नाही ॥

नानकस्य पिता पुनः पुनश्चिन्तयन्नपि भृशं, न तमुपाय मवाप्तु मशकद् य स्तं तद् गृहीतादध्वनो निवर्तयेत् । अन्ततो गत्वा सः स्वजामातुर्जयरामस्यसाहाय्येन तं राजकीय संग्रहागारे नियोजयितुं प्रबभूव । तत्र तस्य कार्य कौशलं तत्रत्यान् सर्वा- नप्यधिकारिणः कर्मचारिणश्च पर्यतूतुषत् । परं तत्रापि स न मानवीय मन्त्यं प्राप्तव्यं लक्ष्यं व्यस्मरत् । सः स्ववेतनस्य चतुर्थमंशमेव स्वोपयोगे विव्याय । अवशिष्टं हि सर्वं दीन-दरिद्र सेवाया मुपायुनक् । सुल्तानपुर मधिवसंस्तस्य मर्दाना नाम कश्चित् सज्जनः सुहृद् बभूव । मर्दानासीत् सङ्गीतकलानुरागी । तद्विशिष्टतावत्वात् तस्य, तस्मिन् सौहार्दं पर्यपुष्यत् । यतः स ययौ ततः सोऽप्ययासीत् । आह्निककृत्यान्निवृत्य स तेन समं तत्स्थानं न्यषेवत यत्र भगवद्भजनं निरन्तरायं भवितु मर्हेत् । तं न सा संग्रहागारभृति श्चिर मप्रीणात् । ततोऽसौ क्षिप्रमेवात्मान ममूमुचत् । दैन्यदारिद्र्य वतां निः सहायानाञ्च वराकाणां सेवायां तच्चित्तम् दिनानुदिनं बलवत्तरतां प्रपेदे । सः सकलामपि स्वकीयां सम्पदं परसेवाया मेव वितताार । साधुजनोचितं काषायं सः अवस्त : गार्हस्थ्यं विहाय परिव्राड् भूत्वा विपिने विपिने विचरितु मारेभे ।

नानकः प्रवाहः करुणारसस्य, क्षेत्र मार्जवस्य , अदत्तावकाशो मत्सरस्य, उत्पत्तिः साधुतायाः, आयतनं मङ्गलानाम्, दर्शकः सत्पथानाम्, अभूमिर्मदविकाराणां, सूर्योदय इव सकलभुवनार्धार्हो बभूव ।

निवृत्त्युन्मुखो नानकः स्थानानि वहूनि पर्यटतिस्म । यत्रापि सोऽयाञ्चक्रे तत्र सर्वेष्वपि जनेषु मनसा मिमेल । स आपन्नाना मार्तिमपनेतुं सर्व संसार माराधयितुं तथा प्रायतत यथा सर्वे जना वा सर्वः संसारः सत्पथारूढः स्यात् ।

नानकः एकदा हरिद्वार मगमत् । तत्रैका मनोमोदिनी घटना अघटत स जह्नुतनयायास्तटे काञ्चन जनान् पितृं स्तर्पयतो व्यालोकयत् । पूर्वाभिमुखीभूय वारिणा तर्पयतस्तानवलोक्य सोऽपि तदुन्मुख माननं विधाय तथा तन्नावतस्थे यथा ते निर्व्यवधानं विलोकयितुं तं शक्नुयुः । ततश्च स त इव तोयं प्रदातु मारेभे । दृष्ट्- वेदं ते विप्रास्तं पर्यन्वयुञ्जत—'अपि तथाचरणे किन्तवोद्देश्यम् ? सोऽचकथत् भवता- मपि तथाचरणे किं प्रयोजनम् ? ब्राह्मणा अभणन् 'वयं पितृभ्यः पयः प्रदद्मः । सः

पप्रच्छ 'सन्ति क्व तदीयाः पितरः ? लोकान्तर इति ते उदतरन् । निशम्येदं स बभाण 'मम पत्तन मितः प्रतीच्याम् । यदाहं स्व ग्राम ममुञ्चं तदा क्षेत्राणि मदीयानि नीरा-भावादासञ्छुष्काणि । अतः स्व क्षेत्राणि तानि प्रपूरयितुं कार्यमेतदनुतिष्ठामि । कथं नु दूरे स्थितानि तानि अम्भः प्राप्तु मर्हेयुरित्यभिदधत्सु तेषु महीदेवेषु, स निज-गाद 'चेद् भवत्प्रदत्ता अपः सहस्रेभ्योऽपि क्रोशेभ्यः परस्ताद् अवस्थिते पितृलोके भवतां पितरो लब्धु मर्हन्ति तदा प्रत्यासन्नानि मामकानि क्षेत्राणि मद्दत्तं सलिलं कस्मान्नाधिगन्तुं शक्नुवन्ति । श्रुत्वैतत् ते निरुत्तरा अभूवन् । ते निश्चय मिम मगुर्यत् स तस्यां मान्यतायां न श्रद्दधाति यत्र ते ।

पर्यट्य यदा नानकः स्वस्थानं न्यवर्तत तदा तदीया जनुर्भूमि बाबरेणा क्रम्यमाणासीत् । सोऽपि तन्मित्रेण सह वन्दितां नीतः । बावरकृतानि क्रूर कर्माणि तमवेपयन् । अनाथीकृताः असहयनीयानि दुःखानि सहमानाः अङ्गनाः पर्यवलोक्य सः भृश मदूयत । तस्मात् स बावरं द्रष्टुं प्रायतिष्ट ।

महात्मनां दर्शनं निर्दयानामपि स्वान्तेषु दयां समुत्पादयन्ति । तदेनस्विनोऽपि एनेभ्यो निवारयति । नानकस्य दर्शनं बावरस्य हृदयं पर्यवर्तयत् । सः शरारुक मभ्य आत्मानं विमुखीचकार । तस्मिन् नूनं तस्याद्भुतः कोऽपि न्यपप्तत् प्रभावः । सत्य मेवाहुः सुधियः—

'सतां हि सङ्गो दुरितानि हन्ति'

नानको भक्त इव स्वकीयं हृदयं भगवच्चरणयो निंदधत् समाजस्य चेतो द्वेषेर्ष्यामात्सर्यादिपांसुरहितं च कुर्वाणो देशस्य-मानवस्य-सेवाया मनारतं संलग्न एवाध्यगम्यत । कर्त्तव्यपरायणता-सन्नीतिपरता-सच्चरित्रतादिसद्गुणनिकुरम्बं समु-त्पाद्य स जनवृन्दे, तत्कालवर्तिशास्तरि च शासनोचितधर्मभावान् उद्भाव्य महापुरुषस्य कर्त्तव्यं साधु पर्यपूपुषत् । सत्यमेव कविः प्राह—

सन्तो मनसि कृत्वैव प्रवृत्ताः कृत्यवस्तुनि ।
कस्य प्रतिश्रृणोति स्म कमलेभ्यः श्रियं रविः ।।

नानको महात्मा परमोदारमना बभूव । सः स्वभक्तेभ्यो धनवद्भ्यो यद्यपि धन मविन्दत् तदखिलमपि दीनानामुद्धरणे भगवन्मन्दिर प्रतिष्ठापनेऽन्येषु च शुभ कर्मसु प्रायुङ्क्त । स जनेष्वात्मान मात्मनि च जनानपश्यत् । न सावलेपोऽसौ जातु प्राप्यत । स उपदिदेश "भगवतः पन्था ऋजुः स्थितिस्तस्य भक्तिश्रद्धयो रन्तराले वर्तते; स; सर्वेष्वपि समदर्शितां निदधाति; यथा सः श्वपचे शुनि च स्निह्यति तथैव स ब्राह्मणे गवि च; सोऽस्माकं सर्वेषा माधारोऽतोऽनुश्वासं तत्स्मरण मस्मदीय माद्यं कर्त्तव्यम्

तत्कृपालाभाय मानवा; पवित्राचार विचारा भवेयुः; ते सर्वानपि मानवान् स्वबन्धून् मन्येरन्; प्राणिमात्रस्य सेवां ते स्व-जीवनस्य धर्मं मत्वा सततं तत्र सद्भावपूर्वकं व्यवहरेयुः; न कदापि कस्यापि सुखं शान्ति मुन्नतिं च ते क्षिणुयुः ।

साम्प्रतं नानकस्य सन्ति सहस्रेभ्योऽपि पराः अनुयायिनः । ते भक्तिभावेन तं नित्यं स्मरन्ति; तं भगवन्त मिव मत्वा अर्चन्ति भजन्ति श्रियन्ति च ।

नानकोपदेशानुरूप नैजाचरणनिर्माणात् पर मन्यदुचिततरं तदर्चनं न भवितु मर्हति अतः अद्य वयं मानवता मुन्मीलयितुं तां वर्धयितुं च प्रयतेमहि; वयं भारतीया आध्यात्मिकं बलं प्रबलीकर्तुं मात्मनि च मानवजातिशुश्रूषा मुत्पादयितु मीहेमहि ।

वन्द्यः स नानक गुरुः सदयो महात्मा<br>
दम्भं विनाश्य मनसा हि महान् मनस्वी<br>
भेजेऽज निर्गुण हरिं सततं शुभंयु<br>
र्दृष्टिं समां च निदधावसुभृत्स्वजस्रम् ॥

---

# कबीरः

कबीरोऽस्मद् देशस्य दिशि दिशि संस्कृतिसुषमामयं नवमेव ज्योतिर्व्यकारीत् । षोडशस्य शतकस्य भारतं तदीयेन दिव्येन तेजोमयेन व्यक्तित्वेन पूर्णतया व्याप्तं भूत्वा समिन्धाञ्चक्रे । तस्य व्यक्तित्वस्य द्वौ पक्षौ प्रधानौस्तः । तत्र प्रथमो धर्मोत्थापकोपदेशपरको द्वितीयश्च शुद्धभक्तिविषयकः । एतस्मादेवहेतोस्तत्काव्यमपि पक्षद्वयं जुषते । धर्मरक्षणोद्देश्योपदेशेषु सोऽतिनीरसः कर्कशः शुष्कश्च परिवीक्ष्यते । उपदेशशक्तिकायां कवितायां न साहित्यिकं सौन्दर्य्यम् । कविता-प्रणयनं तु तस्य लक्ष्यमेव नासीत् । आजनतां स्वविचाराणां प्रापणाय स वस्तुतस्तां (कविताम्) समशिश्रियत् । ब्रूतेस्म च सः—

"मसि कागद छुयो नहीं, कलम गह्यो नहिं हाथ"<br>
(मस्याः स्पर्शं स नो चक्रे, कागदं च न तत्करः)

स तु 'सार्वद्वयाक्षरं प्रेम पठित्वैव बुधोऽभवत्' । न तत्र कविजनोचिता शिक्षासीन्न च काव्यप्रतिभा । स महात्मा साधुरेव बभूव । तज्जीवनं सत्सङ्गं प्राप्य पर्यटनञ्चविधाय पिप्रिये । आसीत् सोऽवश्यमेव बहुश्रुतः । कामं न स्यात् तदीयायां कवितायां रीतिकाराणां रमणीयता न च जिह्वाविहारिणी पदपेशलता परं सत्यं, गूढसिद्धान्तसौन्दर्यं तत्र प्रवहत्यनुपदम् । सूर-तुलसी-केशवकृतकाव्य श्रीः न तत्र यदि दृश्यते तदा न दृश्यतां सा, परं धर्मधीस्तु तं कविमवश्यं मनुते । तस्य कवितायां हृदयस्य सत्यता, विचाराणां गम्भीरता, अनुभूतेश्च तीव्रता यथेष्टं वीक्ष्यन्तेऽतस्तस्य कवित्वं न वर्तते कवित्वात्परम् अन्यत् किमपि । तस्मिन् साधौ काव्यप्रतिभा समुल्ललास; एतस्मादेव कारणात् तस्य हृदयग्राहिण्या दुरवगाहाया वाचाया यत् किमपि निर्गतमभूत् तत् सर्वमपि काव्यत्वमगमत् । तस्याखिलमपि काव्यं जीवनानुभूतिरमारम्यं वर्तते । श्रोतव्येयं तस्य पेशलपदपङ्क्तिः—

कबीर पल की सुधि नहीं, करै कालिह का साज ।<br>
काल अच्यन्ता झड़पसी, ज्यों तीतर को बाज ॥<br>
लाली मेरे लाल की, जित देखहुं तित लाल ।<br>
लाली देखन मैं गई, मैं भी हो गई लाल ॥<br>
(पले त्वभिज्ञता नास्ति, श्वः परक उपक्रमः ।<br>
कालो धरेद्धि त्वां क्षिप्रं, श्येन पक्षीव तित्तिरम् ॥

सौन्दर्यं मम वत्सस्य सर्वत्रैव विभाति तत् ।
तद् वीक्षितुं प्रयाताहं सञ्जाता हन्त तन्मयी ।।

कबीरो निश्छलं निष्कपटं नितरामेव वलक्षक्रान्तिव्यक्तित्वं बिभराञ्चक्रे । अनवाप्तशिक्षत्वान्न सः कदापि शिक्षितत्वप्रदर्शकं दम्भमङ्गीचकार । स तु यत् सांसारिकं ज्ञानमनुभवञ्च यश्विन्दत् तत्र दृढीयान् विश्वास आसीत् । अतएव सः पण्डितान्—

"त्वं शास्त्र दृष्टं शंससि, अहन्तु नेत्रदृष्टं वदामि" इति प्राब्रवीत् ।

विद्वांसः काव्यस्य भावपक्षे बुद्धिः, रागः, कल्पना इत्येतानि त्रीणि तत्वानि भवन्तीति कथयन्ति । बुद्धितत्वे कविप्रतिष्ठापिताः श्रेष्ठा विचाराः सन्देशाश्च दृष्टव्या भवन्ति । रागात्मके तत्वे हृदयस्पर्शशीलता, तन्मयता च परीक्ष्येते । कल्पनातत्वे वस्तुनश्चित्राङ्कनविधिर्नवनिर्माणञ्च विभाव्येते । एतस्मिन् निकषे यदा कबीरस्य काव्यं परीक्ष्यते तदा तस्मिन् सन्देशस्य प्रधानता दृष्टा भवति । कल्पना तत्वस्यास्त्यभावस्तत्र ।

कबीर आसीन्मूलतः साधक उपदेशकश्च । हिन्दू-मुसलमानानां पारस्परिकीं नृशंसतां दम्भपरकतां जडवादितांचोन्मूल्य सः सत्यं सनातनं धर्मं व्याततान । तस्मिन्तर्कशक्तिस्तीव्रासीदासीच्च सा अच्छेद्या । अद्यतन्यः पुष्पितवाचो ब्रह्मदर्शनज्ञाताऽडम्बरभृत इवं ता नासन् । स तु दम्भिन उच्चैं राकार्य हुङ्कृत्य च तान् सावज्ञमभिभूय स्वकीयाध्यात्मवादित्व मुच्चैस्तरामदूधुनत् । स मिथ्याचारान् अधर्षयत् धूर्तांश्च ज्ञानिन्नुवान् अभर्त्सयत् ।

कबीरस्य साधनासीद् द्विविधा कर्मयोगविषयिका हठयोगपरका च । कर्मयोगित्वेन स माया मोहाभ्यां पर एव व्यराजत । यत् किमप्यब्रूत तदेवान्वतिष्ठत् । सांसारिकेषु संघर्षेषु सोऽयुध्यत । पलायनं तु स अजानादेव न । तदीयं वैशिष्ट्य मिदं वीक्ष्य डॉ० हजारीप्रसाद द्विवेदी लिखति—साधनाक्षेत्रे स युग-युगभूतः साधक आसीत्, साहित्यस्य क्षेत्रे च भविष्यद्रष्टा । परमार्थतः स कर्मयोगी आसीदत आसीद युगयुग गुरुः । सः साधूनां महात्मनां काव्यानि प्रतिमार्गं प्रदर्श्य नवनिर्माणनिष्ठं कार्यञ्चकार । तत् समकालवर्तिभिः परवर्तिभिश्च सर्वैरपि कविभिस्तस्य वाणी अन्वक्रियत । हिन्दुमुसलियैक्यविचारधारा याद्य वलीयसी भूत्वा ताम्यति तस्या मूल प्रवर्तकः कवीर एव बभूव; धारेयं मैथिलीशरण गुप्तप्रभृतिगान्धिवादिभिरभ्युपागम्यत । तदेवं कबीरदासः सत् (सन्त) साहित्यस्य पथप्रदर्शकः स्रष्टा च बभूव ।

कबीर आसीद् युगद्रष्टा । युगं सन्ध्युद्भूतेः सौभाग्यं तस्मैं भगवता प्रदत्तमासीत् । आचार्य हजारीप्रसाद द्विवेदी 'हिन्दी साहित्ये इत्येतन्नामधेयेन प्रसिद्धे

ग्रन्थे लिखितः—संयोगात् स ईदृशे युगसन्धेरनेहसि उत्पेदे यं हि वयं त्रिविधानां धर्म साधनानां मनोभावानाञ्च चतुष्पथ मिति वक्तुं शक्नुभः सौ-भाग्यात् सः सुयोगमपि लेभे। यावन्तोऽपि संस्कार प्रतिष्ठापका भवन्ति पन्थान, स्तावन्तः सर्वेऽपि निरुद्धा स्तदा आसन्। सः सन् अपि यवनः (मुसलमानः) नासीन्मुसलमानः (यवनः)। भगवांस्तं सर्वेभ्योऽपि व्यावर्त्य सम्प्रेषितवान् स यौगी भवन्नपि योगी नाभवत्। भगवतो नृसिंहावतारं सो ऽनुवर्तयन्निव प्रतिभाति स्म। नृसिंह इव सः असम्भवमिव मन्यमानानां नाना परिस्थितीनां मिलन विन्दूपरि अवतीर्णोऽभूत्। यतो यात्येकतो हिन्दुत्व मन्यतो मुसलमानत्वञ्च। एवमेव यत एकतो ज्ञान मेकतोऽशिक्षा निरगमताम् अथ च यतोऽन्यतो यौगमार्गो भक्ति मार्गश्च गमनं कुर्वाणा वदृश्येताम्। तत एव एकतो निर्गुणभावना, सगुणसाधना चान्यतो निर्जग्मतुः। स तस्मिन् प्रशस्ते चतुष्पथे स्थितः सर्वा स्वपि दिशासु दृक्पातं कर्तुं मशकत् परस्परविपरीतदिशागामिनामध्वनां दोषा गुणाश्च स्फुटतयैव यत्र तदादृग्गोचरतां गताः।

आसीत् कबीरो जनताया; कविः। सः स्वयुगस्य विराट-सामाजिक-साँस्कृतिक जागरणस्य सूत्रधार आसीत्। सः स्वकीयया वाचा स्वसमयवर्तिनः समाजस्य रूढि वादितां साररहिता माचारप्रवणतां गतानुगतिकताञ्च उच्चैः प्राहरत्। एतावदेव न स भाविनः समाजस्य कल्याणाय उच्चानाचारान् प्रतिष्ठापयामास।

कवीरो वर्णव्यवस्थां कठोरतया प्रत्यवादीत्। तद्विचारेण वर्णव्यवस्थाया महत्त्व मस्ति सर्वथैव वाह्यम् न तदीयं महनीयत्व माध्यात्मिकम्। परमात्मनि परमार्थतः संलग्नत्वं भक्तिः सदाचरणञ्च तस्य धर्मत्वेन मतमभूत्। अस्मिन् क्षेत्रे कवीरस्य म.गान्धिनश्च मार्ग एक एव। उभावपि धर्मस्य मूल तत्वं ग्रहीतुं सदैव सन्नद्धौ प्राप्येताम्। यस्मिन् सर्वेषा मपि धर्माणा मच्छताः स्युः सन्निविष्टा स्तमेव धर्मं तौ अमंसाताम्। कबीरस्य साहित्ये, मानव मात्रे समानतायाः सद्भावना मूल सूत्रमिव मालाया मनुस्यूतं विद्यते। विभिन्नेषु धर्मेषु, वर्गेषु, जातिषु विभक्तस्य समाजस्य, निर्धन जनता, तत्प्रभावात् सर्वेऽपि मनुष्याः परस्परं सन्ति वन्धव इत्येतद्विश्वासप्रकाशन मन्तरेण स्थातुं न शशाक। डॉ. रामविलास आहः—"सतां (सन्त) साहित्यं शोषणत्रस्ताया जनताया इमामाकाङ्क्षा मभिव्यक्तीकुरुते— ईदृशस्य समाजस्य स्यान्निर्माणं यत्रोच्चावचताया स्थिति र्न भवेत्, यत्र पीडका राजानो न स्युः, धर्मवाणिज्यकर्तारो न स्युर्न च धर्म-क्रय-विक्रयभाजः। समाजव्यवस्थायाः स्यादाधार :प्रेम। साहित्येऽस्मिन् जनताया लास्य उल्लासश्च वर्तेते च सुखजुषः समाजस्या काङ्क्षा"।

इत्थं कवीरस्य निश्चप्रचतया युगद्रष्ट्रत्वं सिद्ध्यति। तेन समाजस्य भावि-

नीना मात्ययिकतानां दिग्दर्शनम् कृतमासीत् । म. गान्धीव सोऽपि स्व समयवर्तिन्या जनतायाः प्रतिनिधिः पथप्रदर्शकश्चाभवत् । इदमेव सर्वमुद्दिश्य डा. वड़थवालो लिखतिः—"भारत मग्रजन्मनां देशोऽस्ति । तत् स्वचरित्रेण संसारं विनयति । तस्येद मग्रजन्मत्वं कबीरो भूत्वोद्बभूव । सम्प्रति तदेव गान्धी भूत्वा प्रादुरभवत् । परमेश्वरस्य या विभूति र्मानवताया वा या महत्ता पञ्चदशे वा षोडशे शतके कबीर इत्येतन्नाम्ना ख्याति मगमत् सैवाद्य गान्धीति नाम्ना गीयते । आवरणस्यास्ति भेदो न च तथ्यस्य । यदि कबीरः सरल सुबोध भाषामयकाव्यस्यादर्श स्तदा म. गान्धी तस्य (काव्यस्य) सुबोधतरा क्रियात्मिका व्याख्या वर्तते" ।

सत्याध्वयायी छल शाठ्य मिथ्या-
दम्भप्रहर्ता जनताहितार्थी
भक्तेश्च धर्मस्य बभूव मार्गे
नित्यस्थितः शुद्धमना कबीरः ॥

सत्यस्थितः सन्तत सत्य कर्मा
सत्याभि भाषी शुचि साधुवृत्तः
सत्य प्रवक्ता सुमति र्मनीषी
वंद्यः कबीरः परमेश भक्तः ॥

———

# गोस्वामि-तुलसीदासः

तस्मिन् काले भारतं यवनशासनाधीनमासीत् । श्रुति स्मृति निर्दिष्टधर्म पथगामिनां वसिष्ठभरद्वाजकश्यप प्रभृतिऋषि मुनिवंश सम्भवानां राम-कृष्णादिनामग्राहिणां भारतनिवासिनां चतुर्णामपि ब्राह्मण-क्षत्रियादिवर्णानां जीवन मनुक्षणं दारुणदारुण तरभयग्रस्तं नानाविधविपत्सङ्कटाकीर्ण मेव तदावर्तत । कोऽपि न जानातिस्म कदा कस्मिन् आपदापतेत् । इसलामधर्मो गृह्यतां किं वा शिरश्छेदन मङ्गी क्रियतामिति तद् विधायां परमक्रूरतावत्यां विषमायां स्थित्यां जन-जीवनं तदानिपतित मवाप्यत । शिखायज्ञोपवीतधारणं समस्यैवैका भयावहाऽविद्यत । देवालयानां धर्मग्रन्थानां च रक्षणमतितरां कठिनमभूत् । गृहेष्वपि नारीणां कुमारीणां च रक्षा नासीत् तदा सरलं साध्यं कर्म । येन केनापि प्रकारेण भारतीय जनता स्वकीयानि जीवनदिनानि यापयितुं क्षमाभवत् । पराधीनतया तस्यां सहस्रशो दुर्गुणाः समुत्पादिता आसन् । स्वभावेन सा भीरुताभृदजायत । दीनता हीनता निराशा अकर्मण्यता दुर्बलता कृपणता च जने जने कृताधिवासा अदृश्यन्त । मानवानां मनांसि लोभमोहरागादिपरिपूर्णान्यवाप्यन्त । न शुभेषु कर्मसु जनताया अभिरुचिः प्रायेण समुपालभ्यतेस्म पण्डिता नासन्, पण्डितब्रुवाणां संख्यावश्यं विशालासीत् । धर्मात्मानस्तु क्वापिनादृश्यन्त, दम्भिनोऽवश्यं यत्र तत्र सर्वत्र व्यचरन्त । बहुविधानां मतानां अगाढः प्रसारः समजायत[2] । वर्णाश्रमधर्मो नितरां क्षीणतां गत आसीत् । श्रुति-विरोधः सर्वत्र प्रावर्तत । शास्त्रेषु रुचि र्मन्दाभवत् । राजान एव प्रजाभक्षका अभूवन्[3] । परधनहारिणो बुद्धिमन्तः, दम्भभृत आचारवन्तः, अनृतभाषिणो गुणवन्तश्च तदा अकथ्यन्त[4] । विशालजटाभृतस्तापसाः परिहृतश्रुतिमार्गा ज्ञानिनोऽशुभवेषधारिणो ऽभक्ष्यनिषेविणो योगिनो मता

---

१. भए लोग सब मोहवस लोभग्रसे सुभ कर्म ।।

२. दंभिन्ह निजमति कल्पि करि प्रगट किए बहु पन्थ ।।

३. बरनधर्म नहिं आश्रमचारी । श्रुति विरोधरत सब नरनारी ।।
द्विज श्रुत वेचक भूप प्रजासन । कोउ नहिं मान निगम अनुसासन ।।

४. सोइ सयान जो परधनहारी । जो कर दम्भ सो बड़ आचारी ।।
जो कह झूठ मसखरी जाना । कलिजुग सोइ गुणवन्त बखाना ।।

अभूवन्[५]। ईदृशस्यवस्था नितरामेव चिन्तनीयतां शोचनीयतां च गमिताऽऽसीत्। एवंविधे हि महापतनार्णवनिमग्ने काले गो. तुलसीदासः सम्वभूव।

गो. तुलसीदासः स्वकीयस्य परमसमुज्ज्वलातीतस्य देशस्य तां शोच्यामवस्थाँ, तद् गर्हितं पतनं तांचमहानिन्द्यां परिस्थितिं वीक्ष्य तदुद्धरणं केन प्रकारेण जायेत इत्येतस्यांगम्भीरायां चिन्तायां निपपात। सः स्वचिन्तायास्तस्या निवारणार्थं न कस्यापि घनिकस्य श्रेष्ठिनो वा, राज्ञो भूमिपते र्वा सकाशे गत्वा तत्साहाय्ययाचनं समुचितममंस्त न च स जनानुपदेष्टु मुपदेशक एव भवितु माचकाङ्क्ष न च स्वकीयां तां चिन्तां भगवति निधाय निश्चिन्तो भूत्वा कस्यामपि हिमाचलकन्दरायां स्थितिं विधाय केवलं तन्नामजपनं युक्तं मेने; नैव च स योगी किं वा तापसो यद्वा श्रोत्रियोऽथवा पण्डित आहोस्बिच्छिक्षको बुभूषति स्म। देशे सः सर्वत्र परिभ्रमणं कृत्वा ध्यानपूर्वकं सर्वा अपि स्थितीः अध्यगीष्ट। स देश-कल्याणं हृदि निधाय साधूनां समाजं न्यषेवत। स देशोद्धरणनिहितमानसो विद्वद्भ्यो महात्मभ्यश्च कथापुराणादिकानिशास्त्राणि शुश्राव। स तमोनिरसनाय ज्योतिषश्चाधिगमनाय निगमागमादिकं पपाठ। स तीर्थेषु तपोवनेषु च पर्यट्य स्वप्रियस्य देशस्य यथार्थां स्थितिमवगन्तुं कठोरं प्रयासं चकार। भारतीय जनता स्वकीयस्य देशस्य भारतस्य गौरव मतीतं कीदृश मासीत्; देशस्य संस्कृतिः कास्ति का च तदीया सभ्यतास्ति; के च कीदृशाश्च सन्ति तदीया आचारा विचाराश्च इत्येतदखिलमपि कृत्स्नतया जानीयात् सा स्वकर्त्तव्यं धर्मञ्च समीचीनतया अवगम्य तद् बलं तत् तेजश्चोपार्जयेत् येन सा आत्मधर्मस्य च रक्षणं कर्तुं मर्हेत्। निर्भयता तत्र सञ्चरेत, सत्साहसं तत्र प्रवहेत्, तदीया दीनता पलायेत, निराशा तदीया आशायां परिवर्तेत, भवेच्च सा अनन्तोत्साहसम्पन्ना सततसत्कर्मपरायणा चेत्येतद्धेतोः स आत्मानं ग्रन्थ-रचनायां न्ययूयुजत्। ग्रन्थञ्च ग्रन्थान् वा स तस्यां भाषायां विरचयितुं समुद्यतो बभूव या भाषा भारतीयैः प्रयुज्यते। स्वकीयासु कृतिषु च स तस्य चरित्रं गातुं सन्नद्धोऽजायत यस्य चरित्र मुत्तमतायां श्रेष्ठतायाञ्च सर्वाण्यप्यन्यानि चरित्राणि विजित्य विद्योतते।

गो. तुलसीदासो वस्तुतः स्पृहणीयां विवेकशक्ति श्लाघनीयां दूरदर्शितां, वन्दनीयां जनोद्धरणविधिज्ञतां, पूजनीयां ज्ञानगुरुता मनुकरणीयाञ्च भगवद् भक्ति

---

५. निराचार जो श्रुति पथत्यागी। कलिजुग सोइग्यानी सो वैरागी ॥
जाकें नख अरु जटा बिसाला। सोइ तापस प्रसिद्ध कलिकाला ॥
असुभ वेष भूषन धरें भच्छाभच्छ जेखाहिं ॥
तेइ जोगी तेइ सिद्ध नर पूज्य ते कलिजुग माहिं ॥
(रामचरित मानसे, उत्तर काण्डे)

निदधौ। तदीयानामेतेषां समेषामपि सद्गुणानां प्रभावोऽयं यत् तद् रचिताः कृतय (स्तत्रापि च राम चरित मानसम्) आत्मजन्मकालादेवानारतं जनकल्याणं विदधत्यः संलक्ष्यन्ते। तासु सा विशिष्टता शोभते यस्याः सद्भावाद् भाविनि काले च भारतीय जनता निरन्तरं प्रकाशं प्राप्तुं समर्था भवेत् स्वकीयं गन्तव्यं च मार्गं ज्ञातुं क्षमतां विन्देत्। अहो धन्यास्तदीयाः कृतयो या अतीतेऽनेहसि लक्षशः कोटिशश्च जनान् पतनाद् ररक्षुः सत्पथे तानधिरूढांश्चक्रुः कर्त्तव्यविमुखांश्च तान् कर्त्तव्योन्मुखान् विदधुः साम्प्रतञ्च ता ईदृश मेव सत्कार्यं विदधत्यः संलक्ष्यन्ते भविष्यत्काले चालौकिकशक्तिमत्त्वात्ता लोकहिताचरणं विधातुं क्षमा भविष्यन्ति।

मर्यादापुरुषोत्तमस्य रामस्य चरित्रं जगत उद्धरणे क्षममिति मत्वा गो. तुलसीदासो रामचरित मानसम् (रामायणम्) अजग्रन्थत्। यो हि सदाचारवान् भवति सः सर्वेणापि लोकेन पूज्यते, यस्य बलं दुष्टानां निग्रहणाय सज्जनानां च रक्षणाय सदैव सक्रियं दृश्यते तस्य एव सर्वत्र यशः प्रसरति तस्य एव चरणयोः समग्रा जनता नतमस्तका भवति, यः स्वबन्धुषु स्निह्यति यो मातृ-पित्राज्ञापालको वर्तते, यो गुरु जनानां भक्तोऽस्ति, यः सत्कर्तव्यपालनार्थं धैर्यपूर्वक मसहनीयानि च महान्ति कष्टानि सहते सः सर्वेषामपि मानवानां श्रद्धास्पदं भवति; वन्या असभ्या अशिक्षिता अपि प्राणिन स्तमनुधावन्ति तच्चरणावर्चन्ति तत्सहायका भवन्ति—इत्येतां शिक्षां राम चरित्राज्जनता ग्रहीष्यत्यवश्यमिति निश्चित्य तुलसीदासः स्वस्य धर्मग्रन्थस्य वा स्वस्य काव्यस्य नायकं रामं निरचिनोत्। यो हि रामो राजकुमार आसीत् स एव कठोरया नियत्या अकिञ्चनः कृतो निर्वासिततां नीतो विहितश्च असहायः। परं तु तथाविधाया मापत्त्यां पतितायां सत्यामपि, न स धैर्यं मुमोच न च स दीनो बभूव, न च सः कार्पण्यदोषोपहतस्वभाव एव जातः। स विना भय मुत्साहेन प्रबलेन सत्साहसेन चाद्भुतेन आपतिता स्तास्ताः सर्वा विपदो विध्वंसयामास। यदा हि तदीया पत्नी सीता लङ्केश्वरेण रावणेन अपहृता तदा सः समुचितस्य समयस्य प्रतीक्षां धृतिपुरस्सरं कृत्वा स्वकीयैः सद्गुणैः स्वकीयेन स्तुत्येन व्यवहारेण असंख्यातान् जनान् स्वकीयान् सुहृदोविधाय तत्सहायतया महतीं विशालां सेनां संग्रहीकृत्य लङ्का माचक्रमे रावणं च व्यापादयामास। एवमेव अस्माभिरपि अस्यां परतन्त्रतायां न कदापि धैर्यं हातव्यं न निराशै र्न निरुत्साहै र्न दीनै र्नाकर्मण्यै र्न च भीतै र्भवितव्यम्। शत्रुणा अस्मदीया स्वतन्त्रताहृतास्ति अतस्तत्प्राप्त्यर्थं मस्माभिरपि रामगृहीतः पन्था ग्रहीतव्यः। अस्माकं कर्त्तव्यं वय मस्मासु सद्गुणान् सच्चरित्रतां च समावेशयेम; लोकसंग्रहं कृत्वा समुचितं विधिं स्वीकृत्य अनुकूलानि च साधनानि समुपार्ज्य बलवन्तो भवेम येन हृता स्वतन्त्रता पुनः अधिगता स्यात्। पराधीनतायां सुखं क्व।

गो. तुलसीदासस्य रामचरित मानसं जनताया मानसे वस्तुत स्वमेव प्रभावं क्षिपति यं सः क्षेप्तुं तद्द्वारेण ऐच्छत् यवन-शासन काले जनता तद्रचिताद् रामा-

यणाद् बलम्, आशां, धैर्यं, कर्मण्यतां, सदाचारं च प्राप्तवती तत्सहायतया च सा
आत्मानं तस्माद् दारुणात् कष्टादुद्धृतवती । साम्प्रतं च तदीयं रामायणं भारतीय
जनतायां तांस्तान् सद्गुणान् सञ्चारयन्ती प्रतिलक्षिता भवति । को न वेत्ति यन्
महात्मागान्धी तुलसीदासकृतादेतस्माद् रामायणाद् राम-मन्त्रं परिगृह्य रामायणे गीताद्
राम चरित्राच्च तां तां शिक्षां सम्प्राप्य देशं स्वकीयं पारतन्त्र्यादुन्मुक्तं कर्तुं प्राभवत् ।
भविष्यत्काले च जनता रामायणनिहितां शिक्षा मवलम्ब्यैव आत्मानं रक्षिष्यति
स्वकीयं गन्तव्यं च पन्थान मवगमिष्यति ।

अज्ञानं सर्वेषामपि दुःखानां मूलम् । तद्वशादेव मानवः, समाजो वा राष्ट्रं
नानाविधानि कष्टानि सहते विपत्सु च घोरासु निपतति । तस्मात् कल्याणाभिलाषिणः
प्रथमं कर्त्तव्यमिदं यदज्ञानात् स आत्मानं मोचयेत् । गो. तुलसीदासोऽत एव येभ्यो हि
जनेभ्यो विश्वस्य सर्वेऽपि मानवाः शिक्षां लभन्ते; ज्ञानं प्राप्नुवन्ति; विद्याः संलभन्ते;
येषां जनानां हि कार्यं मज्ञान निवारणं विधाभ्यसनं च वर्तते तेषां महनीयतां
महत्तां च निदधानस्तेषां गुरुजनानां-शिक्षकाणां-सम्मानं प्रति विश्वस्य-स्वकीयस्य
देशस्य-कर्णधाराणां चित्तमावर्जयति—'गुरुपदरज मृदुमञ्जुल अञ्जन । नयन अमिअ
दृग् दोष विभंजन' (बालकाण्डे) सः शिक्षकेष्वपि तत्तेजस्तच्चारित्र्यं पावनं दिद्रक्षति
येन तदुपासका स्तत्स्मरणेनैव दिव्यां दृष्टिं लब्धुं पारयेयुः—'श्री गुर पदनरवमनि गन
जोती । सुमिरत दिव्यदृष्टि हिय होती' ।। (तत्रैव) सः स्वकीयं राष्ट्रं सत्समाज
विभूषितं विलोकयितु माकाङ्क्षति सतां हि मुन्भंगलभूलत्वात्—'सतसंगत मुद मंगल
मूला । सोइ फल सिधि सव साधन फूला' ।। (तत्रैव) स इच्छति यत् तदीयो देशः
सर्वेषु भूतेषु चराचरेषु—भगवदवलोकनव्यसनिनीं दृष्टिं कर्तुं यतेत येन तदीया
द्वेषद्रोहादिदोषा विलीयेरन् । एते हि दोषा नानाविधानामुपद्रवाणा भुपप्लवानां च
स्रष्टारः सन्ति अतस्तेभ्य आत्म रक्षापेक्ष्यते—'जड़ चेतन जगजीवजत सकल राममय
जानि' ।। ( तत्रैव ) महात्मानो भवन्ति सर्वसुखाभिलाषाः अत एव गो. तुलसीदासः
सर्वमपि विश्वं भगदच्चरणविष्ठं तन्नामस्मरणे परं द्रष्टुं कामयते येन जगन्मंगलमीक्षते
'भायँ कुभायँ अनख आलसहूँ । नामजमत मंगल दिसि दसहूँ ।। ( तत्रैव ) सोऽभि-
लषते यत्समाजमध्ये जनो जन एकैकः परहित प्रियः स्यात्—'परहित बस जिन्ह के
मन माहीं । तिन्ह कहुँ जग दुर्लभ कछु नाहीं ।। ( आरण्यकाण्डे ) भवितव्यतावशाद्
यदपि वैषम्य मापतेत तत्र धीरो भूत्वा अविषण्णचेताः सन् परमोत्साहेनापतितं प्राति-
कूल्यं विनाशभितुं जनो यतेत । भवितव्यता बलवती भवत्यतस्तुलसीदास आह
—'तुलसी जसि भवितव्यता तैसी मिलइ सहाइ' ।। (बालकाण्डे) नहि मानवः कदापि
सम्प्राप्तं समयं हस्तात्स्रंसयेत—'समय चुकें पुनि का पछिताने' ( तत्रैव ) इत्येतद्
ब्रुवाणोऽसौ देशस्य गरिम्णोऽवनार्थं तान् शूरान् विलोकयितु मभिलषते ये संग्रामाजिरे

शौर्यंदर्शयन्ति विकत्थन परत्वं न तेषु स वाञ्छति—सूर समर करनी करहिं, कहि न जनावहिं आपु'। (तत्रैव) तन्मनः स्वकीयस्य राष्ट्रस्य तरुणानां मातृपित्रादेश परायणत्वं परिप्रीणाति। तमेव युवानं स भाग्यवन्तं मनुते,ऽस्ति यस्तथाविधः—'सुनु जननी सोइ सुत बड़भागी। जो पितुमातु वचन अनुरागी।'(अयोध्याकाण्डे) समाजे 'जे हरषहिं पर सम्पति देखी। दुखित होहँ पर विपति विशेखी, 'अवगुन तजि सबके गुन गहहीं' इत्येतद्विधभावभावितानां बाहुल्य मतितरामपेक्षितं मन्यते सः। सः स्वकीयस्य देशस्य सर्वानपि मानवान् नय विहीन मप्राणप्रियप्रजं नृप मुन्मूलयितुं राम कथा प्रणयनव्याजेन प्रेरयति—'सोचिय नृपति जो नीति न जाना। जेहि न प्रजा प्रिय प्राण समाना' ( तत्रैव ) जपयोगपरत्वं तन्निन्द्यं यत्र भक्तिर्न, अतः भक्ति विहीनता तं नितरांदुनोति—'विनु हरि भगति जायँ जप जोगा' ( अयोध्याकाण्डे ), तुलसीदास काले यवना भारतीयान् हिन्दून् बलात् विदलतोऽदृश्यन्त। एतद्धेतोः यवनानां संख्या वर्धमाना व्यालोक्यत। हिन्दवो यवनतां गतांस्तान् हिन्दून् पुनः स्वसमाजे न गृहणन्तोऽवालोक्यन्त इदमपि न तमप्रीणात्। स हिन्दुसमाज माह—'स्वपच सवर खस जमन जड़ पांवर कोल किरात। रामु कहत पावन परम होत भुवन विख्यात' ( तत्रैव ) चेत् स्वसमाज रक्षायां कुत्सितमपि कर्म सम्पद्यते तदा न भवति कुकर्म कारी वचनीयोऽत आह सः—'आरत काह न करइ कुकरमू' ( तत्रैव) परं समाजस्य स्वधर्मस्य च रक्षणे राम विमुखता न कार्यं साधयत्यतो रामोन्मुखतैवेष्यते—'राम विमुख सिधि सपनेहुं नाहीं'॥ (तत्रैव) चेत् स्वामी वा नृपति रस्ति सेवकानां वा जनानां हितकारी तदा सेवकेन जनेन वा सः सुखं लोभञ्च विहाय सेव्यः—सेवक हित साहिव सेवकाई। करै सकल लोभ विहाई॥ ( तत्रैव ) अन्यायनिष्ठान् नानाविधानाचारात्याचारपरायणान् यवनशासकान् विलोक्य तस्य मानसं नितरामुद्विजतेस्म स रामचरितमानसद्वारेण जनतां तद्विधेषु शासकेषु प्रतिकूलां कृत्वा तां तत्कर्तव्योन्मुखीं कर्तु मीहते—'मुखिया मुख सो चाहिये खानपान कहुँ एक। पालइ पोषइ सकल अङ्ग तुलसी सहित विवेक॥' ( तत्रैव ) आपत्स्वापि चेद् धैर्य-धर्मवत्सु धैर्यं धर्मश्च दृश्येते तदाते धन्याः। अस्मिन् परतन्त्रता काले धैर्यं धर्मश्चाश्रित्य परतन्त्रता विनाशनोद्यतास्ते जायन्ताम्। अस्मिन्नेव परतन्त्रतापत्काले तेषां धैर्यस्य धर्मस्य च परीक्षास्ति—'धीरज धर्म मित्र अरु नारी। आपद काल परिखिअहिं चारी' ( आरण्यकाण्डे ) स्वसमाजे कुत्सितांस्तरुणान् वीक्ष्य सविषीदति। न तद्-द्वारेण कुल-सद्धर्मरक्षणं सम्भवमतः शंसति—'जिमि कपूत के उपजें कुल सद्धर्म नसाहिं'। ( किष्किन्धाकाण्डे ) जनानां मित्रदुःखादुःखितत्वं तं दुनोति—'जे न मित्र दुख होंहिं दुखारी तिन्हहिं विलोकत पातक भारी॥' ( तत्रैव ) सः साधुजनावज्ञा-कारिणं समाजं सावधानं करोति —'साधु अवग्या तुरत भवानी। कर कल्यान

अखिल कै हानी ॥' ( सुन्दरकाण्डे ) तस्मिन् काले प्रायेण धार्मिका धार्मिका नासन् उपदेशका उपदेशका नासन्; ते दम्भिन श्छलकपटरता आसन्; न ते भगवदुन्मुखा वभुवुः; तद्धेतोः समाजो भद्रं न द्रष्टुमशकत् ते स्वयमपि अशान्ता अवलोक्यन्त स उपदिशति—'वेद पुरान जासु जसु गायो। राम विमुख काहुं न सुख पायो ॥' (लङ्काकाण्डे) परशासनाद् देशो दिनानुदिनं दरिद्रतां गच्छन्नदृश्यत तस्माद् दुःखितः सन् स जनतां दारिद्रयकारणभूतां दुःस्थितिं नाशयितुं ब्रूते—

'नहिं दरिद्रसम दुख जग माहीं' ॥ (उत्तर काण्डे)

गो. तुलसीदासोऽभिधामवलम्ब्य जनतां राम कथां श्रावयति परं व्यञ्जनां संश्रित्य, मन्ये, स सर्वानपि स्वकीयदेशवासिनः, स्वदेश सेवा पराः किञ्च स्वधर्मपरायणा भवितु, मुपदिशति। सोऽन्यायपरं शासन मुन्मूलयितुं परतन्त्रता-श्रृंखलां च छेत्तुं सर्वानपि स्वदेश निवासिनः परमचातुर्येण प्रेरयति।

गो. तुलसीदास एकतस्तु स्वकीयान् रामायणादिग्रन्थान् प्रणीय तद्द्वारेण रामकथां लोकमङ्गलकारिणीं श्रावयति, किञ्च वेदधर्मशास्त्रपुराणादिषु उपपादितं गीतञ्च ज्ञानं कर्म ईश्वरप्रेम च प्रतिपादयत्येकतश्च सः स्वराष्ट्रस्य मानवान् राष्ट्र भक्तान् कर्तुमिच्छन् तान् सर्वान् प्रति स तं मार्गं निर्दिशति यं मार्गमवलम्ब्य देशस्य पराधीनता विनष्टा किञ्च अन्यायपरं शासनं समाप्तं भवितु मर्हतः।

जातो महात्मा तुलसीव कुत्र, भक्तः कविर्धर्मभृतां ललामं।
प्रणीय रामायणधर्मशास्त्रं ररक्ष धर्मं भरतक्षितेर्यः॥



# सूरदासः

सगुणोपासनायां कृष्णभक्तिशाखायां सञ्जातेषु कविषु सूरदासोऽस्त्युत्कृष्टतमः कविः। श्री वल्लभाचार्य-पुत्रेण श्री विट्ठलनाथेन 'अष्टछाप' इत्येतेन नाम्ना येषां कृष्ण भक्ताना मष्टानां कवीनां संगठन मनुष्ठितम् तेषु स एव मूर्धन्यं स्थान मध्यास्ते। सूरदासः, नन्ददासः, परमानन्ददासः, कृष्णदासः, कुम्भनदासः, चतुर्भुजदासः, छीतस्वामी गोविन्द स्वामी' इत्येत न्नामधेयै र्ख्याताना मष्टानां नवानां समुदायः 'अष्टछाप' इत्यभिधीयते। ग्रहेषु सूर्य इव सूरो (सूरदासः) ऽपि कविषु सूर्यः अतः 'सूर सूर तुलसी शशी ...'इत्येषोक्तिरस्ति सुविदिता हिन्दीसाहित्यसंसारे।

सूरदासेन कृष्णलीलाया मधुराणि पदानि गीतानि सन्ति। तत्र सङ्गीतमयी प्रेमधारा सान्द्रेण रयेण प्रवहति। यो हि जन स्तस्यां निमज्जति तस्य स्वान्तं सञ्जायते परमानन्द निमग्नम्। तेन कृष्णभक्तेन कविवरेण्येन यो हि 'सूरसागर' इत्येतत्संज्ञको ग्रन्थो विरचितो वस्तुतस्तु सोऽस्ति हिन्दीसाहित्यस्याक्षयो निधिः। तत्र विनय-बाललीला-गोवारण-गोपीप्रेम-भ्रमरगीतादि विविध बन्धुर विषय सम्बन्धीनि परभाभिरामाणि मञ्जुल मञ्जुलतराणि हृदयहारीणि सूक्ष्म सूक्ष्माणि भावचित्राणि संशोभन्ते। सर्वत्रैव तत्र काव्यस्य कमनीया विशिष्टताः सुमुञ्जुलाः गुणा राजन्ते। गीतात्मकत्वात् तस्य, तदतितरां मधुरं संवृत्त मस्ति। उत्प्रेक्षोपमास्त्रभावोक्त्यतिशयोक्तिरूपकादिकाना मलङ्काराणां नितरां दिव्यामेवाभामादाय समुद्द्योतते द्युतिः। रसस्तु शृङ्गारः सचेतसां चेतांसि प्रीणात्येव; वात्सल्यं भक्तिश्च रसतां तत्र गत्वा भावुकानां मनांसि भृशं नन्दयतः। लाक्षणिकानि व्यञ्जकानि पदानि लक्ष्याणि व्यङ्‌ग्यानि च अर्थकुलानि स्वकीयया अनिर्वचनीयया श्रिया समग्रमपि काव्यं विभासयन्ति। भ्रमरगीता दिषु समुच्छलन्तो ध्वनयोऽनुपदं सहृदयान् काव्यानुरागान् भक्तप्रवरान् अतितरां प्रीणयन्ति, रञ्जयन्ति च। निः संशयं सूरसागरोऽनूपमं महनीयं काव्यम्। सूरसागर मेव न, साहित्यलहरीं, सः सूरसारावलीञ्च प्रणिनाय। केचन वुधा एतयोर्द्वयो रपि रचनयोः सूरकर्तृत्वे सन्दिहन्ति। भवतु नाम, सूरसागरसंज्ञिका तदीयैकैव कृति स्तस्यामरयशः–प्रसारणेऽस्ति पर्याप्ता।

सूरदासोऽष्टसप्तत्यधिकचतुर्दशशततमेशवीयाब्दे मथुरामण्डलान्तर्गते 'रुन-

कता' ग्रामे प्रादुर्बभूव । बाल्यादेव स निवृत्युन्मुखहृदय आसीत् । भगवच्चरणवन्दनार्थे विनयात्मकानि पदानि गायं गायमात्मानं जनताञ्च रञ्जयन्नवालोकि । एकदा स आचार्यं वल्लभं पदमेकमशिश्रवत् तन्निशम्य आचार्य वल्लभस्तं कृष्ण लीलां गातु मनूनुदत् । तमसौ श्रीकृष्ण लीलां गातुं गोवर्धन गिरिस्थित श्रीनाथ मन्दिरे न्ययूयुजत् । आचार्यस्य शिष्यो भूत्वा सः स्वकीयं समग्र मपि जीवनं श्रीकृष्ण लीलागानेऽनीनयत् ।

सूरदासेन श्रीकृष्णस्य बाललीलाः परमविशदतया मनोऽभिरामेण च प्रकारेण वर्णिताः सन्ति । वालजीवनस्य कोऽपि पक्षो नेदृग् यत्र न सूरस्य दृष्टिः स्यान्निपतिता । तस्मादेव कारणात् तदीयमस्ति वालवर्णनम् विश्वसाहित्यस्यामरसम्पत् । इह बाल लीला परकं पदं निधीयते—

जसुदा कहँ लौं कीजै कानि ।
दिन प्रति कैसे सही परति है, दूध-दही की हानि ।
अपने या बालक की करनी, जौ तुम देखौ आनि ।
गोरस खाइ, खवावै लरिकनि, भाजत भाजन भानि ।
मैं अपने मंदिर के कोनें, राख्यौ माखन छानि ।
सोई जाइ तिहारैं ढोटा, लीन्हौं है पहिचानि ।
बूझि ग्वालि निज गृह मैं आयो, नैंकु न संका मानि ।
सूर स्याम यह उतर बनायौ, चींटी काढ़त पानि ।।

अन्यच्चैकं प्रस्तूयते—

साँवरेहिं बरजति क्यौं जु नहीं ।
कहा कहौं दिन प्रति की बातें, नाहिन परति सही ।
माखन खात, दूध लै डारत, लेपत देह दही ।
ता पाछै घरहू के लरकिन, भाजत छिरकि मही ।
जो कछु धरहिं दुराइ, दूरि लै, जानत ताहि तहीं ।
सुनहु महरि तेरे या सुत सौं, हम पचि हारि रहीं ।
चोरी अधिक चतुराई सीखी जाइ न कथा कही ।
ता पर सूर बछुरवनि ढीलत, बन-बन फिरति वही ।।

विनय सम्बन्धीनि पदानि मनसो मलिनता मपनयन्ति । तानि श्रुत्वा पठित्वा च ईर्ष्याद्वेषलोभकलहादि दोषा दूरीभवन्ति । मनः पावन भूत्वा भगवच्चरणयोः प्रीतिं भवितञ्च निबध्नाति । तत् तेषु विनय-पदेषु किमप्यनिर्वचनीयं सुख मासाद्य शान्ति विन्दति । तत्रत्यं माधुर्य्यं निपीय तत्, तन्माधुर्यजनितं सुखं वक्तुं न प्रभवति ।

स्वयमेवानुभवत्यन्तर्गतं तत्सुखम् । आगम्यतां गीयताञ्च—

चरन -कमल बंदौं हरि राइ ।
जाकी कृपा पंगु गिर लंघैं, अंधे कौं सब कछु दरसाइ ।
बहिरौ सुनै, गूँग पुनि बोलै, रङ्क चलै सिर छत्र धराइ ।
सूरदास स्वामी करुनामय, बार-बार बंदौं तिहिं पाइ ॥

तद्विरचितं पदमेकं संस्कृतगिरायामनूद्यात्रोपस्थाप्यते—

अह मिव कः कुटिलः खलकामी ।
येन हि दत्तो नरदेहः, सोऽपि न ध्यातः स्वामी ।
जठरं पूर्त्वा सततं विहरे, विषयेष्विव शूकर कामी ।
हरि भक्तान् हित्वा हरिविमुखान् सेवेऽनिशमघगामी ।
अधमस्य कृते क्व स्थानं हा, शृणु देव प्रणमामि ॥

श्रीकृष्णः सर्वस्वमेव गोपीनां बभूव । ता अनुक्षणं तं स्वरन्त्यो भजन्त्यो ध्यायन्त्यो गृह-कर्माण्यनुतिष्ठन्ति स्म । तं विना ताः स्थातुं न प्रबभूवुः । तं ताः स्व मातृ-पितृ-बन्धुभर्तृ मित्रत्वेन मेनिरे । यदापि ताः सद्मकार्यकलापेभ्योऽवकाश मलभन्त तद्दर्शनाय जग्मुः । तस्मिंस्तासां वात्सल्य मनन्त मासीत् । बाल्याद् यां कामपि गुरु गुरुतरां हानिं स विदधौ तास्तां प्रीत्यैव सेहिरे । मनसा न ताः कदापि तस्मिन् संरम्भं निदधु र्बाह्यत एव तम्प्रति प्रादीदृशन् मन्युम् । वस्तुत स्तस्मिंस्तासां प्रेमोत्कृष्टतम मासीत् । तत्प्रेम सर्वविधान्यप्यन्यानि प्रेमाणि जिगाय । नवविधासु भक्तिषु तदङ्गीकृता भक्ति रासीच्छ्रेष्ठा भक्तिः । ताः सर्वविधतयाऽऽत्मानं तच्चरणयोः समर्पयाम्बभूवुः । यदा हि मथुरातः श्रीकृष्णः स्वसन्देशहरं विधाय उद्धवं तासां सकाशे प्रेषयामास तदा ता गोप्य उद्धवम्प्रति स्वकीयान् यान् हृद्गतान् भावानभि व्याञ्जुस्ते भावाः सूरदासेन भ्रमरगीताभिधे पदसमुच्चये निहिताः सन्ति । तेभ्यो गोपीनां कृष्णभक्ते र्दिग्दर्शनं सम्यग् भवति । अहो तासां भक्तिः सर्वथैव स्पृहणीयानुकरणीया च वर्तते । यो जन स्तां भक्ति माहरिष्यत् सोऽवश्य मेवास्माद् भवसागरादुद्धृतोऽभविष्यत् । इहेदानीं पदद्वय मुपस्थाप्यते—

ऊधौ मन न भए दस बीस ।
एक हुतौ सो गयौ स्याम सँग को अवराधै ईस ।
इन्द्री सिथिल भईं केसव, बिनु ज्यौं देही बिनु सीस ।
आसा लागि रहति तन स्वासा, जीवहिं कोटि बरीस ।

तुम तौ सखा स्याम सुन्दर के, सकल जोग के ईस ।
सूर हमारे नंद नन्दन विनु, और नहीं जगदीश ।।

निरगुन कौन देस को वासी ?
मधुकर कहि समुझाइ सौंह दै, बूझति साँच न हाँसी ।
को है जनक,, कौन है जननी, कौन नारि, को दासी ?
कैसे बरन भेष है कैसौ, किहिं रस मैं अभिलासी ?
पावैगो पुनि कियो आपनौ, जो रे करैगौ गाँसी ।
सुनत मौन ह्वै रह्यौ बावरौ, सूर सबै मति नासी ।।

सूरदासस्य कृतिः—सूरसागरः—या वहुलाः श्लाघनीया विशिष्टताः निदधाति तासु तन्मयतास्ति उत्कृष्टतमा विशिष्टता । यमपि प्रसंगमसौवर्णयति तत्र भावुकं जनवृन्दं स करोति आत्म निलीनम् । निर्वलस्य बलं राम एव । सङ्कटे स एव सतां साहाय्यकृद् भवति; स एव तेषां कार्याणि नानाविधि क्रूरावर्तेभ्यो रक्षति । गजं ग्राहाद् द्रुपदसुतां दुःशासनाच्च स एव जुगोप····इत्येतदादिकान् भावान् प्रदर्शयितुं यद् दैन्यमभिव्यनक्ति तद् येषु नाना पदेषु उपन्यस्यति स्म तेष्विहैकमेव निधीयते:—

सुने री मैंने निरवल के बल राम ।
पिछली साख भरूँ संतन की, अड़े सँवारे काम ।।
जव लगि गज बल अपनो वरत्यो,नेक सरचो नहि काम ।
निरवल ह्वै बल राम पुकारचो, आये आधे नाम ।।
द्रुपद-सुता निरवल भइ ता दिन, तजि आये निजधाम ।
दुस्सासन की भुजा थकित भई, वसन रूप भये स्याम ।।
अप बल तप-बल और वाहु बल चौथो है बल दाम ।
सूर किसोर-कृपा तें सब बल, हारे को हरि नाम ।।

सूरदासः पुरुषोत्तमस्य कृष्णस्य ब्रजलीलाः एव बाहुल्येन वैशद्येन च गायति स्म । महाभारतस्य राजनीतिज्ञं योगिराजं श्रीकृष्णं स न प्रचुरतया वर्णयति स्म । अस्ति तद्विषयिका स्तद्गीतयोऽल्पीयस्यः । अत्रैका गीति स्तत्रत्या समुपस्थाप्यते—

आजु जो हरिहिं न सस्त्र गहाऊँ ।
तो लाजौं गंगा जननी को, सांतनु- सुत न कहाऊँ ।।
स्यंदन खंडि महारथ खंडौ, कपिध्वज सहित डुलाऊँ ।

इती न करौं सपथ मोंहिं हरि की, छत्रिय गतिहिं न पाऊँ ।।
पाण्डव दल सनमुख ह्वै धाऊँ, सरिता रुधिर बहाऊँ ।
सूरदास रन भूमि विजय विनु, यजित न पीठ दिखाऊँ ।।

सूरदासस्य कविता व्रज भाषायां विंभाति । माधुर्यं , व्यंग्यं, वक्रोक्तिः, वाग् विदग्धता तस्या भाषायाः सन्तिः काश्चन विचित्राश्छवयः ।

यां पद शैलीं सः स्वीचकार सा साम्प्रतमपि हिन्दी-कवयोऽनेकेऽभ्युपगच्छन्तः प्राप्यन्ते ।

१५८३ तमेशबीयाब्दे सूरदासो हि महाकवि र्व्रजभाषायाः, पारसौली ग्रामे उपरेमे ।

श्रीकृष्ण चन्द्र चरणाम्बुज चञ्चरीको,
हिन्दीजगद्रविमहाकविसूरदासः
भक्ति बभाज सखिभावमयीं सुधी यां,
नौः सास्ति भीषणभवं जलधिं तरीतुम् ।।



# स्वामी विवेकानन्दः

यदा भारतीयसंस्कृति-सप्तसप्ति वैदेशिकत्ववियद् व्याप्त विचार वलाहकैरावृत आसीत्, यदा भारताचारवटविटपमुन्मूलयितुं प्रतीच्यता-प्रचण्ड वात्या प्रयतमानासीत् यदा मनु-व्यास-जनकादिकानां वसुमती माविलीकर्तुं कुरीति-कर्दभः प्रसभं चेष्टमान आसीत्, यदा भारतमाता पारतन्त्र्यान्दुकनिबद्धत्वात् सशोकं श्वासान् गृह्णन्त्यासीत् तदा कलिकातायां कालीमातृ मन्दिरे कालीं भक्ति प्रवणहृदयेन भजमानो रामकृष्ण परमहंसः 'अम्ब, त्रायस्व, निपात्यते एषा भारतीयता; पाहि पाहि त्वमेता मित्येतदु च्चैस्तरां प्रार्थयन्निखिलेनापि विश्वेन पर्यवालोक्यत। एकस्मिन्नहनि यदैव सः मातरं कालीं समुपास्योदतिष्ठत् तदैव पुरस्तेन ऐक्ष्यत कश्चिन्नरेन्द्रो नाम स नवतरुणो, यः कालान्तरेण जगति 'विवेकानन्द' इत्येतया संज्ञया व्यश्रूयत।

देशस्य शोचनीय पतनं रामकृष्णस्य हृदय मनुक्षण मदुनोत्। सः स्वदेशं पतनार्णवादुद्धर्तुं मत्यन्तोत्सुकोऽवाप्यत। सः कस्यचन पौरुषदिव्योपपन्नस्य प्रतिभातेजोभृतोऽसीममनस्विता विभूषितस्य तरुण केसरिणोऽन्वेषणे दत्तचित्त आसीत् यः सकलेऽपि संसारे भारतीयतागरिमाणं विकीर्य्य पुनः स्वान्तेषु भारतौकसां भारतनिष्ठं बलीयांसं भक्तिभावं संधुक्षेत्। स मातृकालीकृपावाप्तज्योतिषा तदागतं युवानं स्वाभिलाष पूरणपटीयांस मवगम्य तमुरसिवात्सल्येन प्रगाढेन परिषस्वजे। परिदेवयन्नसौ तम् 'अवाप्तो मया स यन्मार्गण मह मेतावतानेहसान्वतिष्ठम्; अयि प्रियवत्स, त्वं भारतीयतां पतन कर्दमादुद् धर, समग्रमपि संसारं विश्वजनीनभारतीयधर्मालोकेन पुनः प्रकाशय। तव जननी त्वा माह्वयति; त्वं ता माश्वासय; मातृसेवातोऽन्यत्र मात्मानं त्वं नैषीः; भारतीय श्रुति स्मृति शास्त्राणां महिम्नोऽवबोधनाय त्वमात्मानं प्रवर्तयें' त्येतत्कामये इति शशंस। नरेन्द्रो महात्मनो रामकृष्णस्य तं विचित्र मादेशं निशम्य चिन्तां प्रपेदे सः सत्वरं तन्मन्दिरात् तूष्णीं निरगमत्।

नरेन्द्रो गुणरसवसुक्षितीशवीयसम्वत्सरे वङ्गेषु समुदपद्यत। तस्य पिता ईसामसीहधर्मेऽभिरुचि प्रतीच्यायाञ्च सभ्यतायां रतिं निदधौ। धर्मग्रन्थेषु बाइबिलं नाम ग्रन्थं सः श्रेष्ठ ममंस्त। सः स्वसुतमपि प्रतीच्यतायामेव परिवर्तयितुं प्रायतिष्ट।

कालेजे नरेन्द्रश्छात्रेषु श्रेष्ठश्छात्र आसीत्। छात्रजीवन एव सः विविधासु विद्यासु धियं निवबन्ध। कस्मिंश्चिज्ज्वलायतौ यूनि ये गुणा आकाङ्क्ष्यन्ते ते भूयिष्ठा

स्तस्मिन् मनोमतिनयनाभिरामे निवसन्तोऽवालोकिषत । स विद्यासु विदग्धतां, खेलासु कोविदतां, कलासु कुशलतां, तरणे प्रवीणतां, तुरङ्गारोहणे च विशारदतां न्यदधात् । दर्शनेषु तस्य मेधाद्भुतमेव पाण्डित्यं प्राप्य पर्यस्पन्दत । कवितायां कमप्यनिर्वचनीयं कौशलं परिगृह्य स दिदीपे । पश्चिमीयेषु दर्शनेषु विस्मयावहं तस्य पारदृश्वत्त्वमभूत् । हर्वर्टस्पेन्सरस्य जॉनस्टुअर्ट मिलस्य च दार्शनिक विचारधारायां तस्य वैचक्षण्य मुपश्लोकनीय मासीत् । शैले वड्र्सवर्थश्च तस्य प्रियतरौ कवी बभूवतुः । तदीया आचार्या स्तस्य प्रतिभायां, तस्य वाग्मितायां, तस्य विद्वत्तायां, तस्याश्चर्यकारिण्यां तस्यां तस्यां विशिष्टताया मभिज्ञतां गता आसन् । तस्य प्रधानाचार्यः श्री हेस्ट्री तं प्रतिभापेशल युवतिलक मेकदा 'नरेन्द्रनाथो हि वस्तुतोऽस्ति प्रतिभावांश्छात्रः । दवीयसि दूरिष्ठे च देशान्तरे पर्यटन मकरवं परं तादृशं प्रबुद्धं बंद्यव्युत्पत्तिविभूषितं शास्त्राबाधगतिकं विद्याप्रियं स्नातकं कमपि नापश्यम् । जर्मन विश्वविद्यालयस्य दर्शनाध्येतृष्वपि तद्विधो न कोऽपिच्छात्रो मद्दृष्टि मार्गमध्यारूढ' इत्येतदादिवाक्यावलीभि र्भृशमश्लाघत ।

इदं हि कियद् रुचिरं प्रीतिप्रदञ्च वृत्तं यद् हेस्ट्री विद्वज्जगद्विश्रुतादांग्लात् स नरेन्द्रः परमहंस रामकृष्णस्य प्रथमं परिचयं प्राप । सुधीसत्तम हेस्ट्री कविवरस्य वड्स्वर्थस्य कवितामेकां व्याचक्षाणो हि यदा तत्कवेः सद्गुणान् अगृणात् तदा ते गुणा महात्मानं रामकृष्णं तत्स्मृति सरणि मध्यारूरुहन् । स दक्षिणेश्वरस्य परमहंसं रामकृष्णं द्रष्टुं नरेन्द्र मनूनुदत् । सोऽपि तदनुज्ञां ववन्दे । प्राप्य रामकृष्णस्य दिव्यं दर्शनं स नरेन्द्र आत्मानं कृतार्थं तज्जितञ्चावागमत् । तस्य परमहंसस्य प्रथमैव दृष्टि र्नरेन्द्रस्य समग्रमपि जीवनं कृत्स्नतया पर्यवीवृतत् । भारतीयताया इतिहासो नव मेवैकाध्याय मधिगम्यानुगृहीतो बभूव । रामकृष्णस्य दर्शनात् प्राङ् नरेन्द्रः स्वधियं ब्रह्मसमाजेऽयूयुजत् । परं ततस्तस्येश्वरानुभूति विषयिका जिज्ञासा नाशाम्यत् । स नैजाभीप्सितं महात्मनो रामकृष्णस्य पुरो निधित्सु स्तमाह 'महात्मन्, अपि भवता परमेश्वरो दृष्टः ? स महात्मा तमामनत्—तमहं तथैव निभालयामि यथा त्वामिहासीनम् । ततस्तं नरेन्द्रः पप्रच्छ 'अपिकिमीश्वरोऽनुभूतो भवितु मर्हति ? कश्चित् तं प्रेक्षितुं साकञ्च तेन संलपितुं तेनैव प्रकारेण क्षमो येन प्रकारेण त्वामहं प्रेक्षे त्वया च सार्धं संलपामि । स महात्मा निजगाद 'एतत् सर्वमपि भवितु मर्हति, परं कस्य चेतसि तद्दर्शनाकाङ्क्षा प्रदीप्यते ? को जनस्तेन समं संलिलपिषति ? मानवाः स्वपुत्र कलत्राणां कृतेऽश्रुधारां मुञ्चन्ति, ते विभवसम्पदैश्वर्याद्यर्थं परिदेवयन्ते । न खलु कोऽपि परमात्मनः कृते रोदिति न च तत्प्राप्त्यर्थं कस्यापि मनः कामयते । चेत् कश्चिन्मनसा तदर्थं रुद्याद् ध्रुवं स लभेत तम् । कथनमिदं नरेन्द्रस्यान्तः करणे दृढीयांसं प्रभावं प्राक्षिपत् । तदीयोऽसौ प्रत्नः प्रश्नस्तत्क्षण एव समाहितोऽभवत् । यदा च भूयः

स तन्महात्मनो दर्शनाय अव्राजीत् तदा स तस्मिन् महात्मनि विचित्रा आध्यात्मिकीः शक्तीः पर्यवलोकयितु मनेहसं शुभमध्यगमत् ।

परमेश्वरभक्तप्रवरस्य परमहंस रामकृष्णस्य तपोऽर्जितं तेज स्तदीयं च भागवतं वर्चस्तदीयाश्च मङ्गलवर्षिण्यः शुभाशिषस्तं भारतीयसंस्कृतिप्रेममयं भारतीयाचार चारुतामयं भारतीयसभ्यतानुरागमयं भारतीयभावनाविभामयं भगवदनुभूति परमसुख पदशान्तिसुषमामयं साधुता ज्योतिर्मयं सरलता समुद्दीप्तालौकिकरमामयम् आनन्दोल्लासलोलोत्तुङ्गतरङ्गमयम् अजेयतेजस्वितोद्योतविलासमयं महामहिमज्ञानगौरवमयञ्च चक्रुः । स युवशिरोमणि स्तदीयतपसस्तदनन्यगायाः परमात्मभक्ते रूपहसित मन्त्रौषधिप्रभृतिसामर्थ्यजुषः कल्मषध्वंसनपाटवभृतः प्रभावाच्च तदीयात् संसारस्य सुविदितो महापुरुषो महोपदेष्टा च सञ्जातः । भूत्वा च सः स्वामी विवेकानन्दोऽल्पीयस्येव चत्वारिंशत्तमाब्ददेशीयवयसि घटितात् स्वोपरामात् प्रागेव लक्षेभ्योऽप्यधिकानां प्राच्यानामप्राच्यानां च मानवानां मानसेषु भारतीयदर्शनदर्शितपथावलम्बनमन्तरेण न कदापि जगच्छान्ति मधिगन्तु मर्हतीत्येतां तथ्यताभागीरथीं प्रावीवहत् ।

आसीत् सः प्रसन्नप्रकृतिर्न्यक्कृतनिकृति र्विहतविकृतिः परपरीवादपराचीन चेतोवृत्ति र्धीर धिषणो विधूताध्येषणो धीमतां वरेण्यो विवेकानन्दः । सः स्वकीयेन मृदुलेन स्वभावेन समग्रग्रन्थार्थग्रन्थिसमुद्घाटन निपुणवैदुष्येण प्रणयिप्रणतभावेन सकलशाखान्तरसंशीतिनिवारणदक्षचातुर्येण विदग्धपरिहासाभिज्ञवैशारद्येन साधारणानामपि स्वान्तेषु सौहृदं जनयामास ।

षडशीत्यधिकाष्टादशशततमेशवीयवर्षे महात्मा रामकृष्णो ब्रह्मणि व्यलीयत । सम्प्रति स्वगुरोः प्राप्तायाः शिक्षायाः सर्वस्मिन्नपि संसारे प्रसारणं, तद्दत्तज्ञानालोकेन जगति तमसोऽपनयनं, तज्जीवनस्य महनीयतायाः सर्वेषा मपि पुरः प्रतिष्ठापनं स्वामिनो विवेकानन्दस्याग्रे महान्ति महान्ति करणीयानि कार्याण्यवशिष्यन्ते स्म । स तेषां कार्याणां पूर्त्यर्थं तपोऽनुतस्थौ, योगसाधनाञ्चकार, सर्वाणि च तानि कष्टानि सेहे येषां सहनं विधाय सञ्जायते जीवन-निर्माणम् । स युवा संन्यासी प्रायेण वर्षाणि पञ्च निखिलेऽपि भारते विचचार । तस्मिन् परिभ्रमणेऽसकृत् क्षुधाजनिता मसह्यां पीडा मसहत । गहनेषु कान्तारेषु, विशालेषु ऊषरेषु, उच्चोच्चतरेषु शिखरिणां शिखरेषु, वलक्ष वारिप्रवाहवतीनां स्रोतस्विनीनां विस्तृतेषु परिसरेषु च सञ्चरन् स तपस्विवन्दनीयो नानाविधा दुस्तरा आपदः प्राप । तास्तदीयं जीवनं निनिंजुः । कदाप्यसौ तरुणतपस्वी कस्यचन ग्रामस्य गृहस्थानां द्वारे द्वारे भिक्षार्थ मचरत्; कदापि कस्यचन नराधिपस्य राजप्रासादे आतिथ्यं स्वीचकारः; कदापि स जीर्णशीर्ण मृन्मय सदनेषु कठोरतर दारिद्र्यजनितदुःखानि सहमानेषु जनेष्वश्रूण्यमुञ्चत्; कदापि च राजसौधेषु सर्व-

विधानि सुखानि नानाविधान् विलासान् विभ्रमांश्चोपभुञ्जानान् ददर्श। सः स्वस्य देशस्य शोचनीयं निपातं विलोकयामास; अज्ञासीच्च तत्कारणं तदीयां च कृत्स्नतयाव स्थितिम्। नैजस्य राष्ट्रस्य सर्वा रीतीः, पद्धतीः, आचारान् विचारांश्च सम्यक् सोऽध्यगीष्ट। सः स्वदेशवासिनां शक्ति तेषां दुर्बलत्वञ्च समीचीनतयाधिजगे। स बहुविधानां प्रभूतानां महतां नवनवानां चानुभवानां स्तोमं समचिनोत्। तस्योपयोगमसौ तदानुतस्थौ यदा स आचार्यत्वेणोपदेष्टृत्वेण संसारसंस्कर्तृत्वेण च जगतो गुरुगुरुतराणां राष्ट्राणां पुरः स्वकीयेषु लोकपावनकारिषु लोकोत्तरज्ञानप्रभाविद्योत्यमानेषु भाषणेषु भव्यभव्यतरान् भावानुद्भावयामास।

स्वामी विवेकानन्दः स्वकीयेन हृद्येनावस्थानेन सृष्टिं चन्द्रमयीमिव, जीवलोक मानन्दमयमिव, अनुरागमयमिव च चकार प्राणिनां समवायम्। सात्विकभावस्य राज्य मिव प्रवर्तयन्त माकर्षणाञ्जन मिव लोचनयोः, वशीकरणमन्त्र मिव मनसः, असन्तोष मिव कौतुकस्य, सिद्ध योगमिव सौभाग्यस्य, रसायनमिव तारुण्यस्य, एकराज्य मिव रामणीयकस्य, पुण्यकर्मपरिणाम मिव संसारस्य, यशः प्रवाहमिव वैदग्ध्यस्य तमवलोक्य अखिलैव जगती धन्या बभूव।

भारतस्य हि शिलाभूतान्त्यस्थण्डिल सीमाप्रदेशासीनमन्दिर मध्यास्य स भारतमातुः प्रियः पुत्रः स्वदेशस्यातीतं गौरवं विलीनतां गतं, सौन्दर्यं शुष्कता भुपेतं, परिहृताञ्च तदीयां श्रियं पुनः आहर्तुं गम्भीरतया मम्नौ, स्वगुरो रामकृष्णस्य तानुपदेशान् सस्मार येषु स उपादिश्यत। सः स्वदेशस्य जनताया अज्ञानं हरेत्; अज्ञानादेव तदीयदेशस्य कोटिशो जनाश्चिन्तनीयानि हृदयकम्पनकारीणि कष्टानि विन्दन्ति अतः स तथा यतेत यथा तेषां तानि दुःखानि नश्येयुः; ग्रामं ग्रामं प्रयाय स तत्र शिक्षा ज्योति विकिरेत्, स आचाण्डालब्राह्मणानां स्थितिं सुखसमृद्धिमतीं विदध्यात्, बुभुक्षिता जना न कमपि धर्मं गोपायितुं प्रभवन्ति तस्मादसौ नृणां दैन्यं दूरीकर्तुं प्रयस्येत् स देशस्य कुत्सिता रीती निन्द्याश्च प्रथाः उन्मूल्य देशमापादचूडं पुनीयात्; स तथा चेष्टेत यथा देशः पुनः ऐक्यसूत्रनिबद्धः संगठितो बलवांश्च स्यादित्येतद् गुरुस्तस्य तमुपदिदेश।

स्वामी विवेकानन्दो नैजगुरोः आकाङ्क्षायाः अपचित्यर्थमा जीवनं प्रायतत। सः ३१·५·१८९३ तम दिनाङ्के मुम्बईतो विश्वधर्मसम्मेलनं सम्भावयितुं चिकागों प्रतस्थे। तद्धर्मसम्मेलनं तस्य महादार्शनिकस्य भारतीयस्य परिव्राजो भाषणं निशम्य मन्त्रमुग्ध मजायत। स विश्वस्य तत् तद्धर्मावलम्बिनां मानसेषु भारतीयं धर्मं प्रति प्रगाढां श्रद्धा मजीजनत्। सर्वेऽपिधर्मा ईश्वरप्राप्तेः सन्ति पन्थानः; भारतीयो धर्मो न कस्मिन्नपि धर्मे द्वेष्टि, सः सकलेष्वपि तेषु तेषु सम्प्रदायेषु न जुगुप्सते, सः कामयते

'आनो भद्राः क्रतवो यन्तु विश्वतः' इति । अहं तु तं देशमधिवसामि यो देशो विश्वस्य सर्वेषामपि राष्ट्राणां ताँस्तान् भावान् विचारान् विश्वासांश्च अनवरतं सहृदयतया गोपायाञ्चकार । अहमाशासे यदद्यतने प्रत्यूषे सभा मिमां सभाजयितुं घण्टारावो यः सञ्जातः सः करवालेन लेखनीनिवहेन च क्षिप्तानां निस्त्रिंशानां, मानवेषु विकीर्णस्य च द्वैधीभावस्य निरसने सम्मार्जने च प्रभविष्णुर्भवेत् विश्वनिवासिनां समवाये च समन्वयतां समञ्जसताञ्च समुत्पाद्य तत्र सुदृढं सौहृदं सृजेत् ।

योगीन्द्रः स वहुधा बभाण प्राच्यां श्रूयमाणं विकारक्रन्दनं धर्माभावान्न समुत्पन्नमस्ति, तत्त्वन्धसो राहित्यादुत्तिष्ठति । जना याचन्त्यन्नं वयं तेषां कृते तन्न प्रदाय तेषु लोष्ठानि अस्यामः ।

विवेकानन्दस्य व्याख्यानानि देशान्तरेषु भारतीयस्य धर्मस्य महनीयतां श्रेष्ठतां जित्वरताञ्च प्रमाणीकृत्य भारतीयसंस्कृतिपताका मुच्चैस्तरा मुदधूनयन् । तस्य चरणचिह्नानि साम्प्रत मप्यमेरिकादिदेशान्तरेषु चकासति ।

स्वामि विवेकानन्दस्य व्यक्तित्व मपि नितान्तं नयनाभिरामं हृदयहारि चा-वर्तत । यश्च कोऽपि तं ददर्श, तस्य सुधामानावमानिवाणी-वेणुं शुश्राव स तं गोपाङ्ग नाः कृष्णमिवानुगच्छन्नेवादृश्यत ।

नूनं विवेकानन्दो मानवतां पातुं मानवे च न्यायं व्यवहर्तुं यत्कार्य मकार्षीत् तत्कदापि जगतीयं न विस्मरिष्यति ।

जज्ञे कुत्र धरातले यति विवेकानान्दधीमानिव
धर्मं संस्कृति सभ्यते स विशदं व्याख्याय विद्वत्तया
देशस्यास्य च शास्त्रशुद्धधिषणो वेदान्त विद्याम्वुधिः
सः श्रेयोऽमृतवर्षिणीं व्यतनुत क्षोण्यां समज्ञां भृशम् ॥

—×—

# श्री रामकृष्ण परमहंसः

अस्मिन् आधुनिकेहि भारते जातेषु धार्मिकेष्वान्दोलनेषु तादृशमेकमप्यान्दोलनं न घटते स्म यादृशं श्री रामकृष्ण परमहंसेन तदीयेन च शिष्येण विवेकानन्देन प्रवर्तित मान्दोलनम्। अतीतस्य गौरवस्य संरक्षकत्वात्, आगमिष्यतोऽनेहसः समृद्धसमुज्ज्वल पथदर्शकत्वाद् राष्ट्रिय-चेतनाबीजवपनकारित्वाद् विश्वजनीनदृष्ट्युन्मीलननिहिताभिनिवेशत्वाच्च रामकृष्णमहात्मायोजितमान्दोलनं सर्वाण्यप्यन्यान्यान्दोलनान्यधरीकृत्य पर्यस्पन्दत। तस्मात्कारणात् परमहंस रामकृष्ण एव भारतीयधर्मभावनायाः परमार्थतया प्रतिनिधित्वाय कल्पते। साम्प्रतिक्याः कलाकौशलकलिताया विद्यायाः प्रेरकवृत्तविन्दुत्वात् सः (रामकृष्ण परमहंसः) एव सा भूत्वा (आधुनिकी कला कौशल-विद्या भूत्वा। उदियायेत्येतद् चेदुक्तं स्यात् तदा सर्वथैव समुचितमेव मतं भवितु मर्हति तत्।

रामकृष्ण परमहंसस्य जीवनं कृत्स्नस्यापि भारतीयत्वस्य वैशिष्ट्य मात्मनि सन्निवेश्य वस्तुतो विजृम्भते अतस्तन्न कदापि केनापि जेतुं सुशकम्। तत्तु असामान्य मेव तेजः सर्वत्र विकिरद् देद्युतीति। स आसीद् ज्ञानवान् भक्तिमांश्च। तदर्थं मीश्वरः साकारो निराकारश्चोभयविध एव भूत्वा विभातिस्म। स यथा सदाचारपरिपोषणरत गार्हस्थ्य जीवनं नयति स्म तथैव स त्याग-योग निष्ठ संन्यासिनोऽपि जीवनं वहति स्म। आध्यात्मिकतायाः साम्राज्ये व्यक्तिगतानि रूपान्तराणि प्रति पर्याप्तं स्वातन्त्र्यप्रद-मवकाशं प्रददत् सः समलक्ष्यत। सः सर्वानपि वादान् मतानिच निखिलानि एकस्यै-वानोकहस्य शाखाः इव अवागमत्। तदीयं तदनुभवनं न केवलं बौद्धिकं साध्यमिव किं वा परम्परातः प्राप्तः सिद्धान्तः इवासीत्। भारतीयताया मुहम्मदाभिमताया भावनाया ईसामसीहेष्टधारणायाश्चाभ्यन्तरे प्रविश्य सः सत्यं स्वजीवनचर्य्यायामवतार्य प्रादीदृशत्। वस्तुतः श्री रामकृष्णो भारतीयतेतिहासेऽस्त्यन्यतमोऽतिद्वयोऽङ्कः। न सः शिक्षामानर्ज न च स विद्वानेवासीत् परं धर्मपरकोऽखिलोऽप्यनुभवो वा ज्ञानं, भारतीयानां शास्त्राणां मन्तव्यस्यावगमनं च तेन स्वकीयेन प्रकृष्टेन तपसैव संलब्धम्। तत्कृतं हि कठोरं तप एव 'स यद् वदति तत् कृत्स्नतया धर्मशास्त्राणि सकलानि अनुवर्तते' इत्येतत् तत्त्वं प्रकाशयितुं नूनं प्रमाणपत्र मिव समशोभत। योगाभ्यासः ईश्वरीयशक्तिः, निर्विकल्पकसमाधिः, ब्रह्मसाक्षात्कारः, सच्चिदानन्दश्चेत्येतानि पदानि न तम्प्रति पदान्येवासन् परं तद्विहितानुभूते र्गतित्वाय किं वा स्थितित्वायैवाकल्प्यन्त। तस्मिन्

आधुनिके महात्मनि काप्यद्भुतैव शिक्षा सम्बन्धिनी गम्भीरता ऋजुता चाराजेताम्। श्री रामकृष्णस्य सूक्तयो दार्शनिकैः किञ्च नवयुवभि रपि समीचीनतयाऽऽनन्दानुभूति-पूर्वकं पठितुं शक्यन्ते। तदुक्तेषु दृष्टान्तेषु तदभिहितासु वार्तासु च जनाः सम्यग् भारतीयधर्मस्य भारतीयाया मान्यतायाः भारतीयाना माचाराणां च आदर्शान् ज्ञातुं प्रभवन्ति। श्री रामकृष्णस्य जीवनं स्वातन्त्र्यश्रीसुसेवितपारमार्थिकसत्यस्य साकारं चेतोहरं चित्रमेवासीत्। तदीयजीवनसत्य ज्योतिषि भारत निवासिन स्तेऽपि ये सन्ति परमसामान्या अशक्ता दीना हीनाश्च, स्वमुद्धार मनायासेन कर्तुं शक्नुवन्ति किञ्च समाजाभ्युदयकाङ्क्षिणः सामाजिकान् दोषान् अपनीय समाजस्योत्थानकर्मण्यपि साफल्य मवाप्तुं प्रभवन्ति। तदीयजीवनसरितो वेगमये सुखशान्त्युदकमये समुज्ज्वल शुभप्रवाहे स्नात्वा समाजस्य स्वरूपं विगतविकारं भवितुमर्हति, पुरुषाः स्त्रियश्च स्वकीय मात्मबलं वर्धमितुमपि प्रभवन्ति। वयं प्रेक्षामहे यत् तदीयः शिष्यः स्वामी विवेकानन्द स्तथा पुनः पुनः प्रायतिष्ट यथा भारतस्य सन्ततयो भाविन्यश्च ता स्तद्दर्शित पथाधिरूढा भवितुं समुचितं साहाय्यं युक्तानि चोपकरणानि प्राप्तुं क्षमाः स्युः।

श्री रामकृष्णः प्रथमं 'गदाधर' इत्येतेन नाम्नाऽऽहूतोऽभूत्। संन्यासग्रहणात् प्राक् स उक्तयैव संज्ञया संज्ञापितोऽजायत। तदीयं जन्म वङ्गेषु हुगली मण्डलान्तर्गत कामारपुकुराख्य ग्रामे षट्त्रिंशदधिकाष्टादशशततमेशवीयाब्दे बभूव। यदाहि सः सप्तदशवर्षदेशीय आसीत् तदीयो ज्येष्ठो बन्धुस्तं कौटुम्बिककर्त्तव्येषु नियोजयितुं कलिकाता मनैषीत् परमचिरादेव स तं कलिकाता मुत्तरेण क्रोशद्वयदूरे दक्षिणेश्वर-गङ्गातटे रसमणिनामधेयया धनवत्या निर्मापिते कालीमन्दिरेऽधिष्ठातृपदे प्रतिष्ठ-पयामास।

तत्पदमधिष्ठिते सति तस्मिन्, तस्य जीवने सः काल आरब्धोऽभूद् यत्र काठिन्यानां प्रचण्डो भार आसीद् विद्यमानः। आध्यात्मिक्य उत्सुकताः वलीयांसश्च भिलाषा, मन्दिरकार्यभारग्रहणानन्तरमेव गृहीतप्रकर्षा भूत्वा समुत्पेदिरे। यः कोऽपिजन स्तस्य सकाशे उपेतस्तं सः 'परमेश्वर दर्शनार्थमपि कदापि त्वमरोदीः'? इति अप्राक्षीत्। भगवतः प्राप्त्यर्थमुग्रतरोऽभिलाषो हि तदनुभूति मात्ययिकतयाऽपेक्षते इत्यत्र स तद्दर्शनार्थं वा मातुः काल्या दर्शनाय यः कोऽपि तत्रागत स्तमपि किं भगवदर्थं त्वं कदापि अश्रुण्यमोचयः इत्येतदपृच्छत्। सः स्वयमेव भगवत्प्रेमाधिक्यवशात् तद्दर्शनाय असकृदरोदीदश्रूणि च भृशममोचयदत एव स आगतं जनं भगवद्भक्तं मत्वा तस्याग्रे ईदृशमेव पर्यनुयोगं निहितवान्। तस्य भक्ति रासीदवर्णनीयैव। रात्रौ यदावयं सर्वे स्वपिमः, स एकाक्येव वनमयासीत् तत्र सतत अनेकहोरा यायद् भगवद्-ध्यान एवात्मानं न्ययूयुजत्। सकलामेव निशां तद्ध्यानावस्थितत्वात् निरन्तरं तत्प्रेमवशात् कृतात् परिदेवनाच्च, प्रत्यूषे तदीये नयने शोथ युक्ते दृष्टेऽभूताम्।

परमेश्वरदर्शनस्याभिलाषो नितरां प्रकृष्ट स्तस्मिन् प्रज्वलति स्म किं वा परमेश्वर-प्रेम तस्मिन् अतितरां बलीयो भूत्वा प्रवहति स्म। अतः परमेश्वरस्य प्राप्त्यर्थं सोऽजस्रं द्वादश वर्षाणि कठोरं तपश्चकार। एतस्मिन् द्वादशवर्षव्यापिन्यनेहसि या अनुभूतीः सः प्राप तासामध्ययनं कस्य नाध्येतु र्मानसस्य मर्म्मभागं स्पृशति? परमात्मनो मार्गणाय तस्य प्रयासोऽतितरां तन्मयतापूर्णो भृशभक्तिभावभावितोऽत्यन्तमेवासक्तिमांश्च परिलक्षितोऽभवत्। प्रायेण सः शिशु रिवारोदीत्। आत्मान मत्यन्त पुरोभागिनं मन्वानो भवंश्च महान् दैन्यवान् सः स्वकीयं मुख मधः कृत्वा भूयोभूयो भूम्याममर्दयत्। यदाहि मन्दिरस्य घण्टारावो दिनस्यावसान मसूचयत्, स भृशं विषण्णो खिन्नश्चाजायत। 'मातः' इदमपि दिनं व्यतीतं, परं तव दर्शनं न जातमिति कथयन् उच्चैः स रोदिति स्म। 'हन्त, इदमपि द्वितीयं दिनं व्यर्थ मेव जातं, न सत्यं द्रष्टु मशकम् इत्येतदभिदधानोऽसौ तस्मिन्नपि दिवसे क्रन्दन्नश्रूयत। कदापि तु भगवद्भक्तिप्रवणभावनाः परमोल्लोला भवन्त्यः सरयं तन्मस्तिष्के प्रवहन्ति स्म तद्-वेगवशादसौ -मातः, असि किं त्वं परमार्थतः माता? आहोस्विद् भ्रम एवैष मास्तिष्कः? एषा हि निष्ठा, यद्वास्ति कल्पनैव? अथवा नूनमिद वायव्यं दुर्गमेव? कतिपयमासान् यावत् अनुभूतीनामेवोद्दाम स्थिति निरन्तर मनवच्छिन्नतया यदा प्रावर्तत, नवः प्रकाशस्तस्मिन् प्रास्फुटत्। स तमधिकृत्य यद् रुचिरं विवरण मुन्मीलयामास तद् वस्तुतस्तु रहस्य वादनिहितानुरागाणां जिज्ञासाभृतां जनानां कृते नितरामेवोपादेयं हृद्यं च।

"तदा मातु रदर्शनात् तस्या आशिषोऽनुपलब्धत्वाच्च अहं हृन्मर्मच्छेदनकारिण्या व्यथया व्यथित मात्मान मन्वभूवम्। अहं स्वकीय मङ्ग मङ्ग मर्द्य मान मिवान्वभवम्, आर्द्र वास इवाहं निश्चोत्यमानोऽन्वभूये। कदाचन महत्यैव श्रान्त्या अहं कवलीकृतः, किञ्च कापि भीति र्यस्या अनुभवो न मया कदापि प्राक् कृतस्तदानीं मां परिषस्वजे। नाहं तद्वियोगं ततः परस्तात् सोढुं क्षमो जातः। नाहं जीवनस्य स्थिति मपेक्षितामंसि। अकस्मात् मदीया दृष्टि र्मन्दिरे स्थितस्य चन्द्रहासस्योपरि न्यपतत्। स्वजीवनोपसंहरणाय अहमुद्यतः सञ्जातः। विक्षिप्त इव अहं तं धर्तु मुदप्लवे। तस्मिन्नेवानेहसि माताभिव्यक्ता बभूव। अहं कुट्टिमे निःसंज्ञोभूत्वा न्यपतम्। ततः किं तस्मिन्नहन्यघटत मथ चान्येद्युः किं घटितं नाहं वेद्मि परं नवीनमेवात्मानमहमनुभवितुमारेभे मम नेत्रयोः पुरतः सा माता समुपतिष्ठतीति प्रतीति स्तदाप्रभृत्येवमयाक्रियत"।

"मन्दिरं तस्य च विभिन्ना भागा मम दृष्टेः पुरतः क्वापि न्यलीयन्त। सर्वतो ममाग्रेऽपरिमितोऽसीमस्तेजोमयोदिव्य एव प्रकाशपयोधि रुत्तरङ्गो भवन् प्रतिलक्ष्यते स्म। ममदृष्टि र्यद् यावच्च द्रष्टु मशकत् तत् तावच्च सर्वं सर्वाभ्योऽपि दिग्भ्यः सोन्माद

प्रधावदिव भयावहं शब्दं कुर्वाणमिव मां निगिरदिव प्रतिभासते स्म। विद्युदिव विद्योतमाना कापि दृष्टि र्मयि निपतन्तीव कृत्स्नतया च मामभिव्याप्नुवन्तीव प्रतीयते स्म। उच्छ्वसित इव भवन् ममात्मा उत्तस्थौ परं भूत्वा निः संज्ञोऽहं निपतितः"।

श्री रामकृष्णकृता सानुभूति रेव वेदान्त दर्शने ब्रह्म साक्षात्कार इति कथ्यते। श्रीरामकृष्णस्यान्तः करणं, यस्मात् कालाद् दर्शनं मातु रजायत, आध्यात्मिकीं चेतनां विन्दमानं प्रसीददेव पर्यवेक्ष्यत। सः कीदृशमपि नियन्त्रणं सोढुं नेच्छति स्म। तस्याचरणमेव विचित्रं भूत्वा दिदीपे। जना स्तत्र विक्षिप्तोऽयं जात इत्येतां धियं निवबन्धुः। परं स तु अकृतसंसारापेक्ष एव सञ्जातः। तदीयं मनोनुदिनं मातुस्तां छविम्प्रत्येवाकृष्ट मभूद् यां सकृत् सः प्राप्य सनाथोऽभवत्। यदा हि पुनः तद्विधामेवाभां न लोचनगोचरीचकार, सोऽजायत निराशः। मातु स्तस्या आभाया अदर्शनं न सः सोढुमशक्नोत्। सः प्रार्थनायां स्वकीयं प्रयासं विपुलतरं कर्तुं मुद् युक्तो बभूव। ध्यानावस्थायां चिन्तनायाञ्च कृता सा भूयसी वृद्धिस्तदीयं स्वास्थ्य मक्षिणोत्। स्वास्थ्यं विविधाभि र्दुर्बलताभि र्ग्रस्तमिवाजायत। कृत औषधाद्युपचारो न किमपि फल मदर्शयत्। स व्यर्थ एव जातः।

श्री रामकृष्णोऽस्मदीय एतस्मिन् युगेऽद्वितीय एव भगवद्भक्तो बभूव। न तन्मानसे सङ्कीर्णताया अनुदारताया कणिकाप्यासीत्। तदीया दृष्टि र्निरवधिकविशालासीत्। न तावद् व्योम विशालं व्यापकं च कदाचित्, यावत् तदीयं मानसम्। सः परमात्मानं काल्या मपश्यत्, रामेचापश्यत्, कृष्णे सः परमेश्वरं ददर्श, ददर्श च तं ब्रह्मणि। अतः स जगता कदापि हनुमानिव, कदापि राधेव कदापि तदितर भक्त इव व्यालोकि। आसीदसौ महात्मा महान् साधकः। विभिन्नाः साधनाः संश्रित्य सः स्वकीयजीवनवल्लभं, स्वकीयप्राणवल्लभं विलोकयामास तत्र सर्वत्र। एकस्यामेव मातरि काल्यां सः स्वकीयं जीवननाथं प्रेक्षाञ्चक्रे। यं कोऽपि शिव इति, कोऽपि कृष्ण इति, कोऽपि जेसस् क्राइस्ट इति मन्यते तमेव शिवं वा कृष्णं वा क्राइस्टं सः कालीति मेने।

श्री रामकृष्णोमातुः कृपां प्राप्तुं तद्दर्शनञ्चलब्धुं वहुविधाः साधनाः समशिश्रियत। स हठयोगेऽभ्यस्यतिस्म येन स्यात् स मातुः कृपाभाजनम्। स तान्त्रिकसाधना मवलम्ब्येतन्त्र ग्रन्थेषु प्रतिपादितान् चतुः षष्ठि सिद्धान्तान् ज्ञातुं सः प्रायस्यत्। तत्रत्यासुबह्वीषु कठोरतरासु भयावहासु च साधनासु स आत्मानं न्ययोजयत्। भगवत्या मातुः अनुकम्पया स आपद्वर्षिणीभ्य स्तन्त्रसाधनाभ्य आत्मानं रक्षितुं प्राभवत्। तस्य जीवनस्यक्षणएकोऽप्येतादृशो न दृष्टोऽभूत् यस्मिन् सः साधनारतो न दृग्गतोऽभूत्। सः वैष्णवसाधनां यदा कृतवांस्तदा लोकस्तं द्वितीयमेव हनुमन्त मजानात्, सख्यसाधनायां

यदा स निलीनोऽभूत् तदा जनास्तं राधामेवामंसत; अद्वैत साधनायां यदा स आत्मानं व्यापृतमकार्षीत् तदा निर्विकल्पसमाधिपरकाभ्यासे विना कमपि विलम्बं वैदग्ध्यं दर्शयामास। स त्रीणि दिनान्यजस्त्रं समाधिस्थिति मगाहत। लोकस्तं तदा मृतमेव अवागमत्। तदीयोगुरु स्तोतापुरी योगे ता माश्चर्यकरीमवस्थां गतं तं वीक्ष्य परमाश्चर्यं ययौ। योगे (समाधौ) यां सफलता महं चत्वारिंशद्वर्षाण्यभ्यस्यन्नपि न प्राप्तवांस्तां सफलतामय मेकेनैवाह्नाभ्यस्य लब्धवानिति सः (तोतापुरी) व्याजहार। स इस्लाम सम्प्रदायावलम्बिसूफिसाधुसेवितसाधनायां च स्वकीयां रुचिमदर्शयत्। तदानीं स इसलामधर्मे आदरधियं परिपुष्यन् वरिवस्यां (नमाजम्) च भक्तिभावेन विहितवान्। ततश्च स ईसा मसीहसम्प्रदाये चानुरागं प्रादीदृशत्। यां यां साधनां सोऽवलम्बे तस्यां तस्यां साधनायां स तन्मय एव प्राप्तोऽभूत्। इसलामसाधनावसरे तस्मिन् मुहम्मदे च, अथ च ईसाईधर्म परक साधनानेहसि तस्मिन् जेसस क्राईस्टे च न कोऽपि भेदोऽलक्ष्यत।

साधनानां सर्वासां सत्यवसाने श्री रामकृष्णः सामान्यजन इव अजायत। अष्टषष्ठयधिकाष्टादशशततमेशवीये वर्षे स तीर्थयात्रार्थं मथुरानाथेन सार्धं वाराणसीं, प्रयागं, वृन्दावनञ्च जगाम। सः चैतन्यमहाप्रभोः जन्मस्थानमपि प्रतस्थे। ब्रह्मसमाजस्य सदस्यानामपि सान्निध्येऽवसत्। केशवचन्द्रसेने स भृशं सौहृदं निदधौ। समये समये तेन सह तस्य धर्मविषयिण्यो वार्ताः प्रावर्तन्त। ब्रह्मसमाजेऽपि सः भारतीयशास्त्रेषु स्वकीयासु अनुभूतिषु, स्वसाधनाभि स्तपश्चर्यया च संलब्धे हि प्रकाशे किञ्चाध्यात्मिके तेजसि स्वान् विचारान् प्रकटीकृत्य सर्वानपि सदस्यान् कृतार्थांश्चकार। ब्रह्म समाजस्य सदस्या यद्यपि आसन् प्रतीच्याध्यात्मसम्बन्धि विचारधाराप्रभावाभिभूताः परं केशव चन्द्रसेन–प्रताप चन्द्र मजूमदारपण्डितशिवनाथशास्त्रि प्रभृतिब्रह्मसमाजीयनेतारः श्री रामकृष्णस्य धर्मनिष्ठया तदीयया अलौकिक्या प्रतिभया तदीयया गम्भीरया ज्ञानशक्त्या प्रकृष्टया च भक्त्या एकान्ततो नितरामावर्जिताः समजायन्त।

श्री रामकृष्ण इयेष यद् ईश्वरीयसाम्राज्यस्य तान्याश्चर्याणि, यानि सः स्वकीयाभ्यां चक्षुर्भ्यां विलोकयामास, अथ च तत्सत्यं यद् भारतीयानि शास्त्राणि गायन्ति, यस्य च साक्षात्कारं सः स्वकठोराभिः साधनाभिश्चकार सर्वत्र जगति प्रसृतानि स्युर्येन संसारः सुखं शान्तिञ्चासादयेत्। एतन्महाकार्यार्थं यं जनं सोऽचिनोत् सोऽस्ति तदीया पत्नी शारदा देवी। सा हि शारदा देवी प्राप्तभगवदनुग्रहस्य तस्य परमहंसस्य रामकृष्णस्य तदा पावनमातैव अजायत। जगत्सु सर्वास्वपि नारीषु स महान् आत्मा कालीमातरमेव ददर्श। शारदा देवी तदुपदिष्टपथं लोकम्प्रति प्रदर्शयितु मनिशं

प्रायतिष्ठ । द्वितीयस्तदीयः शिष्यो बभूव स्वामिविवेकानन्दः । षडशीत्यधिकाष्टादश-शततमेशवीयाब्दे सत्युपरते तस्मिन् स (विवेकानन्दः) एव संसारे सर्वत्र तत्प्रदत्तं प्रकाशं व्यकिरत् ।

श्री रामकृष्णस्य ईश्वरो नासीद् भावात्मकः स तु तस्यासीत् चाक्षुषोऽथ च वात्सल्यमयी अम्बा । सः सर्वत्र ईश्वर म्प्रत्येव प्राधान्यं प्रददौ न च तद्दृष्ट्यां सत्कर्म प्रधान मासीत् । सः ज्ञानं भक्तिञ्चोभयमपि आद्रियते स्म परं तयो र्मध्ये भक्ति ज्यायसी ममन्यत । यो हि जनः भगवन्तं शरणं याति भगवांस्तस्मै विवेकं वैराग्यं ज्ञानञ्च प्रददाति—इत्येतस्यां हि श्रद्धायां स रमतेस्म । सर्वाणि धार्मिकाणि कृत्यानि, वादाः विधयो रीतयः शास्त्राणि चात्मानुभूतेः पुरः प्रयान्ति गौणता मित्येतत्सत्यं सः स्ववाण्या न, अपितु व्यक्तित्वेन नैजेन बोधयामास । समाज-सेवा-राष्ट्राभ्युत्थान-शिक्षाप्रसारणादिकानि सर्वाण्यपि कार्याणि उचिततराणि मन्वानस्तानि सकलानीश्वर-रसेवाया अङ्ग मेव सोऽवागमत् ।

वन्दे महात्मकुलभूषण रामकृष्णं, मातुः समस्तजगतामृजुचित्तभक्तम् ।
मेने हि यस्तनुभृतां हरणं व्यथायाः धर्मं परं मृदुलमानस साधु वृत्तः ॥



# महर्षि दयानन्दः

कश्चित् कमप्यन्दुकेन नद्धुं शक्नोति, चन्द्रहासेन कोऽपि कस्यापि मूर्धानं छेत्तु मर्हति परं कस्यचन धर्मभावनां न कोऽपि कदापि दासीकर्तुं हन्तुञ्च प्रभवति। शिरसि छिन्ने सति न मानवो वस्तुतो म्रियते; मानसे सति व्यापादिते सोऽवश्यं व्यापन्नतां याति; समिति पराजितो योद्धा न परमार्थतः पराजित इति वक्तुं सुशकः; स तु तदैव पराजयं नीतो भवति यदाऽसौ गमितोत्साहः क्रियते। मृत्यु स्तदानीं जायते यदा मानवः स्वकीयाद् धर्माद् भ्रंसते।

भारतं यवनशास्तारो दासीकृत्य तस्य संस्कृतिं सभ्यताञ्चोन्मूलयितुं नानाविधां हिंसां नृशंसतां च बहुविधं छलं पाशवं बलञ्चावलम्ब्य कठोरतमं प्रयत्नं कृतवन्तस्ते तस्य साहित्यं दग्धुं तस्याचारविचाररीतिनीत्यादिसकलविशिष्टताःउत्सादयितुञ्च भृशं प्रायस्यन्। ऐस्लामशासनकृतेभ्योऽत्याचारेभ्यो भारतीयजनतायाः स्थिति नितरां शोचनीयतां गताऽऽसीत्। सर्वत्र तदींया मान्यताः, विश्वासः, धर्मश्च उपाप्लूयन्त। केन प्रकारेण सा स्वकीयानसूंस्त्रायेत इत्येषः प्रश्नोऽसमाधेयो भूत्वा तत्पुरतः उपस्थित आसीत्। दैन्यात् कार्पण्याच्च जातिषु अनेकशो दोषाः समुत्पद्यन्ते। अतः भारतीयेषु अस्पृश्यता-भेदभाव-विषमता-दम्भ-लोभ-मोहानृततादिका बहवो गुरुतरा दोषाः सभाविष्टा अभूवन्। श्रुतिस्मृतिपुराणोपनिषच्छास्त्रानुयायिनोऽपि भारतीया अधर्मं धर्मं मत्वा, असत्यं सत्यं ज्ञात्वा, अनपचितिमपचितिं बुद्ध्वा तत्तत्कुतत्वानि स्वजीवने व्यवहर्तुं मारभन्त। यदा हि भारत मनेकविधानाचारकुप्रथोपधिधूर्तताशाठ्यकैतवनिकारादिभि र्निशितैः कण्टकैरुद्ग्रथित मासीत् तदा दयानन्द ऋषि भारत मुद्धर्तु मसत्पथात् सत्यपथं च तत् प्रापयितुमवततार।

ऋषि दयानन्दः शशिवसुवसु शशिसम्वत्सरे सौराष्ट्रान्तर्गतटङ्कारारख्ये पत्तने समुदपद्यत। तत्पितु र्नामासीत् कर्सनजी लालजी त्रिवेदी। यो हि बालो बाल्ये मूलशङ्कर इति नाम्ना व्यपादिश्यत स एव स्वकीयागामिजीवने दयानन्द इत्येतद् विश्व विदितं नाम समवाप।

आसीन् मूलशङ्करस्य पिता सामवेदी ब्राह्मणः। स बभूव महान् शिवभक्तो धृतयजुर्वेदनिष्ठश्च। पितुः पण्डितत्वाद् धर्मनिष्ठत्वाच्च मूलशङ्करोऽल्पीयस्येव वयसि उदबुध्यत। पितु र्धर्मोपासना शिव भक्तिश्च तम्प्रति प्रेरणाप्रदेऽभूताम्।

एकदा शिवरात्रिपर्वणि चतुर्दशवर्षदेशीयो मूलशङ्कर उपोषितो भूत्वा

पित्रा सार्धं शिव मन्दिरे रात्रौ जागरणं कृतवान् । जाग्रन् मूलशङ्करो निशीथे स्वपितर मन्यांश्च भक्तान् निद्रावशीभूतान् ददर्श । स तदा शिवमूर्ति मारुहन्त मुन्दुरुमपश्यत् । इदं वीक्ष्य स उद्बुद्धबुद्धि र्बालः 'संसार स्वामिनः शिवस्याप्युपरि आखुर्धावति, कस्मात् कारणाच्च जनाइमे भक्ताः सन्तोऽपि शिवस्य, पूजावेलायां स्वपन्ति; अहो कीदृशाः सन्ति इमे भक्ताः ? इत्येतद् विचार्य स गम्भीरायां विचारणायां प्रविवेश । सः स्वशङ्कां समाधातुं पितरं जागरयितु मपि कामयाञ्चक्रे । तस्य मूर्तिपूजा दम्भ एव प्रतिभातिस्म ।

मन्ये, पतनोन्मुखान् भारतीयानुद्धर्तुं मूलशङ्करं शङ्करो जागरयाम्बभूव । शङ्के, पश्य, इमान् पूजार्थिनः, एते शेरते, एतेषां देवताः मूषकैः कदर्थ्यन्ते, उत्तिष्ठ त्वम्, सुप्तानेतान् जागरय; एतेषां मभिमताः प्रतिमाः भज्यन्ते; त्व मेनान् प्रबोधय एतेषु जीवनं सञ्चारय, येनैते स्वदेवान् स्वधर्मञ्च पातुं प्रभवेयुः" इत्येतच्छिवो मूल शङ्कर मुपदिदेश ।

दिव्यं ज्योतिः प्राप्य सः शिवालयात् स्वसदन मियाय । तर्काणां ततिस्तन् मानस पटल मावारीत् । प्रथमं स्वसार मुपरतां ततः स्वपितृव्यं व्यापन्नं विलोक्य स मृत्योः केन प्रकारेण मुक्तो भवितु मर्हेज्जीव इत्येतद् विचिन्तयितु मारेभे । सत्य मन्वेष्टुं तन्मन आकुलतां, भारते समागतं दम्भानाचारादिदोषजातं निवारयितुं विह्वलता ञ्चानुभवितु मारभत ।

मूलशङ्करस्य हृदयं प्रचण्डान्दोलितं प्रेक्ष्य तन्मातापितरौ तमुपयमबन्धनेन बद्धुकामावभूताम् । परं तद्विधः सकलोऽपि प्रयासो न सफलतामवाप्तु मशकत् । यस्मिन् सत्य मार्गण परकं समिद्ध मर्चि र्देदीप्यते कथं तादृशं बन्धनं तं रोद्धुं क्षमं भवितु मर्हेत् । एकस्मिन्नहनि स विभावर्यां स्वनिकेतन मत्यजत् ।

सद्मनो निर्गतं साधु समाज-प्रविष्टं तं तदीयः पिता राजकीयाऽऽरक्षणसाहाय्येन लब्धुं शशाक, आनिनाय च गेहम् । परं तत्सर्वमपि व्यर्थमेवाभवत् । तस्य स्वान्ते तु ईश्वर ज्योति र्जाग्रत मासीत् । सः पुनः सद्मनो निर्जगाम । यत्रापि सः कमपि साधुं परिव्राजकं वा प्राप ; जिज्ञासु र्भूत्वा तमन्वगमत्; विद्वत्संन्यासिप्रकृतिभ्यो वेदितव्यं यत् तद् विन्दमानोऽसौ परिव्राजः पूर्णानन्दस्य सकाशे समुपेतः । सत्वरमेव स ततः प्रव्रज्यां जग्राह । साम्प्रतं स गृहीतप्रव्रज्यो मूलशङ्करो दयानन्द सरस्वती समजायत ।

हृदयग्रन्थिं भेत्तुं सर्वानपि संशयांश्च छेत्तुं स्वामी दयानन्दो ज्ञानं विन्दन् योगं साधयंस्तपसि चात्मानं प्रवर्तयन् पर्यवेक्ष्यत । सानुमतां गह्वरेषु राजमानांस्तपोधनान् सोऽसेविष्ट । तुषाराचलदरीमधिष्ठाय नगापगातटान्यध्यास्य पारिकाङ्क्षिणा मुटजानुपास्य तपः काननान्याराध्य आर्षांश्च ग्रन्थाननुशील्य दयानन्दर्षिः सत्यप्रकाश मवाप्तु मयतिष्ट ।

ब्रह्मचर्यस्य तेजो दिशि दिशि विकिरन्, तपश्चर्यायाः पावनं पेशलत्वं च सर्वत्रापि क्षोण्यां क्षिपन् प्रकाशप्रदं गुरुमधिजिगमिषु र्दयानन्दः पर्यटनञ्चकार। मनस्वी मानवस्तदवश्यमेवाश्नुते यत्र तदीयं मनः सनिर्बन्ध मासजति। सप्तदशोत्तरैकोनविंशतिशततमे वैक्रमेऽब्दे मथुरायां योगिराज ब्रजानन्दस्य शर्मशान्तिप्रदं दर्शनमधिजगाम दयानन्द जिज्ञासुः।

कुटीद्वारं योगिराजस्य यदैव दयानन्दोऽनावृतञ्चकार, योगिराजः पप्रच्छ कोऽसि त्वम्? दयानन्द स्तत्क्षण एवोदतरत् 'कोऽहमित्येतदेवावगन्तुं भवन्तं प्रपन्नोऽस्मि। आकर्ण्योत्तरं ब्रजानन्दोऽतितरां प्रासीदत्। स तं स्वान्तेवासिषु समावीविशत्। तस्य सविधे सः त्रिंशन्मासानुवास। गुरुचरणानुकम्पया प्रकाण्डपाण्डित्यं ससत्यतत्त्वं समाससाद सः।

गुरुः शिक्षया शिक्षितं दीक्षया च दीक्षितं विधाय 'भारतीय जनताया उद्धरणं, भारते समुत्पन्नाना मवैदिकानां मतमतान्तराणां निरसनं, कुरीतीनां निराकरणं, दोषाणां दुराचारजनितानां निवारणं, वैदिकस्य च धर्मस्य प्रतिष्ठापनं त्वमनुतिष्ठ' इति दयानन्दमादिशत्। एतदाज्ञापालन मेव तवाहं दक्षिणायै कल्प्स्ये।

गुरो रनुज्ञां शिरसाऽऽधृत्य तत्पालनं प्रत्याश्रुत्य सविनयं साञ्जलिं च तदाशिष मवाप्य युगान्तरकारी स महान् संन्यासी वैदिकसंस्कृतिविजयवैजयन्ती मुद्धूनयन् प्रतस्थे। तच्चक्षुषोः सवितु रालोकः स्थितिं लेभे; हृदये च बलमैश्वरं वसतिञ्चकार, वर्ष्मणि तपो ब्रह्मचर्यं च निवास मकार्ष्टाम्। चत्वारिंशदब्ददेशीयोऽसौ ब्रह्मचारी ब्रह्मवर्चसा मेदिनीं विद्योतयन् स्वकीयेन गगनभेदिघोषेण भारत मजजागरत्। देशस्य देशान्तरस्य च एकैकः कणस्तदीयेन यशसा धवलीबभूव। जनता तदुपदेशेषु तत्प्रवचनेषु च सत्यस्य दर्शन मवाप्नोत्। सा अजागोऽवुध्यत वा ज्ञानागाधपारावारीणस्य तस्याच्छेद्यैस्तीक्ष्णैस्तर्कैः सा पण्डितपुङ्गवानपि परिभूयमानानपश्यत्। सा मनसा वचसा कर्मणा च तस्य शिष्यतां किङ्करताञ्च प्रापद्यत।

स्वामी दयानन्दो दम्भकैतवच्छलकपटेन्धनं प्रति बभूव दावानलः। पाखण्डखण्डिनीं सभां प्रतिष्ठाप्य सः पाखण्ड पिशिताशनं विद्रावयामास; 'आर्यसमाज' संस्थां संसृज्य स वैदिकं धर्मं प्रचारयामास वर्धयामास च। शुद्धिसभां संस्थाप्य स गृहीतपरधर्मान् जनान् तद्धर्मं ग्राहयामास। दीनदलितदरिद्रदुर्बलांश्च सः पतनावटादुद्धृत्योन्नमयामास। शनैः शनैः सः समग्रस्यापि भारतस्य कृते प्रकाशस्तम्भो बभूव। देशस्य नृपतयो धनपतयो महाराजाश्च तस्य तपोनिधेः पुरः प्रणतभाला बभूवुः।

महात्मानो हि निर्भया भूत्वा असत्पथगामिनं धनाधिराजं राजाधिराजमपि, कामं तयोः सन्निधौ वसतां तेषां बहून्यहानि व्यतीतानि स्युः; कामं तयोस्तेषां हृदीयः सौहृदं स्यात्, कुपथान्निवार्य सुपथं दर्शयन्ति। 'अयं राजा, यस्य सकाशेऽह सर्वविधा-

न्युत्तमोत्तमानि सुखानि विन्दामि, कुप्येत् ममोपदेशं निशम्य, तस्मान्न मया किमपि वक्तव्यं, न मया स तस्मात्कर्मणो निन्दनीयाद् वर्जनीय इत्येतद् विमृश्यन्त्येव न ते। ते चेद् राजा कुप्यति कुप्यतु नाम; यदि स स्वकीयाद् राज्यात् तान् निर्वासयति तदा निर्वासयतु काम मवश्यमेव यद् धर्म्यं, यत्सत्यं, यन्न्याय्यं, यदुचितं, यत्सुजनसम्मतं तत् तत् सर्व मकुतोभया भवन्तो भणन्ति।

एकदा महर्षि र्दयानन्दो यदा जोधपुराधिपस्य वेश्यासक्ततां विवेद तदा स राजानं भृशमभर्त्सयत्। कुमार्गान्निवर्तयितुं तं स निर्भयो भूत्वोपदिदेश।

अहह, महापुरुषाः परमदयालवो भवन्ति। ते स्ववैरिण्यपि नितरामनुकम्पन्ते; तेऽनुपकारिणमपि सस्नेहमुपकुर्वन्ति। ते तस्यापि सहायका भूत्वा तत्प्राणान् रक्षितुं प्रयतन्ते। जगन्नाथो नाम यो हि सूपकारस्तद्रूपाजीवासङ्क्तेन महर्षये दयानन्दाय विषगर्भं पयः प्रददौ तमेव प्रति रूप्यकाणि प्रदाय स जोधपुरात् तं व्यदुद्रवद् येन स न स्याद् व्यापादितः। महान् करुणावरुणालयो दयानन्दस्तु गरलप्रभावान्न चिरं जीवितुं शशाक परं स दुरितात्मा पाचकस्तु तद् दयया स्वप्राणान् पातु मवसरं प्राप एव।

आकाशवेदग्रहसोमवैक्रमेऽब्दे कार्तिकेऽमावास्यायामसौ महान् आत्मा अजमेरे स्वं नश्वरं शरीरं बिहाय ब्रह्मण्यलीयत। वैदिकसंस्कृतेः सोऽमरज्योतिः परमद्यापि भारते गेहे गेहे विभ्राजते। ग्रामे ग्रामे, नगरे नगरे तत्तत्कृतानुपकारान् ससम्मानं सश्रद्धं संस्मरन्त उपश्लोकयन्तश्च सर्वेऽपि जनाः श्रूयन्ते। तदीय आत्मा तत्प्रणीतसत्यार्थप्रकाशे उद्याने पिक इव कूजन् केन नाकर्ण्यते? तच्चरणचिह्नानि आर्यसमाज-गुरुकुलादिसंस्थास्वात्मानं परिवर्त्य सर्वतो राजमानान्यवलोक्यन्ते।

चेत्सत्यं संश्रित्य विचारयामस्तदा निश्चप्रचतया वक्तुमिदं सुशकं यत् स्वातन्त्र्यसंयुगस्य प्राग्रहरः सेनानी दयानन्दर्षिरासीत्। स भारतीयान् स्वराज्यस्य स्वाधीनताया वा महत्त्व मवेदयत्। स तान् तल्लाभाय संस्कृतांश्चकार। स भारतीयतां दूषयन्ती माविलतां स्वाविरामश्रमज्योतिषाममार्ष्ट। अद्यतनं भारतं भारती, भारतीयता च तत्प्रकाशेन प्रकाश्यमानाः सन्ति। यदि वयं तत्स्वरं श्रोतु मभिलषामहे तदा साम्प्रतिकेऽप्यनेहसि श्रोतुं शक्नुमः। तद्रचित सत्यार्थप्रकाश-ऋग्वेदादिभाष्यभूमिका—संस्कारविधिप्रभृति ग्रन्थास्तस्यैव श्रेयोविधायिन्योऽमृतगिराः सन्ति। आयान्तु, तज्ज्योतिरवलम्ब्य वयं सत्यं किमित्येतज्जानीम।

अभूद् दयानन्द ऋषिः पुनीतं
तेने पुनः सः शुभ वेदधर्मं
महांस्तपस्वी श्रुतिपारदृश्वा
तर्कज्ञधीमत्कुलमौलिरत्नम्॥



# स्वामिरामतीर्थः

अस्मद्भारतं स देशो यस्य महापुरुषाणां सख्या तत्तद्देशोद्भूतमहापुरुषसंख्यां हेलयैवातिशेते । अत्रावतीर्णा भूत्वा ते जगतीतलवर्तिनां मानवानांपुरः पुनीततरं यदात्म बलविभ्राजितंपरमेश्वरप्रेमप्रसन्नं प्राणिमात्रमित्रं मङ्गलास्पद मुन्नततराचाररमणीयं सकलकष्टहरमधरीकृतप्रकृतिप्रभावं विमलमानसमञ्जुलं चरित्रं प्रातिष्ठिपंस्तस्य प्रकाशेन पावनेन न ज्ञायते, कियन्तः प्राणवन्तोऽसत्पथात् सत्पथं प्रापद्यन्त । बहवस्तमालम्ब्य दुःखेभ्यो विपद्भ्यश्चात्मानं मोचयितुं शक्तिमध्यगमन्; अनेके समुन्नततराणि पदान्यधिगन्तु मनेहस मनुकूलं प्राप्तवन्तः, शतशो दुरितेभ्यो नैजरक्षां कर्तुं सुमतिमलप्सत; प्रचुरा धर्मे दृढीयसीं धियमविन्दन्; पुष्कलानाञ्चाचारा विचाराश्च कामक्रोधलोभादिदस्यून् नियन्तु मद्भुतं बलमश्नुवतेस्म । न सः प्रकाशोऽनद्यतनान् मानवानेवोपचकार स तु वस्तुतोऽद्यतनानपि तानुपकुर्वाणः संलक्ष्यते; आगामिनि चाहेनसि तानुपकरिष्यतीत्यत्र न स्तोकोऽपि सन्देहः । तेषां महात्मनां दर्शनमलौकिकं प्राप्य न मानवा एव विगतहिंसावृत्तयोऽभूवन्नपि तु हिंस्राः श्वापदाश्च हिंसाभाव विहाय विनीताः कातराक्षाः कुरङ्गा इव अजायन्त । तेषु महात्मसु यस्य महात्मनोऽनवद्यं चरित्रं संस्मृत्य वयमद्य हृदयस्य मलिनता मपनेतु मुद्यताः स्मः सोऽस्ति स्वामिरामतीर्थः ।

स्वामी रामतीर्थः स्वजनुषाष्टादशस्य शतकस्य गरिमाणं महीयस्कतां नयन् पाञ्चालेषु सारस्वतं तपः पूतं ब्राह्मणान्ववायमदीपयत् । स बाल्यादेव स्वकीयया निशितया प्रतिभया लोकं विस्माययितु मारभत । निःस्वत्वात् तस्य, विद्यार्जनाध्वनि विविधा बहुलाश्च बाधाः प्रत्यवायाश्च समुपतस्थुः परं सः स्वकीयेनानभिभवनीयेनाध्यवसायेन समग्रमपि प्रत्यूहकदम्बकमचूर्णयत् । अल्पीयस्येव वयसि स हाईस्कूलपरीक्षामुत्तीर्य स्नातको भवितुं लाहौर विश्वविद्यालयं प्रविवेश । गणिते ततः एम. ए. इत्येत मुपाधिं गृहीतवान् । परीक्षासु सर्वास्वपि स्थानं प्रथममवाप सः ।

स्वामी रामतीर्थः स्वाध्यायशीलोयुवाऽऽसीत् । नवनवज्ञानाधिगमनाय तस्मिन् महाननुरागोऽजागः । सः प्रायेण 'अहं तद् विजनं स्थानं मार्गयितुमभिलषे यत्र निर्विघ्न मध्ययनं भवितु मर्हेत् । मम लब्धव्य मिदमेव । नान्यत् किमपि कामये । केवलं समयं याचामि । भगवन्, वाञ्छा मदीयेयं यद् विजनता, समयः ज्ञानावाप्त्यभिलाष इत्येषां त्रयाणां कदाप्यभावो न मम पुरः स्यादुपस्थितः । स यदचीकमत, भगवदनुक्रोशेण, तदविन्ददपि । स महान् विद्वान् भूत्वा 'मिशन कालेज' संज्ञिकाया मेकस्यां संस्थायां गणिताध्यापनकार्यमपि स्तोकं समयमन्वतिष्ठत् ।

स्वामिरामतीर्थस्य छात्रजीवनं नितान्तमेव स्पृहणीयमभूत्। सः क्षुधां तु सहर्षमसहत परं न कदापि पुस्तकाभावं सेहे। क्षुत्क्षामकण्ठोऽपि भूत्वा सश्छात्रवृत्त्या-भिमतानि पुस्तकानि चिक्राय। रूक्षंनीरसञ्च भोजनं भुक्त्वा सः पठनार्थं निशायां, तैलनिमित्तेन पणक-सञ्चयने न स्वल्पमपि कष्टमन्वभवत्। तस्योदीरणमासीद् यद् विद्यैव विद्यार्थिनोऽर्थः। स न वसने रुचि मदर्शयन्न च स भोजने। यत्र सोऽप्रीयत सासीद् विद्या। विद्यानुरागित्वाच्छत्रेषु सः श्रेष्ठः सुयोग्यः परमव्युत्पन्नश्छात्रो बभूव। योग्ययोग्यतराश्छात्रास्तस्मात् पठितु तदभ्याशे आजग्मुः। तं विलोक्य जना विचारोच्चता जीवनर्जुता च ध्रुवं, यूनोऽस्य रूपं निधाय भुव्यवतीर्णस्त इति व्याहरन्तो ऽश्रूयन्त।

रामः प्रकृत्यां स्पृहयतेस्म। अद्रिदरीषु निवसनं, निर्झरसलिल-पानं, प्राकृतिक-सौंदर्यरसास्वादनं च तमतितरां प्रीणयन्ति स्म। ईश्वरीयायाः कलायाः सुषमायां प्रायेण सोऽप्रीयत।

उत्तुङ्गोत्तुङ्गतरशिखरारोहणं तत्र च चिरं विचरणम्, उपत्यकासु दूरदूरतर-देशान् यावद् विततानां मधुसमृद्धि समेधितानां मनोरमसौरभसौन्दर्योल्लसितानां मधुप-शुक्रकोकिलमयूरादिवयोविरावाभिरामाणां ललितललिततराणा मुपवनानां विलोकनं सव्यसव्येतरपार्श्वयोः सुशोभितेषु विविधवर्णवन्धुरप्रसूनगन्धवत्सु नानाविधमधुरफल-समुच्चयसमृद्धेषु कटकेषु पुनः पुनः ईक्षणनिपातनम्, सुमृदुलशाद्वलेषु धावतां कस्तूरिका-कुरङ्गाणा मवप्लुतिश्च तमतितरामधिन्वन्। एवंविधेषु रमणीयेषु नैसर्गिकेषु प्रदेशेषु स्थित्वोच्चैर्हरिकीर्तनादन्यदिह किमुचिततरं कार्यं जीवनस्य भवितुमर्हेदिति साह्लादम-भिदधत् स दिगङ्गनाभि रश्रूयत।

हिमाचलस्य सः स्मरणीय ऋषी रामतीर्थः कृशकायः कोविदवन्दनीयः समुन्नतायतललाटः शुकनासः साधु रध्यात्मविद्यायाः सन्देशं दातुं देशान्तर मपि गतः। तत्र यः कोऽपि तस्य सन्निकृष्टतायामियाय; सोऽतिशयश्रद्धानतो भूत्वा तच्चरणेष्वा-त्मान मनीनमत्। "भारतात् प्रायेणास्मद्देश मायान्ति महापुरुषा अनेके; परं नेदृग् मनीषी नेदृशो वदान्यस्वान्तो नेदृशश्च विगतकल्मषो महान् आत्मा अतः प्रागिहायात" इत्येतं तमधिकृत्य वैदेशिकाः स्वं विचारं प्रकाशयाञ्चक्रुः।

ज्ञानप्रकाशमवाप्य मानवस्य मानसं भ्रम-संशय-तर्करहितं सञ्जायते। तन्मनः सततमनिर्वचनीयानन्दे गाहते। स्वामी रामतीर्थोऽपि उदितज्ञानज्योतिष्क आसीदतः सः सर्वदा मन्दस्मिताननोऽसामान्यतेजःप्रभादीप्ताकृति र्वीक्षितोऽभवत्। तस्य मुदिताननता आकृतेस्तेजस्विता विचारधाराया अनाविलतोदात्तता च दर्शकाणां हृदयेषु प्रभावपीयूषं क्षरन्तिस्म।

परमेशप्रकाशप्रकाशितस्य तस्य रामतीर्थस्य व्याख्यानेषु सकलापि संसृति र्भारतीयाया अध्यात्मविद्याया मानवीय जीवनस्य सफलतायाश्च रहस्यश्रिय मधिजगाम ।

स्वामिरामतीर्थो जीवन साफल्याय कर्म-त्यागात्मविस्मृति-सार्वभौमप्रेम-प्रसाद-निर्भीकताऽऽत्मावलम्बनाख्यानां सप्तानां गुणानां वरण मपेक्षित ममन्यत ।

'मानवोऽनारतं कर्माणि कुर्वन्नेव जिजीविषेत् । न सः परमात्मासीमकृपावाप्त-मतिदुर्लभ ममूल्यं नैजं जीवनं नश्वरेषु पदार्थेष्वेव गमयेत् । सरित् स्वेन मुक्तासंकाश-धवलसलिलेन वसुमतीं सिञ्चन्ती पिपासूनां पिपासा मपहरति यथा, तथैव मानवोऽपि जीवनं स्वकीय मनिशं परेषां दुःखापनयने प्रयुञ्जीत । यथा पल्वलं क्षुद्रसीम मत्यल्पो-दकमुदकनिर्गममार्गरहितं भवति तथा मानवः स्वहृदयं सङ्कीर्णं सेवाभावशून्यं पर-कल्याणाधायकगुणविमुखं विधाय न कदाप्यवतिष्ठेत । अनुदारतैव भवति दुरितम्; कूपमण्डूकतैव भवति दुर्लङ्घ्या विपत् । यावज्जीवेत् नैजं जीवनं तरङ्गिणीव गतिशीलं परोपकृतिरतं विदध्यात् भद्राभिलाषी मनीषी । 'आदानं हि विसर्गाय' नैतत् तथ्यं स न्यक् कुर्वीत । वीजं यदा नैजंरूपं पर्युज्झति तदैव तदात्मान मनोकहे परिणमयितुं प्रभवति; प्रतिवर्षञ्च सहस्रशः फलानि प्रदाय असुमतां क्षुधं निवर्तयति । मानवस्य जीवन मनुक्षणं समाजादिव सूर्यशशि समीरसलिल क्षमादिनानातत्त्ववत्याः प्रकृतेः साहाय्यमश्नुते तस्मात् तस्यापि कर्त्तव्यं भवति यदसौ तत्र सर्वत्र सौहृदमुत्पादयेत् । एतन्मम, ममात्र प्रभुत्व मित्येतदादिविधा भावना न जीवनम्प्रति श्रेयस्करी । अहङ्कारो विनाशाय कल्पते । तस्मात् सदा ततो दूरे स्थातव्यम् । विगलिताहङ्कार जीवनमेव प्रेम परिष्वजते । तस्मिन् हृदये त्यागः क्षणमपि स्थातुं नार्हति यस्मिन् अहङ्कारो निवसति । यो हि जनो निर्भीको बुभूषति स ईश्वरविश्वासी भवेत् । यो न निर्भीकः स आत्मानं जनतां च अन्यायादत्याचाराच्च न त्रातुं शक्नोति । विचारानुदारता प्रेमपथान्मानवं क्षिप्रमेव स्रंसयति । सास्मदीयां प्रसन्नतां निहत्यास्मासु विषण्णतां सञ्चारयति । प्रतिपदं सास्मान् भ्रंशयति । अमङ्गलमिव तां मत्वा न स्पृशेदपि जातु । यस्मिन् नरे आत्म-विश्वासो जागर्ति सः स्वकार्येषु सफलतामुपैति । अतः स्यान्मानव आत्मविस्रम्भी । आत्मवलावलम्बनं सिंहत्वम्; परावलम्बनं हि कापुरुषत्वम् । सिंहोभूत्वा सर्वदैव मानवो जीवेत् । सिंहस्य मृगाधिराजत्वे कारणं तस्यात्मवलमेव । मार्गागतां बाधामसौ स्वसाह-सेनोत्साहेन वलेन च निवारयति न तदर्थं सः परमपेक्षते । कुञ्जरो महाकारो भवन्नपि न सिंह इव पौरुषं विभर्ति । तत्र कारणमस्ति तस्यात्मनि शङ्काभाव' इत्येतदादिदेश स महान् आत्मा । अपि किमस्मद्देशस्य संसारस्य च मानवाः स्वामिरामतीर्थनिर्दिष्टा-ध्वनोऽध्वनीना भवितुं यतेरन् । भगवान् कृष्ण :—

सर्वभूत स्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥

इति यदाचचक्षे तत् स्वामिनि रामतीर्थे चरितार्थीभवति । अहो तदीया भारत-भक्तिर्धन्या । स आत्मानं कार्त्स्न्येन मेने भारतम् । स आह—

भारतं मम शरीरम् । हिमालयो मम शिरः । जटासु मामकीनासु जाह्नवी प्रवहति । मम शिरसो ब्रह्मपुत्रा सिन्धुश्च निर्गच्छतः । विन्ध्यगिरिर्मम कटिमेखला । कारोमण्डलं ममवामो मालावारश्च मम दक्षिणः पादः । अस्म्यहं समग्रत्वेन भारतम् । तदीये पूर्वापरते स्तो मदीयौ भुजौ । न मदीयं प्रेम वर्तत एकदेशि, तत्तु सार्वदेशिकम् । यदाहं चलामि तदाहं विचारयामि यद् भारतं चलति; यदाहं ब्रवीमि तदाहं मन्ये यद् भारतं ब्रवीति; यदाहं श्वसिमि तदाभारत मेव श्वसिति । अहमस्मि भारतम् ।

धन्या भारतमही या एतादृशान् महात्मनः प्रसूते ।
यः प्रेक्षतेस्म खलु राममयीं धरित्री
मेता मुदारचरितः प्रभु रामतीर्थो
रामाभिराम चरणाब्जनिलीनचित्त
भृङ्गो हि सः समभवज्जगतीहितार्थी ॥

स्वामी रामतीर्थ स्त्वासीत् साधुताया दिव्यमेव मण्डनम् । तं तु जगदिदं ध्यानस्यापि ध्येयमिव, ज्ञानस्यापि ज्ञेयमिव, नियमानां नेमिमिव, तपसस्तत्त्वमिव, दाक्षिण्यस्य दाक्ष्यमिव, सद्वृत्ततायाश्च सद्वृत्त मिव मेने ।

स रामतीर्थो यत्रागमत् तत्र तम्प्रत्युद्गन्तुं जन समुद्र उत्तरलो बभूव; स यदा बभाषे तदा तद्-भाषणं श्रोतुं सकलापि जगती सत्वर मधावत्; स यदा अगर्जत् तदा निखिलापि मही विवलितु मारभत, यदा स व्यद्योतत, तदा विद्युतोऽपि आत्मान मपाह्नोषत; स यत्र उपाविशत् तत्र तीर्थ मभवत्; स येन येन मार्गेण जगाम स स मार्गो मन्दाकिन्याः प्रवाह इव पावनो जातः । न तत्र कस्मिन्नपि प्राणिनि द्वेषधीः प्रत्यलक्ष्यत अतः सिंहव्याघ्रादिश्वापदास्तस्य सविधे तत्सुहृद इव अवतस्थिरे, मृग-मयूरपिकशुकसारिकादिकास्तं स्वकीय बन्धुमिवामन्यन्त; तदभ्याशे पतत्रिणस्ते स च महात्मा तत्सकाशे कौटुम्बं सुखमिवासादयन्तिस्म । वस्तुतः सः स्वकीयया स्थित्या अस्मिन् भूमण्डले स्वर्गमेवावतारयासास । आनन्दो, मन्ये, तद्रूपमाधाय अस्मिल्लोके प्रादुर्भूतोऽभवत् । तद्दृष्ट्यां संसार एष रामात् पर आसीदेव न। सर्वमेव स राममयम-पश्यत् । श्रूयते यद् गङ्गासलिलोत्तुङ्गतरलतरङ्गश्रियं स्वकीयं राममेव मत्वा तत्रैव सः समुदं व्यलीयत ।

सत्यमेवदं—

न यावद् रमानाथ पादारविन्दं
जनाश्छद्मकापट्य हीना भवन्तः
भजन्तीह भक्त्या भृशप्रीतिमन्तो
न तावद् भवेच्छान्ति-सन्तोषलाभः ॥

परं भगवच्चरणसरसिजयो र्भक्तिरपि तावद् भवितु मेव नार्हति यावत् सत्-सन्निधि र्नासाद्यते ।

उक्तमत एव—

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
कालेन फलते तीर्थं सद्यः साधुसमागमः ॥

जगति रामतीर्थसंकाशसाधुपुरुषस्य दर्शनं कुतः सम्भवम् । भूयः संसारोऽयं रामतीर्थसभं रामप्राणं साधूत्तमं प्राप्नुयादिति सनिर्वन्धं सविनयञ्च भगवान् प्रार्थ्यते ।

ध्येयं वदन्ति शिवमेव हि केचिदन्ये,
विष्णुं गणेशमपरे तु हिमाद्रिपुत्रीं ।
रूपैस्तु तैरपि विभासि यतस्त्वमेव,
तस्मात् त्वमेव शरणं मम रामतीर्थ ॥



# योगिराजोऽरविन्दः

आसीत् स भारत-मानसस्य राजहंसः; मेदिनीमण्डलोद्यानस्य कुसुमाकरः, देशभक्तिसर्वस्वकुमुदानां सुधाकरः, मर्त्यलोकदेवलोकयोः सङ्गमस्थलम् । द्विसप्तत्युत्तराष्टादशशततमेशवीयाब्दमसौ स्वेन जनुषा गौरवास्पदतां प्रापयन् वङ्गांस्तेषामुत्कर्षञ्चोन्नमयाम्बभूव । तन्नयनयोस्तेजसः सत्यस्य च मनोज्ञा आभा विबभौ । बिस्मयावहा तपः श्री स्मितरेखा तदधराजिरे नृत्यन्ती व्यालोक्यत । आसीत् स योगिराजोऽरविन्दः ।

अरविन्दस्तत्पित्रा शिक्षार्जनायेङ्गलेण्डाख्यदेशं प्रति प्राहीयत । तदा स सप्तवर्षं देशीयतामबिभः । शिक्षां लब्ध्वा, स श्चतुर्दशाब्दानन्तरं नैजमातृभूमिं निववृते ।

अरविन्दं प्राप्य विद्वज्जगती धन्याम्बभूव । इंगलेण्डमध्यास्य स भारतीय शासनसेवापरीक्षान्तूदतरदेव, ग्रीक-लैटिन-फ्रैञ्चजर्मनेटलियनभाषासु तत्साहित्ये च कौशलं जगाहे । 'दाँते-गोये' इत्येतन्नामधेययो विद्वद्धौरेययोश्च साहित्यमन्वास्त स रुचिपूर्वकम् । यदीयस्य जीवनस्य पूर्वार्द्धं मनीषिणां लोकः प्रतीच्याना मनेकविद्यानां निधित्वं गतमपश्यत् तदीयस्यैव जीवनस्योत्तरार्द्धं स भारतीयदर्शन-शास्त्र-गीतोपनिषदादिषु निष्णाततां च गत मदर्शत् ।

अरविन्दस्तेषु विद्यावत्सु नासीद् येषां विद्वत्ता, येषां प्रतिभावल्गुता च स्वस्य व्यक्तित्वस्योत्थापने, स्वकुटुम्बसंभरणे, पुष्कलसम्पदुपार्जने, सांसारिकसुखसमृद्धिपदैश्वर्यप्रतिष्ठासादने चात्मानं संलग्नीकृत्य कृतकृत्यतां याति । अतः न स बडौदा कालेजे आचार्यत्वकार्येऽतुष्यत् न स गायकवाडनरेशस्य सचिवत्वेऽप्रीयत, न चान्यस्यामपि कस्याञ्चनोच्चतमभृत्याया मरज्यत् । सः पञ्चाधिकैकोनविंशतिशततमेशवीयवर्षे वङ्गविच्छेदजनितहिंसानलस्य ज्वालां स्वप्रदेशे समुत्तिष्ठन्ती मालोक्य तत्क्षण एव सर्वस्वमप्युत्सृज्य स्वप्रदेशस्याखण्डतायै स्वदेशसेवाया मात्मानं समर्पयामास । बलीयस्या निःस्वार्थभव्यभावनया देशभक्त्या च स्वदेशवासिनां मानसेषु राष्ट्रियतामन्दाकिनी मवतारयामास स मनीषिमौलिमणिः । आंग्लशासनं तदीयानि त्यागविभ्राजितानि देशानुरागप्रगाढपराणि महान्ति कार्याणि नितरा मदूधुनन् । तदभैषीदतितराम् । अलीपुरषड्यन्त्राभियोगे तेन स न्यगृह्यत । अक्षिप्यत च सः कारागारे । परं चित्तरञ्जनदासस्य सुव्युत्पन्नतयागाधविद्वत्तया प्रतिभया विद्योत्यमाना प्राड्विवाकता तं तस्या जीवनहारिण्या विपदो ररक्ष । दशाधिकैकोनविंशतिशततमेशवीयवर्षे पुनः स देश प्रेमापराधे शासनेन दण्डनीयो मतो बभूव । परं तदानी मांग्लशासितदेशाद् दूरे तस्य

स्थितत्वात् तत् (आंग्लशासनम्) तं सङ्कटे निपातयितुं न शशाक । राजनीतिकानि कार्याणि तानि यद्यप्यतिशयवेगपूर्वकं विदधतस्तस्य चत्वार्येव वर्षाणि व्यतीतानि परं स तस्मिन्नल्पिष्ठ एव काले नवराष्ट्रियसंघस्य नेतृष्वन्यतमो महान् नेता भूत्वा नैजदेशस्य राजनीतिकविचारधारायां देशाराधनभावनायाञ्च स्वकीयै रुत्कृष्टतरैः कार्यैस्तेजोमयै र्वैदग्ध्यविभ्राजितै र्विवेकबन्धुरै र्भाषणैः सत्कर्त्तव्य पथप्रदर्शकैः प्रेरणाप्रदै र्लेखैः 'वन्देमातरम्', 'कर्मयोगी', 'धर्म' इत्येतैः सुप्रथितैः पत्रैश्च प्रकम्पनविशङ्कट कल्लोलान् अखच्नात् । अरविन्दस्य राष्ट्रियसंघः स्वकीयेन भारतप्रेमनिष्ठेनाध्यवसायेन वैदेशिकशासनविरोधिन्या क्रियया अन्यायपरिपन्थिकर्मनिकुरम्बेण चांग्लशासनस्य हृदये महद् भयमजनयत्, तद्राजनीतिकान्दोलनस्य ध्येयं देश-स्वातन्त्र्य समासादनं वरीवर्तीति तद् विवेद । स राजनीतिकसंघोऽपि स्वलक्ष्यमवाप्तु मुद्योगागारान्, राष्ट्रियशिक्षणालयान्, न्यायाधिकरणानि, विविधानि च जन संगठनकारीण्यायोजनान्यवाललम्बे ।

तदानीं प्रयासो भारतीयजनापकारपरं ब्रिटिशशासनं समूलमुत्सादयितुं समुत्थापितोऽभूत् । ये धीरा वैदेशिकाच्छासनाद्धिताचरणमाशासिषत तेऽपि निराशहृदया अभूवन् । विपिनचन्द्रपालस्य 'शिमलाया देवाताभ्यः स्वदृष्टिं परावर्त्य सम्प्रत्यस्माभिः सा क्षुधितेषु वसनविहीनेषु क्षेप्तव्ये' तिकथन मत्र ज्वलत्प्रमाणमस्ति । वस्तुतः आंग्लशासनेन देशस्य स्थिति र्नितरां शोचनीयतां गमितासीत् । अत एव तु तस्यान्दोलनस्य प्रवर्तयिता लोकमान्यस्तिलकः 'समयो यदा आगतः स्यात् तदा वयं राजस्वमपि न प्रदास्याम' इति वक्तु मबाध्यत ।

अलीपुर कारागारे योऽनेहा अरविन्दस्यातीतो बभूव सः कालस्तज्जीवनम्प्रति वस्तुतो नितरांश्रेयस्करोऽसिद्धचत् । अलीपुरबन्दिगृह मधिवसन् स गम्भीरां धर्मानुभूतिमकार्षीत् । सा अनुभूतिस्तदीयजीवननदप्रवाहमेव विपर्यासयत् । सः यद्वर्णनं, तद्विचित्रपरिवर्तन मुद्दिश्य, चकार तत् तदीयं वक्तव्यमेव सम्यगस्माकं पुर प्रस्तवीति । स वन्दिसदने वसन् आत्मप्रकाशं प्राप्तुं सदवसर मविन्दत् । सः परमपितुः परमात्मन आह्वानं शुश्राव । ऐश्वरं तेजो भगवद्गीताया भगवद्रूपं निधाय तस्य पुरतः प्रास्फुरत् । सः सर्वत्र सर्वतश्च भागवतं रूपं ददर्श । कारायाः वातायने, अन्नोकहस्याधस्ताद्, वन्दिशालाया अजिरे, न्यायाधीशस्य च भवने यत्रापि सः तस्थौ तत्र सर्वत्र भगवन्तमैक्षिष्ट । कारागारान्मुक्तिं प्राप्य स आत्मानं कार्यान्तरे विनियोजयेदित्येष भगवत आदेश आसीत् तम्प्रति । वयमीक्षामहे यद् वन्दिगृहान्मुक्तेः प्राप्त्यनन्तरं तज्जीवनं जनसेवाकार्याद् विरतं बभूव । १९१० तमेशवीयं वर्षं तदासीद् यदा सः पाण्डेचरीं स्वसाधनार्थं समुचितां मत्वा तत्र वसतिं कर्तुं मारभत । पञ्चाशदधिकैकोन

विंशतिशततमेशवीयाब्दं यावत्—निर्वाणकालपर्यन्तम्—स भगवदुपासनायामेव निलीनोऽदृश्यत । स आध्यात्मिकीं शक्तिं वर्धयन्; यौगिकं बलं प्रबलयन् स्वकीयया साधनया तपश्चर्यया च लोकं गन्तव्य मध्वानं प्रदर्शयन्, ज्ञानोदधिभूतान् ग्रन्थाननेकशः प्रणयंश्चत्वारिंशद्वर्षव्यापिनं काल मतिवाहयामास ।

योगिराजोऽरविन्दो दी आइडियल ऑफ ह्यूमन यूनीटी—दी ह्यूमन साइकिल दी रैनेसेन्स इन् इण्डिया—एसेज ऑन गीता प्रभृतिग्रन्थान् प्रणीय विदुषांधियो ऽथचात्मनो बलन्तु अवीवृधदेव, परं सः सावित्रीसंज्ञिकां प्रकृष्टतमां ललिततमाञ्च कवितां संसृज्य सहृदयानामपि हृदयानि समतूतुषत् । 'आर्य' पत्रे च बहुविधानने-काँल्लेखान् प्रकाश्य लोकहितं सम्पादयाम्बभूव । भारतीयसंस्कृतिः का ? इत्येतस्मिन् विषये यस्य जिज्ञासा विजृम्भते सः तल्लेखानधीत्य ध्रुवं सुखमसीमं शान्तिञ्च शाश्वतिकी मवाप्नुयात् । सः स्वसाहित्यिक रचनायाः प्रथमायांश्शृङ्खलायां प्रारम्भ एव विश्वासमिममभिव्यानक् स्वकीय मात्मान मधिष्ठिते सति भारते, भारतस्य नवीनं जागरणं तदिदं मतं स्यान्न ततःप्राक् । यदा भारतं नैजमाचारं प्रपद्येत तदावश्यमेव तदीयं वर्ष्म आमूलचूलं परिवर्तेत ।

स योगिराजोऽरविन्दः स्वदेशवासिनो व्याजहार—

प्रथमं कर्त्तव्यमस्ति भारतीयतायाः स्वपूर्वजेभ्यश्चोज्ज्वलज्योतिषश्चा धिगमनम् । भारतीयाः, आर्य जीवनम्, आर्यविचारम् आर्य संस्कृतिञ्चाश्रयत । सर्व मेतदात्मयज्ञेन सम्पद्येत, सत्कर्मणा च समुपपद्येत । समाजार्थ कृतं कर्म भवति श्रेष्ठं कर्म; राष्ट्रहितं हि भवति ततोऽपि गरीयः । स्वकीयानीन्द्रियाणि विजित्यात्मसेवाया-मासजत' ।

दीं मेसेज ऑफ श्री अरविन्दं एण्ड दी आश्रम इत्येतन्नामधेयग्रन्थेस लिखति—

'दी मेन केन ग्रो आउट ऑफ हिज प्रजेण्ट इम्पर्फेक्सन्स इन टू ए परफेक्ट इण्डिविजुअल, देट दी परफेक्ट मेन केन विकम ए न्यूक्लियस एण्ड एफोर्स दी इवो ल्यूशन आफ दी परफेक्ट सोसायटी एण्ड देट दी ट्रू यूनीटी ऑफ दी ह्यूमन रेस केन ऑन्ली आउट फ्लावर फ्रॉम ए यूनियन ऑन दी सोल लेविल-इज इन सवस्टेन्स, दी सेण्ट्रल पार्ट ऑफ हिज टीचिंग । दी की टू धिस चेञ्ज ऑफ मेन इज एसेन्सियली स्प्रिचुअल, एण्ड इट लाइज इन दी इवोकेशन एण्ड डेवलपमेण्ट ऑफ दी लेटेण्ट फेक-ल्टीज आफ हिज इन्नर एण्ड इन्नर मोस्ट वीइंग । मेन हेज टू सीज टू लिव ऑन दी सरफेस, लर्न टू लिव फ्रॉम विदिन आउट वार्ड, ही मस्ट फाइण्ड हिज सोल । ऑल लाइफ इन दी आश्रम सेण्टर्स राउण्ड धिस ट्रूथ' ।

भावोऽयं, यावन्मानव आत्मानुभूतिं न विदधाति तावदस्ति सोऽपूर्ण एव। आत्मज्ञानानन्तर मेव स याति पूर्णताम्। आत्मज्ञ मानवो वात्मनिस्थित एव सः सकलान्यपि तानि कार्याणि कर्तुं क्षमो जायते यै र्ब्रह्माण्डसहितं सर्वमपि जगद् याति संगठितम्। अहो सः—

देशस्य सेवा मभिनन्दनीयां
व्यधात् सहित्वापि विपत्कठोराः
प्रादीद्दशल्लोकहिताय मार्गं
चाध्यात्मिकं योग्यरविन्दविद्वान्॥

आसीत् स देशस्य महोज्ज्वला श्रीः
लोकोत्तराणां महसां च राशिः
दिव्यं प्रकृष्टं शुभ वल्गुपुण्य
मस्मत्पुनीत प्रियभारतस्य॥

राजनीतिकक्षेत्रादवकाशग्रहणस्यायमर्थो नारविन्दयोगिनोऽभूद् यत् स विश्वस्य गतिविधौ किं वा भारतस्य दिष्टे नाभिरुचिं जग्राह। जगति भारते च घटितासु घटनासु स नैजदृष्टिं निदधानोऽपि समलक्ष्यत। यदा यदात्ययिकताऽऽपतत् तदा तदा सः स्वविचार मपि सक्रिय मभिव्यानञ्ज, परं तदीय आत्मा प्राधान्येन कार्त्स्न्येन चाध्यात्मिकेषु कार्येष्वेव सुदृढतया शान्त्या च रेमे। राजनीतिकक्षेत्रपरित्यागानन्तरं द्विरेव सः प्रत्यक्षतः सार्वजनिके कार्ये प्रभावं स्व मद्वालयत्। एकदा तु द्वितीयस्मिन् महासंयुगावसरे स हिटलरं विरुन्धन् युद्धनिधि प्रयोजनेन धनं सञ्चिन्वानस्तान् जनान् प्रोत्साहयामास ये समिति कार्येषु भागं जिघृक्षन्ति स्म वानीकिन्यां प्रवेशमलिप्सन्। अन्यदा तु सः क्रिप्सविनियोगं परिपुष्णन् राष्ट्रियमहासभानेतृनभिदधौ तदङ्गीकरणाय येन भारतेङ्गलेण्डदेशौ द्वावपि संगठिता वैक्यविनिवद्धौ च भवितु मर्हेतां किञ्च हिटलरं नाजिवादं च विरोद्धुं शक्नुयाताम्।

अरविन्दस्य साहित्यं प्रभूतं च वर्तते। तदध्ययनेन वयं वेदवेदान्तगीतोपनिषदादिषु राजमानायाः ज्ञानश्रियो दर्शन मनायासेन विन्दमाना स्तत्तच्छास्त्राण्यधिकृत्य व्यक्तीकृतान् तदीयान् विचारान् सम्यग् ज्ञातुं शक्नुमः। १९१८-१९१९ तमेशवीययोरब्दयोः प्रकाशितास्तल्लेखा वस्तुतः सन्ति पठनीयाः। भारतीय संस्कृतिं वस्तुतस्तत्तल्लेखद्वारेण समीचीनतया द्रष्टुं प्रभवामः। स वक्ति यद् यदि वयं वेदस्य हृदयं दिद्रक्षामस्तदा तदर्थं तत्र वर्णितयोः प्रकाशध्वान्तयोः, सत्यानृतयो ज्ञानाज्ञानयो

मूर्तत्वामृतत्वयोश्चान्तराले परस्परघटितसंघर्षस्यावगमनं वर्णितानाञ्च तत्रत्यानां पदार्थानां तत्तत्तत्त्वप्रतीकभूतत्वेन चावबोधनमपेक्ष्येते ।

योगिराजोऽरविन्दो वर्तमानस्य युगस्य महान् सिद्धपुरुषोऽभवत् । योयमभिलाषमादाय तस्य पुरतो ययौ तस्य सोऽभिलाषः सफलोऽभूत् । स वीक्ष्यैव जनस्य हृद्गतमीप्सितमजानात् । तत्र वस्तुतो वहवश्चमत्कारा व्यालोक्यन्त । योगविद्याया मसावद्भुतमेव साफल्यं विन्दन् समवीक्ष्यत शतकेऽस्मिन् । नूनं सः पुनः भारतीयताया जीवनं नूतनीकृतवान् । अचलानां स्थैर्य्यं, सागराणां गाम्भीर्यं, भास्करस्य तेजश्चन्द्रस्याह्लादकत्वम् आकाशस्य निर्मलत्वञ्च तस्मिन् विरेजिरे । वैनतेयमिव स्वप्रभावोपात्तद्विजाधिकारं, दिवसमिव उद्यद्भानुबिम्बभास्वरमुखम्, सुकृतमिवादिमध्यावसानकल्याणकरं प्रभातसमयमिव पूर्वदिग्भागरागानुमेयमित्रोदयं, सुरनदीप्रवाहमिव सर्वदुरितापहरं, हंसमिव मानसप्रचारं, रसिकानां, विद्वद्वराणां, दार्शनिकानां, राजनीतिविचक्षणानां. समाजसेवापरायणानां, धार्मिकाणां, देशानुरागैकव्रताना माश्रयम्, अयोगप्रयोगपर मपि योगप्रयोगपरं क्षमानुगतमपि सुधर्माधिष्ठितं विदित सकलप्राच्यप्रतीच्य शास्त्रसारं पुराणेतिहासकथालापकुशलं तं प्राप्य योगिनं भारतवसुन्धरातीतकालवर्ति योगिमुनिवर्षिमतीव संदिदीपे । नूनमसौ भारतसरोवरस्यास्य अरविन्दोऽरविन्दमेवासीत् ।

स्वसेवया यो निजभारताम्वां कर्तुं प्रसन्ना मनिशं ययाम ।
शरीरिणां स्थावर जङ्गमानां सुखाय जातः स इह क्षमायाम् ॥



# महर्षो रमणः

उपनिषत्सु या विशिष्टताः गुणा धर्मश्च ये गीयन्ते, महर्षौ रमणे तेषां दर्शन मवाप्त मभूत् । आसीत् स आत्मज्ञो योगी । तस्मिन्नात्मसत्ताया अभिव्यक्ति रदीप्यत । न तद् दृष्ट्यां कोऽपि परः; समग्रापि जगती तदीयासीत् । आत्मचेतना जगत स्तत्र प्रास्फुरत् । आसीत् सोऽरुणाचलस्य सजीवं दिव्यस्वरूपम् । मायामोहतमोऽभिभूतस्य जडविज्ञान प्रपीडितस्य प्राणिनः कृते स आत्मान मयजत् । आसीदसौ श्रद्धामयो भक्ति मयोऽरुणाचलः । आजीवनं स आत्मनि रममाणो रमणस्तद्रसमास्वदत । जीवन्मुक्तो मुनिवरो भवन् सः भुवि बभ्राजे । दक्षिण भारतस्य अरुणाचल प्रदेशे संख्यातीता जना स्तच्चरणयो र्नता भवन्तः स्तत्र स्वकीया ममितां निष्ठां प्रकटीचक्रुः । परमसिद्धः स भुक्तिमुक्तिप्रदाताऽऽसीत् । आसीच्च सः मौनभाषा आत्मशान्त्याः । मौनं या सक्रिया शक्ति रधिवसति न सा भाषणे किं वा प्रवचने वर्तते इत्येतत् स आत्मतपोमयजीवनेन असात्सीत् । अस्ति तदीय मात्मदर्शनं सर्वदर्शनम् ।

रमण महर्षे राश्रमपदं सांसारिकता-मरुधरित्र्या मुद्यान मिव भाति । तत्र प्रविश्य प्राणिनः प्राणाःशीततां, शान्ति तृप्तिञ्च प्राप्नुवन्ति । महाकवि-लक्ष्मणसूरिं र्योगीन्द्रं रमणं स्तवीत्येवम्—

वन्देऽरुणगिरिशिखरे द्वितीय मरुणाचलेशमिव भान्तम् ।
आनन्द तुन्दिलं श्रीरमणमहर्षीन्द्र योगीन्द्रम् ॥

महर्षी रमण आत्मस्थितिं स्वीकुरुते स्म । स एकदा प्रावोचत् 'उपरामानन्तरं कां दशां यास्यामीति न विचारीणय मस्ति, विचारार्हन्तु इदं सम्प्रति त्वं किमसि इति"? एकस्यैव वस्तुतत्वस्य आत्मा परमात्मा चेत्येतन्नामद्वयम् इत्येतत् तथ्यं पर्यपूपुषत् सः । आत्मसाधनां व्याचक्षाणः स आत्मदर्शनं जीवनस्य पर्याय इति निजगाद । स रहस्यमय्या मात्मचेतनायां सन्ततं निमग्न एव प्राप्यत । शाश्वतचिन्मयात्मशान्ति रेव तस्य परमात्मानुभूति रासीत् । स लोकगुरुः सच्चिदानन्दस्वरूप परमात्म ज्योतिः सम्पन्न आत्मविद् बभूव ।

अरुणाचलस्य पौराणिक मितिवृत्तं रमणो महर्षिः प्राणान्वितञ्चकार । स्कन्द पुराण मरुणाचलं पृथिव्या हृदयत्वेन समस्तानाञ्च तीर्थानां शिरोमणित्वेन वर्णयति । महर्षेः श्वासानुश्वासा स्तस्य चिन्मय पावनारुणाचलस्योत्सङ्गे स्वस्था आसन् । तस्य (महर्षेः) आत्मोपासना अखिलस्यापि लोकस्य चेतनां क्वाणवतीं विदधौ । संसा-

रस्य निखिलेस्वपि कर्मसु आतमविलासं वा आत्मरति मनुबभूव सः। वैक्रमस्य विंशस्य शतकस्य आध्यात्मिकीषु विभूतिषु तदीया गणना नितरा मेव भारतसौभाग्यश्रियं समुद्दीपयति। आत्मप्रकाशेन स लोकजीवनं व्यद्योतयत्।

दक्षिणभारतस्य तमिल नाडुस्थ मदुरामण्डलान्तर्गत तिरुचुषिग्रामे, एकस्मिन् सामान्ये धर्मनिष्ठब्राह्मणकुले, ३०-१२-१८७९ तमेशवीय दिनाङ्के, महर्षी रमणः प्रादुर्बभूव। तस्य पावनेन जननेन मेदिन्या मात्मनः पूर्णः प्रकाशोऽवातरत्। तस्य पिता सुन्दर अय्यरो मदुरायां सुविदितः प्राड्विवाक् आसीत्। माता च तस्य (वेङ्कट रमणस्य, अषगम्माल, सती साध्वी महिलासीत्। तदीयो ज्येष्ठभ्राता 'नागस्वामी' त्येतेन नाम्ना प्रसिद्धोऽभवत्। उच्चशिक्षा प्राप्त्यर्थं यद्यपि तन्निमित्तेन व्यवस्था व्यधीयत परं न तत्र तस्य मनोऽरज्यत्। नाध्ययने स रुचिविशेष मदर्शयत्। सः सुन्दर सुशीलसौम्यो बालः शैव महात्मनां (नायनाराणाम्) जीवनवृत्त मनुशीलयन्नेव दृष्टोऽभवत्। देवदर्शनाय स मात्रा सह प्रत्यहं गतः। तत्र सः मम जीवनमपि सतां जीवन मिव स्यादिति भगवन्त मयाचत्। बाल्यादेव तस्य मनो वैराग्योन्मुखं बभूव। अस्मिन् नश्वरे संसारे एतदीयेषु क्षणिकेषु पदार्थेषु च सः मनागपि रुचिं न पर्यग्रहीत्। स तत्र सर्वत्र अनासक्तः समजायत। यदा हि सः पञ्चदशवर्षदेशीय आसीत्, स्वकीयां दिव्यां मनोभावना मागतस्य कस्यचनातिथेः पुरो निधाय तं परमाश्चर्ये न्यमज्जयत्। तस्य सः पर्यनुयोगस्तदीय मरुणाचलेश्वर शिवेन सार्धं शाश्वत मात्मसम्बन्धं प्रमाणीकृतवान्। सप्तदशाब्दवयस्को हि सः मृत्युस्वरूपं विचिन्त यन्नमरस्यात्मनः सनातनीं सत्ता मनुभवितु मारेभे। आत्मा अस्त्यविनश्वरः; अस्ति स मृत्योरपि परः। न तं सः स्प्रष्टु मपि शक्नोति; शरीर मग्नि र्दहति, वायुः शोषयति, आपः क्लेदयन्ति; न च आत्मनि तेषु कस्यापि प्रभावः पतितुमर्हति- इत्येतद् बोधन कारी व्यतिकरस्तं मृत्युविजयिनीं दशां निनाय।

गेहत्यागस्य समयः प्रत्यासीदत्। तस्य सप्तदशवर्षवयस्कस्य मनसि अरुणाचल स्मरण मुत्पेदे। सांसारिकं जीवनं हातुं गृहं त्यजन्नसौ मातरं पितरम्प्रति पत्र मलिखत् ":अहं परमात्मनो मार्गणाय तदाज्ञयैव, गच्छामि, शरीरमिदं सत्कार्यार्थ मेव प्रवर्तते। न मयि चिन्ता कार्या, न च मन एव कदर्थनीयम्" इति।

त्रिपञ्चाशदधिकैकोनविंशतिशततमवैक्रमाब्दे भाद्रमासे कृष्णपक्षे, नवम्यां प्रभात वेलायां तिरुवण्णामलै स्थानं रमण आससाद तत्र सोऽरुणाचलेश्वर भगवतो मन्दिरं प्रयाय भक्त्या श्रद्धया च प्रणतमस्तको भवन् भगवन्तं प्रार्थयामास प्रभो! मम लज्जा भवदधीना; अहं भवच्चरणयो रात्मान मर्पयामि; देव आत्मज्ञानं देहि। दर्शनं विधाय भगवतः सः ,अयंकुलं' नाम सरोवर मागत स्तत्र सः सर्वमपि

परिच्छदं प्रक्षिप्य कौपीनवान् बभूव । कृत्स्नतया सः सञ्जातोऽवधूतः । सहस्रस्तम्भं मण्डप मधिष्ठाय जपं कर्तुमारभत मौनव्रतञ्च स्वीचक्रे । आत्मध्याननिलीनः सः शरीर मपि विसस्मार। दिग्दिगन्तरेभ्य स्तद्दर्शनाय सहस्रशो जना आगन्तु मारेभिरे। सर्वत्र स बालयोगी विख्यातो बभूव । केनापि प्रकारेण तस्य स्थिति मरुणाचले विज्ञाय तस्य पितृव्यो माता च तं द्रष्टु मागमताम् । पितृव्यस्य मातुश्च स्नेह मयानुरोधे कृतेऽपि स गेहं गन्तुं नोद्यतोऽभूत् । मौनव्रती सः "विधाता प्राणिनां भाग्यानुसारं निर्णयति; यन्न भावि, तन्न भवेत्;" इति निशम्य माता स्वजनाश्च निराशा भूत्वा निववृतिरे ।

रमणो महर्षि र्विरूपाक्षकन्दरायाम् आम्रदर्याञ्च तपस्यां व्यदधात् । विरूपाक्षगह्वर मधिवसन् सः 'अक्षरमणमालै' अररचत् । तद्भक्ताः शिष्याश्च अक्षर रमणमालैस्थितानि गीतानि गायं गायं ग्रामेषु भिक्षन्ते स्म ।

रमणस्याश्रम-जीवनं परमतपोमयमासीत् । आश्रमस्य प्लवङ्गमाः, विहगाः मृगाश्च तस्य सहचरा अभूवन् । एकादश समाः स मौनव्रत मधारयत् । तदा त्यक्तमौनव्रतः स दर्शनार्थ मागतान् गणपति शास्त्रि प्रभृति भक्तान् समभाषत "आत्मानुसन्धाने सततं संलग्नमनस्कतैव तपस्यास्ति'। सः सिद्धिषु चमत्कारेषु च न रुचि मदर्शयत् तत्र स जुगुप्सते स्म । 'चराचरात्मके जगति एकैव चेतनसत्ता राजते। एवंविधायां स्थित्यां सिद्धेः किं प्रयोजनम् ?' इत्येष तदीयो विचार आसीत्। तत्साधनायाः स्वरूपन्तु आत्मान्वेषण मभूत् । आत्मज्ञानायैव स जगति विरज्यंस्त पश्चचार ।" सर्वोत्तमा परमशक्तिमयी भाषा मौन मस्ति । मौनं शान्तेर्भूषणम् ।

रमणाश्रम मागम्य देश-देशान्तरीया अध्यात्मपथजिज्ञासवः स्वां स्वां जिज्ञासां पिपासाञ्च निर्वापयितु मशकन् । महर्षेः दृक्पातमात्रेण मौनभाषायाः प्रवाहबलादेव जिज्ञासूनां शङ्का प्रश्नाश्च समाहिताः समजायन्त । महर्षेः रमणस्य मौनं साधनायाः प्राणभूतमभूत् शान्तिश्च तदीयाया आत्मोपासनायाः शक्ति र्वा सखी बभूव । वस्तुतः स आसीदात्मवेत्ता। 'सर्वेष्वपि जनेषु समतायाः स्थापनापेक्ष्यते' इत्येतद् वदन्त जिज्ञासुं सः प्राचकथत् "सर्वैरपि स्वप्तव्यम्" निद्रायां समतास्ति"। एकदा, महर्षिणोक्तम्, विवेकानन्दः परमहंसं रामकृष्णमप्राक्षीत् अपि किं भवता परमात्मा प्रेक्षितः ?, परमहन्तु केन न परमात्मा दृष्ट इति पृच्छामि स इत्याह । बाबू राजेन्द्रप्रसादो महर्षे, महात्मना भवत्सकाशेऽहं प्रहितोऽस्मि, अपि किं तदर्थं कमपि सन्देशं ददीत' इत्येतन्निवेदयामास । महर्षि र्गम्भीरां शान्तिमादाय, 'किं नाम सन्देष्टव्यम्; हृदयं हृदयं जानाति; अत्र या शक्तिः कार्यं कुरुते सैव तत्रापि कार्यंरतास्ति' इत्येतदाख्यातवान् । एकदा हि माता अपगम्भाल रमणस्य शरीरं शिवलिङ्गे विपरिणमद्

विलोक्य सविस्मय मबिभेत्, यदा हि सा रमणोऽस्मान् परित्यजतीति विचारयन्ती निः स्तब्धा स्थितासीत् तदैव शनैःशनैः लिङ्गं रमणशरीर मनुहरद् वीक्षितवती-इत्येतां घटनां योगिनं रङ्गनाथं निवेदयन्तीं मातरं स्मेराननो भवत् ददर्श, अनुमेने च तत्कथनं स्मितेनैव। एतद् एतद्विध मन्यच्च तस्यात्मसिद्धि मभिव्यनक्ति।

महर्षि श्चतुः पञ्चाशद् वर्षाणि अरुणाचलस्य तां भुव मपुनात्। स महान् अपरिग्रही करुणावरुणालयो महात्मासीत्। आत्ययिकतायां सत्या मपि सूत्र-सूच्यो रप्ययाचनं; वायसस्योपरतस्य समाधेः प्रतिष्ठापनं तस्य निर्दिष्टवैशिष्ट्यश्रियं पुरः सन्निदधाति।

आत्मनि सति स्थिते, आत्मसाक्षात्कारः सुलभो भवति। जीवनस्यास्य मूले शाश्वतनिराकारसच्चिदानन्द स्वरूप आत्मा सन्तिष्ठते। स एव ज्ञातव्योऽस्ति, परमेश्वरावगमनाय आत्मा वेत्तव्यः आत्मनः पृथक् न परमात्मनः सत्ता। आत्माभिव्यक्तिरेव 'परमात्मे' त्युच्यते। आत्मानभिज्ञत्वादेव संसारो दुःखं भजते। पारमार्थिकी सत्तैवास्ति सत्यम्। चेतनताया नामान्तर मेव आत्म चैतन्य मितिज्ञेयम्' इत्येतन्महर्षेः प्रकथन मासीत्। स आत्मसाधनायाः क्षेत्रे तन्मयीं निष्ठामेव पर्यपोषयत्। आत्मस्थिति मेव स आत्मज्ञानं प्रत्यपादयत्। न मनो वर मवरं वा, वासनानुरुपमेव मनः प्रेक्ष्यते। तद्वत्तैव तस्य वरावरत्वे हेतु र्भवति—इत्येतदभिदधदसौ आत्मसिद्धिः सर्वाभ्योऽपि सिद्धिभ्यो गरीयसी; दुःखस्य कारणं वहिश्चरं न, तत्तु अन्तश्चरम्। दुःख महङ्कारादुत्पद्यते इति निजगाद।

विश्वस्य महात्मनां साहित्ये महर्षिरमणस्य स्थानं परमगौरवावहं स्थानम्। आत्मलीनतानेहसं यावदसौ रमणाश्रममेव विभूषयाम्बभूव। १४-४-१९५० तमेशवीय दिनाङ्के स आत्मनि न्यलीयत। जगति सन्ति महर्षे रनुयायिनो बहुसंख्यकाः। श्री काव्यकण्ठ गणपतिशास्त्रिणा 'रमणगीतां कृत्वा स उपश्लोकितः। टी. वी कपालिशास्त्री 'सद् दर्शन भाष्यं, महर्षिणा सह सम्भाषणम्' इत्येते रचने द्वे कृतवान्। कवियोगी शुद्धानन्द भारती 'रमण विजयम्' अलेखीत्। पाल ब्राण्टनः गुप्त भारतस्य अन्वेषणम्,' 'रहस्य पथम्,' 'अरुणाचलसन्देशञ्च प्रणिनाय।

महर्षिरमण आत्मशान्ते रगाध सागर आसीत्। आसीच्च स तमिलसाहित्य निष्णातः, आंग्ल-संस्कृत-तेलगु-मलयालम्प्रभृतिभाषाविच्च। अरुणाचलस्तत् तपसा धन्यः कृतार्थो गौरववांश्च सञ्जातः।

जयतु रमणयोगी योगविद्याविहारी
कृतपरुषतपस्यो मौनसेवी महर्षिः
त्रिगुणरहितभावो ह्यात्मदर्शी महात्मा
सततशमगतः सोऽद्वैततानन्दलीनः



# महात्मा गान्धी

त्त्ति वाचि क्रियायां च साधूना मेक रुपता ।
उदार चरिता नान्तु वसुधैव कुटुम्बकम् ॥

यदा जगदनाचारदानवप्रपीडितं सञ्जायते; यदा अन्यायक्रकचो दुर्बलानां शिरांसि दारयितु मारभते; यदा द्वेष संरम्भेर्ष्यादि दोषै ग्रस्तीक्रियते वसुन्धरा, यदा दैन्य दासत्व निगडेन जायते मानवा निबद्धाः; यदा सांसारिकान् विषयान् जीवनस्य चरमलक्ष्यत्वेन मत्वा तदवाप्त्यर्थ मीश्वर प्रदत्ताः शक्ती लोको दुरुपयुनक्ति, यदा च मानवो मानवत्वादात्मानं निपातयति तदा तेभ्यस्तेभ्य आगतेभ्यो दोषेभ्यो जगतीं रक्षितुं सकलानपि विकारान् निषूदयितु माध्यात्मिकान् भावान् उद्बोधयितु मुत्थाप यितुं च लोकोत्तरबलतेजोविभूतिसम्पन्नोऽवनि मण्डलेऽवतरति महानात्मा । स आत्मा नैज सदाचारानुगत पावनोदात्त कार्य कलापैः कर्त्तव्य पराङ्मुखान् न्यक्कृतधर्मान् मानवान् कर्त्तव्ये धर्मे च प्रवर्त्तयितुं प्रतिष्ठापयितुं च प्रयतते । महात्मा गान्धी अप्यासी न्महत्स्वात्मस्वन्यतमो महानात्मा ।

महात्मा गान्धी नवषष्ठ्यधिकाष्टादश शततमेशवीवाब्दे 'पोरवन्दर' इत्येतदाख्ये स्थाने वैष्णवान्ववाये समजनिष्ट । मातुः पितुश्च धर्मनिष्ठत्वात् सत्यप्रियत्वात् तद् गुणानां प्रभावोऽपि तस्मिन्नुल्वणतयावलोकितोऽभूत् तदैव, यदा स बाल एवासीत् । आयुषः सप्तमेऽब्दे सोऽध्येतुं पाठशाला मन्वगात् । न तस्मिन् सामान्य बाल सुलभ पारिप्लवत्वं शैशवेऽपि व्यालोकि । प्रकृत्या सः शालीनोऽर्भक आसीत् । यथासमयं विद्यालय गमनं ततश्च समये गृहम्प्रति निवर्तनं तस्य तदानीं प्रमुख माह्निकं कृत्यम-भवत् गुरुजनेषु तस्य हृदयं श्रद्धामयं तदाप्रभृत्येव व्यालोक्यत । न तस्मिन् श्रम विमुखता न चालसभावोऽवाप्यत । पुस्तकानां मनोयोग पूर्वक मध्ययनं सः स्वकीयं परमकर्त्तव्य मवजगाम । एकदासौ स्वकीयच्छात्र जीवन काले श्रवणकुमार-सत्य-हरिश्चन्द्राख्य नाटकद्वयं द्रष्टुं सदवसरमवाप । ताभ्यां नाटकाभ्या मासादितां शिक्षां सः स्वजीवनस्य ध्येय ममंस्त । सोऽपि श्रवणकुमार इव मातृ-पितृसेवाकारी तदा देश वर्ती, हरिश्चन्द्रो राजेव सत्यव्रत पालको भवितुं प्रयतिष्यत इत्येतं दृढतरं संकल्पं मनसा चकार । प्रत्याश्रुतञ्च, ततोऽसौ स्व जीवन मनुगमयितुं शक्ति पूर्वकं प्रययास

जीवनं सः सत्यस्य रक्षणे तस्य च मार्गणे व्यापारयामास। विद्यार्जनानेहसि क्रीडाया मरुचि समुत्पादनात् सुलेख लेखने चादत्तचित्तत्वात् जीवनं यावत्, तमेतत्प्रमाद द्वयं नितरां दुदाव।

वस्तुतस्तत् सुदिन मभूत् यस्मिन् जातोऽयं गेयचरितो गान्धी। सा सुजाता जननी या सकल जीवलोक सौभाग्य मजनयत् तं पुण्यवन्त मवदातमानसं मानसम्। पुण्ययन्ति पुण्यान्यपि तानि येषां स आसीच्छुभः परिणामः। ते परमाणवो नूनं सुकृतपसो ये तदवयवप्रणयने पर्यगृह्यन्त। सा सुभगा हि सौभाग्यलक्ष्मीः यया स आश्रीयत। आसीत् स भव्यः पुरुषभावो यस्तस्मिन् अवातिष्ठत। इयं धरणी धन्या यां हि सः कृत्यातिभारेण व्यभूषयत्। एतज्जगदखिलमेव सम्माननीयं यस्य स लोचन-गोचरतामगमत्। तत्कुल मतितरां प्रशंसनीयं यत्र स मणिरिव सम्बभूव।

यः स्वकीय जीवनं कृत्स्नतया संस्कृतं समुज्ज्वलं समुन्नतं च विधाय संसारं सत्यस्य मानवत्वस्य शान्तेश्चाध्वान मदीदृशत् स मातृ-पितृ कृतेन 'मोहनदास' इत्येतेन नाम्ना प्रथितो यदा गुण शशि वर्षदेशीय आसीत् विवाहितो बभूव। असन्मित्राणां सान्निध्यात् तस्मिन् कतिपये दोषाः प्रविविशुः। परं द्रागेव स आगतान् दोषान् निवारयामास। स्वकीयदोषाणां निगूहनं न स वरं मेने। अतः सः पत्रे लिखित्वा तान्, पित्रे तत्प्रददौ। पिता पत्रं पठित्वा मयि कठोरं मन्युं प्रदर्शयिष्यतीति विचिन्त्य स तां वेलां प्रतीक्षितु मारेभे। परं पिता तु तत्पत्रमधीत्य स्थाणुरिव निस्तब्धो बभूव। तदीयाभ्यां चक्षुर्भ्यां मनवरत मश्रुधारा वर्षितु मारभत। पितृवात्सल्य परिपूरितानि तान्यश्रूणि तस्य मनोमेदिनी मपाविषुः।

१८८७ तमेशवीयवर्षे मैट्रिक परीक्षा मुत्तीर्यं स मोहनदासः विधि शास्त्र-मध्येतु मिङ्गलेण्ड मसेधीत्। तत्र स नृत्ये संगीते च रुचिं न्यबध्नात्। फ्रेन्चा-दिभाषाणामपि अध्ययनं कृतवान्। मनोविनोदिषु साधनेषु रमयितु मात्मानं स ईहाञ्चक्रे परं बिना बिलम्बं नृत्यादिभ्यश्चित्तं व्यावर्त्य अध्येतव्येषु ग्रन्थेषु सः समग्रमपि कालं प्रायुङ्क्त। तत्र साधारणमेव जीवनं बिभ्राणः कठोराध्यवसाय-पुरस्सर मधिजगे। चतुर्भिरब्दैर्विधौ विद्वान् ( वैरिस्टरः ) भूत्वा स्वदेशं भारतं निववृते।

निसर्गतो महात्मा गान्धी कस्मिन्नपि प्राणिनि न द्वेष्टिस्म। सः सर्वेषामपि प्राणभृतां सुहृदासीत्। दीन दरिद्रेषु सः सदैव दयतेस्म; तेषां सेवां, तद् दुःखाप-नयनं च स्वधर्म ममन्यत, अन्यायं न स कदापि सहते स्म। न तद् कोऽपि पर आसीत्। सः दोषेषु अद्वेट् न च मानवेषु। दम्भे स न कदाप्यरज्यत। छल-

कपटासत्यताक्रूरतादुर्व्यवहार-पैशुन्य हिंसाद्यसद्भावास्तं स्प्रष्टुमपि न शेकुः अतः स तिलकमिव भूभुवनस्य, हृदयमिव धर्मस्य, आयतनमिव सन्नीतीनां, महासागर इव शुद्धतासरलतासरसतालिङ्गित सद्व्यवहाराणां, बन्धुरिव भावुकतायाः, मित्रमिव पवित्रतायाः, स्रोतः इव उपकारितायाः, निधि रिवस्निग्धतायाः कालुष्यापहारिणी गङ्गेव गवि प्रतिभातिस्म। समदर्शिभावधावल्यधवलेक्षणेन जनजीवनार्थं ममृतमिव स वर्षतिस्म। विधिवृत्तेस्तत्प्रकृति विसंवादिनीत्वात्, अनृततताया स्तत्स्वभावपरिपन्थित्वात्, मनसि वचसि कर्मणि च तस्यैक रूपत्वात् भूत्वापि विधिविपश्चित् स तां वृत्ति मचिरेणैव अजहात्।

अफ्रीका मधिवसतो महात्मनः पुरस्तात् काश्चन एतादृश्यो घटनाः अघटन्त यास्तन्मानसे देशाभिमानविषयिणी मात्म गौरव सम्बन्धिनीं भावनामुच्चैस्तरा मजजागरन्। नेटालन्ट्रान्सवाल जोहान्सवर्गाभिधेषु विषयेषु स भारतीयेषु वैदेशिकै विधीयमानानत्याचारान् क्रूरक्रूरतरांश्च दुर्व्यवहारान् न सोढुमशक्नत्। स प्रवासि भारतनिवासिना मधिकारान् पातु मन्याय विध्वंसन निपुणं घोरं विशाल मान्दोलनं सञ्चालयाम्बभूव। तत्कठोरतमं दमनं विरोद्धुं सः प्राणानपि स्वकीयान् होतु मुद्यतोऽभवत्। स तदानेकविधानि प्रभूतानि निन्दनीयानि निर्घृणता ग्रस्तानि कष्ठानि सेहे। आंग्लास्तस्मिन् यान् कर्कशान् दुराचारान् निष्ठुरांश्च प्रहारांश्चक्रुस्ते सकल मपि सभ्यमानव संसारं नितरां पीडयामासुः तस्मिन् कृतास्ते धिक्काराहीः शोचनीयाः कुत्सिताश्चानाचारा सुजनता मतितरामरूरुदन्। परं हन्त, स मानवतायाः अपचिते र्मनागपि न चचाल। तावत् सोऽजस्रं स्वकर्त्तव्यपथारूढ़ एव दृष्टोऽभवत् यावत् प्रारब्धे हि तस्मिन् अमानवतापरिपन्थिनि अन्यायविरोधिनि अत्याचार विनाशिनि कर्मणि सफलतां नाध्यगमत्। सत्य मेवोक्तं—'न्याय्यात् पथः प्रविचलन्ति पदं न धीराः'।

महात्मान्वर्थतया महात्मैवासीत्। अधो लिखितोक्तिर्महात्मगान्धिसंकाशेष्वेव केषुचन विरलेषु साधुषु चरितार्थीभवति—

ते साधवो भुवन मण्डल मौलिभूता ये साधुतां निरूपकारिषु दर्शयन्ति।
आत्मप्रयोजनवशीकृत खिन्नदेहः पूर्वोपकारिषु खलोऽपि हि सानुकम्पः॥

विसंस्थुलता महात्मागान्धिनः सकाशे प्रयातुं साहस मपि कर्तुं न शशाक। स विपन्नस्यारातेरपि विपदां वारणाय सर्वदा प्रायतत। स न कदापि आंग्लेषु द्वेषधियं निबबन्ध। स तु तेषां भेदबुद्धि मन्यायं निन्दनीयां शासनपद्धतिं च व्यरौत्सीत्।

सः सकृन्नासकृदांग्लानां साहाय्यमन्वतिष्ठत् । यदा यदा तेषु युद्धापद आपेतुः स तदा तदा हृदयेन धनेन प्रकारान्तरेण च तानुपचकार तेषां कृते तस्य सेवाः अहर्निशं समर्पिता आसन् । आसीत् सः परमात्मनो महान् भक्तः । तस्मिंस्तस्य सर्वमपि धृतं वभूव । तच्चरणयोः स्मरण मन्तरेण तस्य जीवन मेक मपिक्षणं न स्थातु मशक्नोत् । तदाराधनस्य तदीयानि साधनान्यासन् हृदयनिर्मलता, सत्यव्यवहारः, दीन-दरिद्र-सेवा, सर्वेष्वपि प्राणिष्वात्मानुकूलाचरणं, मानवतायाः संरक्षणम्, अन्याय-विरोधः, श्रेयस्करेषु कर्मसु निरन्तरसंलग्नता, अनुक्षणं मनसा निष्कामभावपूर्वकं भगवत्स्मरणञ्च । परमेश्वरे निहिता तदीया दृढतमावदाता भक्तिभावना तस्मिंस्तद्वलं तत्पौरुषं तत्तेजस्तच्च सत्साहस मजनयद् येन स निर्भयो भवन् बलवत्तममप्यनीतिपरं दुराचारान्यायाद्यसत्कर्मरतं सम्राजं विरोद्धुं समुद्यत एव पर्यवेक्ष्यत । यस्य साम्राज्ये सविता न कदाप्यस्तमगात्, सोऽसीमशक्तिसम्पन्नो ब्रिटिशसम्राट् तत्प्रवर्तितमहिंसात्मकमप्यान्दोलनं न पराजेतुं प्रवभूव । ईश्वरीय सामर्थ्यवतस्तस्यतेजसः समक्षे ब्रिटिश शासनं प्रणतमस्तक मजायत । तद् भारते, हि तदधिनायकतासञ्चालिते समरे स्थिते सति न स्थातुं प्राभवत् । विना विलम्बमेव भारतं हातुं तदबाध्यत । वस्तुतः सत्यं नासत्यं परिभवितुं न्यायं नान्यायोव्यापादयितुं, धर्मं नाधर्मो विध्वंसयितुं सन्नीतिञ्च न जात्वसन्नीति र्हन्तुं शक्नोति ।

महात्मगान्धिन स्तास्ता विशिष्टता स्तमजातशत्रुता मनैषुः । शत्रवोऽपि तस्मिन् प्रीयन्ते स्म, श्रद्धते स्म दृढीयांसञ्च विश्वासं निदधति स्म । अहो सः निःस्नेह इति धनैः, अनाश्रयणीय इति दोषैः, निग्रहरुचिरितीन्द्रियैः, नीरस इति व्यसनैः, भीरुरित्ययशसा, सदैव पर्यत्यज्यत । सुसहाय इति सः शत्रुभि रसकृदस्तूयत ।

महात्मा देशं पारतंत्र्यादुन्मोचयितुं भूयांसि महान्ति महान्ति युगान्तरकारीणि कार्याण्यनुतस्थौ । वैदेशिकानि वस्तूनि वहिष्कृत्य, साम्प्रदायिकता-जातिवादितादि जनितान् दोषान् दुर्बलीकृत्य, हिन्दु-यवनयो र्मध्ये ऐक्य मुत्पाद्य, स्वदेशीयवस्तूनां प्रसारं विधाय, जने जने देश भक्ति सञ्चार्य, ग्रामाणां दुर्दशा मधरीकृत्य, अस्पृश्यता-कुभावनां मलिनीकृत्य, दीनहीननिरीहांश्च समुत्थाप्य, स्त्री-शिक्षां वितत्य, स्वकीयस्य देशस्य भाषायां जनाना मास्थां संसृज्य, गवादिपालन-वर्धनदिशि जनतायाश्चित्त माकृष्य, कृषीबलानां श्रमजीविनां पतितानाञ्च स्थिति मूर्ध्वीकृत्य, सात्विकतार्जुता-सत्यतेश्वरानुरागञ्च ग्रामे ग्रामे भृशमुन्नमयन्, सामाजिक-सांस्कृतिक-शैक्षणिक-धार्मिक राजनीतिकौद्योगिकक्षेत्रेषु सर्वाङ्गीणं विकास मुद्भावयन्, सततं सर्वांश्च सद्गुणान् स्वकीये आचारे व्यवहारे च समावेशयन् आंग्ल-शासनं कृत्स्नतया अदूधुनत् । गौराङ्ग शासनं तमसकृत् कारागारे निक्षिप्य प्रापीडयत् परं तद्दत्तानि कष्टानि न तं स्वमातृ-

भुवः सेवातः स्रंसयितुं प्रबभूवुः। तस्य तान्युत्कृष्टतमानि स्वार्थशून्यानि निखिल विश्वोपकारीणि वन्दनीयानि कर्माणि वीक्ष्य भारतस्यैव न समग्रस्यापि जगतो जनता कृतयुगस्य कारणमिव, बीजमिव विद्वत्सृष्टेः, एकागारमिव करुणायाः, बलदर्शनमिव विदग्धतायाः, एकस्थान मिव मर्यादाणां, सौजन्यस्योत्पत्तिद्वीपमिव, आवर्तन मिव च धर्मस्य मत्वा तच्चरणयोः श्रद्धया भक्त्या च नतभाला समजायत। असंयतमपि संयतं, सामप्रयोगपरमप्यवलम्बितदण्डं, सन्निहितनेत्रयुगलमपि परित्यक्तवामलोचन मेकदेशस्थितमपि व्याप्तभुवन मण्डलमपरिमितपरिवारमप्यद्वितीयं तमवाप्य जातेयं जगती सर्वथैव सनाथा।

तन्निर्दिष्टपथारूढो भवेन्नः प्रियभारतम्।
अस्त्येषा प्रार्थनानम्रा पादयो र्जगतीपतेः॥



# विनोबा भावे

यो हि किमपि भद्रं ध्येयं जीवनस्य पुरः प्रणिधाय जीवति तं न कोऽपि पराभवितुं शक्नोति। ध्येय मधिगन्तुं सः कर्मयोगीव यततेऽतः श्लाघायां न स हृष्यति निन्दायाञ्च न द्वेष्टि। तस्य कर्मणि विद्युतो वैमल्यं वारिद घटायाश्चेतोहारित्वं प्रकृते रौदार्यञ्च परिलक्ष्यन्ते। पूज्ये विनोबा भावे महात्मनि प्रकर्षं परिगृह्य ईदृशा गुणाः शोभमानाः सम्प्रेक्ष्यन्ते। महात्मनो गान्धिनः सत्युपरामे, विश्वस्य महान्तो जना गरीयस्यां क्लिष्टतरायां स्थित्यां गम्भीरेषु च प्रश्नेषु ततः सम्मतिं विमर्शं परामर्शञ्च कर्तुं मायान्ति। तदनुष्ठितस्य भूदानयज्ञस्य स्तवनं संसारस्य सर्वेष्वपि पत्रेषु भृशं पर्यलक्ष्यत, काम मिदानीं न तत्र चर्चा तदीया दृष्टिपथगता भवेत्। भूरहितानां जनानां कृते सः सहस्रशः क्रोशान् पदयात्रां व्यदधात् प्राप्ताञ्च भुवं तेभ्यः प्रादापयत्। आयुष आधिक्यात् सम्प्रति सः पदयात्रां विधातुं न क्षमः। भूदाने केचन अनधिकारिणोऽपि भुवं लब्धवन्तोऽथ च केचनाधिकारिणो वराका दीन-दरिद्रा जना न ता मवाप्तु मार्हन्नित्येतत् तस्य मनो भृशं दुनोति। परं भूमिहीनान् प्रति स यत् किमपि कर्तुं मशकत् तत् सः कृतवानित्येतत् तं प्रीणयति।

दयावशाद् भूमिमन्तो भूमिविहीनेभ्यो भूमिप्रदानपराः स्यु रिति न सोऽभिलषते; जलं वायुश्चेव भगवता भू रपि सर्वेषा मप्युपयोगाय प्रदत्तास्ति अतः स्वापेक्षानुसारं सर्वेऽपि तत्र नैजं जन्म जातं स्वत्वं निदधतीति तदीयो विचारः। स एकदाचकथत् सलिलं समीरश्चेव भूरपि परमेश्वरस्यैव। एकस्यैव वर्गस्य सा सम्पदित्येतद् विमर्शण मेकान्ततो मान्द्यम्। तस्मान्निःशुल्कैव भूः प्रदेयेति। अस्ति स वशी। ब्रह्मचारी च। न किमपि वस्तु तस्य मनो जेतुं प्रभवति। योगी सन् स जीवनं नयति। अहङ्कार-विनाशनेन मानवो भवति महानित्यत्र तस्य दृढीयान् विश्वासः। न तत्र भेदधीः। समदर्शित्वात् समेषामपि स उपकर्ता। अस्ति स महात्मनो गान्धिनः श्रेष्ठोऽनुयायी। स विद्वान् योगिवरो दार्शनिकः कवि र्लेखकोऽनारतं शुद्धं सात्विकं जीवनं गमयति। बाल्य एव सः स्वसदन मजहात्। मातुः पितुः पितामह्याश्च स गुणान् ऋक्थत्वेन लब्धवान्। सर्वेऽपि मानवाः परमात्मनः सन्ति सुतास्तस्मान्न तेषु भेदः कल्पनीयः—इत्यत्र तदीया गुरुजनाः श्रद्दधते स्म। तेषां मन्दिरद्वाराणि सर्वेषामपि कृते उन्मीलितान्यासन्। तदानीन्तनेऽनेहसि एतादृग् विचार आसीदतितरामसाधारणोऽद्भुतश्च। शम्भुरावस्तस्य पितामहः पुरो देवप्रतिमायाः गातुं यवनानपि

संगीतज्ञान् सादर मामन्त्रयामास। बाल्यादेव आचार्यो विनोवा समाचारपत्रेष्व भिरुचि न्यदधात्। तस्य सद्मनि पुस्तकालयोऽप्यासीत् स्वाध्यायिनां कृते परितोषावहः। स जीवनस्य प्रथमचरणादेव धार्मिकान् ग्रन्थान् गम्भीराभिरुचिपूर्वक मतितरां ध्यानेनाधिजगे। ते ग्रन्थास्तस्य जीवनं भृशं व्यनयन्। सोऽस्ति अष्टादशभाषावित्। एकदा तन्माता प्राब्रवीत् सा न संस्कृतभाषायां भगवद्गीता मवगन्तु मर्हति, अपि किं मराठ्यां वर्तते सानूदिता ? तदिदं वचो गीताया मराठ्या मनुवदनम्प्रति तमनूनुदत्। मराठ्यां तत्कृतोऽनुवादः सः मराठी साहित्ये नितान्त माद्दतं वर्तते।

महात्मा गान्धी विनोवां सभ्यगवागमत्। सः स्वशिष्यस्य महतो गुणान् समीचीनतयाभिज्ञाय भृशं तद्दिशायामावर्जितोऽभवत्। एकदा म० गान्धी लिलेख— "कैः कै र्विशेषणैस्त्वा महं विभूषयेयमित्येतन्न वेद्मि। तव प्रेम्णश्चरित्रस्य च पावनतया नितरामहमावर्जितोऽस्मि; वस्तुतस्तु त्वां परीक्षितुं नाहं क्षमः"।

आचार्यो विनोवा भावे महात्मनो गान्धिनो विचारां स्तदैवाभ्युपागमद् यदा सः स्वयं तेषु परितोषमन्वभवत्। म० गान्धी विषयेष्वनेकेषु तदीयां सम्मतिं परिजग्राह। अहिंसायास्तु विनोवा अधिकारी मनीषीति स मेने। अस्ति वस्तुतो महान् धर्मरहस्यविद् विद्वदुत्तमः, गीतायां, कुराने, बाइविले च नितरामगाधवैदुष्यं स विभर्ति, धार्मिकेषु जनेषु-कामं ते पण्डिताः स्युः किं वा मौलवी, यद्वा पारसीयः— स्थायि प्रभावं निपातयति तदीयंमहात्मत्वम्। भारतन् कुमारप्पा तमधिकृत्य स्वान् विचारानित्थ मभिव्यानक्" मन्ये, विनोवास्ति देशस्यास्मदीयस्य सान्द्राया आध्यात्मिकताया धार्मिकस्य चानुभवस्य परिपक्वं फलम्। अस्मादेव हेतोः अतिभिन्नमताश्रयिणोऽपि तमर्चन्ति श्रद्धया च तत्प्रवचनं शृण्वन्ति।

विनोवा भूयो हि स्वमातुः 'रखूबाईतः पर्यग्रहीत्। माता वहुषु भक्तिभावभावितेषु भजनेषु प्रगाढामभिरुचिं संवर्धयन्ती तदीयं मनः शास्त्राणि प्रति सम्यगाचकर्ष। मातु र्मृत्योः प्राक् अष्टादशाधिकैकोनविंशतिशततमेशवीयेऽब्दे स महात्मनो गान्धिनः सान्निध्य मभजत्। स्वकीयाया अवस्थाया स्तस्या एव प्रारम्भे सः स्वकीयानि सर्वाण्यपि प्रमाणपत्राण्यग्निसात् कृतवान् या भवति मानवम्प्रति मोहमयी। तानि सन्ति व्यर्थान्युपयोगरहितानीति मत्वा स चुल्ल्यां तानि चिक्षेप। इदं सर्वमपि विलोक्य तस्य मातातितरा माश्चर्यं ययौ परं न सा किमपि प्रत्यवदत्। स गान्धिना सार्धं वस्तु मारभत परं तन्मातापितरौ तत्राविदितावेवास्ताम्। म० गान्धी तस्य मातुः पितुश्च सेवायामिदं पत्रं लिलेख—"अस्ति विनोवा मया सह। भवदीयेन पुत्रेण, तादृश्या मवस्थाम सत्यामपि, चरित्रस्यासाधारणोज्ज्वलत्वं साधूत्वञ्चासादित मस्ति। एतावतीमुपलब्धि मवाप्तु मनेकानि वर्षाणि कठोर आत्मसंयमो मया कृत

आसीत्" । एतस्मिन् पत्रे म० गान्धी 'विनायक' इत्येतत् तन्नाम न लिखित्वा 'विनोवा' इत्यलेखीत्, तदाप्रभृत्येव विनायको विनोवेति नाम्ना लोके ख्यातिमगमदिति कथ्यते ।

विनोवा बहुष्वान्दोलनेषु भागं गृहीत्वापि कारागरे असकृत् प्रक्षिप्तः सन्नपि न चत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्दात् प्राक् ख्याति मगच्छत् । स तु प्रोक्ते-शवीयाब्दानन्तर मेव प्रसिद्धि गतः । विनोवा महाभागस्य वैशिष्ट्यं महात्मानं गान्धिनं व्यतिरिच्य कोऽन्यः ज्ञातुं शक्नुते स्म ? म० गान्धी यदा हि विनोवाचार्यं व्यक्तिगत सत्याग्रह निमित्तेन प्रथमसत्याग्रहित्वेनाचिनोत् तदा स "विनोवा कः, कस्माच्च सः सर्वत आदावचीयत इत्येतत् अवगमयाम्बभूव । स तमधिकृत्य प्रावोचत् "विनोवा बी० ए० श्रेण्याश्छात्र आसीत् परं भूतशशिग्रहेन्द्वब्दे भारत मागते सति मयि सोऽध्ययनमत्यजत्, अस्ति सः संस्कृतप्रधीः । यदा हि आश्रमस्य स्थापना कृतैवासीत् तदैव स तत्र प्राविशत् । अस्ति सः प्रथमेषु सदस्येष्वन्यतमः । सः संस्कृतमध्येतुं वर्ष-व्यापिन मवकाशमगृह्णात् । वर्षे सति समाप्ते, विना कामपि सूचनां पुनः तत्रा-गच्छत् । तद् दिनं तस्या गमन दिन मित्येतन्मया विस्मृत मेवाक्रियत । तेनाश्रमस्य सर्वास्वपि वाञ्छितश्रमासु प्रवृत्तिषु भागो गृहीतोऽस्ति । मल मार्जन मारभ्य महानस कार्यपर्यन्तं स आत्मानं प्रावर्तयत् । तदीया स्मरणशक्ति र्विस्मयकारिणी, प्रकृत्या च सोऽध्ययने रुचिं निधत्ते परं सः समयस्याधिकतरं भागं तन्तूत्पादने गमयति, अस्मिन् कर्मणि स विशेषज्ञः सञ्जातोऽस्ति, सर्वत्रैव तन्तु निर्माण कार्यं प्राथमिकतां नीतं भवेदित्येषास्ति तदीयाकाङ्क्षा । एतेन ग्रामाणां निर्धनता नश्येत् इत्येष तस्य विश्वासः ।

अस्ति स जन्मजातः शिक्षकः । आशादेव्याः हस्तकलाद्वारेण शिक्षाप्रणाल्या विकासने तेन महती सहायता प्रदत्तास्ति ।…… स्वहृदयेन तेन अस्पृश्यता विनिवारि-तास्ति । साम्प्रदायिक्या मेकतायाञ्चाहमिव स विश्वसिति । इस्लाम तत्व मवगन्तुं सःकुरानमूलरूपाध्ययने वर्षमेकं नयतिस्म" ।

भूदान यज्ञस्य प्रवर्तको नायको विनोवा सहस्रेभ्योऽप्येकरेभ्यः परां भुवं दातृभ्यो लब्धवान्, प्रदत्तवांश्च तां भूविहीनजनतायै । तदीय मिदं भूदानयज्ञ परकं कर्म सर्वत्रैवाभिनन्दित मभूत् । यथा भूदान यज्ञ कार्यं तस्यैतिहासिकं तथैव ग्रामदान मपि तस्य कार्यं मैतिहासिकम् । तदारचितस्यास्य कार्यस्य च महीयसः प्रशंसायां सर्वसम्मत्या यद् वक्तव्यं प्रकाशित मभूत् तत्समासेनेदम्—"अहिंसात्मकेन सहकारिताधारकेण विधिना राष्ट्रियान् सामाजिकांश्च प्रश्नान् समाधातुं विनोवाकृतान् प्रयत्नान् वयं श्लाघामहे किञ्च भारतीयायाः जनतायाः सर्वाण्यप्यङ्गानि निवेदयामो यद् विनोवा तदीयः संघश्च तदुत्साहप्रदं समर्थनं प्राप्नुयात्" । कर्नाटक प्रदेशे कृतायाः पदयात्राया

अवसरे २२-६-१९५७ तमेशवीय तिथौ चलवाले प्रमुखनेतारः प्रस्तावमिमं पारिततां नीतवन्तः । पण्डितो नेहरू चात्र समभाषत—"ग्रामदानं वयं मन्यामहे, कार्यमेतद् वरं भवतु च भाविनि प्रवर्धितम्" ।

देशस्य न कोऽपीदृक् प्रदेशो यत्र न तदीया पदयात्राऽवालोक्यत ।

आन्ध्र-तामिलनाडू-केरल-कर्नाटक-महाराष्ट्र-सौराष्ट्र-राजस्थान-पाञ्चाल-कश्मीरमध्यप्रदेशोत्तरप्रदेशासमप्रभृति निखिलप्रदेशेषु भ्रमता तेन सहस्रशो ग्रामाः भुवश्च ल ैकरेभ्योऽप्यधिका आसादिताः । जयप्रकाशनारायणस्तु तत्प्रवर्तित सर्वोदयान्दोलनार्थं नैजं जीवनमेव समग्रं प्रदातु मुद्घोषणां विहितवान् ।

नैतिकतया वस्तुतो विनोवा महात्मनो गान्धिन उत्तराधिकारी । अस्ति सः प्रभावस्थापको महान् वक्ता । न तस्य ववतृतायां पुन रूक्तिः प्राप्यते । समस्यासु तस्य दृष्टिश्चेतनाप्रदा । म० गान्धिनोऽयं साधकोऽद्वितीयः शिष्यः सन्तत मुच्चनैतिक स्तर मध्यास्ते । तन्नाम भारतस्य इतिहासेऽमरं भवत् संशोभित तदीयस्य पूर्णतया पूर्ति र्जाता न वा जाता किञ्च तत्प्रसिद्धिदुन्दुभि र्नदेत् वा न नदेत् परं तद्विचाराणां सत्यतायां, तस्य योग्यतायां लग्नतायाञ्च न कोऽपि कदापि संशयीत ।

विद्याविलासहृदयो धृतशीलदक्षो ।
भूदान यज्ञ रत राष्ट्रहितैकचित्तः ।।
सर्वोदय श्रित समग्र मनोनुरागो ।
गान्ध्यध्वगामिसुजनो जयताद् विनोवा ।।

—×—

# दीनबन्धुः ऐण्ड्रूजः

चार्ल्स फ्रीयर ऐण्ड्रूजो मूर्तिमतो विनयस्य औदार्यस्य च प्रतीक आसीत् । सार्वभौमशान्तिः, विश्वजनीन नागरिकता, मधुरा मानवता, सर्वोपकारिणी विशालहृदयता, उदाराध्यात्मिकसद्भावना प्रेरणा च–इत्येते सर्वेऽपि भव्या भावा स्तस्मिन् सुहृदोभूत्वा प्रीतिपूर्वकं निवसन्तिस्म । इंगलेण्डे जनु र्गृहीत्वापि किञ्च आंग्लनागरिकोऽपि भूत्वा स भारतस्य महान् आत्मीय एव जन आसीत् । वस्तुत स्तदीयात्मीयताया महनीयतया तु भारतौका अकृत्रिमो नागरिकोऽपि जित आसीत् । स आत्मानं सदैव भारतीय मेव मन्यमानः पुण्यभूमि भारतस्य सेवायां निःस्वार्थवृत्त्या स्वजीवनस्यान्त्यं क्षणं यावन्निलीन एव प्राप्यत । तस्य पावनं जीवनं चिरस्मरणीयमस्ति । निःसंशयं तदीयाश्चरणपांसवः सन्ति वन्दनीयाः । तं विलोक्यैव मनसि सहजश्रद्धाया उदयो भवति स्म । तम्प्रति पूज्यभावनया सहसा स्वस्याकर्षणे मानव आत्मानं कृतार्थं पुण्यात्मानञ्च अवागमत् । वस्तुतस्तदीयं पुण्य व्यक्तित्वं दिव्यमेव महिमान मभिव्याप्नुवत् पर्यलक्ष्यत ।

दीनबन्धु र्महात्मा ऐण्ड्रूजः सात्विकवृत्तिसमुल्लसितो महान् पुरुष आसीत् । योऽपि जनस्तच्चरणयोः प्राणमत् सः प्राणिष्वात्मानं नितरामेव धन्य ममंस्त । स्थूल मन्तरीयं स्थूलमेव च निचोलकं सः वसानः सर्वदा दृष्टोऽभवत्; स्कन्धयो रूपरि शोभमानः प्रावारस्तस्य, कस्य न मनोऽतोषयत् । सोऽशुभकर्तर्यपि जने न कदाप्यशुभकृद् बभूव । योहि जन स्तस्मिन् असद्व्यवहारमाचरत् तत्रापि स न कदाप्यपकर्तादृश्यत । स तु स्वयं तूष्णीं भूत्वा तमसद्व्यवहार मसहत । तथा कृत्वा परमेश्वरोऽवश्य मपकर्तुर्मनः पवित्रीकरिष्यतीति तस्य दृढ विश्वास आसीत् । तज्जीवनवर्तिनी सात्त्विकता सरलता नम्रता च न कदापि विस्मृता भवितु मर्हन्ति ।

दीनबन्धुः ऐण्ड्रूजः शिशुरिव सर्वदा ऋजु रवाप्तोऽभवत् । तस्य महत्तायाः कारण मिदं तदीय मार्जव मासीत् । तं लक्ष्यीकृत्य महात्मना गान्धिनाभिहितम् "चेन्मम सविधे समयः स्यात् तदाऽह माजीवनम् एण्ड्रूजस्य गुणान् गायेयम्" । निःसंशयं ज्ञेयोस्ति परमेश्वरः किं वा तदीयो भक्तः । स भागवत मानव आसीत् । आसीच्च तद्धनमेव भागवतं जीवनम् । मन्ये, सरलता निष्कपटभावना तमासाद्य द्विगुणप्राणशक्ति-सम्प्राप्ति-सौभाग्यश्रिय मधिगम्य व्यद्युतताम् । तस्य निःस्पृह स्वार्थविहीन पुनीत जीवन-यज्ञस्यालोकेन असंख्याता जनाः शान्तिं तृप्तिं सुखञ्च अविन्दन् । तस्य गरिम्णः पुरः क ईदृग् यो न जातो नतमस्तकः ।

महात्मा ऐण्ड्रूज इङ्गलेण्डे, टाइनतरङ्गिण्या स्तटे स्थितस्य न्युकैसलनगरस्य गौरवं द्वादशे दिनाङ्के, फेब्रवर्याम्, एकसप्तत्यधिकाष्टादशशततमेशवीय सम्वत्सरे स्व जनुषा वर्धयाम्बभूव । तस्य पिता जॉन एडविन ऐण्ड्रूजः सात्विक स्वभावो धर्मप्रियः पुरुष आसीत्; माता च तस्य मेरी शॉरलॉट् परम साध्वी शीलवती महिलाऽऽसीत् । मातुः पितुश्च सात्विकता धर्माभिरुचिश्च ऐण्ड्रूजस्य जीवने-विकासन चरित्रस्य च सम्भरणे महती मेव सहायतां चक्रतुः । मातु र्गम्भीराया ममताया नैसर्गिक्याश्च शान्ति-प्रियताया एण्ड्रूजोपरि प्रभूतः प्रभावो न्यपप्तत् । "जनेषु प्रेमपरिपूर्णव्यवहाराचरणं मया मातुरेव सकाशादधीत" मिति ऐण्ड्रूजः स्वयमेव वक्तिस्म । शैशवे मातुः स्नेह स्निग्घं पयः पिवन् जनताया मधिकाधिकतर स्नेहवर्षणं तस्या महतीं च सेवा महम-वागमम् । मम सत्प्रवृत्तेः कारणमेकमात्रं मम मातुः स्नेहमयमात्मीयत्वम्—इति सः शशंस । तस्य बाल्यं प्रार्थनायाः आत्मज्ञानस्य च पवित्रे वातावरणे सार्थकं भवितु मारभत । पितु राध्यात्मिक पुरुषत्वात्, तस्माद् ऐण्ड्रूज आध्यात्मिक जीवनस्य परहित चिन्तनस्य च पवित्रां प्रेरणां लब्धवान् । तस्मादेव सः भगवद् विश्वासं सत्यनिष्ठाञ्च-जग्राह ।

यदा ऐण्ड्रूजो नववर्षवया आसीत् । सः प्रार्थनापरकांशक्तिमध्यगमत्; अकिञ्चनता तु वरदानमिव तम्प्रति फलप्रदा असिद्ध्यत् । तस्य माता स्वनाम्ना यस्या अल्पायाः सम्पदः स्वत्वमश्नुते स्म तस्या अपहरणं स एव प्रमुखो विश्वासपात्रजनः कृतवान् यो हि तत्परिवारे स्वजन एव मतोऽभूदित्येतदधिकोषप्रबन्धकाद् यदा ऐण्ड्रूजस्य पिताऽज्ञासीत् तदा सः चिन्तां प्रपेदे । धनमपहृतमित्यत्र तु परं तन्माता न शुशोच परं तदीयोभर्ता तच्चिन्तयास्ति दुःखित इत्येतदवश्यं तामदुनोत् । संध्यावेलायां माता, पिता, पुत्रश्च (ऐण्ड्रूजः) त्रयोऽपि संहत्य," एष विश्वासघातः शत्रुकृतस्तु सह्य आसीत् परं स तु परिचितेन मित्रेणैव कृतः; परमात्मन् ! मम मित्रेण योऽयमपराधो विहित स्तत्र तद् (मित्रम्) भवता क्षन्तव्यमेव । कृपया तदीयं हृदयं प्रेरयतु भवान् मम सुहृत् सः स्वापराधमवगच्छेत् अथ च तत्र अनुशयीत किञ्च सः स्वजीवनमुत्तमरीत्या गमयेत्" इत्येतां प्रार्थनां कृतवन्तः । इमां प्रार्थनां विदधानस्तत्पिता संरुद्धकण्ठोऽजायत नयने च तस्य अश्रुभि रार्द्रेऽभवताम् । अहो प्रार्थनायामस्यां क्रियती उदारहृदयता कियती च पवित्रा सद्भावना विभाति । एतादृशे प्रार्थनामये वातावरण एव ऐण्ड्रूजस्य दीन वन्धुताया जन्म जातमासीत् । तत्सम्पदपहरणात् ऐण्ड्रूजस्य पित्रो र्दशा शोचनीया सञ्जाता । दरिद्रता प्रत्यहं वृद्धिं गता । शुष्कमपि भोजनं दुर्लभ मभूत् । दरिद्राणां वसत्या मेकस्मिन् उटजे वासं कर्तुमारभेताम् । परं भगवद् विश्वासः सदैवा विचल एव समतिष्ठत । तयो र्भगवद् विश्वासः स ऐण्ड्रूजं प्रभुभक्त मकार्षीत् । इत्थं बाल्यकाल

एव तस्य पवित्रे जीवने, विचारे, चिन्तने च भगवद्भक्ति-बीज मङ्कुरित भवितु मारेभे ।

दीनवन्धोः ऐण्ड्रूजस्य मनो भारते सहजमेव स्नेहं न्यदधात् । तं जना भारतस्यैव मानवं मन्येरन् इत्येष तदीय उत्कटोऽभिलाषोऽवर्तत । एकदाऽसौ स्वशैशवानेहसि मातरं स्वकीया मशंसत्, "मातः, यदाऽहं यवीयान् भविष्यामि, तदा भारतं यास्यामि; ममकृते भोक्तु मल्पमोदनमपि दीयतां; भारते जनाः ओदनप्रियाः सन्ति" इति । तदीय एष उद्गार भारतम्प्रति तस्य पवित्रं प्रेम प्रकटीकरोति । स भारत मागम्य "इह आगत्य मम नवीनं जन्म जात मस्ती" ति घोषणामपि कुरुते स्म । तस्य सत्य साधनायाः जन-सेवायाश्च तपोवनमासीद् भारतमित्येतद् वक्तुं सुशकम् । स एकदा प्रोवाच, "भारतीयं स्वराज्य मस्माकं कृते धार्मिकः सिद्धान्तोऽस्ति ।"

त्रिविंशतिवर्षवयसि दीनवन्धुः एण्ड्रूजो वेदाकाशग्रहसोमाब्दे दिल्ल्यां सेण्ट स्टीफेंस कालेजे अध्यापकोऽभवत् । दिल्ली-निवास-काले स वहुषु नेतृष्वमिलत् । स भारतीयासु समस्यास्वपि अभिज्ञतांलेभे भरतभूमि-भक्तिश्च तस्य ववृधे । स तरुणानां मानसेषु स्वराज्य-भावनां परिपूरयितुं प्रायस्यत् । "मया स्वकीयं ध्येयं भारते प्राप्तमस्ति; नाहं क्षणमेकमपि देशमिममुद्दिश्य विचारयितुं शक्नोमि स्वमातृभूमेर्भिन्नत्वं; भावोऽयं नैसर्गिको भगवतः प्राप्तः, अतस्तत्र न सन्देहोऽपि कर्तुं शक्य इत्येषाऽऽसीत् तदीया मान्यता । भारतागमनानेहसि बहुभिस्तस्य मित्रैः 'इङ्गलेण्ड' मेवाधिष्ठातुं सः प्रेरितः, परं न भारतम्प्रति समुद्भूतं सहजाकर्षणं स उपैक्षिष्ट । 'भारत माह्वायति'— इत्येतस्मिन् तद्वाक्येऽस्ति कियानविचलो विश्वासः ।

दिल्लीत इङ्गलेण्डं प्रति यदाऽसौ न्यवर्तत एकस्यां साहित्यपरिषदि विश्वकबि-रवीन्द्रनाथे सोऽमिलत् । द्वावपि परस्पर ममतिप्रभाव मन्योऽन्यस्यानुबभूवतुः । साक्षात्कारस्यास्य फलमतिप्रियमेव भूत्वोदियाय । महामानवो भारतस्य सांस्कृतिकमधिष्ठानं-शान्तिनिकेतनं-स्वसाधनायाः पुण्यकेन्द्राय अकल्पत । स तन्नीरवताया मात्मनः सङ्गीतम्-अनाहतमश्रौषीत् । द्वादशाधिकैकोनविंशतिशततमेशवीयाब्दे, जून मासे, त्रिंशत्तमे दिनाङ्के, श्री रवीन्द्रनाथे इङ्गलेण्ड मागते सति विश्रुतश्चित्रकारो रोटेंस्टाइनः स्ववासस्थले साहित्यकाराणां कवीनां कलाकाराणाञ्च साहित्य-परिषद मायूयुजत् । तत्र ऐण्ड्रूजौऽप्युपस्थित आसीत् । तत्-परिषदः संस्मरण मित्थम् लिलेख—"तस्यां निशायां यदाऽहं कवि मपश्यं गीतञ्चतदीय मश्रृण्वं यदा, तस्मिन् काले भारतीयायाः विश्वसंस्कृते रपरिमेयशक्तिमतीं मृदुतां मनोज्ञताञ्चान्वभूवम्; आसीत् सा अन्तप्रकाशःस्य स्पष्ट दृष्टेश्च रजनी" । रवीन्द्रनाथस्य कविता तस्योपरि महान्तं प्रभावंन्यपातयत् । द्वावपि रवीन्द्रनाथ ऐण्ड्रूजश्च अन्योऽन्यस्य अभिन्नतात्मिकां प्रत्यासन्नतामीयतुः ।

महाकवी रवीन्द्रनाथस्तत्परिषदः संस्मरणमलिखदित्थम्, "अहं समीप एव स्थितं स्व-स्थानं निवर्तमान आसम्, हैम्पस्टेड हीथस्यावरोहि क्षेत्र मुत्तीर्यगृहं पुरः उपसरन् रजन्याः कौमुदी-सुखमनूभूय परामेव प्रीतिमविन्दम् । मया सार्धम् ऐण्ड्रूज आसीत् । तस्यां निस्तब्धायां यामिन्यां तस्य (ऐण्ड्रूजस्य) चित्तं गीताञ्जलि-भावामृतं पिब-दासीत् । ईश्वर-प्रेम-पथेन तस्य मानसं ममप्रेम दिशम् उपसरदासीत् । सा मिलन-धारा मम जीवनमनुयन्ती अनेक गम्भीरालाप-कर्म-सहयोगिताया अन्तराले प्रविशन्ती च तज्जीवनस्य सीमां यावत् प्रसृता स्यादित्येतदहं विचारयितु मपि क्षमो नासम्" ।

शान्तिनिकेतनस्य कार्येषु भाग मुपादातुं कवीन्द्र ऐण्ड्रूजः परमेश्वरस्य शान्ति-राज्यं प्रवेष्टुं तदामन्त्रणं सौवर्णं समयममंस्त । परमात्मनः सङ्केतं मत्वा सः शान्ति-निकेतनमेव स्वकीयं कार्यक्षेत्र मकरोत् । श्री रवीन्द्रनाथ स्तदभ्युद्गमनानेहसि भावानिमान् उदगिरत्—

"प्रतीच्यतीर्थाद् भवताऽऽहृताऽस्ति, धारा ह्यसूनां भवते नमोऽस्तु ।
प्राच्याऽपि कण्ठे भवतोऽथ माल्यं, समर्पितं प्रेममयं सुबन्धो ।।
बन्धो, भवन्तं वयमत्र सर्वे, प्रत्युद्व्रजामोऽतिमुदं भजन्तः ।
उन्मीलितं प्रेम्णि च चेतसो नः द्वारं नमामो भवतो भवन्तम् ।।
सभाजयामः कुरूतात् प्रवेश, मुपायनं विश्वपते रिवास्ति ।
भवांस्तु बन्धो, चरणौ हि तस्य, नुमोऽत एव प्रिय ईश्वरस्य" ।।

शान्ति-निकेतने स्थायि निवास-स्वीकरणात् प्राक् ऐण्ड्रूजो रवीन्द्रनाथस्य सम्मत्या महात्मनो गान्धिनः कार्येषु सहयोगी भवितुं दक्षिणाफ्रीकां कञ्चन समयं यावदध्युवास । 'प्रेम परमेश्वरस्यैव स्वरूपमित्येतत् स गान्धि-साहचर्ये स्फुटतयैव अन्वभवत् । दक्षिणाफ्रीकायां प्रविश्यैव स महात्मानं प्रति यां श्रद्धा मभिव्यानक् तया प्रतीच्या जगती आश्चर्यं भृश मगच्छत् । "यदा मम पोतोऽवन्यामवततार, तदास्माभिः सागरस्य कूले कतिपया भारतीया अवलोकिताः । श्रीपोलकोऽभिज्ञातीकृतो मया । 'गान्धी क्व'-इति मया सः पृष्टः । महात्मा समीप एव स्थित आसीत् । स्मेराननो भूत्वा सोंऽवदत् 'अहमेवास्मि गान्धी' । तस्य दर्शनं विधायैव मदीयमन्तः करणं तच्चरण रजः स्पृष्टुं मां प्रेरयामास । मया तदेव कृतम् । महात्मोवाच, "नेदं कार्यम् एतत् कृत्वा तु मां ह्रेपयति भवान्" । ऐण्ड्रूजो नेठाले म० गान्धि-सञ्चालिते सत्या-ग्रहे भाग मग्रहीत् । सः फिज्यामपि न्यवसत् । फिजीतो निवृत्त्य सः शान्ति निकेतन मागमत् । जीवनस्यान्त्यं क्षणं यावत् तत्रैव निवासं व्यदधात् । महात्मनि गान्धिनि तद्धृदय मनुपमामात्मीयतां पर्यपुष्णात् । "नाहं विना गान्धिनं जीवितुं शक्नोमीदि" त्येतत् तस्य कथनमासीत् । बापू एव तं 'दीनबन्धुः' इत्येतेन नाम्ना सत्कृतवान् ।

भारतीयेषु कृत मांग्लशासनोत्पीडनं सदैव तं चिन्तायां न्यमज्जयत् । दीन-दरिद्र-दुःखितानां सेवनं तेन व्रतत्वेन गृहीत मासीत् । दरिद्रोत्पीडनात् सदैव तन्मानस

मखिद्यत । सः तत्पीडननिरासार्थं मनिशमेव यतमानोऽदृश्यत । स दीनदरिद्रेषु गम्भीरा मात्मीयतां प्रगाढां च समवेदनां न्यदधात् । दीन-दुःखित-कष्टानि निवारयितुं यः स्वयमेव दैन्यं वृणीते, तान् (दीन दुःखितान्) सुखयितुं च स्वयमेव कष्टानि सहते स एव वस्तुतो दैन्यं सत्यतया चरितार्थीकरोति । तदीयप्रियता मध उपन्यस्ता घटना-भिव्यक्तीकुरुते—एकदा स उत्तरभारतस्य महत्सु महत्सु नगरेषु विचचार । शैत्य-मासीत् कठोरम् । प्रत्यूष एव कस्यचन महानगरस्य स्टेशने रेलवाहनं समागतम् । सः स्वमित्रैः साकं तत्रावारोहत् । निर्गमनद्वारदिशां यातुं यदैव सः प्रवृत्तोऽभूत्, सः स्टेशनमास्टरस्य कार्यालय-परिसरे जनसम्मर्दं ददर्श । तस्मिन् जनसमवायस्य मध्ये जीर्णशीर्णवासो वसाना मेकां स्त्रिय मपश्यत् । शैत्यप्रकोपात् तस्या वपु रतितरां वेप-मान मासीत् । गौराङ्गं स्टेशनमास्टरं तां स्त्रियं निर्दयतया भर्त्सयन्तं तर्जयन्तं च सोऽद्राक्षीत् । सा स्त्री नतमस्तका स्थिताऽऽसीत् । सा मूर्तिमती दीनतैवासीत् । तस्य हृदयं करुणया द्रवित मभूत् । पृष्टेषु सत्सु जनेषु, शैत्यात् क्लान्ता भूत्वा स्टेशन मास्टरस्य कोष्ठके सा अग्निना आत्मनः शैत्यं निराकर्तुं प्रविष्टाऽभवत् ततश्च स्टेशन-मास्टरेण सा निःसारितेत्येतद् ज्ञात मभूत् । स्टेशनमास्टरस्य स व्यवहार ऐण्ड्रूजस्य चित्तं भृश मपीडयत् । न स आत्मानं शासितु मशकत् । सः स्टेशनमास्टरं ससंरम्भ मुपालभमान आह, "न भवान् त्रपते किम् ? अत्याचारिणा न भूत्वा भवतोदारेण भवितव्यम् । स्त्रियं तां वीक्ष्य स अश्रुनयनोऽभवत् । सः स्वकीयं राङ्कवं प्रावारकं तस्याः स्कन्धयो रुपरि क्षिपन् विना किमपि भणन् ततो निरगात् । हन्त, कियत् सार्थक मासीत् तस्य 'दीनबन्धुः' इत्येतन्नाम ।

दीनबन्धुः सजीवायाः सरलतायाः अकिञ्चनतायाश्च धनी आसीत् । स दीन-दुःखितसेवाया मत्यन्तमेव प्रसिद्धिं प्राप । जनता तस्मिन् अप्रीयत । सा तस्मिन् स्व-जनधियं निबबन्ध । एतादृगपि समयोऽघटत यदा सः पणमेकमपि न न्यदधात् । भिक्षूणां कृते पणं प्रददत् प्रददत् सः पणरहितभस्त्र एवाभवत् । प्रातः आसीत् तदा । सः कलिकातायां समाचारपत्रविक्रेतुः कस्माच्चिद् युवकात् पत्रमाददात् । परं पण-प्रदा-नाय यदैव पणाधानकपश्यत् तच्छून्यं प्राप । सोऽजायत वाग्विहीनः । पणास्तु सर्वे दरिद्रेभ्यः प्रदत्ता आसन् । युवा ध्यानेन तं ददर्श । तन्मुखात् सहसा "भवांस्तु ऐण्ड्रूज महोदयः, नाहं भवतः पणान् ग्रहीष्यामि" इत्येतद् वाक्यं निरगच्छत् । स झटिति ततः प्राद्रवत् । एतादृश्यासीत् तस्या किञ्चनजनसेवकस्य लोकप्रियता ।

परमात्मा तस्मिन् प्रसीदति योभवति असहायानां सहायः एकदा ऐण्ड्रूजं कराँची यात्रायां कश्चिज्जनोऽपृच्छत्—'क्व भगवान्' ? दीनबन्धुनोक्तं साय महं भवन्तं भगवन्तं दर्शयिष्यामि । ऐण्ड्रूजस्तं जन मन्त्यजस्य गृहमानैषीद् । तत्र दश वर्षायुष्को बालो राजयक्ष्मापीडित आसीत् । न तस्य वालस्य माताऽऽसीत् स

पितामही आसीत् । वृद्धः श्वपचस्तत्सेवासंलग्न आसीत् । ऐण्ड्रूज आनीतं जन मब्रवीत्— 'भगवद्दर्शनं क्रियतामिति' । नवयुवाऽभवन्निःस्तब्धः । सा घटना तस्मिन् यूनि प्रभावं महान्त मपातयत् । तदाप्रभृत्येव स दीन दुःखिजन-सेवारतोऽजायत । ऐण्ड्रूजस्यासीदेषा भगवद्दर्शन सम्बन्धिनी पवित्रा धारणा ।

ऐण्ड्रूजः स्वजीवने कदापि कमपि न अपाकरोत् । सः स्वविरोधिषु दुष्टेष्वपि जनोऽदयत; तेषु चाभवदुपकर्ता । एकदा केचन गौराङ्गाः "त्वम् अस्माकं विरोधे लिखसि" इत्येतदभिदधतस्तं केशेषु गृहीत्वा नितान्तं निर्दयतया अताडयन् । एतां घटना मादाय कश्चिद् ब्रिटिश-संसदि प्रश्नं निदधौ । तदा इंगलेण्डस्य प्रधानमन्त्रिणा भिहितम्, "यै र्मयि दुर्व्यवहारोऽनुष्ठितस्तेषां विरोधे किमप्याचरण महितकरं न मम प्रियं भवेत्" इत्येतदुक्त्वा ऐण्ड्रूज महानुभावेन तेष्वपकारिष्वपि दया कृतास्ति । आसीत् ऐण्ड्रूजः क्षमामूर्तिः; न कोऽपि तस्य दृष्ट्यां परकीय आसीत् ।

आंग्लाधिकारिभिः कस्मिंश्चिन्निरपराधेऽसकृत् समरार्पितस्वसेवे ग्राम्ये संख्या-ग्राहिणि जने कृतोऽत्याचारः ऐण्ड्रूजंभृशमतौत्सीत् । स तद्दुःखदात्याचाराग्निर्गताश्रुप्र-वाहनयनो बभूव । तन्मानवस्य चरणरजः संस्पृशन् "अहमप्यंग्रेजः, सन्त्यंग्रेजा ममबन्धवः; ममबन्धुकृतपापभारोऽस्ति मदीयेशिरसि; तदपराधो मदपराधः; क्षमस्व माम् "इत्य-गादीत् । ततः स जनः परिदेवयन् ऐण्ड्रूज मुरस्याशिश्लेष ।

ऐण्ड्रूजो दीनबन्धुः स्वजीवनावसानस्यान्त्यक्षणेषु महात्मानं गान्धिनम्,"........ ईश्वरीयं राज्यं पृथिव्यां प्रतिष्ठापितं स्यात्; ईश्वरेच्छयैव जगत्यां सर्वाण्यपि कार्याणि चलेयुस्तथैव, यथा स्वर्गे चलन्ति तान्यभीक्ष्णम्" इत्यवदत् ।

दीनबन्धुः ऐण्ड्रूजः एकोन सप्ततिवर्षाणि पार्थिवे शरीरेऽजीवत् । तदीयमखिल मपि जीवनं सत्यनिष्ठं शिव-शक्तिसम्पन्नं दीन-दरिद्रजन-सेवापर मेवाजस्र मवालोक्यत । ५. ४. १९४० तमेशवीय वर्षे स ब्रह्मणि व्यलीयत । तन्निधनावसरे रवीन्द्रनाथेन स्वश्रद्धाञ्जलि स्तदर्थमेतेषु शब्देषु समर्पितः—

"अस्मत्प्रियतम मित्र चार्ल्स ऐण्ड्रूजस्यासुशून्यशरीरेणाद्य सर्वग्राहिण्यां मृत्ति-काया माश्रयोऽस्ति गृहीतः । मृत्योः सत्तायाश्चरमावसानं नैव जायते; विचार्य्यैत-च्छोकसमयेऽस्माभि र्धैर्य-धारणे प्रयत्यते; परं सान्त्वना नैव लभ्यते; आसीद् ऐण्ड्रूजो दीनबन्धुः सत्यवादी महात्मा" ।

दैन्यव्यथापावकदह्यमान-
लोकव्यथाभेदनदत्तचित्तम्
ऐण्ड्रूजसत्यप्रियदीनबन्धुं
वन्दामहे भारतभूमिभक्तम् ॥



# भीष्म पितामहः

कुरुवंशावतंस महाराज शान्तनोः पुत्रो भीष्मोऽस्मद्देशेन भारतेन सादरं स श्रद्धञ्च स्व स्मृतिसृतौ न्यधीयत, निधीयते च । श्राद्धपक्षे वयं भारतीया स्तस्मै प्रदाय जलं तर्पयामः । स वाल्य एव वेदान् साङ्गोपाङ्गानध्यगीष्ठ धनुर्वेदे च परम-कौशल मध्यगमत् । अस्त्रेष्वभ्यस्यन् स एकदा शराणां प्रभावेण जाह्नव्या धारा मपि न्यरौत्सीत् । तदीयं मातृ-पितृ कृतं नाम देवव्रत इत्यासीत् ।

एकदा कानने विचरतो राजर्षेः शान्तनो र्दृष्टिः कैवर्त राजतनयायाः समुल्लसित सौन्दर्यायाः सत्यवत्या रुपरि न्यपप्तत् । तां वीक्ष्य तन्मानसं तस्या मासजत् । स तामुद्वोढुमचकमत । आसीत्तु सत्यवती राजसुता परं सा कैवर्त राजनिकेतने परिपालिताऽभवत् । कैवर्तराज स्तां परिणिणीषोः शान्तनोः पुर 'स्तद्गर्भादुद्भूतः पुत्रः स्याद् राज्याधिकारी' त्येतत्पणं न्यदधात् । राजा न तदुक्तं वचनम्प्रति स्वकीयां स्वीकृतिं प्रददौ । परं न स तां सुन्दरीं कुमारीं स्वं हृदयाद् दूरीकर्तुमशकत् । तद-वाप्ति चिन्तायां निलीन एवादृश्यत । यदा देवव्रतस्तच्चिन्तायाः कारणमज्ञासीत् तदा सः स्वयं कैवर्तराजं स्व पितुः कृते सत्यवती मयाचत । स तद भिमतं वचः स्वीकुर्वन् सर्वेषा मपि समक्षे 'सत्यवती गर्भादुत्पन्नः पुत्र एवास्मद् राजा भवितेति प्रत्या श्रौषीत् । परं कैवर्ताधिपति स्तत्रापि नातुष्यत् । देवव्रतस्य तु वचनं नान्यथा भवितु मर्हति परं योहि तत्पुत्रो भविष्यति स तु राज्थाधिकारी भवितुं स्वमधिकारं निधातुं प्रभवेदित्येतद् विमृश्य तमपि नैजं हृद् गतं भावमभिव्यानक् । आकर्ण्यैतद् स नव-तरुणो भीष्म आजीवन महं ब्रह्मचर्यं पालयिष्यामीति प्रतिज्ञामन्वतिष्ठत् । यदा प्रभृत्येव स तां भीष्म प्रतिज्ञाञ्चकार तदाप्रभृत्येव स जगति भीष्म इत्येतेन व्यपदेशेन सर्वत्र व्यपादिश्यत । शान्तनुः स्वाभिमतां प्रेयसीं सत्यवती मवाप । भीष्मस्य स लोकोत्तर स्त्यागः शान्तनु मधूधुनत् । सः नितरां प्रसन्नतां विन्दन् स्या-न्मृत्यु स्त्वदायत्त इत्येतेन वरेण तमन्वगृहणात् । जीवनस्य प्रथम एव चरणे संसार स्याग्रे तादृशं त्यागं प्रस्तुतीकृत्य यद् यशः सः समन्ताद् व्यतानीत् तत् तावत् स्थास्यति यावद् गङ्गा यमुना च प्रवहन्त्यौ वसुमती मिमां पवित्री-कुर्वन्त्यौ शोभेते । स्त्री-पुत्रादिविषयकं यत् सुखं कोऽपि न त्यक्तुं शक्नोति भीष्मेण तदेव सुख मनायासे-नैव परित्यक्तम् । यस्य राज्यस्य कृते तस्यैव पुत्र-पौत्रा स्तस्योपस्थित्या मेव भीषण माहवमातेनु स्तदेव राज्यं सः स्वपितुः सामान्याया एवेच्छायाः परिपूरणाय हेलयैवा

मुञ्चत् ! कामिनी-काञ्चनप्रयोजनेन तु संसारे अजस्रं सहस्रशो लक्षशश्च जना नृशंसानि निन्द्य निन्द्यतराणि कुकृत्यान्याचरन्ति, राज्यानि च; न विद्मः, कियन्ति धूलिसाद् जातान्यहो तत्सर्वं कामिनी-काञ्चनादिकं स तृणमिव तत्याज । अहह, धन्या तदीया पितृ-भक्तिः ।

सत्यवत्यां शान्तुन द्वौ पुत्रा वुत्पादयामास चित्राङ्गदो विचित्रवीर्यश्च । तत्राद्यो युद्धे वीरगतिं लब्धवान् अन्त्यश्च काशीनरेशस्य ते द्वे कन्ये स्वपत्नीत्वेन पर्यग्रहीद् ये भीष्मः स्वयंवरे आगतान् नृपान् नृपकुमारांश्च जित्वा जहार । अस्मिन् युद्धे स (भीष्मः) यमलौकिकं पराक्रम मदीदृशत् तेन तस्यायुधचातुर्य्यस्य प्रथम; परिचयः प्राप्तो जायते । विचित्रवीर्यो वैवाहिकं सुखं कानिचन एव दिनानि भोक्तुं शशाक । सः क्षयरोगेण कवलीकृतः अतः द्रागेव पञ्चत्वं गतः । कुरुकुलं हि उच्छेदोन्मुखता-प्रत्यासन्न मजायत । तस्मिन्ननेहसि अन्तरेण किमपि काठिन्यं भीष्मो राज्ये स्वकीय मधिकारं स्थापयितुं समर्थ आसीत्; प्रजापि तस्मिन्ननन्वरज्यत्; वंश-रक्षार्थं विवाहाध्वन्यपि न कापि बाधैव वाधा भूत्वा समतिष्ठति । परं गुरुतम मपि प्रलोभनं वाऽऽकर्षणं न तं प्रतिज्ञातात् स्रंसयितुं क्षमाऽऽसीत् । सत्यवत्याः पितुः कैवर्त राजस्य पुरः प्रतिजानानः स "त्रिभुवनस्य राज्यं, ब्रह्मणः पदम् एतयोरप्युभयो र्गरी-यासं मोक्षमपि त्यक्तुं शक्नोमि परं न सत्यस्य त्यागं कर्तुं शक्नोमि, पञ्चापि भूतानि कामं स्व गुणांस्त्यजेयुश्चन्द्रः शैत्यमुज्झेत्, अतः परस्ताद् धर्मराजः स्वीयं धर्मं जह्यात् परमहं स्व सत्यप्रतिज्ञायास्त्यागस्य विचार मपि न कर्तुं शक्नोमि" इत्येतद्-वोचदेव । अहह, प्रतिज्ञायाः पालनं तु वस्तुतः इदम् ।

काशीपते यास्तिस्रः कुमार्यो भीष्मेण हृता स्तास्वन्यतमा अम्बा आसीत् । शाल्वेऽनुरक्तत्वाद् भीष्म स्तां तस्यैव पार्श्वे प्राहिणोत् । परं न शाल्वो भीष्मापहृतां तां पुनः स्त्रीचकार । अवज्ञाता सा परशुरामं शरणं ययौ । परशुरामः स्व शिष्यं भीष्मं तदाऽऽजुहाव परं प्रतिज्ञा बद्धत्वाद् भीष्मो गुरुवचनं स्त्रीकर्तुं न प्रवभूव । तदा परशुरामस्तं योद्धुमाकारयामास । गुरुशिष्ययो स्तद् युद्धम् ऋषि मुनिदेव दानव मानवादीन् सर्वानपि अवेपयत् । येन केनप्रकारेण तेषां विनयमयादनुरोधात् तज्जन्य मुपसंहृत मभूत् । न कोऽपि तदा कमपि पराजेतुं क्षमो जातः । तदा सत्य प्रतिज्ञायाः शूरतायाश्च भीष्मेण पराकाष्ठा दर्शिता ।

सन्धि प्रस्तावमादाय कौरव सभाया मुपस्थिते सति भगवति वासुदेवे, भीष्मो भगवतः कृष्णस्य वक्तव्यं निशम्य दुर्योधन मवोचदिदम्–" अस्ति श्रीकृष्णोऽस्माकं सुहृत्; सोऽस्मदीयं श्रेयोऽभिलषते; अतोऽभिमानं हित्वा तदीयं कथन मादरणीयम् ।

तात ! यदि महापुरुषस्य श्रीकृष्णस्य आदेशं त्वं न शिरोधार्य मकरिष्य स्तदा न कल्याण मद्रक्ष्यः—

"अकृत्वा वचनं तात केशवस्य महात्मनः।
श्रेयो न जातु न सुखं न कल्याण मवाप्स्यसि" ।।

भीष्मो दुर्योधनं पुनः पुनः उपादिशत्, सः पाण्डवेषु सौहृदं निधाय व्यवहरेदिति भीष्यः सवात्सल्यं परम स्नेह पूर्वक मशंसत् परं न दुर्योधनो तस्य सम्र्सतिं स्वीचकार। अन्ततोगत्वा जन्याशुशुक्षणिः प्रास्फुटदेव।

महाभारत समरे कौरव पक्षस्य सर्वश्रेष्ठो योद्धा भीष्म एवासीत्। अतः प्रथमसेनानायकत्व गरिमा तमेवावृणोत्। पाण्डव-कौरवयो रुभयोरपि पितामहत्वात् स (भीष्मः) सममेव स्नेहं, सहानुभूतिञ्च समामेव निदधौ कौरवपाण्डवयोः। निहित समभावोऽप्युभयत्र पाण्डवानां धर्मन्यायस्थत्वात् सः पाण्डवेषु पक्षपातहृदय आसीत्। स मनसा पाण्डवानां विजयमाचकाङ्क्ष। पाण्डवेषु निदधदपि पक्षपातं न स आयोधने कदापि तत्कार्यमन्वतिष्ठत् येन कौरवाणां हानिः स्यात्। प्राणपणेन तथाऽयुध्यत यथा कौरवा विजयिनः स्युः। अष्टादशदिवसानमिव्याप्य प्रवृत्तो मृधे दशदिनानि स एकाक्येव कौरवसेनाया नायको भूत्वा भीषणं संग्रामञ्चकार। अस्मिन् कालान्तराले पाण्डवानां महती मनीकिनीं सः सञ्जहार। सन्नपि स्थविरः सम्पराये सोऽनिर्वचनीममेव पराक्रम मदर्शयत्। अतः द्विः स्वयं श्रीकृष्णोऽर्जुनं पातुं शस्त्राग्रहणविषयिकां प्रतिज्ञां निदधदपि तत्प्रतिद्वन्द्वितां कर्तुं शस्त्र मुत्थापयति स्म। रणकर्कशे सति तस्मिन् न विजयः सम्भव इति निश्चित्य पाण्डवास्तमेव तन्मृत्यूपायं पप्रच्छुः। तदा स दयार्द्रोभवन् प्रोवाच "द्रुपदकुमारः शिखण्डी न पौस्नं निदधाति। मम दृष्ट्या तत्र स्त्रैणं विद्यते। नाहं तस्मिन् शस्त्रं प्रयोक्ष्यामि। सति सम्मुखस्थे तस्मिन् कदापि न शस्त्रं ग्रहीष्यामि। तं पुरस्कृत्य पार्थो मां हन्तुं शक्नोति। हन्त, एवंविधाया वीरतायाः क्षत्रियधर्मस्य चान्यत्र कुत्र दर्शनं सम्भवम्। न क्वापि तद् विधं निदर्शनम्।

यदाहि भीष्मः शरशय्यासीन आसीद् दुर्योधनस्तच्चिकित्सायै उत्कटमभिलाषं प्रदर्शयाम्बभूव परं स तां वीरगतिं प्राप्य चिकित्सां कथमप्युचितां नामंस्त। सर्वे तस्यासाधारण धर्मनिष्ठां साहसञ्च विलोक्य निःस्तब्धतामगुः। तदापि भीष्मो युद्ध रौधाय स्थापयितुञ्च शान्तिं प्रायस्यद् भृशं परं न सफलता प्राप्ताऽभवत्। वस्तुतो दैवविधान मलङ्घनीयं भवति।

महामना भीष्मोऽखण्डब्रह्मचारी, जादर्श पितृभक्त आदर्श सत्यप्रतिज्ञ आदर्शवीर एव नासीत् स शास्त्रेषु पारदृश्वा, धर्मस्य ज्ञाता, ईश्वरतत्त्वस्य च वेत्ता महान् भगवद् भक्तोऽप्यासीत्। भगवान् कृष्णः स्वयं तदीय मगाधज्ञानं प्राशंसत्। तं प्रशंसन्

सोऽवोचत्—'भवति लोकान्तरं प्रस्थिते सति समस्तमपि ज्ञानं लुप्तं भवेत् । जगति ये सन्देहास्पदविषयाः सन्ति तत्समाधानकर्ता भवन्तं विहाय नान्यः कोऽपि....."। यदा यदा महाराजो युधिष्ठिरो धर्मे सम्बन्धिनीं शङ्कां कृतवान् स एव तदा तदा तां न्यवारयत् ।

श्री कृष्णस्य माहात्म्यं यावत् महिमानञ्च यावन्तमजानाद् भीष्मो न तावत् तावन्तं चान्योऽज्ञासीत् । राजसूययज्ञारम्भे 'कस्मै सर्वप्रथममर्घार्तिणं करणीय' मित्येतां युधिष्ठिरस्य जिज्ञासां निशभ्य सोऽचकथत्—

'एषा ह्येषां समस्तानां तेजोबलपराक्रमैः ।
मध्ये तपन्निवाभाति ज्योतिषामिव भास्करः ।।
असूर्यमिव सूर्येण निर्वात मिव वायुना ।
भासितं ह्लादितञ्चैव कृष्णेनेदं सदो हि नः ।।

श्री कृष्णस्य सर्वप्रथमं पूजनं वीक्ष्य शिशुपालस्तन्नाससत स संरम्भेण अनुचिता वाचः प्रयुयोज । भीष्मस्तदा तं भर्त्समन् प्राह—

'नास्मै देयो ह्यनुनयो नायमर्हति सान्त्वनम् ।
लोकवृद्धतमे कृष्णे योऽर्हणां नाभिमन्यते ।।
अस्यां हि समितौ राज्ञा मेकमप्यजितं युधि ।
न पश्यामि महीपालं सात्वतीपुत्रतेजसा ।।
न हि केवल मस्माक मयमर्च्यतमोऽच्युतः ।
न्नयाणामपि लोकाना मर्चनीयो महाभुजः ।।
तस्मात्सत्स्वपि वृद्धेषु कृष्ण मर्चाम नेतरान् ।
एवं वक्तुं न चार्हसित्वं मा तेऽभूद् बुद्धि रीदृणी ।।"
संसार स्येतिहासे भीष्म इवान्यो महापुरुषः क्व !
योऽनैषीन्निज जीवनं हि सततं सम्पालयन्नाश्रम
माद्यं वीरशिरोमणिः शुचिमति ज्ञानी महान् तत्त्ववित्
श्रीकृष्णस्य पितुश्च योऽवनितले भक्तो महान् पूरुषो
धन्योऽसौ भवतिस्म पुण्यचरितो भीष्मोऽत्र शूराग्रणीः ।।



# युधिष्ठिरः

को हि ईदृक्, यस्य न मनः राजलक्ष्मीः हरति । तां यदा योऽपि लभते सः पुनः न तां मुञ्चति । परम् आश्चर्यं नितरां महत् तामेव राजलक्ष्मीं प्राप्यापि युधिष्ठिरः परित्यज्य तां वनं राम इव गन्तुं स्वकीयं मनो निबबन्ध । सोऽर्जुनं परमविषण्णो भवन् प्रोवाच—

सपरिग्रह मुत्सृज्य कृत्स्नं राज्यं सुखानि च ।
गमिष्यामि विनिर्मुक्तो विशोको निर्ममः क्वचित् ।।
प्रशाधि त्वमिमा मुर्वीं क्षेमां निहतकण्ठकाम् ।
न ममार्थोऽस्ति राज्येन भोगै र्वा कुरुनन्दन ।।

महाभारते, (गी. प्रे. गो.) पृ० ४४३८

राज्यं विहाय न स वनं गच्छेदित्येतद्धेतोः भीमार्जुनद्रौपद्यादिना स भूयो भूयोऽनुरुद्धः परं नासौ धनसम्पदावर्जितो बभूव । स तु—

ये वित्त मभिपद्यन्ते सभ्यक्त्वं तेषु दुर्लभम् ।
द्रुह्यतः प्रैति तत् प्राहुः प्रतिकूलं यथातथम् ।। २० तत्रैव
अधनः कस्य किं वाच्यो विमुक्तः सर्वशः सुखी । पृ. ४४७१
देवस्व मुपगृह्यैव धनेन न सुखी भवेत् ।। २३

इत्येतदादिशब्दै भृशं धनं निनिन्द । वस्तुतो महाराज युधिष्ठिरो मूर्तिमान् धर्म आसीत् । अत एव जनैः स 'धर्मराज' इत्यभ्यधीयत । तस्मिन् धृतिः, स्थिरता, नम्रता, दयालुता, अविचलं च प्रेम इत्येतदादिका अनेके लोकोत्तरा गुणा विरेजिरे । सः शील-सदाचार-विचार-वत्वात् बाल्य एव परमलोकप्रियो बभूव । पितरि पाण्डौ सत्युपरते सः स्वकीयं पितु र्ज्येष्ठं बन्धुं धृतराष्ट्रं स्वपितरमेव मत्वा तस्मिन् सम्मान-धिय मतितरामेव निदधौ । परं धृतराष्ट्रस्तु तस्मिन् नानागुणनिधावपि, सङ्कीर्णमान सत्वान् न प्रासीदत् । सः (धृतराष्ट्रः) विद्वान् सन्नपि न बिवेकवानासीत् । नासीत् तदीयं हृदयं निर्दोषं तदासीदतितरा मनुदार मीर्ष्या-रागद्वेषनिषेवितम् । सः दुर्योधन-कृतं पाण्डवेष्वन्यायं न व्यरौत्सीत् । तस्यैव दुष्फल मभूत् महान् जनसंहारः । श्री कृष्ण स्तम्—

उच्यमानस्तु यः श्रेयो गृह्णीते नो हिताहिते ।
आपदः समनुप्राप्य स शोचत्यनये स्थितः ।।
ततोऽन्यवृत्त मात्मानं समवेक्षस्व भारत ।
राजंस्त्वं ह्यविधेयात्मा दुर्योधनवशे स्थितः ।।
आत्मापराधादापन्न स्तत् किं भीमं जिघांसि ।
तस्मात् संयच्छ कोपं त्वं स्वमनुस्मर दुष्कृतम् ।।

इत्येतदादिकैः शब्दैरभर्त्सयत् ।

युधिष्ठिरो धर्मभीरुः सहनशीलः पुरुषप्रवर आसीत् । सः सर्वविधामपि हानिं सोढु मशकत् परं धर्मं हानि र्न तस्य सह्याऽऽसीत् । द्यूते यदा छल मवलम्ब्य तस्मात् तदीया द्रौपदीसहिताश्चत्वारोऽपि बन्धवो हृताः किञ्च सभायामेव तत्पुरतो द्रौपद्याः सोऽतिनिन्द्य स्तिरस्कारः कृतोऽभूत्, तदापि धर्मपाशवद्धत्वात् स मुखादेकं शब्दमपि न निरगमयत्; नितरां नीरव एव भूत्वा सः समतिष्ठत । कश्चिद् सामान्योऽपि जनः स्वनेत्रयोः पुरः स्वकीयाया भार्याया स्तद्विधां दुर्दशां न द्रष्टुं शक्नोति परं स तु तामपि सधैर्यं शान्त्या तूष्णीं भूत्वा सेहे । वन-गमन कालेऽपि सः कौरवेषु न स्वकीय माक्रोश मभिव्याञ्जीत् । स वन मधिवसन्नपि अतिथिषु भोजनादिना सत्कृतेषु सत्स्वेव भोजनं जग्राह स वनवास कष्टानि उपभुञ्जानोऽपि आतिथ्यधर्मं कृत्स्नतया अपालयत् । सः 'अजात शत्रुः' इत्येतेन च नाम्ना प्रख्यात आसीत् । न सः कस्मिन्नपि वैरं निदधौ। शत्रूनपि प्रति तस्य हृदयं सद्भावाप्लावित मेव दृष्टमभूत् । तद् दृष्ट्यां शत्रुरपि सेवायाः सहानुभूतेश्च भाजन मासीत् । अपकारिषु अपि स उपकारी व्यालोवयत ।

यदा हि पाण्डवा द्वैतवन मध्यूषु स्तदा दुर्योधनो घोषयात्राव्याजेन मन्त्रि-सैन्यावरोधादिना सह अपरिमितेन स्वकीयेन उत्तरलेन वैभवेन पाण्डवानां हृदयानि तापयितुं तद्वनमाजगाम । परं तत्र तेन सह गन्धर्वाणां युद्धं प्रावर्तत । गन्धर्वा विजयिनोऽभूवन् । तै र्दुर्योधनो वन्दीकृतः । यदैतत्सर्वं युधिष्ठिरोऽज्ञासीत्, स झटिति स्वबन्धून् गन्धर्वेभ्यो दुर्योधनं मोचयितु मादिदेश । स तानब्रवीत्, "इदमहं वेद्मि तेऽस्मासु शात्रवं निदधति परं साम्प्रतं ते सन्त्यापदि । अस्मिन् काले तदीयानपराधान् विस्मृत्य तेषु साहाय्याचरणमस्मद्धर्मः । सन्ति त्वन्ततः कौरवा अस्मद्बन्धव एव । सत्स्वस्मासु अन्ये तानेतादृशीं दुर्दशां नयेयु "रित्येतन्न वयं द्रष्टुं शक्नुमः ।" बन्धुषु मतभेदः कलहश्च प्रवर्तेत एव, न तद्धेतो रात्मीयता समाप्तिं प्रयातीत्येतद् भीमसेनं स निजगाद । एतावत् कथनं निशम्यैव तत्क्षण एव धनञ्जयः स्वशर वृष्ट्या गन्धर्वान् प्रतिहतगतिकांश्चकार, दुर्योधनञ्च सबन्धुं सावरोधञ्च तेषां बन्धनात् सद्य एवोन्मो-चयाञ्चकार । महाराजस्य युधिष्ठिरस्य विशालमनस्कता सर्वानपि कुरुनन्दनान्

विस्मापयाम्बभूव । एकदा द्रौपदी माश्रमे एकाकिनीमेव विहाय पाण्डवाः वने विचरितु मीयुः । तस्मिन्नेवान्तराले पापमनाः सिन्धुराजो जयद्रथ आश्रम मुपेयिवान् । द्रौपदी मेकाकिनीं दृष्ट्वा, स तद्रूपलावण्यासक्तो बभूव । स तां प्रसभं स्यन्दने आरोप्य ततः पलायितु मारेभे । जयद्रथस्य तां दुष्टतां यदा पाण्डवा अवजग्मुः सत्वरं तमन्वधावन् क्षिप्रमेव तं भीमसेनोऽधरत् युधिष्ठिरस्य पुर स्तमानिनाय परं धर्मराजो युधिष्ठिर स्तस्मिन् दयाञ्चक्रे तमुन्मोचयामास च । इत्थं सः स्वकीया मद्भुतां क्षमाशीलतां दयालुताञ्चादीदृशत् ।

महाराजो युधिष्ठिरौ महान् बुद्धिमान् नीतिविद् धर्मवेत्ता त्वासीदेव; तस्मिन् समदर्शितापि आश्चर्यकरी व्यराजत । एकदा नकुलसहदेव भीमार्जुनाःयक्षराजोपस्थापितप्रश्नानां युक्तसमुचितोत्तराप्रदानत्वात् सरोवर सलिलं यदैव पपु र्निर्जीवा भूत्वा सरसस्तटे निपेतुः, युधिष्ठिर स्तान् मार्गयमाणस्तत्रागम्य स्वकीयान् बन्धूं स्तदवस्थाप्रपन्नान् वीक्षाञ्चक्रे, ददर्श च स विशालकायं यक्षमेकम् । स यक्षस्य "मम प्रश्नाना मुत्तर मदत्वैव युक्ततया जलं पातुं ते भ्रातरः प्रचक्रमिरेऽतस्ते दशा मेतां मया नीताः" इत्येतद् वचः आकर्ण्यं तत्प्रश्नानुत्तरीतुमुदयतत । यक्षो यं यं प्रश्नं पप्रच्छ युधिष्ठिरस्तं तं प्रश्नं युक्ततया समुचितसन्तोषाधायकरीत्या च उदतरत् । यक्ष स्तदुत्तरै नितरा मतुष्यत् । सः प्रसन्नो भवन् "यं कमपि भवान् स्व बन्धुं जीवयितु मना स्त महं जीवितं विधास्यामी" ति युधिष्ठिर मवोचत् । सः नकुलं जीवितं द्रष्टु मियेष। पृष्टे सति हेतौ, स "मम पितु रास्तां द्वे भार्ये कुन्ती माद्री च । मम दृष्ट्या ते द्वेऽपि सम एव । अहं तयो रुभयोरपि पुत्रवतीत्वं विलोकयितु मभिलषे । कुन्त्याः पुत्रस्त्वहं विद्यमान एवास्मि, अतः माद्री-मातुरपि पुत्रस्यैकस्य जीवितत्व माकाङ्क्षामि । अस्मादेवकारणाद्, भीम मर्जुनञ्च हित्वा तं (नकुलम्) जीवयितुं भवन्तं प्रार्थये" इत्येतदगादीद् । युधिष्ठिरस्य बुद्धिमत्तायां धर्मवत्तायां तु सः प्रसन्न आसीदेव तदीयां तां समदर्शितां विलोक्य सः प्रसन्नतरो बभूव । स चतुरोऽपि बन्धून् अजीवयत् ।

युधिष्ठिरः श्रीकृष्णेऽतिशयामास्थां न्यदधात् । यदा भगवान् श्रीकृष्णो दूततां स्वीकृत्य कौरवसभां गन्तुं सन्नद्धोऽभवत्, तदा युधिष्ठिरः—

प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम् ।(उद्योगपर्वणि,
को हि कृष्णास्ति नस्त्वादृक् सर्व निश्चयवित् सुहृत् ।।७२।७८)
अस्मान् वेत्थ परान् वेत्थ वेत्थार्थान् वेत्थ भाषितुम् ।
यद् यदस्मद्धितं कृष्ण तत् तद् वाच्यः सुयोधनः ।।(तत्रैव,७२।६२)

एतेषु वाक्येषु दुर्योधनम्प्रति तस्य सदाशयता स्फुटतयैव ज्ञाततामुपैति ।

विराटपर्वणि षष्ठेऽध्याये युधिष्ठिरकृता दुर्गास्तुति स्तस्य दुर्गाभक्तत्वं प्रथयति ।

युधिष्ठिरः सदाचारसम्पन्नो विनयवान् समयोचितव्यवहार वित्वासीदेव स गुरुजनेष्वपि नितरा मादर बुद्धि न्यदधात् । कठिनतरे काले घोरायां च विपदि न स मानमर्यादां शिष्टाचारं व्यस्मरत् । महाभारत युद्धे द्वयोरपि पक्षयोः अनीकिन्यौ यदा योद्धुं सर्वथैव सन्नद्धे आस्तां तदापि सः शत्रुसेनाया मध्ये पितामहं भीष्म माचार्यंद्रोणं मातुलञ्च शल्यं प्रणन्तुं तेषा माशिषा चात्मानं मनुग्रहीतुं ययौ । तस्य स विनयपूर्णः शिष्टजनोचितो व्यवहारः सर्वानपि तान् गुरुजनान् नितराम-प्रीणात् ते हृदयेन तद्विजय मचीकमन्त । भगवान् कृष्णः स्वयं तस्य तमादर्शव्यवहार मन्वमूमुदत् ।

युधिष्ठिरस्योदारताप्यलौकिक्यासीत् । यदा कौरवा राज्यस्य निवर्तने नोद्यता अभूवंस्तदा सः (युधिष्ठिरः) ग्रामान् पञ्च एव प्राप्य आत्मानं तोषयितुं सन्नद्धः सञ्जातः (उद्योग पर्वणि, ७२।१६)—

पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा । वसेम सहिता येषु मा च नो भरता नशन् ।। एतावदेव न, विनष्टेषु सत्सु सर्वेष्वपि भीष्म-द्रोण-कर्णादिमहारथिषु, विध्वस्ते सति च समग्रे सैन्ये, तस्मिन्नपि काले स योद्धु माकारितं दुर्योधनं, "अस्मास्व-न्यतमे, गदायुद्धे, विजिते सति सकलमपि राज्यं तव भविष्यतीति" सः अचकथत् । एतद्विध मुदारतामयं कथनं तं विहाय नान्यः कोऽपि वक्तुं क्षमः ।

युद्धे सति समाप्ते, युधिष्ठिरो बभूव सम्राट् । धृतराष्ट्रो गान्धारी च तदा तेन परमभक्तिभावपूर्वकं श्रद्धया विनयेन चासेव्येताम्; तयोः कृतेन तस्य प्रशंसनीयेन व्यवहारेण तौ (गान्धारी धृतराष्ट्रौ) स्वकीयान् उपरतानपि सुतान् विसस्मरुः । विना तयो राज्ञां स राज्य सम्बन्धि किमपि कार्यं न चकार । गुरुतरराज्यकार्याणि वहन्नपि स तयोः सेवार्थं कार्यक्रमे समयमवश्यमेव समावीविशत् । तस्य माता कुन्ती, वधूश्च द्रौपदी गान्धारीसेवायां सदैव संलग्न एव अदृश्येताम् । धृतराष्ट्रो यदृच्छया धन-व्ययं कर्तुं प्राभवत् । श्रद्धावसरे तस्याज्ञया सः धन-रत्नोदकां नदीमेव प्रावाहयत; यदा यत्र च यावद् धनं व्ययीकर्तुं सः कामयाञ्चक्रे तदा तत्र तावतोऽप्यधिकं धनं सहर्ष प्रयुयोज । युधिष्ठिरः सविनयं तम्, "मम प्राणा अपि भवदर्थं सन्ति धनसम्पदां तु वार्तैव का" इत्येतन्न्यवेदयत् । यो हि धृतराष्ट्रः पाण्डवानां कृते सर्वविधानामपि असहनीयानां कष्टानां दुरवगाहानां च विपदां सर्वथैव असह्यस्य चापमानस्य कारण मभूत्; तस्मिन्नेव धृतराष्ट्रे युधिष्ठिरो भवन्नपि सम्राट्, निश्छलप्रेममयं व्यवहारं श्रद्धामयञ्चाभ्यर्चनं 'सर्वविधामपि सुखदां व्यवस्थाञ्चकार । एतद्विधा मुदारतां युधिष्ठिर एव वस्तुतः कर्तुं क्षम आसीन्नान्यः कोऽपि । वैरिण्यपि ईदृक् सद्व्यवहारः संसारस्येतिहासे कदाचिदेव दृष्टो भवितुं शक्यः ।

युधिष्ठिरस्य हृदयं स्वजनेषु अगाधप्रेमाप्लावित मासीत् । युद्धे विजयलाभे सति स न प्रासीदत् । स्वजनानां संहार स्तं भृश मतौत्सीत् । सः प्राप्त समृद्धं तद् राज्यमपि विहाय, तेषां दुःखात्, वनं गन्तु सन्नद्धोजातः । परं व्यासश्रीकृष्णकृतपरम प्रबलानुरोधे कृते सः सिंहासनासीनो भवितु मुद्यतः सञ्जातः । यो वैरिभूतेषु स्वजनेषु व्यापादितेषु, तद्विधं दुःखं दर्शयामास सः, श्रीकृष्णे गते सति परमधाम, यो हि श्रीकृष्णस्तस्य सर्वस्व मासीत्, यत् कृपया सः सर्वानपि विपत्सागरांस्तरीतु मार्हत् किञ्च साम्राज्यमपि प्राप, यदनन्तं दुःखमवाप तत्तु तस्य सर्वमपि राज्यं त्यक्त्वा स्वबन्धुभिः सह द्रौपद्या च सार्धं हिमालयगमनेनैव स्फुटतया प्रकटीभवति ।

युधिष्ठिरः परमपावनचरित्रो महापुरुषोऽभवत् । तस्य महत्ता मधिकृत्य भीष्म पितामह एकदा व्याहार्षीत्–

"राजा युधिष्ठिरो यस्मिन् नगरे वा राष्ट्रे वत्स्यति, तत्रत्या जनतापि दानशीला, प्रियवादिनी, जितेन्द्रिया च भविष्यति । यत्रापि तस्य निवासः स्यात् तत्रत्या मानवा अपि संयमिनः सत्यपरायणा धर्मतत्पराश्च स्युः । न तस्मिन् (युधिष्ठिरे) ईर्ष्याभिमानमात्सर्यादिदोषाः सन्ति । यत्रापि स यास्यति तत्स्थानं वेदध्वनिभिः परिपूर्यमाणं भविष्यति तत्र यज्ञाः प्रवत्स्यन्ते; युक्ते समये वृष्टि र्भविष्यति, भूमिः सस्यश्यामला सर्वविधभयोपप्लवशून्या च भूत्वा शोभिष्यते, गावश्च हृष्टाः पुष्ट ।श्च सत्यो विचरिष्यन्ति" ।

वस्तुतः पुण्यश्लोकस्य युधिष्ठिरस्य पावनं चरित्रं यावदेवाधीतं श्रुतं वा स्यात् तावदेव पवित्रतापि प्राप्ता भवेत् ।

जातः सहिष्णु र्भुवि धर्मगोप्ता
चारित्र्यचारुः समदर्शि-विद्वान्
लोकप्रियो निश्छलचित्त-धीमान्
धीरः क्व राजेव युधिष्ठिरोऽन्यः ॥



# अर्जुनः

आसीत् अर्जुनोदिव्य जीवनभृद् एकोऽद्वितीयो महापुरुषः । यावान् विचारः क्रियते तस्य चरित्रे, तावान् विचारो हि सकलोऽसौ तदीयस्यानवद्यस्योत्कृष्टतमस्य चारुचरित्रस्य लोकोत्तरेणालोकेन विद्यौत्यमानः सञ्जायते । तस्योपश्लोकनीये चरित्रे शौर्य्यं, शस्त्रास्त्रेषु चातुर्यं, इन्द्रियेषु प्रभुत्वञ्च इत्येतेषां त्रयाणामपि सद्गुणानां विस्मयावहं सम्मिश्रणं दृष्टमभूत् ।

संसारस्येतिहास स्तादृशं द्वितीयं जगद्विजयिनं नान्यं धानुष्क मस्मत् पुरतो निधातुं मशक्षत् । वयं तस्य वीरशिरोमणे वीरतापूर्णानि कार्याणि तस्मादेवानेहसा पश्यामो यस्मात् कालादस्त्र-शस्त्र शिक्षां प्राप्य स आत्मानं गुरो द्रोणाचार्यस्य समक्षे गुरुदक्षिणाप्रदानाय समुपस्थापयति । पाञ्चालराजं द्रुपदं जित्वा तं धृत्वा आचार्यस्य द्रोणस्याग्रे आनयनं तस्यैव वीरवरस्य कार्यमासीत् । स एव तमुपस्थाप्य गुरुदक्षिणात्वेन गुरुर्यद् ययाचे तद् ( द्रुपदं धृत्वा तदुपस्थापनम् ) दातुं प्रबभूव । तदीयं तद्द्रुपदधरणकार्यं तस्य ख्यातिं सर्वत्रैव व्यतानीत् । द्रौपदीस्वयंवरं सम्भावयितुं यदा स गच्छन् गन्धर्वैः प्रत्यादिश्यत तदा तस्य तेजस्विनोऽजय्यस्य पराक्रमस्य पुरस्ते न रणाजिरे स्थातुं प्रवभुवुः । तेषामधिनायकश् चित्ररथ आत्मार्पणं विधातु मवाध्यत । सोऽर्जुनं शरणमागतः । द्रौपद्याः स्वयंवरे दुर्योधन-शिशुपाल-जरासंध-शल्व-शल्य प्रभृत्यनेकमहाबलिनोऽवनिपतयो राजकुमारा यद्धनुः सज्यमपि कर्तुं न क्षमा अभूवं स्तदेव शरासनं स लीलया सप्रत्यञ्चं विधाय सर्वेषामपि पश्यतां लक्ष्य मपि विव्याध । खाण्डववन दाहावसरे तत्प्रदर्शिते शौर्य्ये सर्वेऽपि अमुह्यन् । निवातकवचाख्या दानवा अजेयशक्तिसाधन सम्पन्ना आसन् । तेभ्यः शक्तिमद्भ्यस्तु देवा अपि बिभ्युः; परम् अर्जुनस्तानपि विश्वख्यातवीरान् जिगाय । कालिकेयः पौलोमश्च उभावपि प्रचण्डबलौ दैत्यौ येनवीरेण व्यापादितौ सोऽप्ययमेवासीदर्जुनः । विराटनगरे प्रच्छन्नतया यदा पाण्डवाः स्वविपद्दिनानि यापयन्तः समतिष्ठन्त तदा दुर्योधनः, पाण्डवानां वासं तत्राशङ्क्य, भीष्म-कर्ण-द्रोण-कृपाचार्यादिभिः सह तन्नगरमाचक्राम । तस्मिन्नपि काले अर्जुन एव सर्वानपि भीष्मादीन् पराजित्य विराटभूपते र्मर्यादाञ्च ररक्ष । महाभारत युद्धे तु स एव प्रधान पात्र मासीत् । स एव सेनायाः प्रमुखो नायक आसीत् । तस्मिन् समरे भीष्म-कर्ण-द्रोणादिकाः सर्वेऽपि विश्वप्रसिद्धाः शूराग्रेसरा महारथिन स्तस्य प्रतिद्वन्द्विनो भवन्तस्तं पराजेतुं व्यापादयितुञ्च प्रचक्रमिरे परं तां स्तान् सर्वानन्यांश्च शूरान् यो यमराजस्य धाम प्रापयामास

सोऽर्जुन एवासीदिति वयं सर्वे महाभारतेतिहासविदो विद्मः । जयद्रथवधावसरे दुर्योधनो जयद्रथस्य प्राणान् पातुं स्वकीयां सर्वामपि शक्तिं सेनाञ्च प्रायूयुजत् परं सत्यपि तादृशे तस्मिन् हिमालयाकारे उपप्लवे स जयद्रथं हत्वैव शान्तिश्वासं प्रति जग्राहेति कस्याविदितं वर्तते ।

वीराग्रणी अर्जुनोऽद्वितीयो बिश्वविजयी धनुर्धरस्तु आसीदेव; परं स महान् सत्यप्रतिज्ञः, सदाचारी, धर्मात्मा संयमवान् पुरुषकेसरी चासीत् । विप्रधेनुरक्षण-प्रयोजने न सः शस्त्राण्यादातुं युधिष्ठिरभवनं प्रविश्य यं नियममभनक् तस्यानुशय-निमित्तेन नियतकालं यावद् वने उषित्वा स नियम पालनं प्रति यां तत्परतां प्रदर्शयामास तया तस्य नियम पालनवत्वं सत्यप्रतिज्ञत्वञ्च विदितता मुपैति ।

तस्मिन् वीरे आसक्तिं निधाय यदा तस्य सविधे उर्वशी समुपातिष्ठत् तदा तां सोऽनुकरणीयचरितो वशी यदब्रवीत् तच्छ्रूयताम्—

"यथा कुन्ती च माद्री च शची चैव महानघे ।<br>
तथा च वंशजननी त्वं हि मेऽद्य गरीयसी ।।<br>
गच्छ मूर्ध्ना प्रपन्नोऽस्मि पादौ ते वरवर्णिनि ।<br>
त्वं हि मे मातृवत् पूज्या रक्ष्योऽहं पुत्रवत् त्वया ।।"

(महा भा० वन० ४६।४६-४७)

अर्जुनो विराट राजस्य पुत्री मुत्तरां यदा सङ्गीते नृत्ये च विनेतुं नियतीकृतस्तदा तया युवत्या कुमार्या सह तस्य सान्द्रं सान्निध्य मावर्ष प्रावर्तत; परं न तस्य मन स्तस्यां विकृति मियाय । न स तस्यां स्वकीयं भाव माविलीचकार । सदैव स तस्यां तमेव भावं निदधौ यो भावः पित्रा कन्यायां स्वकीयायां निधीयते । अहो स इव न इन्द्रियजयी स्यात् । वयं सर्वे छात्रा स्तस्य चरित्रादेतस्माच्छिक्षा माददीरन् ।

ब्रह्मास्त्र प्रयोगावसरे तस्य वीरवरेण्यस्य अस्त्र सञ्चालनचातुर्य्याः नितान्तमेव समीचीनः संस्तवः प्राप्तो भवति । अश्वत्थामा अस्त्रज्ञान विदस्तस्य पुरस्तात् पराजितः सञ्जातः । तदेवं तस्मिन् शूरमूर्धन्ये कापि अनुपमैव शूरता, अस्त्रशस्त्रज्ञता, जितेन्द्रियता च विरेजिरे ।

तस्यार्जुनस्य पुण्यवत्त्वं सौभाग्यशालित्वञ्च केन प्रकारेण श्लाघामहै यस्मिन् भगवतः श्रीकृष्णचन्द्रस्य स्नेहोऽतितरां प्रगाढोऽभवत् । वस्तुतस्तयोरभिन्नत्वमेवावर्तत । 'अर्जुन ! त्वं ममासि अहञ्च तव । ये मम, तेयुष्मदीयाः; ये च तव तेऽस्मदीयाः । ये त्वयिद्विषन्ति, ते मयि द्विषन्ति, ये च त्वयि स्निह्यन्ति ते मयि स्निह्यन्ति । अहं त्वत्तोऽभिन्नस्त्वञ्च मत्तः । इत्येतदादीनि श्रीकृष्णस्य वचांस्यत्र प्रमाणम् । महाभारते

उल्लिखिताः काश्चन घटना स्तयोरभिन्नत्वञ्च स्फुटतयैव प्रमाणीकुर्वन्ति । अर्जुनो यदा शरणागतं मयदानवं निर्भयञ्चकार तदा श्रीकृष्णोऽपि तद्व्यापादनादात्मानं व्यरीरंसत । मयदानवोऽर्जुनं प्रति स्वकीय सेवाः समर्पयितु मुत्सुको बभूव परं धनञ्जयः 'श्रीकृष्णं सेवस्व, तत्सेवा ममैवसेवा' इति तं बभाषे । महाभारतायोधने अर्जुनः श्रीकृष्ण मेव ऐच्छत् न च सः तदीयां विशालां चमूं किञ्च शस्त्रास्त्रादि-रणोपकरणानि-इत्येतच्च तस्य श्रीकृष्णनिष्ठत्व मभिव्यनक्ति; श्रीकृष्णस्य च तत्सार-थित्वाभ्युपगमनमर्जुनपरकं प्रेम मवगमयति । अर्जुनेन तु स्वजीवनमेव कृत्स्नतया तच्चरणयोः समर्पितं कृतमासीत् । श्रीकृष्णोऽपि भीष्मकर्णप्रभृति भयङ्कर शक्तिसम्पन्ने-भ्योऽरातिभ्य स्तस्य जीवनं न केवलं, जुगोप तद्धिताय तानन्यायपरायणान् सर्वानपि दुर्योधनादीन् तद्द्वारेणैव व्यापाद्य अर्जुनम्प्रति स्वकीयं सौहृदं पूर्णतया पालयामास । अहो, धन्यं धन्यं श्रीकृष्णस्य मित्रवत्सलत्वम् । धन्या च अर्जुनस्य श्रीकृष्णनिष्ठा । अयं सुकृतिवृन्द वृन्दारकोऽर्जुन एवासीद् यस्मै श्रीकृष्ण स्तमुपदेशं प्रायच्छद् यं हि वयं 'भगवद्गीता' इत्येनेन नाम्ना जानीमः । भूयो वय मर्जुनमुपवीणयामो यम्प्रति श्रीकृष्णः प्राह—"भक्तोऽसि मे सखा चेति"; इष्टोऽसिमेदृढमिति ।"

भक्तोऽभवद् भगवतो वसुदेवसूनोः
श्रीकृष्णचन्द्रजगतीधवदीनबन्धोः
पाण्डोः सुतोऽर्जुनमहीप्रथितप्रकृष्टः
धानुष्क शूरकुलमौलिमणिर्गरिष्ठः ॥१

साम्यं शशाक भुवने न हि कोऽपि लब्धुं
शूरोऽखिले निहत शत्रु मृगस्य तस्य
सिंहस्य धैर्यदृढताशुचितार्णवस्य
शौर्यप्रभाव विजयद्युतिवन्दितस्य ॥२

वीरान् जिगाय सकलान् स उदात्तचेताः
आसीदसा वनुपमः शुचिवृत्तनेता
साधुस्वभाव सरलो वचने दृढीयान्
आज्ञापरो गुरुगणस्य नये गरीयान् ॥३

वीराग्रणीः जगति भारतमातृदर्पः
आसीत् सुचारु चरितोऽत्र यशोधनः सः
तादृक् पवित्ररुचिमान् प्रतिभापुनीतः
जातोऽपरः कइति नैव वयं हि विद्मः ॥४

जन्याजिरे बसुमतीप्रिय वीरबर्यं
शस्त्रास्त्रचालनकलाकुशलं महान्तं
थानुष्कशूरजनभूषण भव्यदिव्यं
तं वेपतेस्म परिबीक्ष्य हि दुष्टचित्तः ।।५

वर्षाणि तस्य विगतानि सहस्रशो हि
जातस्य विश्वजनता न परं कदापि
तं विस्मरेन्मनसि भारतभूजनन्याः
धर्माभिरक्षणपरं प्रियपुत्ररत्नम् ।।६

देशस्य तेन नितरांभुवि वर्धिता श्री
कीर्तिश्च संस्कृतिशुभा सकला प्रतिष्ठा
सम्पद् भृशं च सुषमा सुखदा गरिम्णः
शौरे रनुग्रहवतः प्रियकिङ्करेण ।।७

---

# अशोकः

सन्ततिस्तदीया सुखसमृद्धिसम्पत्पदप्रतिष्ठायशोयुता भूयादिति यथा पिता भिलषते तथैवाहमपि मम प्रजासु एकैको जनः सुखी विद्यावान् अर्थवान् बलवान् अभ्युदयवांश्च भूयादिति कामये—एतानि सन्ति तानि वाक्यानि यान्यसावेकदा तदीय एकस्मिल्लेखे लिलेख। यान् हि अतीतगर्भगान् सम्राजोऽखिल मपि जगत् सश्रद्धं ससम्मानं च स्मरति अशोकस्तेष्वेव विरलेषु श्रेष्ठेषु सम्राट्सु गण्यते। साम्राज्यं यत् सोऽशिषत् आसीदतिविपुलं तत्। विशालतरत्वात् प्रौढतरत्वाच्च, हेलयैवाकवरं-साम्राज्यं तदतिशेते स्म। यत्र साम्प्रतं सिन्धुवलूचिस्तान-अफगानिस्तानाख्यया ख्याता देशा वर्तन्ते तां दूरस्थितां वसुधां यावत् उदीच्यां प्रतीच्यां चाशायां तदीयं साम्राज्यं वितत मदृश्यत। प्राच्यामसौ वङ्गेषु कलिङ्गेषु च प्रभुत्वं निदधौ। इदानीं यो देशः काश्मीरनाम्ना किञ्च यो नेपाल इत्येतयाभिधया विदित स्तावपि द्वौ तन्निघ्नतया-मवर्तेताम्। स एव श्रीनगर प्रातिष्ठिपदिति श्रूयते। अवाच्यामान्ध्रेषु च तदाधिपत्यं बभूव। आसनाऽऽसीनोभूत्वा सः स्वयमेव स्वबाहुभ्या मुपरिनिर्दिष्टान् देशान् जिगायेतीतिहासविदो वदन्ति। तद् विशालतमं साम्राज्यं समीचीनतया शासितु मसी चतुरश्चतुरान् प्रतिनिधीनपि न्ययूयुजत्। तेषु तक्षशिला मेक स्तदितरः कलिङ्गान्, तदन्यो गुर्जर मालव सौराष्ट्रान्, तदपरो दक्षिणप्रदेशं शशास।

अशोकशासितसाम्राज्यस्य पृथुलतरता 'महान् सम्राट्' इत्येतां तदीयामभिख्यां सर्वथैवान्वर्थीकरोति। तत्र (अशोके) 'महान्' इत्येतत् किञ्च 'उत्तम' इत्येतच्चोभयमपि विशेषणपदं, विशालदेशस्य सुकुशल योग्यतमशास्तृत्वात् युक्त मेव समसिद्ध्यत्; न कदापि भारतीयजनता तदीयानि तानि वैशिष्ट्यानि स्वस्मृतिसरणेः स्रंसयितुं शक्नोति। नान्यः कोऽपि सम्राट् प्रजा मङ्गलाय तादृशं कठोरं तपोऽनुतस्थौ यादृशं सः। तस्मिन्नेषाकाङ्क्षा बलीयस्कतया विरेजे प्रजा मदीया सततं शुभं पश्येत् सर्वविधानि च सा श्रेयांसि प्रेयांसि चाश्नुवीत। एतदर्थं सः सर्वाण्यपि कार्याणि ध्यानपूर्वकं ददर्श, शासनाधिकारिवर्गं कर्मचारिणां च निवहं तत्तत्कर्त्तव्यानि सावहिततया पालयितु मनूनुदत् अचीकरच्च तै स्तेषां तत् सकलमपि कार्यं गरीयः। एकदासावचकथत् 'अहं प्रजाहित प्रयोजनेन पर्याप्तं कार्यमकरवम्—इत्येतन्न मां कदापि परितोषयति। तदीय-मिदं वच स्तस्य कर्त्तव्येषु जागरूकत्वं समुत्कृष्टोत्साहवत्त्वं श्रमनिष्ठत्वं किञ्चालङ्कर्मीणत्वं स्पष्टतयैव ज्ञापयति।

अशोको भूयोऽभि रूपायैः प्रजाः समाराधयितुं प्रायतिष्ट। यातायातार्थं सत्पथान् निर्माप्य सः पान्थानधिनोत् । अध्वानमभितः सच्छायान् फल-पुष्पपल्लवसमृद्धान् वट-सहकार-शालमलि-प्लक्ष-नीपपलाश-पिचुमर्द-शिंशपादितरूवरान् आरोपयामास; येन जनाः पशवः पक्षिणश्च छाया-फलादिजनितानि सुखानि सम्यगुपभुञ्जाना मुदा सञ्चरितु मर्हेयुः । एतावदेव स न चकार, बहुसंख्यकान् कूपान् सुखदाः वापीः, मनोहराणि सरांस्यनेकान्यचीखनत् येनं सर्वेषामपि प्राणभृतां जल-कष्ट मपनीतं स्यात् । तावतैव स न तुतोष, सोऽवसथांश्च बहूलानकारयत् यत्र यात्रिणो विश्रमितुं शक्नुयुः । साम्राज्याद् रोगान् निर्वासयितु मसौ ग्रामे ग्रामे भेषजालयान् प्रतिष्ठापयाम्बभूव । ते औषधालया न जनानामेव पशूनां तिर्यञ्चाञ्च कृते स्वसेवाः समर्पयामासुस्तदीय आसीद देशोऽयं यत् प्रजानामावेदनपत्राणि तत्क्षणमेव सम्भावितानि स्युः नैतदर्थं कोऽपि समयविशेषः स्यान्निर्धारित; अहनि यस्मिन् कस्मिन्नप्यनेहसि समागतः प्रार्थी सम्भावनीयो भवेत् । काममहं स्यां विश्रामनिकेतने किंवा शयनगृहे यद्वा अन्तःपुरे आहोस्विद् गुप्तवार्ताभवने अथवा याने वा उद्याने राजकीयानि प्रजासम्बन्धीनि च पत्राणि मम पुरो निधातव्यानि स्युः; सततं तेषु विदितोऽहं विधातव्यः एतद्विधलोकहितभावनावत्त्वादेव तस्य, सकलायामपि वसुन्धरायां सः 'सर्वदर्शी' इत्येतत् प्रशस्त्याभ्यर्चितो बभूव ।

आसीदशोको विन्दुसारस्यात्मजश्चन्द्रगुप्तस्य च नप्ता । पित्रर्जितं यशो न विन्दुसारो लब्धुं शशाक परं सः सुयोग्य स्तेजस्वी सम्राट् बभूव । स्वसमये च स महान् योद्धा मतोऽभूत् । अशोकः स्वपितु र्जीवनकाले सम्राजः प्रतिनिधि र्भूत्वा राजधुरमुवाह । स ईशानवायव्यस्थप्रदेशावनुशशास । तस्याधिशासने द्वावपि प्रदेशौ वृद्धिमधिजग्मतुः । उत्तरपश्चिमीयप्रदेशस्य राजधानी तदानीं तक्षशिलाऽऽसीत् । अद्यतने काले यत्र रावल-पिण्डी नगर्यस्त्यधिष्ठिता तां निकषैव सा (तक्षशिला, स्थितासीत् । तत्रत्ये विश्वविद्यालये दिग्दिगन्तेभ्य आगम्य युवानः शिक्षामुपलेभिरे । प्रतीच्यप्रदेशस्यासीद् राजधानी उज्जयिनी । उज्जयिनी भारतस्य तीर्थभूतासु सप्तसु पुरीषु गीयते । तदीयस्य लोकोत्तरस्य वैभवस्य सौन्दर्यस्य च ललितं वर्णनं कविकालिदासबाणादिकृतकाव्येषु राजते ।

सत्युपरते पितरि अशोकः सिंहासन मध्यासाञ्चक्रे । समवाप्तसाम्राज्यस्य तस्य त्रयोदशेऽब्दे ख्यातः कलिङ्गाऽऽहवः पुस्फोट । तज्जन्यं तज्जीवनस्य अन्त्यं जन्यमासीत् सम्प्रति हि कलिङ्ग प्रदेश 'उड़ीसा' इत्येतया संज्ञया व्यवह्रियते । तदानी मसौ प्रदेशोऽजय्यबलोल्लसितो भवन् विबभौ । तत्रत्या जनता स्वस्य भूभागस्य स्वातन्त्र्यं पातुं सोत्साहं सोत्प्रासं सोत्कटशौर्यञ्च वर्षाणि त्रीणि युयुधे । तद्भीषण मायोधनमशोकस्य मानसे गम्भीरं प्रभावं न्यपातयत् । अजीजनच्च तस्मिंस्तदतितरां जुगुप्साम् । "यस्मिन् कार्येऽह मात्मानं प्रावर्तयं तस्मान्न कोऽपि लाभो लब्धः; व्यर्थमेव तत्समय यापनमेव

विपुलधनजनविध्वंसनञ्च । न तेन मानवीयं जीवनं कामपि सिद्धि मृच्छति" इत्येतद् विमृश्य स भृश मन्वशयिष्ट । भविष्यति न जातु सम्पराये प्रवर्त्तयितु मात्मानं सः प्रत्याशुश्राव । यच्च तेन प्रत्याश्रुतं तदनुरूपमेवाचरितमपि सम्यक् । कलिङ्गसमरावसाने सति अशोको लिलेख—"सहस्रेभ्योऽप्यधिका जना हताः; पञ्चदशलक्षसंख्याका वन्दित्वं च नीताः । दशलक्षजना दासतां प्रापिताः । अवग्रहाद् रोगेभ्यश्च जनानां संख्या भूयसी पञ्चत्वं गता । आहवो वस्तुतस्तु भयावहः । अस्ति सः सर्वस्वापहर्ता, जनसंहर्ता च.। युद्धात् परं नान्यत् किमपि क्रूरतरं कर्म ।"

तत् कलिङ्ग युद्ध मशोकं जाताहवघृणञ्चकार । तत् तस्मिन् अहिंसायाः करुणायाश्च धारां सञ्चारयामास । बभूव च स बौद्धधर्मानुयायी । बुद्धधर्माचार्ये उपगुप्ते स भक्तिधियं निबबन्ध ।

गच्छतानेहसा अशोको बौद्ध साधु र्बभूव । परं यथापूर्व मसौ शासन विषयकं कार्यं ददर्श । न ततः स आत्मानं व्यरमयत् । युगपदेव द्वावपि राजधर्म-संन्यासधर्मौ च सम्यगनुतस्थौ । यथा यथा कालोऽतीयाय तथा तथा तदीया मतिः प्रजानां रञ्जने आत्मनश्चोत्थापने दृढीयस्कतां ययौ । सः स्वस्य राज्यस्य धर्ममेव बौद्धधर्म मुद्घोषयाञ्चकार । संसारे सर्वत्र बौद्धधर्मं प्रसारयितुं स देशान्तरं धर्मोपदेशकान् प्राहिणोत् । चतुर्दश च सः घोषणाः कारयामास । तासु घोषणासु सः प्रजाः समुज्ज्वलतरं प्रशस्ततरं च जीवनं गमयितु मुपदिदेश । स्वकीयानि मन्तव्यानि सः शिलासु चोत्किरति स्म येन चिरन्तनं समयं यावत् तानि जनतां सत्पथं प्रदर्शयितुं प्रभवेयुः । वर्षाणां सहस्रद्वयी व्यतीता, परं ते शिलालेखाः साम्प्रत मपि सन्त्यवस्थिताः ।

महात्मबुद्धचरण पवित्रीकृतस्थानान्यवलोकयितुं स महती मेव प्रगाढा मुत्कण्ठां हृदि पर्यपुष्णात्; तस्मात् स त्रिविंशत्यब्द पर्यन्तं प्रजाः शासित्वा तीर्थयात्रायै प्रतस्थे । प्रथमं सः सुविदितां कपिलवस्त्वभ्यर्णवर्तिलुम्बिनीं नाम अटवीं जगाम । बुद्धोऽस्मिन्नेवोपवने प्रादुर्भूय तदपुनात् । अशोक इह पाषाण स्तम्भं प्रतिष्ठापयामास । सः स्तम्भोऽधुनापि तत्र सन्तिष्ठते । सः सारनाथं, यत्र भगवान् बुद्ध आद्यं प्रवचनं चकार, अयासीत् । ततश्च स गयास्थितं बोधिवृक्षं द्रष्टु मव्राजीत् । तस्यैवानोकहस्याधस्ताद् बुद्धे ज्योति रुद्बभूव । ततश्च सः कुशीनगरभगाद् यत्र बुद्धो निर्वाण मवाप । तत्र तत्सकलतीर्थ स्थानानि वीक्ष्य सः स्वां राजधानीं निववृते । सर्वविधभावेन विरजस्कतां निर्विण्णतां च पातुं वर्धयितुं च सः स्वमन्त्रि मण्डले राजधुरं निधाय आत्मानं ततो विमुक्तं विदधौ ।

अशोको महान् अहिंसा प्रियो राष्ट्रनिर्माता सम्राट् आसीत् । तद्राज्यैं प्राणिमात्रस्य हिंसासीत् प्रतिषिद्धा । स महत उत्तुङ्गान् प्रासादान् अचीकरत् । तेषां

विशङ्कटां प्रांशुतरता मालोक्य तेषां मानव-कृतत्वे न कोऽपि विश्वसिति स्म। तत्प्रतिष्ठापितेषु स्तम्भेषु केचंस्तु द्वित्रिशत्हस्तोच्छ्रिताः आसन्। भारतस्याखिलेष्वपि प्रदेशेषु तत्प्रतिष्ठापिताः स्तूपाः शिलालेखाश्चेदानीमपि शोभन्ते।

अशोकं यथा धर्मनिष्ठा अप्रीणात् तथा न जगत्यन्यत् किमपि पर्यतूतुषत्। तदीया अधिकारिणः कर्मचारिणश्च अथ च प्रजाः धर्मरक्षणं नैज माद्यं मुख्यं च कर्तव्यं मन्येरन्निति स आशशासे। धर्माचारो जनेषु स्थितिं लभेत इत्येतत् तस्याभीप्सितमासीत्। अधः स्थितान् नियमान् रक्षितु मसौ जनानुपदिदेश :—

१—कोऽपि प्राणी न व्यापादनीयः। २—माता पिता गुरवश्च सेवनीयाः। ३—सत्यं ब्रूयात्। ४—केष्वपि न अपशब्दा व्यवहरणीयाः। ५—परधर्मो नावज्ञातव्यः। ६—न कदापि कस्याप्यशुमं चिन्तनीयम्। ७—पवित्रहृदया भवत। ८—दीनेषु दरिद्रेषु भृत्येषु च दयध्वम्।

अष्टत्रिंशद् वर्षाणि शिष्ट्वा अशोको भौतिकं वपुर्मुमोच। तज्जीवनानेहस्येव तं साधुं मत्वा जनास्तत्रागाधश्रद्धां निदधुः। अभूत् तदीयं जीवनं सर्वथैवानवद्यम्। सः महान् आत्मा अभीक्ष्णं सत्कर्तव्यरतएवावालोक्यत। तस्मिन् गते निर्वाणं न तादृगन्यः कोऽपि सम्राट् लोके प्राणिना मुपकारकः प्रजाभ्युदयविधायको लोचनगोचरतां गतः।

तत् कृतं यन्न केनापि तद् दत्तं यन्न केनचित्।
तत् साधितमसाध्यं यत्, सम्राजाऽशोकसूरिणा॥

सः पुनः सुकृतबुद्धि रशोकः, दीनबन्धुकरुणामयचित्तः।
रामराज्यमिह भारतवर्षे स्थापितं विहितवान् प्रियदर्शी॥



# प्रतापसिंहः

मातृभूमे र्महिमानं यो वर्धयति पूरुषः ।
तस्यास्ति जीवनं धन्यं सर्वथाऽवनिमण्डले ।।

प्रचण्डमपि वात्याया रंहो यथा शिलोच्चयं न कम्पयितु मर्हति तथैव बिशालस्यापि साम्राज्यस्य बलं न स्वतन्त्रतैक निवद्धभावं मानवं तत्परिगृहीताध्वनो भ्रंशयितुं प्रभवति । मनस्वी सिंहव्याघ्रादिश्वापदसङ्कुले कान्तारे नानाविधानि दारुणानि कष्टानि सहर्षं सोढुमुद्‌युङ्क्ते परं न सः प्रभूतभौतिकसुखप्रदामपि दासतां कदापि वृणीते । नैजं पुनीतं कर्त्तव्यं संरक्ष्य, स्वकीयं चारित्र्यमुदात्तीकृत्य, स्वस्य राष्ट्रस्य संस्कृति माचारांश्च समुत्थाप्य स्वमातृवसुधाया गौरवपताकां ये वीरवंद्य चरणा उदधूनयंस्तेषु महीपतिः प्रतापो यवनशासनानेहसि स्वदेशस्य पुरः स्पृहणीयं वन्दनीयं च चरित्रं निदधौ । न तं वीरनरकेशरिणम् अयोन्दुको वद्धु मशकत् न चापद एव तमभिभवितुं प्रबभूवुः । अशनिस्तं दग्धुं निपपात परं सः स्वयमेव दग्धोऽभवत् । सः क्षत्रियाणां शिरांस्युन्नमयन् यशस्तेषामवीवृधदत एव राजस्थानस्यैकैक कणस्तदीयां शूरतासमुल्लसितां राजन्यता मद्याप्युपवीणयञ्च्छ्रूयते । हल्दीघाटी-स्थितं रज स्तदंध्रि-स्पर्शेण पवित्रता मासादयत्, मेवाड़ क्षितिस्तं परमदेशभक्तमवाप्य तीर्थतामगमत् । अरावली गिरे रुपत्यकायामधित्यकायाञ्च साम्प्रत मपि तदीय आत्मोपविष्ट इवेतस्ततो भ्रमन्निव च जनैरनुभूयते । अहो, धन्या तच्चारित्र्यस्योदग्रता या मानसिंहस्य मानं चूर्णयाम्बभूव; अकबरसम्राजोऽपि साम्राज्यं मलिनी चकार । न तस्मिन् जीवति अकवरः सुखेन शयितुं शशाक । नाकवरस्य कूटच्छद्म तत्पुरतः स्थातु मशक्नोत् । स वने वने विचरणं वर ममंस्त परं न तन्निघ्नतामङ्गीकृतवान् ।

अकबरो भारतीयां संस्कृति मुत्सादयितुं यादृशं हि आपाततोरम्य मुपाय मशिश्रियत् तादृशं न तत्प्राग्वर्तिनो यवनाधिपतयोऽवालम्बन्त । 'दीन इलाही' नामकं मतं सञ्चाल्य स तदभिमतं साधयितु मीहाञ्चक्रे । प्रभावस्तदीयश्चतुर्दिग्व्यापीशक्तिश्च धर्षणशीला समजायत । तत्पुरो भूयांसो भूपतयः समर्पितात्मानोऽभूवन् । तस्य कोषोऽतुलेन सम्पद्राशिणा ज्योतिष्मान् भूत्वा भृश मद्यु तत् । वशंवदतांनीतानां धराधिपतीनां ततय स्तद्राजसभाया मञ्जितचुम्बितनिटिलाः सन्तिष्ठमाना अवालोक्य-

न्त । एकत उपरि वितत सुवर्णश्रृङ्खलाजालकेषु धवलमुक्तालतालङ्कृतस्तम्भेषु परिस्फुरिततारतरमणिनिचयेषु पुरन्दरचाप रागरुचिराम्बररमणीयेषु राजसौधेषु साधु चरिताः सुन्दर्यः उद्दामकामवासनाचितासु समारोप्यन्त; अन्यतः प्रथितप्रतापस्य प्रतापस्य मानसे दुश्चरित्रतादहनाय प्रचण्डानलज्वालाज्वलन्ती, तद्दोर्दण्डयोः सांगाक्षोणीपस्य शक्ति रुद्वेल्लन्ती, मानसवेद्यां दग्धानां यज्ञोपवीतानां भस्म संहति रुत्तिष्ठन्ती भ्रू रेखायां तदीयायां वक्रता च विजृम्भन्ती व्यालोवयन्त ।

एक सप्तत्यधिक पञ्चदशशततमेशवीयेऽब्दे महाराज उदयसिंह उपरेमे । तस्य सिंहासनं तदीयो ज्येष्ठः सुतो जयमल्लोऽध्यासाञ्चक्रे । परं जयमल्लस्य राजोचितगुण रहितत्वाद् विलासिताप्रियत्वात् कापुरुषत्वाच्च, न प्रजा तस्मिन्नरज्यत् । अतः स न सिंहासने आत्मानं प्रतिष्ठापयितु मैशिष्ट । जनतया प्रतापसिंहोऽभ्यषिच्यत ।

प्रताप सिंहस्य तृतीयो भ्रातासीच्छक्तिसिंहः । सः प्रकृत्या क्रोधी स्वाभिमानी च बभूव । यदा सः प्रतापसिंह श्चाल्पवयसा वास्ता मेकदा तत्पितुः सकाशे कश्चिदयस्कारो मनोहरं निशितधारं करवालं निर्माय तं तत्पुरतः सादरं न्यदधात् । उदयसिंहो राजा सभासीनः 'कीदृगयं नु चन्द्रहास इति सभ्यानन्वयुङ्क्त । सर्वेऽपि ते खड्गं प्रशशंसुः । शक्तिसिंहोऽसिं शयेनोद्यम्य स्वाङ्गुलीं कृन्तन् शशंस 'कौक्षेयकस्य उत्तमत्वं तस्य तरलामायां न, अपितु तस्य तीक्ष्णतायां विद्यते । कीदृगयं रिष्टि रित्यस्योत्तरं सम्परायेऽरातीनां शिरांस्युच्छेद्य प्रदास्याभः । कुमारस्य तद् वीरोचितं लोमहर्षणं वचो निशम्य सर्वेऽपि सभासदो हृष्टतनूरुहाः समजायन्त ।

गच्छतानेहसा तरुणता शक्तिसिंह प्रतापसिंहा वालिलिङ्ग । तावेकदा पुरोधसा सह मृगव्याय यातावास्ताम् । सिंहो विपिने तयो र्लोचनपथ मारुरोह । द्वावेव युगपत् तं प्रहृत्य व्यापादयामासतुः । व्यापन्ने सति पञ्चानने प्रतापसिंहो 'मयायं मृगराजोऽघानीति व्याजहार । 'मयायं हत' इति शक्ति सिंहोऽपि निजगाद । उभयोरपि कलह स्तत्र ववृधे । करवालौ सझणत्कारं विद्युदिव विद्योतितु मारभेताम् । द्वावप्यलीढगत्या संतस्थाते । निस्त्रिंशौ च तदीयौ प्रहाराय देवितु मुपक्रमेताम् । द्वयो रपि मध्येऽन्योन्यप्राणापहारिणि विग्रहे सति प्रवृत्ते, 'मास्म योधिषाथाम्; स्वस्वनिस्त्रिंशं त्सरुगतं विधत्तं निधत्तं च युवामसिं मेखलाया मित्युच्चैरभिदधत् पुरोधास्तौ तस्माद् गर्हणीयात्कार्यान्निवारयितुं प्रायतिष्ट परं न तौ संरम्भाविष्टौ तदीयं वच आदृतवन्तौ ।

मम वचन मरण्ये रुदितमभूदिति विचिन्त्य पुरोहितः कटिप्रदेशात् कृपाणमाचकर्ष प्रोवाच च 'विरमतमेतस्मात्कुकर्मणः क्षत्रियाणामसयः शत्रुशोणितं पिवन्ति न च बन्धुशोणितं. चेद् युवां नास्माद् दुष्कार्याद् विरमथस्तदाहमुरस्यात्मानं कृपाणेन छित्वा हास्यामि प्राणान् । परं तद् व्याहरणमपि, व्यर्थतामियाय । ब्राह्मणोऽप्यसौ

द्वयोरपि तयोः सोदरयोः रक्षायै स्वकीयं वक्षो मण्डलाग्रेण चिच्छेद । पुरोधसस्तादृश-मवसानं वीक्ष्य द्वावपि भ्रातरौ स्वं स्वं रिष्टिं प्रहारान् न्यवर्तयताम् । परं शक्तिसिंह-स्य मन्यु र्नाशाम्यत् । सः प्रतापे द्वेष मवध्नात् । अतस्तां स विहाय अकवरस्य राज-सभा मशिश्रियत् ।

अकवरस्तु चिरादेव प्रतापं निषूदयितु मेकैकं क्षुद्र क्षुद्रतरमपिसाधन मवसरञ्च शयात् स्रंसयितुं न कदापि समभिलषते स्म । सः शक्तिसिंहस्यागमन मतः प्रीतेन मनसा सभाजयाम्बभूव ।

अकबरः प्रतापं निग्रहीतु मुपायान् वहूंश्चक्रे परं न तेषु स सफलता मुपेयिवान् । सः प्रतापं वशीकर्तुं तत्सविधे मानसिंहं प्राहिणोत्; परं प्रतापस्तद्-दर्शन मपि मत्वैनसत्वेन न तस्य पुरतोऽपि गमनं युक्तं मेने । तत्कृतेन तेनापमानेन क्रुद्धो भूत्वा मानसिंहो दिल्लीं निववृते । ततोऽकवरो मानसिंहस्याधिनायकत्वे विशाल मनीकं सम्प्रेष्य प्रतापस्य प्रदेश मस्तिघ्नोत् । प्रताप इह प्रतीक्षमाणः सम-तिष्ठत एव ।

सलीम-मानसिंहकुशलनायका सा प्रलयङ्करी सम्राजोऽकवरस्य महाविशङ्कटचमूः कुम्भमेर माचक्राम । वीरकेशरी अरिन्दमः प्रतापोऽपि विंशति सहस्र सैनिकानादाय 'हल्दी घाटी' त्येतदारव्ये पावनक्षेत्रेऽकवरस्य तां महतीं वरूथिनीं निरोद्धुं सोत्साह मनात्सीत् । यवनैः सह योद्धुं वीरमातृ भूभक्ता राजकुमारा धृतमृत्युचीर शिरस्का भूत्वायोधनाजिरेऽवतेरुः । सुविदितं चेतकं नाम तुरङ्गरत्न मधिरुह्य कुन्तेन भुजदण्ड मलङ्कृत्य, करवालेन कटिं विभूष्य, वर्ष्मवर्मणा सम्परिष्कृत्य हिन्दूपति-महाराणा प्रतापोऽरातीनां शिरांसि च्छेत्तुं समरस्थलं डुढौके । प्रभञ्जन प्रचण्डो दाववह्नि रिवासौ पुर उपससार । मन्ये, श्मशानीयाः क्षुधित ज्वालाः भीमारीणाॅं दग्धुमरण्यानीं तत्र पुस्फुटुः । को हि वक्तुमेतत् प्रभवेद् यत् स वीरधुरीणः प्रताप आसीद् वा महाकालः ! एकोऽपि सः स्वरणचातुर्येण अपरिमेयाजेयप्रखरपौरुषसत्वेन अप-रिभाव्येन गतिवेगेन चानेकतां गत इव प्रत्यभासत । सः सहस्रेभ्योऽपि शूरवरेभ्यो भयानकतमो बभूव । जन्ये क ईदृगासीद्यो न तस्यानभिभवनीयं शौर्यं प्राशंसत् । तदीयश्चन्द्रहासः शत्रुसैनिक शिरोभिः संयुगमेदिनीं तस्तार । तद्भीषण प्रहारा-च्छत्रुसेनायोधनक्षेत्रात् पलायितु मारेभे । क्षणेनैवास्कन्दन क्षौणी प्रवहदस्टङ्-नदा बभूव ।

प्रतापस्य सा लघीयस्यपि चमूः उद्दामोत्कटसम्परायकौशलोदभावनकारित्वाद् गरीयसी प्रातीयत अकबरस्य सा महानीकिन्यपि तस्याः अग्रे स्थातुं न शशाक तावत्

स्वसाहाय्याय नान्यदपि बलं विशिष्टं यावत् समाससाद। प्रतापस्य सेनाया एकैकः सैनिको वा राजसूनु र्वा क्षत्रियो न तदानीमपि तस्या विस्तीर्णाम्बुधिसन्निकाशायाः सेनाया अभैषीत्। सततं ते युध्यमाना स्तावददृश्यन्त यावत् तेषा मसव एव न तांस्तत्यजुः। सर्वेऽपि वीरगतिं लेभिरे। रक्तदिग्धः क्षतविग्रहः प्रतापोऽसहायोऽपि रिपुदलने व्यापृत एव प्राप्यत। शत्रुसैन्यरुद्धं तमवलोक्य झाला सामन्तो झटिति तस्य मुकुटं तच्छिरसोऽपनीय सः स्वमूर्धानि मावृत्य 'महाराजं सुरक्षितं नय' इत्येतेन भावेन चेतकसप्ति सत्तममपश्यत्। चेतकोऽपि वात्याया गरुत्मतो मनसश्च रंहो विगीय प्रतापं निगूढ मास्पद मनैषीत्।

प्रतापे रुष्टो भ्राता शक्तिसिंहोऽप्यकवर-पक्षे भूत्वा तदानीं तत्रावर्तत। आहतं स्व बन्धुं प्रतापमनुधावन्तौ द्वौ भटोद्भटौ यवनाधमौ प्रेक्ष्य तस्मिन् पुनः भ्रातृ प्रेम सञ्चचार। स उभावपि तावनुससार। क्षणेनैव तौ म्लेच्छौयुवानौ सः कीनाश-निकेतनातिथी चकार। द्वावपि बन्धू सोरः पीडमन्योन्यं पर्यष्वजेताम्।

महाराजः प्रतापो न सफलमनोरथः सञ्जातः। परं स वीरभारतस्य गरि-माण मवश्यमेव गोपायाञ्चकार। यदा कश्चिद् देशो भवति विस्मृतनैजधर्मस्तदा प्रतापनीकाशा वीरगणाग्रण्योऽपि भवन्ति हि कष्टविविधताग्रस्ताः।

"यावच्चित्तौरभुवं दास्यान्न मोचयिष्यामि, न तावच्छान्ति पूर्वकं स्थास्यामि न राजप्रासाद मधिवत्स्यामि, न सुखानि भोक्ष्यामि, न पर्यङ्के स्वप्स्यामि. न चोत्सव मेव कमपि सम्भावयिष्यामि" इत्येतदादि सुदृढ सङ्कल्प पुरस्सरं सः प्रत्याशुश्राव। सः स्वपरिवारसहितो नानाविधान्यसहनीयानि महान्ति कष्टानि सहमानो वने वने विचरन् हृतं मेवाड़ वैभवं पुनः अधिगन्तुं चिन्ताचिन्तितमानसो भूत्वा दिनानि गमयन् लोकलोचनगोचरो बभूव।

महाराज प्रतापस्य सविधे सेनायाः सम्पदश्चाभाव मनुभूय तत्पुरवासी श्रेष्ठी भामाशाह स्तं मार्गयन् तस्य सकाशे आगम्य तं न्यवेदयदेवम्—"राजन्, मम सकाशे धनमेतावद् विद्यते येन भवान् वर्षद्वयं विंशतिसहस्रसैनिकानां भारमनायासेन वोढुं प्रभवति। इदं धनं भावत्कमेव। मम समीपे न्यासत्वेन स्थितमस्त्यतः परिगृह्य भवान् भूयः पृतना मेकत्रीकृत्य संयोज्य च, पराजयं विजये परावर्तयतु"।

भामाशाहस्य तं देशानुरागं प्रगाढं, त्यागं च स्पृहणीयं प्रेक्ष्य प्रतापः संरुद्ध कण्ठो वाष्पार्द्र नयनो हृष्टरोमा सञ्जातः। सः कृतज्ञतापूर्वकं तदतुलं पावनं धनमासाद्य तेन पुनः संगठितां सेनां चकार; अपहृतानि चानेकस्थानानि हस्तसात् कृतवान्।

राजा प्रतापसिंहो भारतस्य गौरवमार्यजातेश्च यशो येन कर्मणा प्रवर्धेत तदेव जीवनस्यान्त्यं श्वासं यावद् विदधौ। 'नाहं प्रतापं वशीकर्तुं मैशिषीत्येषा हि असफलता-शूकशिखेव सतत मकवरस्य मनो नितरा मव्यथयत्। महाराज प्रतापे सति स्वातन्त्र्यभोजभाजि को नाम मन्दः 'अकबर स्तदानीं सर्वमपि भारत मीशाञ्चक्रे' इति वक्तुं शक्नुयात्।

अयि स्वतन्त्रतायाः परमभक्त, भारतीयतायाः संरक्षक प्रताप, यावद् भारत-सन्तति र्जीवेत् तावत् श्रद्धाञ्जलिं सा तव समाधौ भक्तिभावपुरस्सरं समर्पयेत्।

प्रतापभूपो निजमातृभूमे
महान् प्रताप्युत्कटभव्यभक्तो
जुगोप हिन्दुत्व मनोज्ञ लक्ष्मीं
सः सर्वथा शत्रु वनाग्निभीमः॥



# छत्रपतिः शिवः

यदा करेणैकेन कुरानं धरन्नपरेण च नग्नमसिं धारयन् औरङ्गजेवो हिन्दु-विनाशनपर आसीत्; यदा गवां ब्राह्मणानां च रक्षा विपन्नतां गमिता बभूव; यदा रामनामोच्चारण मपि प्रतिषिद्ध मभूत्; यदा भारतस्य काशी-प्रयाग-मथुरादितीर्थेषु, गङ्गायमुनादिसरित्तटीषु, हिमालयादिगिरिषु, दिल्ल्यागरादिनगरेषु च यवनपताकोद्धू-यमानावालोक्यत; यदा मन्दिराणिमस्जिदेषु परिवर्त्यमानान्यदृश्यन्त; यदा बलाद् हिन्दवो हि इस्लाममतं ग्रहीतुं निगृह्यमाणा अवालोक्यन्त तदा जीजाबाई भगवच्छिवं 'भगवन्, भारतं पाहि, धर्मंरक्ष, भारतीयांश्च विपद्भ्य उद्धर" इत्येतत् प्रार्थयन्ती अश्रूयत। तस्या आर्त्त माह्वानं श्रुत्वा आशुतोषः शिवः 'मास्म रोदीः, मातः अहमेव तव सुतो भूत्वा भारतं रक्षितुं, साधून् परित्रातुं दुष्कृतश्च विनाशयितु मवतरिष्यामि-शीघ्रमेवे'ति स्वप्ने तामवोचत ।

ततश्च सतीत्वं पातु मत्याचारकूपपतितान् भारतीयांस्त्रातुं, धर्मञ्च प्रतिष्ठा-पयितुं शिव एव शिवो (शिवाजी) भूत्वा मातु र्जीजाया उत्सङ्गमलञ्चकार ।

जातस्य शिवस्य वर्षाणां चतुश्शतीव्यतीता । सा वैशाखे शुक्ल पक्षे पञ्चम्यां तिथौ महाराष्ट्र प्रदेशे पुण्यपत्तनमण्डलान्तर्गतशिववीरदुर्गे जनुर्जग्राह । तदीयः पिता शाहजि बीजापुर नरेशस्य राजसभायामधिकारपदासीन आसीत् । तन्माता देवगिरि सामन्त यदुराजस्य दुहितासीत् । सा जन्मन एव धर्मप्रिया बाला बभूव । तस्या रोमणि रोमणि क्षात्रधर्मो हुंकुर्वन् व्यराजत । भारतीयतां प्रपीडितां विलोक्य तदीये नयनेऽनिशमश्रुधारां वर्षत्येव व्यालोक्येताम् । सा स्वकीयं सुतं शिवं सम्यगशिषत् । देशभक्ति परकाणि चरित्राणि सा तस्य पुरतः पुनः षुनः अकीर्तयत् । धार्मिकाणि गीता-न्यगायत्; रामायणमहाभारतादिकथाश्चाशिश्रवद् येन तस्मिन् देश-प्रेमभावना, धर्म-पालननिष्ठा, वीरतानुरक्तिश्च जागृयुः । सा तं, धर्मवीरो देशभक्तः साधु संरक्षको भवितुं भूयोभूयः अनूनुदत् । सा तथा प्रायतत यथा तस्य स्वान्तं हिन्दूद्धारभावनाभावितं भवेत् । अहो, यस्य मातास्ति गोषु द्विजेषु देवेषु भक्तिमती धर्मपरायणा देशप्रेमपावन-मानसा तस्यास्तनूजः कस्मान्न स्याद् गो-ब्राह्मण-देवार्चकः; कस्माच्च न स्याद् देश-धर्मोद्धरणेरतः ? मातैव माणबकस्याद्यो गुरुः । मातुः शिक्षाया एव प्रभावः प्रथमं शिशौ निपतति । स एव (प्रभावः) जीवनपर्यन्तं तस्मिन् परिस्फुरन्नवलक्ष्यते । मातृ-

शिक्षा बालं शिवं संचस्कार। स बभूव वीरः साधुचरित्रः स्वदेशधर्माचारविचारपरित्राता। मातेव गुरुरपि तेन सुयोग्यः समुपलब्धः। तस्य गुरुः कोणदेवस्तस्मिन् विद्यायाः ज्योतिषा सह देश-प्रेमधर्मनिष्ठा-सत्यानुगरान्यायपरत्वादिसद्‌गुणानां राशिमपि समची चरत्। सः शिवस्य शयं न लेखन्यैवालमकरोदसिनापि विभूषयाञ्चकार।

गच्छतानेहसा शिवो वयस्को बभूव। वापुष्कं मानसिक माध्यात्मिकञ्च बलमधिगम्य सः सुतरां दिदीपे। तस्मिंस्तद्वयः समाना युवानः प्रीतिं महतीं निववन्धुः। ते तस्य साहचर्य्यं स्वसुकृत ममंसत। सोऽपि तेष्वप्रीयत। स तेषु एकतायाः संगठनस्य महान्त मुदात्तं भावमधुक्षत्। समवयस्कांस्तांस्तरुणानेकीकृत्य शस्त्रेषु प्रशिक्षितांश्च विधाय सैनिकानिव योद्धृभटानिव चकार। तेषां साहाय्य मासाद्य स तानि कार्याणि कर्तुमारेभे यै भारतीयताविरोधिषु यवनेषु भीतिमुत्पद्येत भारतीयेषु च स्वकीयं धर्मञ्च प्रति शक्ति रुत्साहश्च जागृयाताम्। शनैः शनैः तदीयानि देशधर्म संस्कृति समुत्थापन विषयकाणि कार्याणि तं लोकप्रियञ्चक्रुः। अधिरूढप्रतापः स आसन्नान्यनेकानि दुर्गाणि स्वनिघ्नतायामानीतवान्; तेषु च स ईशाञ्चक्रे।

शिवः स्वदेशीयेषु जनेषु तद्धर्मभावनां कर्त्तव्यपरतां देशभक्तिञ्च प्रति प्रकृष्टतममध्यवसायं सञ्चारयंस्तान् सत्पथं गन्तुं नुदन् सम्यक्, पुनः पुनः इत्थं तानब्रवीत्—'यवनेभ्यो नैजं धर्मं रक्षन्तु भवन्तः; गावो भूत्वार्ताः आह्वयन्ति भवतः; भवदीयानि देवायतनानि साम्प्रतं निपात्यन्ते; तानि म्लेच्छेभ्यो रक्षितुं भवन्तः शक्तिशालिनो भूत्वा, भूत्वा चासिपाणय उत्तिष्ठन्तु; पापान् दुराचाररतांश्च सर्वथैव समूल मुन्मूलयन्तु।

शिवस्य सिंहगर्जनाच्चिरप्रसुप्ता हिन्दव उद्‌बुद्धा अभूवन्। ते स्वरक्षायै गो-ब्राह्मण-वेद-शास्त्र-शिखासूत्रादीनाञ्च त्राणाय असूनपि हातु मुद्ययुजिरे सहर्षम्।

उदारचरितो बुद्धिमान् वीरः शिवो भगवतोऽनुकम्पया परमसमर्थस्य गुरु रामदासस्य कृपास्पदतामियाय। स महात्मा तं शिष्यं कृत्वा तस्मिन्नन्वकम्पत। समर्थगुरुरामदासः सिद्धसाधुरेव न, कुशलकूटनीतिकारोप्यासीत्। स भारत हितार्थमुदक मधिष्ठाय षण्मासांस्तपः कठोरं व्यदधात्। शिवस्तस्मान्महात्मनः प्रकाशमवाप्य गन्तव्यमध्वानमभ्यजानात्। तदनुक्रोशेण तस्मिन् स्पृहणीया वर्चस्विता, दिव्या तेजस्विता, उत्कृष्टा चोर्जस्विता सोत्कर्षं चकासाञ्चक्रिरे।

शिवस्यैधमानां शक्ति वीक्ष्य बीजापुरशास्ता चिन्तामापेदे। शिवस्य पितरं शाहजि माहूय स्वमात्मजं स विनयेत् तं तद्‌गृहीतपथं च त्यक्तु मादिशेदिति सोऽभिदधौ।

शिवस्य हृदयं न राज्यं, न पदं, न धनं, नैश्वर्यं नान्यत् किमपि सुखमचीकमत। तन्मनस्तु देशस्य गौरवं, देशस्य संस्कृतिं, देशस्याचारविचारान् सर्वथैव कृत्स्नतया गोपायितुं कामयाञ्चक्रे। तस्यैषा भव्यभावना तदीयमात्मबलमतितरां वर्धयामास। स यवनशासनाध्वानं नानाप्रत्यवायैः प्रभूतोपप्लवैः समाकीर्णं चकार। गोघातकेभ्यो गवां रक्षणं, गोमांसविक्रेतृणां व्यापादनं, यवनसम्पदाञ्च हरणं तस्य दैनिकं कार्यमभवत्। तं तात्कालिकयवनशासनाधिकारिणो महतीं शिरोवेदना ममन्यन्त।

शिवस्य श्लाघनीया देशभक्ति र्फलमिदं मधुर मजीजनद् यदल्पीयसैवानेहसा सः सकलेऽपि कोङ्कणप्रदेशे स्वमाधिपत्यं संस्थापयामास। अनुदिनं वृद्धिं प्रयान्ती शिवस्य शक्ति र्वीजापुर राज्यसत्ता मवेपयत्। वीजापुर-राज्यपालः शिवं निगृह्य तं जीवितं वा मृत मेवानेतुं स्वकीयं कुटिलताकुटिलं सेनापति मफजलखानं प्राहिणोत्। अफजलखानोऽपि च्छलच्छद्मपुरस्सरं तं जेतुं प्रतस्थे।

शिरोमणि र्धूर्तानामफजलखानः शिवस्य सविधे सूचनामिमां प्राहिणोत् यदसौ तेन सार्धं मैत्रीं कर्तुं स्वकरं प्रसारयत्यतः सन्धिसम्बन्धिनीं वार्तां विधातुमेकाकी एव स मयि मिलेत्। आसीच्छिवोनीतिचुञ्चुः। सः सर्वमपि साधु विमृश्य उच्चावचं च पर्यालोच्य अयौवर्म सन्धार्य, वीर वासः परिधाय, आयस्कं शिरस्त्राणमुष्णीषेणावृत्य, करौ व्याघ्रनखपरिवेष्टितौ विधाय, निशितञ्च वृश्चिकाकारं कृपाणं कटिभागे निगूह्य, रणचण्डीञ्च प्रणम्य, प्रस्थातुं सन्नद्धोऽभवत्। कांश्चन उद्भटान् भटान् वीरधौरेयान् सैनिकान् सः अफजलखानस्य शिविरं निकषा गूढभावेन स्थातु मादिदेश। 'हर हर महादेव' इत्येतं ममाननान्निसृतं नादं निशम्यैव तत्क्षण एव प्रकटीभूय ते सकल मपि अफजालखानसमीहितं तदुपक्रमञ्च सर्वथैव क्षुंधीरन्निति तान् जगाद।

शिवस्य शूरर्षभाः सैनिकाः आखव इव गुल्मेषु स्वं स्वमौर्णाविषुः। शिवोऽपि हयमधिरुह्य प्रथमं गुरुदर्शनार्थमयासीत्, गुरोराशिषं तदीयञ्च चरणरजः शिरसि निधाय अफजलखान मुपड्ढौके।

शिवमफजालखानोऽसावुत्सुको भूत्वा प्रतीक्षमाणः समतिष्ठत। आयान्तं त मवलोक्य 'एहि, एहि स्वागतं ते' इत्येतद् ब्रुवाणो भुजाभ्यामुभाभ्या मुरसि मोटयितु मुपससार। शिवोऽपि तस्य कपटाचारं विवेद। सोऽप्यतः सावधानो भूत्वा तमालिङ्गितु मुपचक्रमे।

अफजलखानस्तं धर्तुं वा व्यापादयितुं यदैवोद्युयुजे शिवो व्याघ्रनखेन तस्योरःस्थलमभैत्सीत् कृपाणेन च तदीयमुदरं विदार्य तत्क्षण एव तमतृणेट्। व्यापादिता-फजलखानस्य शिववीरस्य 'हर हर महादेव' इत्येतं जयनादमाकर्ण्य प्रच्छन्नाश्च ते

सर्वे सैनिकभटाः प्रकटीभूय सर्वमपि दलयामासुः। अरातेः समग्रानपि सैनिकान् संहार्य सर्वानिप्युल्लोचान् प्रज्वाल्य ते शिवस्य वीरा स्तरुणाः शिवेन साक मन्तर्दधुः।

शिवकृतै रुत्पातै रुपप्लवैश्च यवनशक्तिमच्छासनं चकम्पे। वीजापुराधिपति सन्धातुं शिवं समुद्यतो बभूव। सः शिवाय पञ्चत्रिंशल्लक्षरूप्यकाणि प्रत्यब्दं राजस्वत्वेन प्रदातु मङ्गीचकार। अयमासीत्प्रथम एवावसरो यदा यवनशास्ता भारतीयनरेशाय करं प्रददौ। औरङ्गजेवः शिवस्य शक्ति निरन्तरं वृद्धि गच्छन्तीं विलोक्य भृशमबिभेत्; सोऽतितरा मुद्विविजे। सः शायस्ताखानं सैनिकानां पदातीनां लक्षेण, कुञ्जराणां पञ्चशत्या, क्रमेलकानां सहस्रचतुष्टयेन, शतघ्नीनांच पञ्चकेन युक्तं सज्जितं च कृत्वा, दत्वा च तस्य द्वात्रिंशत्सहस्ररूप्यकाणि शिवनिग्रहणाय प्रजिघाय। शायस्ताखानो जयन् दुर्गाणि पुण्यपत्तनमाजगाम। आगम्य च तत्र सः सुरां निपीय संगीतनृत्यादिसुखेष्वासजत्। शिवस्तस्य सैनिकाश्च वरयात्रिणो भूत्वा नगरराजपथे ससज्जा निर्ययुः। आगम्य च शायस्ताखानस्य स्थानं तस्यानीकं भित्वा छित्वा च ते सर्वे पलायाञ्चक्रिरे। शायस्ताखानः केनापि प्रकारेणात्मानं गोपायितुं प्रबभूव। स ततो भीतो भूत्वातितरां देहलीं निववृते।

औरङ्गजेवो जयसिंहं सहकृत्य शिवं सन्धिच्छलेन दिल्ली माजुहाव वन्दिनं च तं विदधौ। शिवोऽपि विषं विषेणैव निवारयामास। स मिष्टान्नमञ्जूषाया आभ्यन्तरे भागे उपविष्टोभूत्वा निश्चक्राम। निर्मुक्तोभूत्वा स विजयानां तति माततान। लुप्तं नष्टं च पुनः परिजग्राह। गुरोः समर्थरामदासस्यानुज्ञया याज्ञिकेन विधिना सिंहासनमध्यासाञ्चक्रे। राज्यस्य स भृशं विस्तारं विकासं च चक्रे। पौरा न्यूनकरभारा व्यधीयन्त। गावो विप्राश्च सुखेन जीवनं निन्युः। शिक्षायाः प्रसारो जातः। भारतीयधर्मो गरिमाणं प्रपेदे। शिवोयदप्यैश्वर्यमभुनक् तत्र गुरोः समर्थरामदासकृपा मेव हृदयेन मेने।

महाराजस्य शिवस्य चरित्रमासीच्चारुतरम्। आसीत् तत् सर्वथानुकरणीयम्। सोऽसत्पथगामिषु कठोरोऽरिरासीत्। परं सत्पथगामिष्वासीद् दयालुः सुहृत्। तदीयस्य जीवनस्यैकैकः श्वासो भारतीयताया वर्धनाय धर्मस्य च रक्षणाय सदा संलग्नोऽदृश्यत। सः शठम्प्रति शाठ्यमाचरेदित्येतां नीतिमशिश्रियत्। स नैजममरं यशो वितत्य त्रिपञ्चाशद्वर्षवयसि शिवे व्यलीयत।

बभूव नीत्यां कुशलः शिवाजिः
शूरो महान् वैरिविनाशकारी
नयेन शौर्येण च सः परास्त
मौरङ्गजेवं तरसा चकार॥

महाराजः शिवो भारतवसुन्धराया महिम्नस्त्राता बभूव । सः शक्तौ कार्तिकेय इव, दयायां युधिष्ठिर इव, परोपकारे जीमूतवाहन इव, दाने कर्णइव, शौर्य्ये भीष्म इव भवन् भुवि व्यराजत । चकोराश्चन्द्रं, मयूरा मेघं, कोकिला वसन्तं, हंसाः शरदागमं, चक्रवाकाश्च सप्तर्षिं वीक्ष्य यथा मोदन्ते तथैव सज्जना धर्मात्मानो भारतीय संस्कृतिजीविनो मानवास्तमवलोक्य परामेव प्रीतिं प्राप्नुवन्ति स्म । नभसि नभोमणि रिव स महीभुवने बिदिद्युते । अधिकाननरोचिष्णुः स गिरिरिव, उच्चैः श्रवस्थितिं विभ्रद् इन्द्र इव, सदाधरमनोरमो मेदिनीव, कूर्चकस्थितिपेशलश्चित्रमिव, सुग्रीवोदित-वैभवो राम इव, अधिकण्ठमनोरमो मन्त्रइव वीराग्रणीः शिवो विपक्षान् अर्यमा ध्वान्त मिव प्रचिक्षेप, कुमुदाना मिन्दुरिव सः सुहृदां हि मुदं मनसि भृशं व्यातनोत् । कुलीनोऽप्यकुलीनः समदृष्टिरपि महेश्वरो मुक्तामयोऽप्यतरलोऽभीक्ष्णं दीनदरिद्र सहायको भवन् महिलासु मातृधियं निदधत् गुरुजनेषु भक्ति बिभृत्, सद्गुणेषु रुचि मादधत्, असत्कर्मसु द्वेषमाकलयन् भारतस्य भारतीयतायाश्च शत्रून् प्रसभमुत्सादयन् स्वकीयजीवन मतिवाहयामास ।

धन्यो हि स कालो यस्मिन् स तं विभूषयामास ।



# वीरांगना राज्ञी लक्ष्मीः

कामं प्रियानपि प्राणान् विमुञ्चन्ति मनस्विनः ।
वाञ्छन्ति पारतन्त्र्यं न, ते परं विपदास्पदम् ॥

आसीत् स्वतन्त्र्यसम्परायस्य सा भीषणस्फुलिङ्गः । सासीदनलशिखा । तदीयेनालौकिकेनालोकेन भारतीयस्वतन्त्रतेतिहासस्य प्रतिपृष्ठमालौकितं वर्तते । सा मरणं वर ममंस्त परं नांग्लनिघ्नतां स्वीचकार । नूनं सा देव्या दुर्गाया अवतार आसीत् । यदा सा प्रैक्षिष्ट, विद्युतोऽन्तर्दधुः; यदा सा जगर्ज आग्नेयायुधानामपि महाघोर आरावो मन्दतां प्रपेदे; यदा सा चचाल तदा प्रचण्डः प्रकम्पनोऽपि चकम्पे; यदा सा जगावूषरोऽप्युर्वरायते स्म । तत् संस्पर्शं प्राप्य लोष्ठं चामीकरं बभूव । वस्तुतस्तु शक्तिरेव तद्रूपमाधाय भरतवसुन्धरां विभूषयाम्बभूव । आसीत् सा वीराङ्गना राज्ञी लक्ष्मीः ।

इतिहासविश्रुता महाराज्ञी लक्ष्मी खैस्ते भूतगुणवसुचन्द्रवत्सरे काश्यां जनुरग्रहीत् । तदीयं जन्म तत्पितुर्मोरोपन्थस्य मातुश्च भागीरथ्याः स्वान्ते परामेव प्रीतिं वितताने । सा मातुः पितुश्च वत्सलतार्द्रमुत्सङ्गमध्यासीना स्वं शैशवं महत्यैव मुदा-निनाय ।

अर्थाभावजनितार्तिवशात् काशीं हित्वामोरोपन्थो बिठूरस्थस्म नैजकुटुम्बिनो बाजीरावस्य सन्निधौ समुपेत्य प्रत्युवास । वीरवाला लक्ष्मीः शैशवादेव अभीरुहृदया शौर्यानुरागासीत् । एकदैषा वीरतनया लक्ष्मीः वाजीरावस्य सुताभ्यां नानारावाभ्यां समं समयं विधाय वाजिनमध्यारूढासीत् । सरयं प्रधावत्सु अर्वत्स्वेकतमोऽर्वाव्यबाधीयत, तस्मान् नानाभिधानः पृथुको न्यपप्तत् । हयस्य द्वितीयः पादन्यासोऽर्भकस्योरसि निपतनोन्मुख एवासीत् परमेतदन्तराल एव सवेगं नितान्तस्फूर्तिपूर्वकं लक्ष्मीस्तु-रङ्गात्कूर्दमाना शयेनैकेनाश्वं पादेऽधरत् द्वितीयेन च करेण वालमाकर्षन्ती 'मास्म गमो-विह्वलत्वं; नाहतत्वं गतोऽसि; स्वल्पतमशोणितस्यैवनिर्गमोजातः; श्व एव स्वस्थतां लब्धासे' इति तं बभाण । यदेत्थं सा तमाश्वसन्ती सन्तस्थे तदैव द्राग् रावोनाम कुमार आजगाम । आकुलोभवन् 'हा अतितरामेवाहततां प्रपन्नोऽस्त्ययं कुमारः; एतदीयं तु शिरोविदीर्णमिति स आचख्यौ । परं लक्ष्मीरूपेक्षाभावेन प्रेक्षमाणातत्कथनं प्रत्यवादीत् अपौंस्न, स्तोकमपिक्षतम्प्रत्येतावदाकुलत्वं; धिक् ।

गच्छता कालेनेयमेव बीरबाला झांसीश्वरस्य गङ्गाधररावस्यार्धाङ्गिनी बभूव; उद्वाहसमये लक्ष्मीश्चतुर्दशवर्षदेशीयासीत् परं गङ्गाधरराव: पञ्चाशदब्दकल्प: । सत्यन्त्विदं, लक्ष्म्याः परिणयो गङ्गाधररावेण सहैव न, झांस्याः सिंहासनेन सार्धंमपि समजनि । यदा लक्ष्म्या दुकूलं गङ्गाधररावस्य प्रावारकेण सह संश्लिष्टं विधातुं स्थविरः पुरोधाः प्रचक्रमे तदा तदीयः करः प्रावेपत । ग्रन्थिबन्धने जातं विलम्बं वीक्ष्य लक्ष्मीः कर्मण्येतस्मिन् वृद्धब्राह्मणस्य नियोजनं न युक्त मतोऽहमेव कथन्न ग्रन्थिं निवध्नीयामिति विममर्श; परं तस्मिन्नेवान्तराले पुरोहितः श्लथतान्वितां ग्रन्थि मसिनात् । तां श्लथांग्रन्थि पर्यवलोक्य चञ्चला लक्ष्मीः सस्मित मशंसत् 'पुरोधः, ग्रन्थिं सम्यग् दृढीयस्कतया वधान येन न कदापि भिद्येत ।

शक्तिर्लक्ष्म्याः स्वरूपं निधाय गङ्गाधररावस्य भार्याभूत्वा झाँसीमाजगाम । झाँसीमागम्य महाराज्ञी लक्ष्मीः दाम्पत्यजीवने तथा न मनोन्ययूयुजद् यथा साहित्ये, सङ्गीते, धनुर्विद्यायाञ्च प्रावीवृतत् । तदीयस्य श्वासस्य एकैकः क्रमो झाँस्याः गौरवं वर्धयितुमनुक्षणं व्यापृतोऽदृश्यत । सातत्येन क्रियमाणः प्रयासो गुरोरनुक्रोशश्च तां सर्वाङ्गीणतया विदग्धतां मनैषिष्टाम् । तस्या वीराङ्गनायाश्चेतसि चन्द्रहास धाराया-स्तरलं ज्योतिः सङ्गीतादिकलानामपि दीप्रा प्रभा युगपच्चकासाञ्चक्रतुः । तदा दासतायाः काल आसीत् । आङ्ग्लानां कठोरैरन्दुकैर्भारतमातासीन्निपीड्यमाना । प्रायेण सर्वत्र भारते आङ्ग्लशासनं प्रतिष्ठापितमासीत् । झाँस्यामपि सितविग्रहाणां प्रतिनिधिर्वसतिं कर्तुमारेभे । आंग्ला झाँस्यामपि स्वाधिकारं स्थापयितुकामा आसन् । कृतं हि सन्धिं ते भङ्क्तुमनारतमुद्युयुजिरे । गङ्गाधररावस्य राजभवने समायोजिताता मुत्सवानां सम्भावनमयि ते जहुः । परोक्षतया ते राजानमवज्ञातु मारभन्त ।

झाँस्या राज्ञी लक्ष्मी राङ्ग्लेषु साधुतयाभिज्ञा बभूव । अतः शनैः शनैः सा चम्वाः संगठने राज्यस्य च दृढीकरणे समलगत् । सा महिलानां सेना मेका मजीघटत् । वीराङ्गनानां सा वरूथिनीतिहासे नैजं सौबर्णं महत्त्वं निदधाति ।

भारतमातुरुरसि डलहौजी शोणितपायिनीं भुशुण्डीं निदधानौ भुजङ्ग इव फुङ्का-रानुद्वमन् स्थित आसीत् । तदीया जिघत्सु दृष्टि झाँस्यां लग्नासीत् । तत्रत्यगौरव मयदुर्गजिधृक्षया सोऽतितरां प्रावल्येन नैजे मानसे गम्भीर मौत्कण्ठ्यं निधाय स्वकीयं करयुगलं, भारत पूर्णतया पारतन्त्र्यशृङ्खलया निवद्धुं, प्रसारयंस्तदावालोक्यत । इतोदिष्टमपि भारते विपर्यस्तं भूत्वा स्वां मन्युमयीं भ्रुवमातन्वानं समतिष्ठत । न विद्मोऽघानि कान्यवर्तन्त येषां कुफलात् तान्यहानि भारतम्प्रति विमुखीभूयैवोप-स्थितान्यभूवन् । झाँसी सर्वविधवैभवलसितापि युवराजाननदर्शनसौभाग्यविहीनासीत् ।

तस्माद् गङ्गाधरराव: स्वकुटुम्बिभूतस्य वासुदेवरावस्य सूनुमानन्ददेवरावं दत्तकसुतत्वेन परिजग्राह, चकार च तन्नाम दामोदरराव इति ।

तदानीं झाँस्या माङ्ग्लानां राजनीतिकाभिकर्ता मेजरमालकम् आसीत् । दामोदररावनामधेयस्य दत्तकपुत्रत्वेनादानविधिस्तस्य पुरत एव समपद्यत । नृपति 'र्ममानन्तरं मम राज्यस्योत्तराधिकारी दामोदररावो भवितेʼ त्येतद्विषयकं लेखं स विधिनियम मधिकृत पत्रेऽङ्कयित्वा 'ममेदं लेखपत्रं पञ्जीकर्तुं कृपयोच्चाधिकारिणः सेवायां 'प्रेषणीयमितिʼ मेजरमालकमभिदधौ ।

दत्तकपुत्रत्वेन गृहीतस्य दामोदररावस्य; कतिपयेष्वेव दिवसेष्वतीतेषु, गङ्गाधर राव: संसारमिममजहात् । राजनि दिवङ्गते, झाँस्या राज्ञी लक्ष्मी दामोदरराव-स्याल्पवयस्कत्वात् तत्प्रतिनिधित्वेन राज्य शासनभार मुवाह पर माङ्ग्ला न राज्ञ्याः शास्तृत्वमसहन्त । ते ताम्प्रति, दामोदररावस्य दत्तकपुत्रत्वेन ग्रहणे नास्यस्वीकृति गृहीतास्ति किञ्च तव नारीत्वाद् झाँसीराज्यं न सफलतापूर्वकं सञ्चलितु मर्हति; तस्माद् झाँसीराज्यस्य सञ्चालन माङ्ग्ल द्वारेण भवितु मुचितं, त्वदर्थं जीवनं यापयितुं राजभवनं किञ्च सम्मानितं वेतनं प्रदत्तं स्यादितिसन्देशं प्राहिण्वन् ।

सन्देशमेतं निशम्य राज्ञी प्रहाराहता नागीव निशश्वास । सा दावानलज्वालेव प्रज्वलन्ती जगर्ज—'आंग्ला वक्तव्या न झाँसी तेभ्य: प्रदत्ता भवेदिति ।'

आंग्लेतिहासकारा: 'सा सर्वेष्वपि तेषु सर्वोत्तमा वीराङ्गनासीत्' इत्येतदादि शब्दैर्भूयोभूय: तां राज्ञीं लक्ष्मीं प्रशंसन्तः प्राप्यन्ते । नि:संशयं वीरराज्ञी लक्ष्मीः आङ्लानां जीवनं संशये क्षिपन्ती नितरामभिनन्दनीयशूरता प्रदर्शनपूर्वकं स्वझाँसीं गोपायितु माङ्लानां साम्मुख्यं कर्तुं मात्मानं युद्धाग्नावपातयत् ।

सर्वाभिभाविप्रचण्ड प्रभञ्जन इवाङ्ग्लपृतना समग्रामपि स्वां शक्तिमादाय राज्ञीलक्ष्म्या झाँसीमाचक्रमे । सा झाँसी-स्वातन्त्र्यं पातुं सर्वविधप्रहरणखचिता भूत्वा तुमुलं जन्यमररचत; सा स्वतन्त्रतायाः सम्राज्ञी लक्ष्मी राङ्ग्लासुर-शोणित-पानाय काली बभूव । तदीया महिलावरूथिनी क्षुधितासिंहीव आंग्लभटान् प्रचुरानघसन् । बहून् आंग्लान् राज्ञी स्व खड्गेन कीनाशनिकेतनं गमयामास ।

सवलाया: महत्याः आङ्ग्लसेनाया झाँस्याः रक्षणं न सम्भव मिति विमृश्य राज्ञी लक्ष्मीः प्रचण्डविद्रोहविभावसुं व्यातन्वन्त्याग्लानां कदनं कुर्वन्ती झाँसीतो-निर्ययौ । पारतन्त्र्याद् देशं रक्षितुं सा गवालियरादि राज्यानां महीपान् उद्बोध्य तान् स्वदेशंम्प्रति तत्कर्त्तव्यं पालयितु मनूनुदत् परं दुर्भाग्यस्य बलीयस्कत्वान्नतेऽच्चेतिषुः । हैदरावादस्य गवालियरस्य चाधिपाबाङ्ग्लपक्षं परिगृह्य जयं पराजये परिवर्त्तया-मासतुः ।

हा, भारतगेहोऽयं यदापि दग्धतां गतस्तदास्यैव गेहस्य स्वकीयेन दीपेन । भारतीयान् भटान् कदापिशत्रुः नपराजेतुं शशाक; ते तु तदीयानामेव स्वजनानां देशद्रोहात् पराजयं नीता अभूवन् । आंग्लैः सह युध्यमाना वीरनारी राज्ञी लक्ष्मी आहता बभूव । तदीयोऽश्व आङ्ग्लेभ्यस्तां संरक्ष्य तस्या बाल्यमित्रं, यो हि तत्सुहृत् तदा साधुर्भूत्वा वनमधिवसति स्म, निकषा निनाय । असृग्दिग्धाङ्गीं तां लक्ष्मीं प्रेक्ष्य सः, हन्त, 'कां दशां गमितासि स्वसः' इति सार्त्तनाद मुच्छ्श्वास । 'अस्ति मामकीनावस्था बरमेव, दुःखन्त्वदं यदहं झाँसीत्राणात् प्रागेव म्रिये । तत्त्राणाय-प्रयुक्ताः सर्वेऽप्युपाया मदीया दुर्दैवेन वैयर्थ्यं प्रापिताः सम्प्रति झाँसी सधूं धूं कारं दन्दह्यते । दस्युभिरिवाङ्ग्लै मंदीया झाँसी, हा, उल्लुण्ठ्यते, घातुकानां तेषां नृशंसाभि र्भुशुण्डीभि र्भारतीया हन्यन्ते । द्रागेव ते मां मार्गयन्त इमां कुटीमपि शरव्यी-करिष्यन्त्यतोऽहं त्वां बन्धुवरं याचे यन् मम शवोनाङ्ग्लैः स्याद् दूषित इति ( एता-वदभिधाय सा प्रज्वलिता शिखा निर्वापिता बभूव ) आङ्ग्लाश्वानां खुरशब्दा अपि श्रवणगता भवितुमारभन्त । अगतिको निरुपायश्च सः साधुरपि वेदिकातः प्रज्वलन्तीं समिधमुत्थाप्य स्वोटजं तत्क्षण एव ददाह । आंग्लास्तत्रागम्य राज्ञ्याः निष्प्राणं कलेवरमपिनावाप्तु मश कन् । केवलं तदीयं भस्म द्रष्टुं शेकुः ।

राज्ञी लक्ष्मीः सम्प्रति कथायामेव यशस्विन्या मवशिष्यते; परं यं हि स्वा-तन्त्र्याशुशुक्षणिं सा प्राज्वालयत् तस्मिंस्तात्याटोपे-भगतसिंह चन्द्रशेखरादिकाः सहस्रशो-वीरकेसरिणः स्वानसून् सहर्षं मजुहवुः । तत्प्रज्वालितस्वातन्त्र्यतनूनपाति देशभक्ता अजस्रं स्वप्राणाहुतिं भक्तिभावेन तावत् प्रायच्छन् यावद् भारतमातुः पारतन्त्र्य-शृङ्खलोच्छिन्ना नाजायत ।

राज्ञी लक्ष्मीः शौर्य्यस्याधिष्ठात्री देव्यासीत् । तस्या खङ्गस्य तिग्मता शत-हृदायतेस्म रणाजिरे क ईदृग् वीर आसीद् यस्य शिरस्तस्याश्चन्द्रहासो न चिच्छेद । सैकापि समरेऽनेकादृश्यत । सा स्वदेशार्थं युयुधे । स्वदेशार्थं साम्रियत । साधारशि-लाऽस्ति सा यत्र प्राप्तेयं स्वतन्त्रता सन्तिष्ठते । तस्या वीराङ्गनाया वीरकथा देशस्यैकैकः कणः कथयति । तदीयस्य करवालस्य विद्युदाभा क्रान्त्याः एकैकस्फुलिङ्गमध्ये स्फुरन्ती स्फूर्जति । स्वतन्त्रतायाः प्रसूनमेकैकं तच्छोणितेनशोणं वर्तते; कलानां तूलिका सार्द्धं कैकस्मिन् पर्वणि विहसन्ती केन न विलोक्यते ? वीरतेतिहासस्य सोज्ज्वलालोक-ज्वाला निर्वापिताप्यनारतं शाश्वतिकीं ज्योतिः श्रियं वर्षति । अहह,

जज्ञे क्व लक्ष्मीसदृशीह राज्ञीः
वीराङ्गना भारतभूविभूतिः
सम्मर्द्य शत्रून् बलभीषणान् या
राष्ट्रस्य कीर्तिं व्यतनोद् धरित्र्याम् ॥१

प्रीणाति सः कं न हि देश भक्तं
प्रौढं प्रकृष्टं विदधौ प्रयासं
वीराङ्गना शत्रुवनानलो यं
स्वातन्त्र्यहेतो र्भरतक्षितेः सा ॥२

क्रूरारातिश्वेतकाय प्रतान
ध्वान्तस्तोमध्वंसनादित्यराज्ञी
लक्ष्मी झांस्या वीरतायाः पयोधिः
भूत्वा दुर्गा जन्यभूम्यां विरेजे ॥३

दृप्यद्विरोधिहरिणावलि सिंहभामा
भीष्मव्रतातिशयदारुणशक्तिदीप्ता
सन्न्यायवर्तिजनचातक मेघमाला
विभ्राजते स्म भुवि य। परिणूयते सा ॥४

—××—

# शङ्कराचार्यः

गङ्गा पापं शशी तापं दैन्यं कल्पतरुस्तथा ।
पापं तापं च दैन्यं च हरति ज्ञान-शङ्करः ।।

'परोपदेशात् प्रागात्मानमभिजानीत । आत्मनि विस्मृतो जनो न कथ मप्यात्मान मुत्थापयितु मुद्धतु चार्हति । विदाङ्कुरुत यूयमात्मानम् । परमात्मा जीवात्मैक एव । निधनमस्ति ध्रुव मतस्तथा म्रियध्वं येन भूयः स्यान्नाधिगतं जननमरणजरादि जनितं कष्टम् । न युष्मान् न च संसारं विप्रलभध्वम् । न यूयं युष्मानवसादयत' इत्येवंविधै र्हितैः प्रियैश्च वचोभिः पितेव मातेव गुरुरिव योस्मान् साधु शास्ति कोऽस्ति सः ? अहो, सोऽयं विद्यते जगद्गुरुः शङ्कराचार्यः । निहितविनिपातपथपदं भारतीयं समाज मुद्धतु मवततार सः ।

उज्झितगौतमबुद्धनिर्दिष्टसत्पथेषु परिगृहीत कपटकैतवदम्भाचारेषु गर्हितागमनिगमेपु दर्शितभौतिकविषयोपभोगानुरागेषु स्वार्थसाधनसंलग्नेषु सत्सु बुद्ध । नुगेषु साक्षाच्छङ्कर भगवानेव शङ्कराचार्यो भूत्वा, मन्ये, केरलेषु 'कालटी' त्येतदाख्यस्थाने वैक्रमेषु पञ्चचत्वारिंशदधिकेष्वष्टशतेष्वतीतेषु जनुर्जग्राह ।

तस्यानेहसो व्यतीतस्य सहस्रेभ्योऽप्यधिकाः समा अतिक्रान्ता, यदा श्रुतयोऽखिल मूर्धन्युपविष्टं सकलजित्वर मविनश्वरं सुन्दरं मङ्गलमयं यत्परमसत्यम्—

'न तत्र सूर्यो भाति न चन्द्र तारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः
तमेव भान्त मनुभाति सर्वं
तस्य भासा सर्वमिदं विभाति'

इत्येतदादि शब्दावलीभि रुच्चै स्तुष्टुवु र्यत्र चाद्यतनस्य विज्ञानजगतः प्रखरमनीषा स्वकीया मास्थां दृढीयस्कतया प्रतिष्ठापयन्ती प्रेक्ष्यते तद्दिशं लक्ष्यीकृत्यैव विश्वस्य शेमुषी मावर्जयितु माचार्य शङ्कराख्यया‌ख्याताखिलतेजोऽभिभवकारिणी विभूति रात्मान ममोघाध्यवसाये व्यापारयामास ।

अधिलोक मद्य ये धर्मा महान्तो मतास्तेषु केषाञ्चनोपरि यदा दृक्पातः क्रियते तदा तेऽपि 'भात्येकैतादृशी शक्तिर्या कृत्स्नमपि भुवनमण्डलं शास्ती' त्येतदभ्युपग-

च्छन्तोऽवालोक्यन्ते । रव्रैष्ट धर्मस्य प्रभूतानां विचाराभिरामाणां विचक्षणानां, ये हि तृतीयशतकादेकादशशतकपर्यन्त मजनिषत, विचारा वेदान्ताभिमतमान्यताभ्यो नात्यनासन्नाः प्राप्यन्ते । प्रतीच्यस्य संसारस्य प्रधीवरं प्लेटोदार्शनिकं को न 'सृष्टि मूले स्रष्टेश्वरोऽस्ति वर्तमान इत्येतद् ब्रुवन्तं श्रृणोति ? एतेनैकेश्वर वादिवेदान्तम्प्रति रव्रैष्टधर्मस्य प्रणतत्व मुल्वणतयैवाभिव्यक्तीभवति । इस्लामधर्मोऽपि विश्वसित्य-द्वैततायाम् । जलालुद्दीन रूमिण उमर खय्यामस्य च कृतयो वेदान्त सिद्धान्तसंवा-दिन्यः प्रतिलक्ष्यन्ते । निसर्गतो मानवस्य यो मूलगुणो धर्मः स्वभावश्च; यच्च तदीयं नैजं रूपं तस्यैव दिशि शङ्कराचार्यो मानवसमाजस्य ध्यान मावर्ज्य वेदान्त प्रिय मद्वैततापरकसिद्धान्तं सर्वत्र प्रसारयतिस्म । सः शशंस—

'वेदान्त सिद्धान्त निरुक्तिरेषा
ब्रह्मैव जीवः सकलं जगच्च
अखण्ड रूप स्थिति रेव मोक्षो
ब्रह्माद्वितीये श्रुतयः प्रमाणम्' ।।

केषाञ्चनाभिधानमिदं यत् तत्कृतोपदेशो न सर्वसामान्यस्य कृतेऽपि तु वर्ग विशेषप्रयोजनेन विद्यते । अस्मद् विचारेण न तेषा मेतद्व्याहरणं प्रत्यासन्नसत्यम् । सर्वसाधारण मुद्दिश्यास्ति तत्प्रवचनम् । स तदेवाचचक्षे यज्जगतः सर्वेऽपि विवेक वन्तोऽनुमन्यन्ते । न मानव ऋतम्भरां शान्ति वाह्येभ्यः पदार्थेभ्य आसादयितुं शक्नोति । तदर्थन्तु तेनान्त र्निर्बाधसुख स्वरूपं शरण मभिसरणीयम् ।

शङ्कराचार्यः श्रुत्युपनिषच्छास्त्रोक्तमेवाचष्टे । भारतीया महर्षयो यदचकथन् सत्यं तच्छोभते तत्र । तत्र विश्वस्य सर्वेषामपि मानवानां भद्रं शुभञ्च सन्निविशेते । अत एवतु देशस्य देशान्तरस्य च धिषणात्रत्योपनिषद् दर्शनादिना तात्त्विकतयाभृश मावर्ज्यते । मंसूर-सर्मद-फैजी-बुल्लाशाह-दाराशिकोहादिका औपनिषदं वाङ्मयं स्वजीवनस्य सर्वस्व ममंसत । मंसूर-सर्मदौ तु स्वशिरः समर्पणं वर ममंसातां परं भारतवर्षीयमत परित्यागं न युक्तमवजग्मतुः । मानव-कल्याणाय यदुपनिषत्सुप्रकटी कृतं सत्यं तत् सत्वरमेव विलम्बेनाविलम्बेन वा मानव जाति रङ्गीकरिष्यतीत्येत दभिदधतो मैक्समूलर-शोपेन हरप्रभृतिप्राज्ञप्रवराः श्रूयन्ते ।

सत्ये तदैव सञ्जायते प्रवृत्ति र्यदा संसारस्यासत्यता सांसारिकसम्पदाञ्च निस्सारता तद्गता क्षोदीयस्कता पातुकता च मानवस्य धीपथमध्यारोहति । मानव-स्तदैव सत्कर्मस्वासजति यदा तस्मिन्नसत्कर्माणि निर्वेद मुत्पादयन्ति; सञ्चारयन्ति च तत्र तज्जनितोपप्लवेभ्यो निर्मुक्तीभवितुं शिवसङ्कल्पपरम्पराम् । एतां स्थितिं

स तदाश्नुते यदा तत्र ज्ञान मवतरति । यावन्न ज्ञान-भास्करांशवः समुद्भवन्ति तावन्ना ज्ञानतमो भवति निरस्तम् । अज्ञानध्वान्तावृतो हि पुरुषो यन्नासत् तत् सदिति, यन्न नित्यं तन्नित्यमिति, यन्न सुखं तत्सुखमिति मन्यते । ज्ञानादित्ये सति समुदिते मानवश्चेदुदग्रवरभास्वरसंस्कार स्तदात्मस्वरूप मध्यास्ते; चेन्न तद्विधस्तदा सः कर्मयोगं किं वा भक्ति योग मुपसरति । उभावपि तौ तदेव फलं जनयतो यदधियाति ज्ञानयोगी । ज्ञानमन्तरेण न स्वान्ते भक्ते रुद्रेकः सञ्जायते न च तस्मिन् कर्मण्येव चेतः प्रीयते यतो मानव स्त्रिविधेभ्योऽपि दुःखेभ्यो जायते मुक्तः । आचार्य शङ्करोऽत एव न ज्ञानात् पर मन्यत् किमपि श्रेष्ठ मवगच्छति । तदेव साधयितुं स मानवमात्रं भृशं नुदति । स ब्रूते—

'अज्ञानसर्पदष्टस्य ब्रह्मज्ञानौषधं विना ।
किमु वेदैश्च शास्त्रैश्च किमु मन्त्रैः किमौषधैः' ॥

कवीरतुलसी रामदास तुकारामादिकानां वाण्या लक्ष्य मन्त्यं मानवस्य मानसे ज्ञानाग्नि प्रज्वालनमेव । कामं, सा (वाणी), तदनुष्ठातुं तत्परिवेषे ह्यात्मनः प्रस्तुतीकरणं न युक्ततर मवगच्छेद्, यस्मिन् खलु शङ्करस्य सरस्वती स्वसत्तायाः समुन्मीलन मुचिततरं वेत्ति । वस्तुतस्तु शङ्कराचार्य एव एक ईदृगादर्शो योमूर्तामूर्तयोरेकीकरणेऽद्भुतपटीयस्कतां परिपुष्णाति ।

शङ्कराचार्य एकतो हि स्वकृतानि ब्रह्मसूत्र-भगवद्गीतोपनिषत्सु महान्ति महीयांसि भाष्याणि भूभुवनायैतस्मै प्रयच्छति किञ्चान्यतोऽसावानन्दलहरीसौन्दर्यलहरी-विवेकचूडामणिप्रभृत्युत्तमोत्तमाः कृतीः प्रसन्नगवीगुम्फितानि सुधावर्षीणि ललितपदबन्धानि स्तोत्राणि चानेकानि वितरति । कोऽसौ मानवो यस्मिन् शङ्कराचार्यस्य मधुरा गीतयो मनोऽभिरामाः पदपङ्क्तयो न नैज ममोघं प्रभावं विकिरन्ति । कंन ताः कुपथात् सुपथ मानेतुं कयाप्यनिर्वचनीयया बन्धुरया रीत्या प्रीत्या च प्रयस्यन्ति—

'वालस्तावत् क्रीडासक्ततरुणस्तावत् तरूणीरक्तः
वृद्धस्तावच्चिन्तामग्नः पारे ब्रह्मणि कोऽपि न लग्नः
भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढमते' ॥

आचार्य शङ्करो विद्वद्धौरेयं कर्मपरायणं कोविदं भक्तिनिलीनं भक्तप्रवरं सामान्यञ्च मतिमन्दं जनमुद् बोधयितुं शक्ति समुद्दीप्तमुद्योगदेवं जागरयामास । स मस्करीव अज्ञान निद्रानिमग्नां जनतां जागरयितुं वीथ्यां वीथ्यां विचचार । सोऽनवद्यान् विचारान् वलक्षांश्च भावान् जने जने समुत्स्रष्टुं कदापि—

'असार संसार समुद्रमध्ये निमज्जतो मे शरणं किमस्ति ?
गुरो कृपालो कृपया वदैतद् विश्वेशपादाम्बुज दीर्घनौका ॥
बद्धो हि को यो विषयानुरागः को वा विमुक्तो विषये विरक्तः।
को वास्ति घोरो नरकः स्वदेह स्तृष्णाक्षयः स्वर्गपदं किमस्ति ॥
के दस्यवः सन्ति कुवासनाख्याः कः शोभते यः सदसिप्रविद्यः।
मातेव का सुखदा सुविद्या किमेधते दानवशात् सुविद्या' ॥

इत्येतां प्रश्नोत्तरपद्धतिं, कदापि च—

'लब्ध्वा कथञ्चिन् नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनं।
यस्त्वात्ममुक्तौ न यतेत मूढधीः स आत्महा स्वं विनिहन्त्यसद् ग्रहात्' ॥

इत्येतद्विधललित पदबन्धमभ्युपागमत्।

वय मस्मिन् विज्ञानयुगे, यत्र विविधानि बहुलानि च वायुयानवाष्पयान-विद्युद्यान-पविविजयियानादीनि क्षिप्रतरगामीनि वर्तन्ते; अन्याश्च सहस्रशः सुख प्रदात्र्यवस्थाः शोभन्ते; तमिलनाडूतः काश्मीर प्रदेशं यावद् गमने नितरामेव काठिन्य मनुभवामः; परं हन्त, स द्वाविंशवर्षवयोऽभ्यर्ण एव नव युवा तस्मिन्नेव युगे, यत्र न द्रुत यायीनियानान्यासन् न चैव सुगमानि वर्त्मानि, न चाभयानि सुखोपकरणान्येवा-वर्तन्त, देशाटनाय प्रातिष्ठत। भारतस्य चतसृष्वप्याशासु च मठान् प्रातिष्ठिपत्। तस्या मैतिहासिक्यां धर्मभावभावितायां देशोदय विधायिन्यां यात्रायां न केवलं स मठप्रतिष्ठापनकार्यं चकार, अपि तु सः सर्वत्र ग्रामे ग्रामे वेदान् वेदान्तं च प्राचीचरत्। निरीश्वराणां सौगतानां मतानि स निरास्थत्। तान्त्रिकाणां कदाचारान् स निनिन्द। भागवतानाञ्च बाह्य लिङ्गेषुधर्मधियं जगर्हे। एतल्लोकोत्तरं महत् कार्यमविरामभावे-नोत्कटेन चोत्साहेन सम्पादयन्नपि नासौ स्वां सर्वविजयिनीं लेखनीं व्यरीरमत्। तामपि स तासाममर रचनानां प्रणयनेऽनिर्विण्णतया प्रावीवृतद् याः संस्कृतभारत्या भाण्डागारस्य तमोऽपहानि परमप्रकाशवर्षीणि रत्नानि सन्ति। वस्तुत स्तदीयाः समु-त्पादितविश्वविपश्चिन्मनो विस्मयहर्षाः समाहितोत्कर्षा ग्रन्थाः संसारस्य विचार धाराया इतिहासेऽतितरा मेव प्रौढं प्रभावं प्रक्षिपन्तो विश्ववाङ्मयमाह्लादयन्तो विद्वद्धौरेयाणाञ्च ममेषां मनांसि नन्दयन्तो भुवि भासन्ते। बहुला धर्मभावनाः आस्थाश्च याः प्रकाशं प्रवेष्टुं नार्हन् ता अपि शाङ्करशास्त्रार्थद्वारेण प्रकाशाधिगमनस्य सदवसरमासादयितुमशकन्।

भारतीय धर्मच्छत्रस्याधस्ताज्जीवनं लभमानाना मनेक विधानां वादोपवादानां सीमाः प्रगतिञ्चावगन्तुं जनकदम्बकं प्राप्नुयात्साहाय्य मानुकूल्यञ्चेत्येतदर्थमपि आचार्यशङ्करो गरीयः कार्यञ्चकार।

नूनमद्यतनस्य संसारस्य कृते शङ्कराचार्यस्योपदेशा नितरामपेक्ष्यन्ते। तन्निपीय जगती बन्धुता मेकतां शान्तिं च प्राप्तुं शक्नोति। तद् यावद् विरजस्कानां योगिनां वृद्धानां पण्डितानां वाञ्छनीय मस्ति तावदेव जनसामान्यस्याप्यपेक्षितं वर्तते। तन्मानवं त्रिविधाभ्योऽपि विपद्भ्योरक्षिष्यति। मानवस्ततः संयमसम्बन्धिनं पाठं पठिष्यति, सर्वेषु प्राणवत्सु प्रेमपूर्वक व्यवहर्त्तव्य मित्येता सः शिक्षा मादास्यति। सङ्कटेषु धैर्यमविचलं लब्ध्वा स योद्धुं बलं लप्स्यते; कामक्रोधलोभादिदोषेषु घृणां सः करिष्यति, न च सः परकीयमर्थमधिकारं चापहरिष्यति, तस्मिन् भविष्यति दिव्य जीवन-सञ्चारः, सः स्वयं सुखेन जीविष्यत्यन्ये च तस्मात् सुखपूर्वकं जीविष्यन्ति, न स वर्तमान मेव जीवनमुज्ज्वलतरं विधास्यति परं भावि जीवन मप्युदात्ततर मुत्कृष्ट तरं धवलतरञ्चानुष्ठास्यति, मोक्षं च प्राप्तुं सः शक्ष्यति।

एष महान् आत्मा 'शङ्कराचार्य' इत्येतदाख्यया विश्व विश्रुततां गतो हन्त, द्वित्रिंशदब्ददेशीयो यदासीद् ब्रह्मणि व्यलीयत इतीतिहासविदो वदन्ति।

आचार्य शङ्करजगद्गुरु विश्ववंद्यो
ज्ञानेन्दुना जगति मोहनिशान्धकारं
विध्वंस्य यो वितनुते स्म शुभप्रकाश
ज्योत्स्नां नितान्तविनयेन हि नम्यते सः॥



# आचार्य रामानुजः

यामुनाचार्यस्य शिष्येषु रामानुजः प्रधानः प्रख्यातश्च शिष्यो बभूव। तस्य जन्म 'तमिलनाडू' प्रदेशान्तर्गत 'त्रिपुटी' पुटपत्तने रसशशिव्योमसोमेशवीयाब्दे जात मुपरामश्च 'श्रीरङ्गम्' इत्येतस्मिन् स्थाने ऋषिगुणाम्वररुद्रेशवीयाब्देऽभवत्। तत्पिता केशवो माता च तस्य कान्तिमतीत्येतेन व्यपदेशेन व्यपादिश्येताम्। वाल्य एव रामानुजस्य मनो वेदान्ते वलीय मौत्कण्ठ्यमबिभः। तस्मात् सः काञ्च्यां यादव-प्रकाशात् वेदान्तं पठितु मारेभे। एतस्मिन्नेवान्तरे यामुनाचार्यस्तगुणान्निशम्य प्रसन्नो-भूत्वा तं श्रीरङ्ग मायातु माजुहाव; परं तस्य श्री रङ्गागमनात् प्रागेव यामुनाचार्यः पाञ्चभौतिकं शरीर मुत्ससर्ज। सः पुनः काञ्चीं निववृते। पेरियनम्बि नाम्नः परि-व्राजः संन्यासे दीक्षितो भूत्वा श्रीरङ्ग मेव स्वकीयावासस्थानञ्चक्रे।

रामानुजाचार्यो बादरायणसूत्रे श्रीभाष्यं प्रणीय वेदान्तसार-वेदार्थसंग्रहवेदान्त-दीपप्रभृतिग्रन्थानजग्रन्थत्। स विशिष्टाद्वैतनिष्ठस्य स्वसम्प्रदायस्य शास्त्रसम्मतत्वं प्रतिपादयितुं प्रस्थानत्रय्याम्–उपनिषद्ब्रह्मसूत्र गीतासु–भाष्यञ्चकार।

रामानुजाचार्यः शङ्करस्य मायावादं प्रतिवदन् जगज्जीवेश्वराभिधानां त्रयाणा-मपि तत्त्वानां भिन्नत्वे सत्यपि जगत् ( अचित् ) जीवश्च ( चित् ) एकस्यैवेश्वरस्य शरीरत्वाय कल्पेते इत्यभिदधच्चिदचिद्विशिष्टेश्वरस्य सूक्ष्मचिदचिद्भूतशरीरादेव स्थूलचिदचिच्चाभूतामिति च निजगाद। तन्मतेन 'चित्' 'अचित्' 'ईश्वर'श्च इत्येतानि सन्ति मूलतत्त्वानि; त्रयाणामेतेषां मध्ये ईश्वरोऽङ्गिभूतश्चिदचिच्चाङ्गभूते स्तः। अत एव तन्मतं 'विशिष्टाद्वैतवाद' इत्युच्यते।

चित् तत्त्वस्यास्ति नामान्तरं 'जीवात्मे'ति। जीवात्मा देहेन्द्रियमनः प्राण-बुद्धिभ्यो भिन्नः। सः स्वप्रकाश आनन्दमयनित्याणुनिरवयव निर्विकाराव्यक्ताचिन्त्यो-ऽस्त्यस्ति च ज्ञानाश्रयः। नियामकोऽस्ति तस्येश्वरः। ईश्वर प्रदत्तबुद्ध्यधीनो भवन् सः सर्वव्यापाराननुतिष्ठति।

अचित्तत्त्वं जडं विकारवच्च। ईश्वरं चिदचिच्चावलम्बेते। अस्ति सोऽनन्तज्ञान आनन्दस्वरूपः, सर्गस्थितिप्रत्यवहारहेतु धर्मार्थकाममोक्षप्रद इत्येतत् प्रतिपाद्य वर्णाश्रमो-चितकर्माचरणेन चित्तं शुध्यति, चित्तशुद्ध्या भक्तिः प्राप्यते; भक्त्या मोक्षो लभ्यते इति वदत्याचार्यो रामानुजः। एतेन तन्मते भक्तेः प्रधानत्वं सिद्धम्। नात्र कर्म-निष्ठायाः स्वतन्त्रत्वं मतम्। सा (कर्मनिष्ठा) इह ज्ञाननिष्ठाया उत्पादिका मता। यदा

हि शङ्करोऽद्वैतं स्वीकरोति तदाऽयं तत्स्थाने विशिष्टाद्वैत मथ च यदा शङ्करः संन्यासम् (ज्ञानम्) अभ्युपगच्छति तदाऽयं तत्स्थाने भक्ति प्रतिष्ठापयति ।

आचार्य रामानुजो ज्ञानमधिकृत्य नैजं विचारमभिव्यनक्तीत्थम्—ज्ञानं स्वप्रकाशं विभु च । नित्यजीवानामीश्वरस्य च ज्ञानं नित्यं व्यापकञ्च । बद्धजीवानां ज्ञानं तिरोहितं भवत् सन्तिष्ठते । मुक्तानां ज्ञानं प्रथमं तिरोहितं ततश्चाविर्भूतं भवति । अस्मिन् मते ज्ञानस्य स्वतः प्रमाणं मतम् । सङ्कोचविकासयोः स्थिते आधारे ज्ञानमुत्पद्यते च । मतमेतद् ज्ञानं द्रव्यं मन्यते । ज्ञानमात्मनो गुणः प्रभेव तद् गुणे द्रव्ये चोभयत्र द्रष्टुं शक्यम् । अतः आश्रयादन्यत्रापि तत् स्थातुं प्रभवति । मुक्तानां ज्ञान मेकस्मिन्नेवानेहसि तरणितेज इवानन्तवपुर्भिः सह संयुक्तीभवितुं शक्नुते । सुखदुःखेच्छाद्वेषप्रयत्नाः ज्ञानस्यैव रूपान्तरम् । अस्ति ज्ञानं मनः सहकारि । प्रत्यक्षानुमानागम स्मृतिसंशयविपर्यय भ्रमविवेक व्यवसाय मोहरागद्वेष मदमात्सर्य धैर्यचापल्यदम्भलोभक्रोध दर्पस्तम्भद्रोहाभिनिवेशनिर्वेदानन्दसुमतिदुर्मतिसुप्रीतितुष्ट्युन्नतिशान्तिकान्तिविरक्तिरति मैत्री दया मुमुक्षालज्जा तितिक्षाविचारणा जिगीषामुदिता क्षमा चिकीर्षाजुगुप्सा भावना कुहना जिघांसाऽसूयातृष्णा दुराशा वासना दुर्वासनाचर्चाश्रद्धाभक्तिप्रपत्तिगुणा जीवस्य सन्ति ज्ञानस्यैवावस्था विशेषाः ।

उक्तेषु गुणेषु भक्तिप्रपत्ती स्थानविशेषाश्रयिण्यौ । एतत्सत्त्वादेव भगवान् प्रसीदन् प्रददाति मोक्षम् । एत एव मोक्षस्य साधनम् । कर्मयोगो ज्ञानयोगश्च भक्ति सहकृत्यैव मोक्षं साधयतः । एषा प्रपत्तिरेव शरणागति रिति कथ्यते ।

आचार्य रामानुजस्य मतेनापि समस्ताः पदार्थाः प्रमाणप्रमेयभेदेन सन्ति द्विविधाः । आचार्योऽयं प्रत्यक्षानुमानशब्दभेदेन प्रमाण्स्य त्रैविध्यं स्वीकरोति । प्रत्यक्षं निर्विकल्पकसविकल्पकभेदेन द्विविधम् । निर्विकल्पकं निष्प्रकारकं सविकल्पकञ्च सप्रकारकं भवति । परमिह विशिष्टविषयकं ज्ञान मिष्टम् । अतः नैयायिकाभिमतात् सिद्धान्ताद् विलक्षणोऽयं सिद्धान्तः । नास्ति रामानुजमते अविशिष्टग्राहि ज्ञानम् । इन्द्रियार्थ सन्निकर्षेण पञ्चभिरपीन्द्रियैः विभिन्नविधप्रत्यक्षज्ञानं जायते । इन्द्रियापेक्षीन्द्रियानपेक्षिभेदेन अर्वाचीनभेदोऽपि द्वैविध्यं भजते । इन्द्रियानपेक्षभेदोऽपि द्विविधो दिव्यस्वयंसिद्धभेदेन । योगजन्यप्रत्यक्षं स्वयं सिद्धम्; भगवत्प्रसादजन्यप्रत्यक्षं दिव्यं भवति । अनर्वाचीनप्रत्यक्षमिन्द्रियानपेक्षि मतम् । यथा नित्यमुक्तजीवस्येश्वरस्य च ।

स्मृतिः, प्रत्यभिज्ञा, अभावः, ( अभावोऽस्त्यस्मिन् भावस्वरूपः ) ऊह-संशय प्रतिभाश्च सन्ति नानृताः । 'सर्वं विज्ञानं यथार्थम्' इत्येतत्कारणाद् भ्रमोऽपि यथार्थो नाऽलीकः ।

रामानुजीयाश्चैतन्यस्य त्रैविध्य मङ्गीकुर्वन्ति । अन्तःकरणावच्छिन्नान्तःकरण वृत्त्यवच्छिन्नविषयावच्छिन्नभेदेन । त्रयाणामपि चैतन्यानामेकत्वं गते सति, साक्षात्कार इति कीर्त्यते ।

व्याप्यव्यापकत्वपरामर्शेण ज्ञानगोचरस्य व्यापकस्य करण मनुमानं तत्फलञ्च अनुमिति रित्युदीर्यते । व्याप्यव्यापकयोरुपाधिरहितो नियतसम्बन्धो व्याप्ति रिति कथ्यते । साहचर्यनियमो व्याप्ति र्भवति । एषाप्यन्वय व्यतिरेकभेदेन द्विविधा। इहानुमानस्यान्वयव्यतिरेकि केवलान्वयित्वमेवाभ्युपगतम् । नेमे केवलव्यतिरेकिवादिनः । केवलव्यतिरेकिणि साध्यस्याप्रसिद्धत्वाद् व्यतिरेकव्याप्तिदुर्ग्रह स्तस्मान्नैते तद्वादिनः ।

साधारण्येनानुमानस्य प्रतिज्ञोपनयनिगमनहेतूदाहरणाख्याः पञ्चाप्यवयवाः सन्ति मान्याः । परं व्याप्तिपक्षधर्मतयो रनुमानस्य प्रधानाङ्गभूतयोः सिद्धि रुदाहरणोपनया-भ्यामेव जायते । अत एते कदाप्यवयवत्रितयं कदापि चावयवद्वयमेव मन्यन्ते । तावन्त एवावयवाः सन्ति मान्या यावद्भि र्विपक्षी सिद्धान्त मवगन्तुं शक्नुयादित्येते वदन्ति ।

उपमानार्थापत्तितर्ककथाजल्पवितण्डाच्छल जाति निग्रहा अनुमान एवान्तर्भवन्ति एतेषां विचारेण ।

शब्दप्रमाणम्—अनाप्तानुक्तवाक्यादुद्भूतार्थ ज्ञानं शाब्दज्ञानमिति कथ्यते । तत्करणञ्च शब्दप्रमाण मिति ।

रामानुजमते वेदा अपौरुषेया नित्याश्च । शिक्षादिषडंगा वेदा प्रमाणभूताः । आप्तरचिता स्मृति र्यदि श्रुति मनुगच्छति, भवति च सा आचार व्यवहारप्रायश्चित्तादि-प्रतिपादिका तदा सापि प्रमाणम् ।

वेदमूलकाः पुराणेतिहासाः सन्ति प्रमाणम् । परं तेषु यद्विरोधि तदप्रमाण मेव ।

पञ्चरात्रागमस्य वेदाविरुद्धत्वेसति, सोऽपि प्रमाणम् । वैखानसागमो धर्म-शास्त्रञ्च वेदानुकूलमत उभयमपि प्रमाणत्वेन मतम् । वकुलाभरणादिविद्वदुक्तयः सर्वाः प्रमाणतराः रामानुजस्य श्रीभाष्यन्तु प्रमाणतमग्रन्थः । त्रयाणामपि गुणानां मिश्रसत्त्वत्वं प्रकृति र्माया अविद्या वेति कथ्यते । प्रकृति रस्ति नित्या । भगवतः सङ्कल्पेन तत्साम्यावस्था वैषम्ये परिवर्तते । वैषम्यं कार्योन्मुखतां याति । तन्नाम अव्यक्तम् इति ।

प्रथमं महत् तत उत्पद्यते । गुणानुसारेण तस्य त्रैविध्यं भवति । ततो महत्-तत्वादहङ्कारो जायते । गुणवशात् तस्य (अहङ्कारस्य) त्रिविधत्वम्-वैकारिक-तैजसभूतादि भेदेन । इन्द्रियाणां हेतु र्वैकारिकभूतादिकाहङ्कारः । मनसो ज्ञानेन्द्रियत्वेन स्वीकृत-

त्वात् सन्ति षड् ज्ञानेन्द्रियाणि पञ्च च कर्मेन्द्रियाणि। इन्द्रियपरिमाणमणुः। जीवो यदा योगबलेन शरीरान्तरे प्रविशति लोकान्तरे च भ्रमति तदापीन्द्रियाणि जीवानुगामीनि भवन्ति। मुक्तौ जीवं जहतीन्द्रियाणि। आप्रलयं तानि जगदधिवसन्ति वा रहितेन्द्रियास्तान्युपाददति। उपासनाय ध्यानायचेश्वरस्य रूपाणि पञ्च मतानि :—

१. परब्रह्म, २. व्यूहः, ३. विभवः, ४, अन्तर्यामी, ५. अर्चा।

परब्रह्म—परब्रह्म वैकुण्ठमधिवसति। वैकुण्ठलोकोऽनेकविधविलाससामग्रीसुशोभितोऽस्ति। श्रीः, भूः, लीलास्तत्सेवन्ते। शङ्ख-चक्र-गदा-पद्म विभूषितं तत्। अनन्त-गरुड-विष्वक्सेनादिका मुक्ता आत्मानस्तेन सह विहरन्ति।

व्यूहः—चतुर्विधत्वं व्यूहस्य,—वासुदेवः, सङ्कर्षणः, प्रद्युम्नः, अनिरुद्धः।

विभवः—भगवत इदं रूपं मत्स्यकच्छपादिदशावतारसम्बन्धि।

अन्तर्यामी—अनेकस्वरूपेण तद्योगिनां हृदये प्रविशति, प्रतिघटञ्च वसति।

अर्चा—एतस्मिन् स्वरूपे उपासका अनेकानेकमूर्ती विभावयन्ति। कैश्चनाचार्यैर्व्यूहे वासुदेवोऽप्यन्तर्भावितः परं रामानुजाचार्येणात्मनोऽनेकत्वं स्वीकृत्य तत् तिसृषु श्रेणीषु विभक्तिकृतम्। ता इमाः—बद्धा, मुक्ता, नित्या। आत्मनः कोटयोऽनेकाः। या ब्रह्म प्रारभ्य कृमिकीटवनस्पतीन् यावत् सन्ति विततः। मनुष्यजातीया बद्धा जीवात्मानो द्विविधाः—आनन्देच्छवो मुमुक्षवश्च।

आनन्देच्छुषु असुमत्सु केचन भौतिक मानन्द मेव स्वकीयं लक्ष्यं मत्वा तत्-प्राप्तिनिमित्तेन द्रव्यादिसंग्रहणे भवन्ति सन्नद्धाः। केचन च दिव्यानन्दमार्गगे तीर्थ-यात्रा-यज्ञ-पुण्य-जप-व्रतादिकमाश्रयन्ति। मुमुक्षुष्वात्मसु केचन केवलिनो भवन्ति। केवलिन आत्मानं स्वकीयं दोषरहितं विदधति। केचन नित्यानन्दं मार्गयन्ति। ते भक्ता इत्युच्यन्ते। भक्तिः कर्मयोगं ज्ञानयोगञ्चापेक्षते। कर्मयोगे सकलवेदविहित कर्माणि समाविशन्ति। तैः शुध्यत्यात्मा। ज्ञानयोगश्च ततो भवति सुलभः। तदा जीवात्मा स्वं प्रकृते भिन्न मवेति। ज्ञानयोग एव भक्त्यै कल्पते। प्रपत्ति र्भक्तेः सर्वश्रेष्ठ मङ्गम्। तदधिकारिणः शूद्रा अपि भवितु मर्हन्ति। भक्त्यामनेकविधविधानानि दृश्यन्ते।

रामानुजाचार्यस्य सिद्धान्ताः सन्त्युपनिषद् ब्रह्मसूत्रपुराणाद्यवलम्बिनः। स आचार्यः सृष्टिक्रमं सांख्यदर्शनाभिमतं स्वीकुरुते। वस्तुतस्तु तत्सम्प्रदायः पाञ्च-रात्रेष्टवासुदेवसम्प्रदायसंवादी।

रामानुजसम्प्रदायः शूद्राणामपिकृते मन्दिरप्रवेशाधिकारं प्रदत्ते। एतद्विधं वैशिष्ट्यं नान्यत्र लभ्यते। अस्त्यतस्तत्सम्प्रदायः सर्वश्लाघाऽऽस्पदम्। एष सम्प्रदायः श्रीसम्प्रदाय इति च कथ्यते।

रामानुजाचार्यो भक्तिमार्गस्य परिनिष्ठितं स्वरूपं प्रातिष्ठिपत्। तेन भक्तिः कामपि महनीयतां नीता। सः प्रकर्ष उत्तर भारतस्य भक्त्यान्दोलनं कृत्स्नतया प्रोत्साहयतिस्म। न रामानुजसम्प्रदायस्यानुयायिन स्तावन्त उत्तरभारते यावन्तस्ते दक्षिण-भारते। वैष्णवमतस्य सर्वेऽपि प्रचारकाः शङ्करस्य मायां-मिथ्यात्ववादं-प्रत्याख्याय भक्ति स्थापितवन्तः।

कर्मानुष्ठानैः सति चित्ते शुद्धे ज्ञानोदयानन्तरं संन्यासं परिगृह्य ब्रह्म चिन्तने स्वनियोजनं वा प्रेमपूर्वकं वासुदेवस्य भक्त्या मात्मन आसजनं सर्वस्वस्य च समर्पणं न कर्म योगदृष्ट्या भिन्नम्। द्वावपि पन्थानौ निवृत्तिविषयकौ वक्तुं शक्येते।

अद्वैतवेदान्तमतेन मुक्त आत्मा ब्रह्मणासह अभिन्नरूपो भवन् सन्तिष्ठते परं विशिष्टाद्वैतमतेन स ईश्वर इव सञ्जायते। ईश्वरेण सार्धं तस्यैकात्म्यं न सम्पद्यते। स ब्रह्म स्वरूपं गुणांश्चावश्यमाप्नुते। परं ब्रह्मणि मिलित्वा नैकत्वमुपैति। मुक्ते जीवे सर्वज्ञत्व-सत्यसङ्कल्पत्वगुणयो रुद्भवो भवति; परं सर्वकर्तृत्वगुणस्तु ईश्वरस्यैव वर्तते। जीवोऽविद्या श्रयण योग्यतां सदैव बिभर्ति। परं नास्तीदृग् ईश्वरः। अतः जीवेश्वरयो र्नास्त्यैक्यम्। मुक्त जीवः स्वराट् अनन्याधिपतिः सिद्धसङ्कल्पो भवति परं जगतः सर्गे स्थितौ प्रत्यवहारे नास्ति तस्याधिकारः। सकलबन्धन निवृत्तिरूपा मुक्ति र्जीवितदशायां नैव भवितुं शक्नोति। अतः अन्यवैष्णव सम्प्रदाया इव रामानुजसम्प्रदायोऽपि जीवन मुक्तिं न मनुते। विदेह मुक्ति रेव सम्भवा। रामानुजाचार्य एकेश्वरवादस्य परमावदातं निदर्शनं सर्वेषां पुरः समुपस्थापयति। तद् बुद्धि गृह्णाति। तत्र सर्वान्तर्यामितायाः सुषमा तात्विकता शोभते। नून माचार्योऽयं दार्शनिकान् भावान् धार्मिकांश्च भावांश्चि-न्नितान् विधाय सर्वमपि लोक मतितरा मावर्जयति।

सकलगुणनिधानो भगवान्। तदनुग्रहेणैवास्माद् विषमात् संसारात् मुक्ति लब्धुं शक्नोति। सर्वविधान्यपि सुखानि भोक्तु मर्हति तस्मात् सः शुद्धमानसो भूत्वा-ऽऽत्मानं तच्चरणयोः समर्पयेत् इत्येतां पावनभावन। माचार्यरामानुजः सर्वत्र वितताना। एतस्या भावनाया अङ्गीकरणेन आचरणे च परिणमनेन अन्तः करणस्य सर्वाण्यपि कलुषाणि नश्यन्ति। तच्छुद्धं भूत्वा प्रकाश मलौकिक मश्नुते, अतः आचार्यो नितान्तं महनीयं कार्यं चकार। तस्य जीवनप्रदीपः समग्रमपि संसारम्प्रति मङ्गलमय मालोकं

प्रदर्शितवान् । यदि लोकस्तत्प्रदर्शितपथेन गच्छेत् तदा स नूनं स्वाभिलषितं सर्वमपि प्राप्तुं शक्नुयात् । तत्प्रदत्तः प्रकाशो जनानां मानसेषु शान्ति सुखम्, आश्वासनं, धैर्य, वलं, विश्वासञ्च सृजति ।

धन्य मिदं राष्ट्रं भारतं यत्रेदृग् भगवद्भक्त आचार्यो जन्म जग्राह ।

रामानुजो जगति भक्तितरङ्गिणीं यां
दुःखप्रणाशनपरां शुभभद्रदात्रीं
चक्रे जना हि वितता मिह तत्र सर्वे
स्नात्वा हि ते त्वरित मेव लगन्तु भव्ये ।।



# मध्वाचार्यः

मध्वाचार्यो दक्षिण भारते 'उडुपी' संज्ञिकां सुविदितां पुरीं निकषा एकोनशताधिकैकादशशततमेशवीयाब्दे प्रादुर्बभूव । तिरोधानञ्च तस्य त्र्यधिकत्रयोदशशततमेशवीयाब्देऽभूदिति मन्यन्ते ऐतिह्यविदः । भारतस्य प्रमुखतीर्थेष्वटनं विधाय सः स्वकीयं द्वैतवादं प्राबल्येन प्रचारयामास । स बहून् ग्रन्थानजग्रन्थत् । तत्र ब्रह्मसूत्रभाष्यानुव्याख्यानगीताभाष्य-भागवततात्पर्यनिर्णय-विष्णुतत्वनिर्णय - तन्त्रसार-संग्रहच्छान्दोग्य-बृहदारण्यकैतरेय-केन-कठाद्युपनिषद्भाष्यादिकाः सन्ति ख्याति-लब्धा ग्रन्थाः । तद्रचितं साहित्यं विद्वद्वरानतितरां प्रीणयति । तदीयेषु भाष्येषु जयतीर्थ प्रकाण्ड पाण्डित्य पाथोधिना प्रणीता विद्वत्तापूर्णवृत्तिग्रन्थाः स्फुटतयैव तस्य विद्वत्प्रियतां प्रकटीकुर्वन्ति । मध्वविजये मणिमञ्जर्यां च नारायणपण्डितकृतं तस्य प्रामाणिकं जीवनचरितञ्च तस्य लोकप्रियतां प्रख्यापयति । अद्वैतवादस्य साहित्यमिव द्वैतमतस्यापि साहित्यं प्रभूततरम्; परं तदीया अनेके ग्रन्थाः साम्प्रतमपि सन्त्यप्रकाशिताः ।

माध्वसम्प्रदाये दश पदार्था मतास्ते इमे—

द्रव्यम्, गुणः, कर्म, सामान्यम्, विशेषः, विशिष्टम्, अंशी, शक्तिः, सादृश्यम्, अभावः । एषां पदार्थानां वैशद्येन वर्णनं पद्मनाभकृतमध्वसिद्धान्तसारे विहितमस्ति । मध्वमताभिमतपदार्थेषु द्रव्याभिधः पदार्थो विंशतिविधोऽङ्गीकृतः परमात्मलक्ष्मीजीवाव्याकृताकाश प्रकृति गुणत्रय महत् तत्त्वाहङ्कारमनोबुद्धीन्द्रिय मात्राभूत ब्रह्माण्डाविद्यावर्णान्धकारवासना कालप्रतिबिम्बभेदेन । गुणाश्चानेकविधा वैशेषिकमतगुणान् व्यतिरिच्य शमदमकृपातितिक्षासौन्दर्यादिकानामपि गुणेषु समावेशः कृतोऽस्ति । विहितनिषिद्धोदासीनभेदेन कर्म त्रिविधम् । उदासीनं कर्म वर्तते परिस्पन्दात्मकम् । तत्रोत्क्षेपणापक्षेपणादिनानाविधानां कर्मणांभवत्यन्तर्भावः । नित्यानित्यभेदेन जात्युपाधिभेदेन च सामान्यस्य द्विविधत्वम् । भेदाभावेऽपि भेदव्यवहारनिर्वाहकाः पदार्था विशेषा अनन्ता एव । परमात्मन्यपि विशेषः स्वीकर्त्तव्यो भवति । विशेषत्त्वादेव परमात्मनि विज्ञानानन्दरूपे भेदो दृग्गोचरीभवति । जगद्गतसमग्रपदार्थेषु तस्य ( विशेषस्य ) सद्भावोऽस्त्यतोऽनन्तं तत् । विशेषण संयुक्तपदार्थः अंशीति कथ्यते । सादृश्य मभावश्च न किमपि वैलक्षण्यं जुषेते । शक्तिश्चतुर्विधा––अचिन्त्यशक्तिः, आधेयशक्तिः, पदशक्तिश्च । अचिन्त्याशक्ति र्भवति अघटितघटनापटीयसी । सा भगवन्तं विष्णुमेवाध्यास्ते । एतच्छक्तिहेतोरेव परमात्मनि विषमाणां गुणानां सार्वकालिकी स्थिति र्दृश्यते । अन्याहितशक्ति राधेयशक्तिरिति कथ्यते । विधिवत्प्रतिष्ठापनात् प्रतिमायां देवतायां यया सन्निधानं जायते

सैवाधेयशक्तिरिति प्रोच्यते। कार्यमात्रानुकूला स्वभावरूपा शक्तिः सहज शक्तिर्ज्ञेया। पदार्थभेदेन सा नित्या अनित्या च। पद पदार्थयोर्वाचकवाच्य सम्बन्धः पद शक्तिरिति निगद्यते। मुख्या परममुख्या च सा। मुख्यया वृत्त्या इन्द्र शब्दः पुरन्दरार्थवोधकः, परममुख्यया च सः परमेश्वरार्थपरः। परमात्मा साक्षाद् विष्णुः। अनन्तगुणः सः। गुणास्तत्र निरवधिका निरतिशयाश्च। सजातीयविजातीयत्वभेदेन तस्यानन्त्यमुभयविधम्। उत्पत्तिस्थितिसंहार नियमनज्ञानावरणबन्धमोक्षकर्तास्ति सः। सर्वज्ञः सः परममुख्ययावृत्त्या समस्तपदवाच्यः। जीव-जड-प्रकृतिविलक्षणोऽस्ति सः। ज्ञानानन्दादिकल्याण गुणा एव भगवतः शरीरत्वेन मताः। अतः शरीरी सन्नपि स नित्यः सर्वतन्त्रस्वतन्त्रश्च। सन्नप्येकाकी स नानारूपाणि विभर्ति। समस्तान्यपि तद्रूपाणि सन्ति पूर्णानि। माध्ववृहद्भाष्ये प्रोक्तम्—

अवतारादयो विष्णोः सर्वे पूर्णाः प्रकीर्तिताः<br>
पूर्णं च तत् परं पूर्णं पूर्णात् पूर्णाः समुद्गताः।<br>
न देशकालसामर्थ्यैः पारावर्यं कथञ्चन॥

लक्ष्मीः परमात्मनः शक्तिः। सा परमात्माधीना। अत स्ततो भिन्ना। न माध्वमते शक्तिशक्तिमतो मध्ये पूर्णोऽभेदभावोऽवतिष्ठते। परमात्मेव लक्ष्मी रपि नित्यमुक्ता। सा नानारूपधारिणी तद्भार्या। सापि परमात्मेव अप्राकृतदिव्यविग्रहवती। ब्रह्मादिदेवाः शरीरस्य क्षरणशीलत्वात् क्षराः सन्ति। परं तस्या दिव्यविग्रहत्वादक्षरत्वम्। भागवततत्त्वनिर्णयेऽभिहितम्—

द्वावेव (लक्ष्मीपरमात्मानौ) नित्यमुक्तौ तु परमः प्रकृतिस्तथा।<br>
देशतः कालतश्चैव समव्याप्तावुभावजौ॥

जीवा अज्ञानमोहदुःखभयादिदोषा भवन्ति, भवन्ति च ते संसरणशीलाः। मुक्तियोग्यनित्यसंसारितमोयोग्यभेदेन प्रधानतया तेषां त्रिविधत्व मस्ति। मुक्ति प्राप्त्यधिकारिणो जीवा देवर्षिपितृचक्रवर्तिमनुष्योत्तमा भवन्ति। नित्यसंसारिणो जीवाः शश्वत् सुखदुःखजुषः सन्तः स्वकर्मानुसार मुच्चावचगती रासादयन्तः स्वर्गे नरके भूलोके च विचरन्ति। इमे न यान्ति कदापि मुक्तिम्। अधमदैत्यराक्षसपिशाचा स्तमोयोग्या जीवाः सन्ति।

जीवः सर्वज्ञात् परमेश्वरात् सर्वथैव भिन्नः। संसारदशायामेव न जीवेषु तारतम्यमपितु मुक्तावस्थायामपि तद् भिन्नत्वं विद्यते। मुक्तः पुरुष आनन्द मनुभवत्यवश्यम्, परं माध्वमते आनन्दानुभूत्यामपि तारतम्यं भवति—

मुक्ताः प्राप्य परं विष्णुं तद्देहं संश्रिता अपि।<br>
तारतम्येन तिष्ठन्ति गुणै रानन्द पूर्वकैः॥ गीतामध्वभाष्म्

मुक्तावस्थायां जीवः परमसाम्यं याति । अत्र परमसाम्य मभेदविषयकं न । समस्त गुणेषु कृतेन दृष्टिपातेन तयोः पृथक्त्वमेव प्रमाणसिद्धम् । उक्तं चानुव्याख्याने—

"जीवस्य तादृशत्वं च चित्त्वमात्रं न चापरम् ।
तावन्मात्रेण चाभासो रूपमेषां चिदात्मनाम् ॥"

'अव्याकृत माकाशं' न्यायवैशेषिके 'दिक्' इति व्याह्रियते । तत्सृष्ट्यां प्रलयेऽपि विकारशून्यं सन्तिष्ठते । इदं भूताकाशात् सर्वथा भिन्नम् । तस्यानित्यत्वात् । अव्याकृत माकाशं नित्य मेकं व्यापकञ्च । अभावेतु तस्य सर्वमपि जगन्निविडपिण्डत्वमुपैति । अस्ति तस्य लक्ष्मी रभिमानिनीदेवता । प्रकृतिः साक्षात् वा परम्परया विश्वस्योपादानकारणम् । सा जडरूपा, नित्या, व्याप्ता, सर्वजीवलिङ्गशरीररूपास्ति । रमा तदभिमानिनी देवता ।

तदेवं द्वैतवादिनां माध्वानां मते जगतो जन्मादिव्यापारे परमेश्वरः केवलं निमित्तकारणम् । प्रकृतिश्चतदुपादानकारणम् । 'गुणत्रयं विश्रुतमेव । वैष्णवमतान्तराणीव माध्वमतमपि शुद्धसत्त्वसत्तामभ्युपयाति । तेन मुक्तानां जीवानां लीलामयस्य विग्रहस्य भवति निर्माणम् । सत्त्वाभिमानिनी श्रीः, रजोऽभिमानिनी भूः, तमोऽभिमानिनी दुर्गाऽस्ति । महत्तत्त्वादिकान्यद्रव्याणि तथैव मतानि सन्ति यथा सांख्यं पुराणानि च मन्यन्ते ।

साधनाध्वा—श्रवणमननध्यानेन सह तारतम्यपरिज्ञानं पञ्चभेदज्ञानञ्च नितरामपेक्षितम् । ज्ञानसुखाद्यवसानं भगवत्येव भवति । इदमेव तारतम्यज्ञानम् । भेदः पञ्चविधः—ईश्वरस्य जीवाद् भिन्नत्वम्, जीवस्य जडाद्भिन्नत्वम्, जीवस्य जीवान्तराद्भेदः । जडपदार्थस्य जडपदार्थान्तराद् भेदः । एतेषां पञ्चविधभेदानां परिज्ञानं माध्वमते मुक्तिसाधकम् । उपासना द्विविधा सन्ततशास्त्राभ्यासरूपा च । अधिकारिभेदेनोपासनोपयुज्यते । ध्यानन्तु इतरविषयतिरस्कारपूर्वकभगवद्विषयकाऽखण्डस्मृतिः । जीवो मोक्षार्थं परमात्माधीनम् । भगवतो नैसर्गिकमनुग्रहमन्तरेण परतन्त्रो जीवः साधारणान्यपि कार्याणि न सम्पादयितुं प्रभवति । मुक्तिस्तु दूरे आस्ते । अपरोक्षे ज्ञाने सति परमभक्ति रुत्पद्यते ततश्च परमानुग्रह उदेति । ततश्च मोक्षो जायते । मोक्षश्चतुर्विधः कर्मक्षयोत्क्रान्त्यर्चिरादिमार्गभोगभेदेन । सालोक्य सामीप्यसारूप्यसायुज्यभेदेन भोगोऽपि चतुष्प्रकारकः सायुज्यं नाम भगवन्तं प्रविश्य तच्छरीरेण भोगः । सर्वेष्वपि भोगेषु सायुज्यभोगः श्रेष्ठः । मुक्तेष्वपि जीवेषु आनन्दतारतम्यमानिता माध्वमतस्य नैजं वैशिष्ट्यम् ।

अधः स्थितः श्लोकः समासेन परमसौष्ठव पूर्वक मुपन्यस्यति--

श्रीमन्मध्वमते हरिः परतमः सत्यं जगत् तत्त्वतो
भेदो, जीवगणाः हरे रनुचराः नीचोच्चभावं गताः
मुक्तिर्नैजसुखानुभूति रमला भक्तिश्च तत्साधन-
मोक्षादित्रितयं प्रमाणमखिलाम्नायैकवेद्यो हरिः ॥

मध्वाचार्यमतोपासका बहवोऽभूवन् । व्यासतीर्थ-रघूत्तमतीर्थ-वेदेशभिक्षु-वनमालीमिश्र-पूर्णानन्द-चक्रवर्तिप्रभृतिविद्वांसोऽनेकान् ग्रन्थानररचन् । विद्वत्सु जयतीर्थ इवालौकिकशेमुषीसम्पन्नः सुधीन्द्रः कश्चिद् विरल एव जातः । स मध्वकृत सूत्रभाष्ये तत्वप्रकाशिका-तत्वोद्योत तत्वविवेक-तत्त्वसंख्यान-प्रमाणलक्षण-गीताभाष्यादिकांष्टीकाग्रन्थानेव न, प्रमाणपद्धति-वादावलीनिभमौलिकग्रन्थांश्च कृत्वाऽद्वैतं प्रत्याख्याय द्वैतमतं मण्डयाञ्चकार ।

आचार्यमध्व आनन्दतीर्थः, पूर्णवोधः, पूर्णप्रज्ञ इत्येताभिश्च संज्ञाभि रपि प्रख्यातोऽस्ति ।

अथचेदानीम्---

मानुषादिविरिञ्चान्तं तारतम्यं विमुक्तिगम्
आनन्दानुभवोऽप्यस्ति भेद युक्तश्चिदात्मनाम्
सिद्धान्तः श्रूयते यस्य वैशिष्ट्यं प्रियनूतनम्
आचार्यवरमध्वोऽसौ वन्द्यते मतिमान् महान् ॥



# श्रीबल्लभाचार्यः

शुद्धाद्वैतनाम्ना यस्य सम्प्रदायो जगति विश्रुतः सोऽस्ति बल्लभाचार्यः। तस्य जन्म वैशाखे, कृष्णपक्षे, एकादश्यां, पञ्चविंशत्यधिकपञ्चदशशततमेवैक्रमे सम्वत्सरे (१४७९ तमेशवीयाब्दे) जातं, तिरोधानञ्च तदीय मभूज्ज्येष्ठे मासे सप्ताशीत्यधिक-पञ्चदशशततमेऽब्दे। आसीत् स तैलङ्गः ब्राह्मणः। तस्य पितु र्नाम लक्ष्मणभट्टो मातुश्च नामासीत् इल्लमागारू।

आचार्य बल्लभस्य मते 'ब्रह्म' एवैकं तत्वम्। अन्यानि च सर्वाणि वस्तूनि ब्रह्मणोऽभिन्नानि। तेषा मभिन्नत्वात् तानि नित्यान्यपि सन्ति। यथार्थतया जगदस्ति नित्य मक्षयञ्च। परं विष्णो र्मायया तदाविर्भावस्तिरोभावश्च भवतः। धर्मधर्मिणो-स्तादात्म्यसम्बन्धात् प्रपञ्चरूपधर्मो ब्रह्मरूपधर्मिणो न भिन्नः। मायाया भगवतः शक्तित्वात् शक्तिशक्तिमतोर्मध्ये वस्तुतस्त्वभेद एव तस्माद् ब्रह्मैव प्रमेय पदार्थः न तद्व्य-तिरिच्येतरः कोऽपि। निराकारसच्चिदानन्दसर्वसमर्थब्रह्म विना किमपि निमित्त स्वांशगतत्वात् धर्मरूपत्वेन, क्रियारूपत्वेन, प्रपञ्चरूपत्वेन च दृग्गोचरं भवति। धर्म-रूपत्वेन तद् (ब्रह्म) ज्ञानानन्दकालेच्छामायाप्रकृत्यात्मकं दृश्यते। परं न सर्वदा तादृश-माप्यते। आदावापादकहेतुस्वरूपस्य कालस्यासद्भावो भवति। तदाविर्भावे सत्येव सः कालस्तन्नियामको जायते। एतस्मादेव हेतोः प्रोक्तावस्था न सदा तुल्या प्राप्यते। कालेन साकं मुत्पन्नानामिच्छादिकानां शक्तीनां सततैकता भगवतैव विहिता। अतस्ता नित्या अपि भवन्ति। इह काल एव क्रियाशक्तिस्वरूपः। इच्छास्ति सङ्कल्पात्मिका; इयं कामइत्यप्युच्यते। श्रुतावुक्तमपि 'सोऽकामयत'। अस्ति भगवांस्तदाकार एव। सङ्कल्पो द्विविधः—'बहु स्याम', 'प्रजायेय' च। एतयो रुभयोरपि सङ्कल्पयो राद्यो भेद बोधकः। अतः कालं व्यतिरिच्य क्रियाज्ञानानन्दरूपसच्चिदानन्दब्रह्मणो धर्म आत्मनि अन्तरं दर्शयन् स्वाश्रयभूतब्रह्मापि विभिनत्ति। भावोऽयं स धर्मस्तदपि क्रियाज्ञानानन्दवद् विदधाति। तदेवं सच्चिदानन्दरूप ब्रह्म अपि साकारं जायते। परं भिन्नं सदपि यदच्छया अभिन्नं भवत् तद् अखण्डमेव वर्तते।

ब्रह्मणः सदंशात्मिका शक्तिः क्रियारूपा, चिदंशात्मिका च व्यामोहरूपमायास्ति। सास्ति त्रिगुणात्मिका। सा संसारस्य कर्तृरूपाया मायाया अंशो वर्तते जगत उत्पत्तौ आनन्दरूपायाः कारणमपि विद्यते। परं मायायां जगतः कर्तृत्वं यदस्ति तदपि भगवत इच्छयैव। वस्तुतस्तु मूलकर्तृत्वं मायायां नास्ति। ज्ञानं क्रिया च भगवतः शक्ती स्तः।

आनन्दस्य ब्रह्मत्वात् स (आनन्दः) ज्ञानशक्ति क्रिया शक्ति च भजते । ईदृश्यां स्थित्यां चिदंशात्मिकाशक्तिर्व्यामोहिकामाया (अविद्या) तच्चिदंशाद् ज्ञानरूपे धर्मे सति पृथक्तां गते. अज्ञाने निपातयति । भगवान् रिरंसया आनन्दादिगुणांशान् तिरोहितान् विधाय स्वयं जीवरूपं परिगृह्णाति । अस्मिन् व्यापारे क्रीडेच्छैव प्रधानकारणम् । मायाया न सम्बन्धोमनागपि तत्र । श्रियास्तिरोहितत्वात् सः सर्वासामप्यापदामास्पदं भवति । ज्ञानस्य तिरोहितत्वाद् देहादिष्वात्मधियं निबध्नाति सः; ऐश्वर्यस्यान्तर्हितत्वात् तस्मिन् (जीवे) दीनतोत्पद्यते । यशसश्च विलुप्तत्वात् स हीनतां याति । आनन्दे सति गते भवति स दुःखभाक् । ब्रह्मण आविर्भूतो जीवोऽग्निस्फुलिङ्गवन्नित्यः । नेदं व्युच्चरणमुत्पत्तिः । अतो व्युच्चरणं जीवस्य नित्यतां न हिनस्ति । अस्ति जीवो ज्ञाता, ज्ञानम्, अणुश्च । भगवतोऽविकृतात् सदंशाज्जडस्य निर्गमनं जायते; अविकृताच्च चिदंशाज्जीवस्य निर्गति र्भवति । जीवस्य निर्गमनकाले चिदंश आनन्दांशश्चोभावपि तिरोहितौ जायेते । जीवस्य तु निर्गमनकाले आनन्दांशस्यैव लोपो भवति ।[1]

जीवो बहुविधः । स मुख्यतया शुद्धमुक्तसंसारिभेदेन त्रिविधः । अविद्यया सह यावज्जीवोऽसम्बद्धो भवति तावत् सः शुद्ध इति कथ्यते । तत् (अविद्या) सम्बद्धोहि सः संसारीति प्रोच्यते । दैवासुरभेदेन संसारी द्विविधः । (दैवजीवोऽपि मर्यादामार्गीयपुष्टिमार्गीयभेदाभ्यां विभिन्नत्वं याति) मुक्तजीवेषु कतिपये भवन्ति जीवन्मुक्ताः कतिपये च मुक्ताः । जीवः सच्चिदानन्दभगवतोऽभिन्न एव । संसारी जीवः पुष्टिमार्गनिषेवणेन भगवदनुग्रहास्पदं भवति तदा तिरोहितानन्दांशस्य पुनः प्रादुर्भावो भवति तत्र । प्राप्तानन्दांश रूपानुग्रहो जीवः संसारी मुक्तावस्थां प्राप्य सच्चिदानन्द एव जायते । 'तत् त्वमसि' इत्येतन्महावाक्यमिमामेवाद्वैतसत्तां प्रतिपादयति । यथा सुवर्णस्य कटककुण्डलादिभूषणानि न सुवर्णाद् भिन्नानि तथैव चिदंशजीवोऽपि ब्रह्मणोऽभिन्न एव ।[2]

जगदधिकृत्य आचार्यो वल्लभोऽविकृत परिणामवादं स्वीकुरुते । कनक-कामधेनु-कल्पवृक्ष-चिन्तामणि प्रभृति रिव निर्गुणं सच्चिदानन्दात्मकं ब्रह्मैवाधिकृततया जगद्रूपे परिणमते । यथा कुण्डलादि रूपे परिणतं भवदपि न सुवर्णं कमपि विकारं याति तथैव जगद्रूपेण पर्यवसितं सदपि ब्रह्म न कमपि विकारं भजति । उक्तञ्च श्रीमद्भागवते—

यथा सुवर्णं सुकृतं पुरस्तात् पश्चाच्च सर्वस्य हिरण्मयस्य ।
तदेव मध्ये व्यवहार्यमाणं नानापदेशै रहमस्य तद्वत् ॥

---

१—प्रमेयरत्नार्णवः, पृ० ७-९ । २—शुद्धाद्वैतमार्तण्डः, पृ० १५-१६ ।

नाचार्यो जगत उद्भवं विनाशञ्च मन्यते । भवति तस्याविर्भावस्तिरोभावश्चेत्यत्र सः श्रद्धत्ते ।[३]

बल्लभमते जगत्संसारयोर्मध्ये पार्थक्य मेव स्वीक्रियते । ईश्वरीयाभिलाषविलासेन तदंशप्रादुर्भूत पदार्थो जगदिति किञ्च पञ्चपर्वाविद्यावशाद् जीवकल्पित ममता रूप पदार्थः 'संसार' इति निगद्यते । अविद्यायाः पञ्चपर्वा णीमानि—स्वरूपाज्ञानम्, देहाध्यासः, इन्द्रियाध्यासः, प्राणाध्यासः, अन्तःकरणाध्यासश्च । अविद्यायाः सत्त्वे संसारः । यदा ज्ञानस्य ( विद्यायाः ) भवत्युदयस्तदैव संसारो नश्यति । परं ब्रह्मरूपत्वाज्जगतो न विनाशः सम्भवः । तत्तु ब्रह्मजीवाविव नित्यम् ।

भगवतः प्राप्ते रूपायो भक्ति रेव । न ततः परस्तात् किमपि साधनं सुगमम् । भगवतस्त्रिविधत्वादध्वानोऽपि त्रयः । त इमे—कर्ममार्गः, ज्ञानमार्गः, आचार-मार्गश्च । अस्ति कर्ममार्ग आधिभौतिकः, ज्ञानमार्ग आध्यत्मिकः । ज्ञानेन ज्ञानिनोऽक्षरब्रह्म प्राप्तुं प्रभवन्ति परं परब्रह्म सच्चिदानन्दस्य प्राप्तिस्तु भक्त्यैव भवति । आचार मार्ग एव आचार्येण पुष्टिमार्ग इत्येतया संज्ञया व्यवह्रियते । भागवते 'पुष्टि' पदं भगवदनुग्रहवाचकमस्ति । भगवदनुग्रहस्य भक्तेः प्रधानकारणत्वादेव मार्गइति गीयते । मार्गोऽयं मर्यादामार्गान्नितान्तभिन्नः । मर्यादामार्गोऽस्ति वैदिकः । तदुद्भवोक्षरब्रह्मणो वाण्याः सञ्जातोऽस्ति । परं पुष्टिमार्गस्तु साक्षात् पुरुषोतमतनुत एव प्रसूतः । मर्यादाध्वनि ज्ञानश्रवणाद्युपायैः सायुज्यमुक्तिर्लभ्यते । सैव ध्येयत्वेन मता । परं पुष्टिमार्गे सर्वात्मनाऽऽत्मसमर्पण विप्रयोगरसात्मकं प्रेम च सहकृत्य आनन्दधामभगवतः साक्षादधरामृतपानमेव मुख्यं फलम् । प्रमेयार्णवे पुष्टि मार्गस्य वैशिष्ट्यं परमहृद्यशब्देषु प्रकटीकृतम्—

अनुग्रहेणैव सिद्धि लौंकिकी यत्र वैदिकी ।
न यत्नादन्यथा विघ्नः पुष्टिमार्गः स कथ्यते ॥

आचार्यश्च अणुभाष्ये युक्त मेवोक्तवान्—

I पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादि निरपेक्ष्यं, मर्यादाया मङ्गीकृतस्य तु तदपेक्षित्वं च युक्तमेव । (३।३।२९)

II पुष्टिमार्गेऽनुग्रहैकसाध्यः प्रमाणमार्गाद् विलक्षणः । (४।४।९)

भक्ति रपि द्विविधा—मर्यादा भक्तिः, पुष्टिभक्तिश्च । अनयो र्द्वयोरपि पार्थक्यमपि वल्लभमते सूक्ष्मया रीत्याकृतमस्ति । भगवतश्चरणारविन्द भक्ति मर्यादा-

३—विद्वन्मण्डने, पृ० ७ ।

भक्ति रस्ति। परं भगवतो मुखारविन्दभक्तिः पुष्टिभक्ति र्भवति । मर्यादाभक्त्यां फलापेक्षा साध्यैव भूत्वाऽवतिष्ठते। परं पुष्टिभक्त्यां न कीदृशस्यापि फलस्यापेक्षा सन्तिष्ठते । मर्यादा भक्तिः सायुज्यप्रदायिनी। पुष्टिभक्त्या अभेदबोधस्य सिद्धिः सञ्जायते। अस्मात् क्लेशविपुलात् संसारादुद्धारमवाप्तु मेक एक सुगम उपायोऽस्ति पुष्टि मार्गस्यावलम्बनम् । सोऽयं पुष्टिमार्गः सर्वोपादेयः नात्र वर्णजातिदेशादिभेदभावो विचार्य्यते। श्रीमद्भागवतस्य परमरहस्यमप्येषैव पुष्टिः। सम्प्रदायस्यास्य श्रीमद्भागवतं सर्वस्वम्। अत एवाणुभाष्यादपि सुबोधिनी विभूषितं श्रीमद्भागवतं तत्र नितरामेव प्रियम्। हरिरायः शुद्धाद्वैत मार्तण्डे ब्रवीति—

नाश्रितो वल्लभाधीशो न च दृष्टा सुबोधिनी।
नाराधि राधिकानाथो वृथा तज्जन्म भूतले ॥

श्रीमद्भागवतस्य महिम्नः संस्थापनं विधाय देशस्य जनताया हृदये श्रीकृष्ण-भक्तिगङ्गायाः सञ्चारणाय यं प्रयत्नं श्रीमद्वल्लभाचार्यः कृतवान् सोऽस्ति सर्वथा भिनन्दनीयः। देशः श्रीमद्बल्लभाचार्येण अथ च तत्सदृशै रन्यैराचार्यैः कृतानुपकारान् कदापि न विस्मर्तुं शक्नुयात्।

न मायिकं तज्जगदेकवल्लभं
विकारशून्यस्य च तस्य संसृतिः
इयं समस्ता परिणाम एव हि
भणन्त मेतत् प्रणमामि वल्लभम् ॥



# श्रीनिम्बार्काचार्यः

आचार्यो निम्बार्क एकादशशततमेशवीयाब्दे 'बैल्लरी मण्डलान्तर्गत 'निम्ब' ग्रामे तेलगूब्राह्मणकुले समुद्‌वभूव । तदीयः पिता जगन्नाथ इति माता च तदीया सरस्वतीति संज्ञां बभाज । स महान् विद्वान् लोकोत्तरशक्तिसमन्वित आसीत् । तस्य जीवनकालो द्वादशशतकस्य प्रथमो भागो मतो भवति । डॉ० भण्डारकरमतेन सः द्विषष्ठ्यधिकैकादशशततमेशवीयवर्षे पाञ्चभौतिकं शरीर मजहात् ।

श्रीनिम्बार्काचार्यैर्रचिता ग्रन्थाः केचन प्रकाशिता अप्रकाशिताश्च सन्ति । ग्रन्थाः सन्ति इमे—वेदान्त पारिजात सौरभम्, दशश्लोकी, श्रीकृष्णस्तवराजः, मध्वमुखमर्दनम्, वेदान्ततत्वबोधः, वेदान्तसिद्धान्तप्रदीपः, श्रीकृष्णस्तवः । सिद्धान्तरत्न-वेदान्तकौस्तुभ-वेदान्तकौस्तुभप्रभा-पाञ्चजन्य-तत्व प्रकाशिका-सकलाचार्यमतसंग्रहाभिध ग्रन्थेषु आचार्यस्य मतं सम्यक् प्रतिपादित मस्ति ।

आचार्यनिम्बार्कस्य सिद्धान्तो भेदाभेदो वा द्वैताद्वैत इत्येतेन नाम्ना प्रथते । तस्य मतेन जीवः, परमात्मा, प्रकृतिः इत्येतानि सन्ति त्रीणि तत्वानि । एतेषां भिन्नत्वाङ्गीकरणात् तस्य सिद्धान्तो द्वैतवादी अस्ति । जीवः प्रकृतिश्च-इत्येतावुभावपि परमात्माधीनौ । अस्ति परमात्मा जीवे जडे च (प्रकृत्याञ्च) विद्यमानः । परमात्मानं विनोभयोरपि तयोः स्थितिर्न भवितु मर्हति । परमात्मनो जीव प्रकृति युगलस्य च मध्ये तावानेव भेदो यावान् समुद्रतरङ्गयो र्मध्ये भेदः । एतद्‌विधमान्यताशालित्वात् तस्य सिद्धान्तोऽद्वैतवादी चास्ति ।

जीवमधिकृत्य आचार्यनिम्बार्कस्य विचारा इमे—

जीवः (चित्) ज्ञानस्वरूपं निदधाति । इन्द्रियाणां साहाय्य मन्तरेण स (जीवः) विषयज्ञानमवाप्तुं प्रभवति । अत एव सः प्रज्ञानघन-स्वयं ज्योति र्ज्ञानमयादिनामानि च भजते । स ज्ञानाश्रयो ज्ञाताप्यत उक्तं दशश्लोक्याम्—

ज्ञानस्वरूपं च हरे रधीनं शरीरसंयोगवियोगयोग्यम् ।
अणुं हि जीवं प्रतिदेहभिन्नं ज्ञातृत्ववन्तं यदनन्त माहुः ॥

'एषोऽणुरात्मा चेतसा वेदितव्यः' इत्येतदादिश्रुतिवचनान्निम्बार्कमतानुयायिनो जीवम् अणुं मन्यन्ते । जीवो युगपदेव ज्ञानस्वरूपो ज्ञानाश्रयश्च तथैव यथा भानुः

प्रकाशमयः प्रकाशाश्रयश्च । जीवस्य स्वरूपभूतज्ञानं गुणभूतज्ञानञ्च ज्ञानाकारतया अभिन्नं, परं तयो धर्मधर्मित्वेन भिन्नत्वं ज्ञेयम् । जीवे कर्तृत्वस्य सद्भावोऽस्ति । सांसारिक्यां दशायां कर्तृत्वं तस्यानुभवगम्यम्, परं मुक्ततायामपि तत्र कर्तृत्वं दृश्यते श्रुतिप्रतिपादकत्वात् । 'कुर्वन्नेवेह कर्माणि,' 'स्वर्गकामो यजेत्' इत्येतदादिश्रुतयो यथा संसारदशाया मात्मनि (जीवे) कर्तृत्वं प्रतिपादयन्ति; तथैव ताः मुक्तावस्थायामपि, उपासनाप्रतिपादनपरत्वात् मुक्तजीवे कर्तृत्वं निर्दिशन्ति ।

ज्ञानस्य भोगस्य चावाप्तौ जीवो न स्वतन्त्रः । अस्ति तत्र च स ईश्वराधीनः । चैतन्यात्मकत्वात् ज्ञानाश्रयरूपत्वाच्च स ईश्वर इवास्ति परं नियम्यत्व गुण स्तत्र (जीवे) वर्तते । तस्माद्धेतोः स व्यावर्तक गुणस्तं जीव मीश्वराद् व्यावर्तयति । ईश्वरो नियन्ता जीवश्च नियम्यः । सदैव स ईश्वरायत्तो मुक्तावपि तदधीनः ।

परिणामे जीवे नानात्वमणुत्वञ्च वर्तते । स ईश्वरस्य अंशः । अंशस्यार्थ इह शक्तिः । ईश्वरः अंशी । तस्य सर्वशक्तिमत्वात् । अघटनघटनापटीयस्या गुणमय्या प्रकृतिरूपिण्या मायया आवृतत्वात् जीवस्य, तदीयं धर्मभूतज्ञानं माकुञ्चन याति । भगवत्प्रसादात् सः सत्यस्वरूप मवगन्तुं शक्नोति ।

वद्धजीवो मुमुक्षुबुभुक्षुभेदेन द्विविधः । मुक्तोऽपि स नित्यमुक्त मुक्तरूपभेदेन द्विधा । जीवो गुणवशाद् अणुः सन्नपि विभुः । परं न तत्र सर्वगतत्वम् । स आनन्दमयो न भवितुं शक्नोति, स्वकर्मणां भोगं स्वयं कुरुते । सोऽपि नित्यः । मुक्त जीवोऽपि भोगान् भुनक्ति । न तदर्थं शरीर-धारण मपेक्ष्यते । भगवल्लीलया केवलंसङ्कल्पं संश्रित्य शरीरमुत्पाद्य मुक्तो जीवो भोगानधिगच्छति । तदैश्वर्यं जगद्व्यापारशून्यम् ।

प्रपत्त्या जीवो भगवदनुग्रह मवाप्नोति । अनुग्रहेण भगवन्तम्प्रति नैसर्गिकी अनुरागरूपिणी भक्ति रुदेति । भगवत्साक्षात्कारो भक्त्यैव जायते । साक्षात्कारे सति, जीवो भगवद्भावापन्नो भूत्वा सर्वक्लेशोन्मुक्तो भवति । सति शरीरे, भगवद्भावापत्तिर्न सम्भवा । अत एव न निम्बार्काचार्यो जीवन्मुक्ति मन्यते । प्रकृति (जडतत्वम्) मधिकृत्य द्वैताद्वैतदर्शने निरूपणमिदम्—

जडपदार्थस्त्रिविधः अप्राकृत प्राकृतकालभेदेन । सत्वरजस्तमोविहीनमप्राकृतम् । अस्ति सः (अप्राकृतः) प्रकाशस्वरूपः । भगवच्छरीरं, तदीय सर्वभूषणानि, नगरोपवनादिसकलवस्तूनि तेनैव सन्ति रचितानि । ईश्वरस्य नित्यविभूति स्वरूपमपि तत्रैव दृश्यते ।

प्राकृतः स जडपदार्थो यं प्रकृति रुत्पादयति । संसारस्य सर्वे पदार्थाः प्राकृतिकाः सन्ति ।

कालः—तत्वमिदं प्राकृताप्राकृताभ्यां भिन्नम् । अस्ति कालोनित्यो विभुश्च । एतानि त्रीण्यपि जडतत्वानि जीवात्मेव नित्यानि ।

निम्वार्काचार्यस्य मतेन ब्रह्म सगुणत्वाय कल्पते । तत्र न प्राकृता दोषाः । अशेषज्ञानबलप्रभृतिकल्याणानां निधानं तत् । अस्मिन् जगति यद् दृष्टिगोचरं श्रुतिगोचरं वा नारायणस्तस्याभ्यन्तरे च व्याप्तो भूत्वावतिष्ठते । इदं जगच्चिदचिदात्मकं, परतन्त्रं वर्तते । तद् ईश्वरं संश्रयति । स ईश्वर एव परब्रह्म, नारायणः, भगवान्, पूरुषोत्तमः, कृष्ण इत्येतदादीनि बहूनि नामानि जुषते । जीवे ब्रह्मणि च भेदाभेदसम्बन्धः स्वाभाविकः सन्ततनियतश्च । अल्पज्ञो जीवस्तस्माद् भिन्नोऽप्यभिन्नः । वृक्षात् पत्रं भिन्नमपि वृक्षादभिन्नं यथा, तथैव जीवोऽपि भिन्नो भवन्नपि परमेश्वरादभिन्नः ।

ईश्वरः स्वभावेनैव अविद्याऽस्मितारागद्वेषाभिनिवेशदोषरहितः । क्षराद्प्यक्षरादपि स उत्कृष्टतरः । सर्वज्ञोऽचिन्त्याऽनन्तशक्तिभाक् स ईश-कालादिकानां नियन्ता, स्वतन्त्रो यज्ञादिसत्कर्मफलदाता, विश्वस्य जन्मादिकानां च कारणम्, एकमात्रवेदप्रमाणगम्यः, सर्वस्मादपि भिन्नः, सर्वस्मादप्यभिन्नश्च । सः स्वयम् आनन्दमयः, जीवास्तस्मादेवानन्दं लभन्ते । पुण्यपापेभ्यः परः । मुमुक्षवस्तमेव ध्यायन्ति । जीवात्मनो भिन्नत्वात् अहिताकरणादिदोषाणामविषयः सः । अस्ति सः सर्वद्रष्टा । अमृतत्वम् अभयत्वञ्च तत्र राजेते । अनन्यशरणेषूपासकेषु स्वकीय मनुग्रहं दर्शयितुं परमेश्वरस्तदिच्छानुरुपं स्वरूपं गृह्णाति । अस्ति स निरतिशयसुखस्वरूपः । त्रिकालव्यापी सः कार्यमात्र घटक आकाशं धारयति । भूतस्य भविष्यतश्च स एव प्रभुः । स नित्याविर्भूत स्वरूपः । तत्र नैसर्गिक आनन्दः स्वाभाविकं ज्ञानं बलं च क्रियापि स्वाभाविकी निषीदन्ति । सर्वशक्तिसम्पन्नत्वात् सः यत् किमपि सर्वं कर्तुं शक्नोति । वासुदेवसङ्कर्षण-प्रद्युम्ना-निरुद्धाभिधानि चत्वार्यपि रुपाणि तस्याङ्गानि । मुमुक्षवो गोपीसहितया वृषभानुजया सह वैकुण्ठमधिवसन्तं भगवन्तं श्रीकृष्णमुपासते । अस्तीश्वरः स जगत उपादानं निमित्तकारणञ्च ।

सर्वशक्तिमद् ब्रह्म स्वशक्तिविक्षेपेणात्मानं जगदाकारे परिणमय्य अव्याकृत स्वरूपं शक्ति-कृति युक्तं भूत्वा परिणमते । प्रलये जीवो जगच्च सूक्ष्मरूपतया भगवत्येव लीयेते । सर्वेषामपि भूतानामन्तरात्मवात् जगतो वस्तुमात्रं—चरमचरञ्च—ब्रह्मस्वरूपमेव । मनो नानाविधवृत्तितया जीवमुपकरोति । यथार्थज्ञानमेव ज्ञानम् । नानृतं ज्ञानं किमपि ।

त्रिवृत्करणप्रक्रियानुसार मिह शरीर-सृष्टि र्मतास्ति । एतद्विषयकविचारणया मनसः पार्थिवत्वं सिद्धयति । प्राणोऽवस्थान्तरप्राप्तो वायुः । महाभूतानीवाऽयमपि । जीवस्योपकरणत्वेन स मतः । देहेन्द्रियाणां विधारणं प्राणस्यासाधारणं कार्यम् । अणु

परिमाणः सः। वस्तुतो जाग्रतजीवस्य वैराग्यनिमित्तेन संसारगति र्मतास्ति। सृष्टि र्भावपदार्थाद्भवति। इन्द्रियाणि च तत्वत्वेन मतानि। जीवेन सह तेषां स्वस्वामिभावसम्बन्धः। विषयग्रहणं तत्कार्यम्। सन्ति तान्येकादश। स्थूलदेहे यदुष्णत्व तत्सूक्ष्मशरीरस्य धर्मः।

निम्बार्कमतानुयायिषु मनीषिसु श्रीनिवासाचार्य-केशवभट्ट-पुरुषोत्तमाचार्यदेवाचार्य-माधवमुकुन्दाः सुविदिताः महान्तः पण्डिता बभूवुः। श्रीनिवासाचार्यः पारिजातसौरभे वेदान्त कौस्तुभं नाम विस्तृतां व्याख्याञ्चकार। केशवभट्टो विशिष्टो ग्रन्थकारः। सः कौस्तुभप्रभां, तत्वप्रकाशिकां, तत्वप्रकाशितवेदस्तुतिं, क्रमदीपिकां च लिलेख। श्री पुरुषोत्तमाचार्यो वेदान्तरत्नमञ्जूषां, श्रुत्यन्तसुरद्रुम मररचत्। देवाचार्यः सिद्धान्तजाह्नवीं कृतवान्। माधवमुकुन्दः परपक्षगिरिवज्रं रचितवान्।

भारतीयदार्शनिके संसारे भेदाभेद (द्वैताद्वैत) सिद्धान्तः प्राचीनतरः। शङ्कराचार्यात् प्रागेव न, बादरायणादपि प्रत्नतर इत्येतस्य मतस्य पोषका आचार्या अविद्यन्त। बादरायणात् प्राक् आचार्य औडुलोमिः, आश्मरथ्यश्च भेदाभेदवादिनावास्ताम्। श्रुतिप्रकाशिकाकारस्य कथनेन प्रतीयते यद् आश्मरथ्यस्य भेदाभेदसिद्धान्तं यादवप्रकाशः परिगृह्यापूपुषत्। श्रीनिवासचार्यमतेन काशकृत्स्नोऽपि भेदाभेदवाद्यासीत्। वेदान्ताचार्येषु भर्तृप्रपञ्चो भेदाभेदसिद्धान्त मादि्रयते स्म। भास्कर-यादवा वपि भेदाभेदवादिनौ बभूवतुः। आचार्य निम्बार्को लुप्तं भेदाभेदसिद्धान्तं तस्य गौरवञ्च प्रतिष्ठापयामास। भास्कर यादवप्रभृतिप्रधीसिद्धान्ता लुप्ततां गताः परं निम्वार्काचार्यस्य सम्प्रदायो भक्तिभावं प्रचारयन् सम्प्रत्यपि विपुलभक्तजनानामादर पात्रं वर्तते।

आचार्य निम्बार्कः स्वप्रदेशवासभुवं परित्यज्य वृन्दावन मागम्य वैष्णवमतं व्यातनोत्। राधाकृष्णोपासकः स बभूव।

आचार्य निम्बार्क इह स्वकीयं
ज्योति र्भृशं यद् भरतक्षमायां
तेने तदद्यापि नितान्त मिन्द्धे
ऽतो भारतीयाः प्रति तं कृतज्ञाः



# चाणक्यः

उत्तर भारते 'रावलपिण्डी' इत्येतन्नामधेयेन नगरेण उदीचीं, पुरा 'तक्षशिला' इत्येतदारव्यं परमसुन्दर नगरम् आसीत् । यस्मिन् भूभागे तन्नगरं स्थित मस्ति सः प्राचीने ऽनेहसि तु गान्धारदेशान्तर्गतोऽवर्तत । तक्षशिलानगराद् वहि रासीदेका पर्णशाला । तस्य कालस्य गतस्य पञ्चशताधिकद्विसहस्रवर्षाणि व्यतीतानि, यदा तमुटज मध्युवास विद्वान् ब्राह्मणः । सः चतुर्ष्वपि वेदेषु विपश्चित् नीतिशास्त्रे चासीत्पण्डितोमन्त्रविद्यायाश्च ज्ञाता । एतावदेव न, सः तेजस्वी महीदेवः शस्त्र-विद्यायाञ्च कृत्स्नतयाभिज्ञतां निदधौ । वस्तुतः सः प्राचीनतरस्य कालस्य ब्राह्मणानां जीवच्चित्रमासीत् ।

स महान् ब्राह्मणः कुटिल कुलोद्भव आचार्यञ्चणकस्यासीत् तनूजः । स विष्णुगुप्त' इत्येतयाभिरव्यया ऽऽहूतो बभूव । आसीत् स मातृभक्तः । मातुः सेवायां सः सर्वमपि किम्, आत्मानमपि विसस्मार । सोत्साहं भक्त्या मातरं सेवमानोऽपि स जगत्पालन–पोषणकरं परमेश्वरं ध्यायन् सर्वा अपि चिन्ताश्च विस्मृत्य तत्प्रार्थनायां दत्तचित्त एव प्राप्यत । गच्छता कालेन तदीया मातोपरेमे । सः शास्त्रेषु स्वसमयं योजयितुं संलग्नो जातः । ऐच्छच्चाध्यापनम् । परं देशे भूयःसु भागेषु विजेतुः सिकन्दर स्य तेजो विततमदृश्यत । तस्मात् कारणात् सर्वेऽपि जनाः यूनानीयां ( यवनानीम् ) भाषां पठितु मारेभिरे । को हि जनः संस्कृतमधीयीत ?

विद्या धनञ्च न प्रायेण युगपदवतिष्ठेते । विद्वांसो धनवन्तः कुतः प्राप्यन्ते । न विदुषां सकाशे लक्ष्मीः प्रयाति चाणक्योऽपि नास्यापवाद आसीत् । स निर्धन तायामेवाजायत, निर्धनतायामेवाजीवत् । सः सदैव 'केन प्रकारेण मातृभूमिः पराधीनतातो मुक्ता स्यादि' त्येतदेवाचिन्तयत् । अस्ति किमीदृशं शक्तिसमृद्धं राज्यं, यन् मातृभुवं स्वतन्त्रां कर्तुं मर्हेत; देशञ्चैकच्छत्रराज्यं कर्तुं शक्नुयात् । मगधराज्यमेव तदा महतीं शक्तिं निदधत् स ददर्श; अतः स्वपत्रपुस्तकानि मित्रस्य सविधे निधाय मगधान् प्रतस्थे ।

दुस्तराः सरितो, दुरारोहान् शिलोच्चयान्, दुर्गमानि काननानि चातिक्रमन् विद्वान् चाणक्यो रहसि स्थितामेकां पर्णकुटीं विलोकयामास । तमस्विन्यां स्वद्वारे स्थितं विप्रमेकं वीक्ष्य गृहस्वामी तच्चरणयोः पपात; सादरं च तं पर्णशालाया अभ्यन्तरे

आहरत् । तस्य यथोचित मातिथ्यं विधाय सप्रेम च तं भोजयामास; शयनाय च ततः समुचित व्यवस्थां व्यदधात् । प्रभाते पूजा-पाठादि नित्यकर्मभ्यो यदाऽतिथिर्निवृत्तो ऽभवत्, जातश्च गृहीत स्वल्पाहारस्तदा सः ( अतिथिः ) गृह-स्वामिनं 'कस्मात् स विजनं वन मधिवसतीति पप्रच्छ । गृहस्थो ऽभवदश्रुपरिपूर्णनयनो यथाकथञ्चिदात्मान माश्वास्य अवोचत् 'महाराज ! मम दुःखानां कथास्ति द्राधीयसी; अस्म्यहं वणिक्; तक्षशिलातो नातिदूरे उत्तरस्यां दिश्यस्ति मम ग्रामः । विदितचरमेवेदं भवतो यत् यस्य समयस्य गतस्य नाधिकः समयो जातो यदा यूनानीयसम्राट् सिकन्दरोऽस्मद्देशमाक्रम्य तं सर्वथैव अनाशयत् । केकयदेशाधिपतिपुरुद्वेषी तक्षशिलाधीश आम्भी पुरुमवज्ञातुं तमभिभवितुं पराजेतुं च सिकन्दरेण सह मैत्रीं कृतवान् । देशद्रोही सिकन्दरं प्रत्युदगमत् ससमारोहं च तं स्वराजभवन मानिनाय । यवनसैनिकान् प्रति स्वसेवार्पणं गान्धारराज्यस्य निवासिनां कर्त्तव्य मस्तीत्येतदादेश-पत्रं च प्रसारयामास । ततस्तु यवन सेनया यदृच्छया अत्याचाराः कृताः । तया जनताया सर्वाः अपि धनसम्पन्मानप्रतिष्ठा धूलिसात्कृताः । तथा ग्रामा दग्धाः युवतयो हृताः कृताश्च तास्वनाचाराः । किं ब्रवीमि सिकन्दरस्य कठोरान् अत्याचारान्; येन केनापि प्रकारेण इहागम्य स्वजीवनरक्षा कृता-इत्येतदभिधाय स गृहस्थः भृशं रोदितु मारभत ।

तत्सर्वं निशम्य देशभक्तः स्वसंरम्भं नावरीतुं शशाक; स उच्चैः गर्जन् निजगाद—'बन्धो, भव शान्तः; अहमद्य प्रतिजानामि, यावदहं सिकन्दरकृतापमानं न प्रतियातयिष्यामि न तावत् सुखेन स्थास्यामि । एतदर्थं समग्रमपि देशमहं स्वकीय मैक्यसूत्रेण निबद्धं विधास्यामि; तथा यतिष्ये येन सर्वेऽपि भारतीयाः पारस्परिकं वैरं द्वेषञ्च विस्मृत्य अन्योऽन्यस्य दुःखे सुखे च साहचर्यं कर्तुं मर्हेयुः । इत्थं गृहस्थं तं सान्त्वयित्वा सोऽतिथिः ( चाणक्यः ) ततः प्रतस्थे ।

चाणक्यः केकयदेशस्य राजधानीं राजगृह माययौ । इह कैकयदेशस्य पराजयं सिकन्दरस्य च विजयं श्रुत्वा सः शोकसागरे निममज्ज । स्वदेशस्य सा शोचनीया स्थिति स्तमतितरामपीडयत् । केन प्रकारेण ममदेशो भवेद् विश्वविजेता—इत्येतां मनसि निधाय तस्माद् राज्याद् अग्रे चचाल । सः कठवीराणां राजधानीं सांकल मागच्छत् । स नगरीं भस्मीभूतां ददर्श । भूयांसः पौरास्तत्रत्याः व्यापादिता भूयांसश्च प्राणान् स्वकीयान् पातुं ततः पलायिताः । नैकोऽपि पुरुषो वा नैकापि नारी प्राप्ता यतोहि सः कठजातेर्वृत्तं ज्ञातुं शक्नुयात् ।

यदाहि सिकन्दरस्य विशालाः सेनाः केकयान् विजित्य पुरः प्रचेलुः, कठजातेरेकैको बालकोऽपि जीवनाशां विहाय शत्रूपरि आरुरोह; प्रथमं तु सा वरूथिन्यप्यरातेः उद्विग्ना भवन्ती रणाजिरे स्थातुं न प्राभवत् परं पुनः आत्मानं

स्थिरीकृत्य शक्तिमती चमूः शत्रोः कठवीरान् हन्तुं प्रचक्रमे । वीरा हसन्तो हसन्तः स्वदेशाय स्व स्व जीवनमजुहवुः । यूनां बलिदानानन्तरं वीरबालाः अपि रणचण्ड्यो भूत्वा शत्रु-सेनामर्दयितुं श्येनो विहगेष्विव, न्यपप्तन् । ताः मातृभूमे रक्षार्थं युयुधिरे अन्ततश्च वीरगतिं लेभिरे । शत्रुणा एकैकं सदन मग्निसात्कृतम् । प्रज्वलतां गृहाणा-मुत्थितासु भीषणज्वालासु शिशवो बालाश्च प्राणांस्तत्यजुः ।

कठजातेः वीरतां मुहुर्मुहुः प्रशंसंश्चाणक्यो मगध-राजधानीं पाटलिपुत्रं प्रतस्थे । अध्वनि जनेषु देश-प्रेम बीजं वपन् सः स्वप्राप्तव्यस्थान मुपेयिवान् ।

पाटलिपुत्र मागम्य अविलम्ब्यैव राजानं द्रष्टुमियाय । नृपमाशीर्भिः संवर्द्ध्य उत्तम मासनमध्यास्त । 'कुतः स आगत' इति नृपतिश्चाणक्य मप्राक्षीत् । 'राजन् ! अहं तक्षशिलानिवासी अस्मि । यदाप्रभृत्येव तत्र यवनानां ( यूनानिनाम् ) राज्यं जातम्, आर्य संस्कृतिः सभ्यता च विनाशितास्ति । नाहं स्व मातृभूमे स्तां दुर्दशां सोदुमशकम् । अहं ततो भारत मेकीकर्तुं वैदेशिकेभ्यश्च तदुद्धर्तुं कृतप्रतिज्ञः सन् निर्गतोऽस्मि' इति सः (चाणक्यः ) अब्रवीत् । राजसभायाः राजपण्डितः प्रतिभात्ययं ब्राह्मणो महान् विद्वांस्तेजस्वी; सत्यस्मिन् इह, अस्माकं स्थितिश्चिरं न सम्भवेत्येतद्-विमृश्य, राजानं न्यवेदयत्–ब्राह्मणोऽयं तस्मादराज्यादागतो यत्र यवन शासनमस्ति; शत्रोर्गुप्तचरोऽपि भवितु मर्हति अयम्; परीक्षणमतः प्रथममपेक्ष्यते । राजपण्डितोक्ते वचसि, विना विचारमेव, विश्वस्य राजा नन्दस्तमुवाच—'भवान् किमपि प्रमाणं प्रस्तवीतु येन भवदीयकथने विश्वासः कृतः स्यादि'ति आकर्ण्यैतच्चाणक्यः संरम्भमुपेतः। अपमानस्यैतस्य यावत् प्रतियातना न कृता स्यात् तावन्नाहं शान्त्या स्थास्यामि; नन्दकुलोत्सादनं कृत्वैव मम चेतः शान्तिं लभेत' इत्येतन्मनसि निश्चित्य स राजसभातः सभ्रूभङ्गं निरगमत् ।

कश्चन ग्रामं निकषा क्रीडत्सु पृथुकेषु एकतमं स तेजस्विनं विवेकिनं च वीक्ष्य, तं सः सवात्सल्यं कथितवान्—'वत्स, त्वं मां स्वपितुः सविधे नय ।' बालक स्तं स्वपितुः सकाशे आनिनाय । चाणक्य स्तत्पितरमभ्यदधात्–'बालोऽयमस्ति बुद्धिमान् भाग्यवांश्च। अहं शस्त्र विद्यायामिमं कुशलं कर्तुं मिच्छामि नूनमेष वालो देशम्प्रति परमकल्याणकृत् सिद्ध्येत् । अतः शास्त्रे शस्त्रे च बालमेनं चेद्भवानिच्छति परमप्रवीणं तदा मम शिष्यतायां निदधातु इमम्' चाणक्यस्य वच इवं श्रुत्वा सोऽभणत्–'महाराज, नायं मम बालः । अस्त्ययं मौर्यवंशोद्भवो बालः । यदाप्रभृत्येव मगधेश्वरेण राज्यमेतज्जितं तदाप्रभृत्येव तत्रत्या राज्ञी स्वविपद्दिनानि उषित्वेह यापयति । तां पृष्ट्वैव किमपि वक्तुं प्रभवेयम्' । निवेद्यैतत् स राज्ञीं सर्वमपि वृत्त मजिज्ञपत ) राज्ञी सहर्ष मनुमतिं स्वकीयां प्राददात् किञ्च सा स्वबालं समर्पयन्ती 'बालोऽयं युवा भूत्वा स्वपितृहन्तारं

हत्वा निजवंशमुज्ज्वलं विदधीत' इत्येतच्च नैजं मनोऽभिलषित मभिव्यक्तीचकार। राज्ञ्यास्तां महत्त्वाकाङ्क्षां ज्ञात्वा चाणक्यः प्रासीदत् । सः स्वहस्तमुद्यम्य 'अहन्तु नन्दवंशनाशाय अतः प्रागेव प्रत्याश्रौषम् । इदन्तु राज्ञ्या मम मनोऽनुकूलमेवाम्नातम्'। अभिधायैतत् स चन्द्रगुप्तेन बालेन सह विन्ध्यपर्वतस्य निविडं कान्तार मयासीत् ।

चाणक्यो विन्ध्याचलस्योपत्यकायां सुन्दरमाश्रमं प्रातिष्ठिपत् ' तत्र सः चन्द्रगुप्तं क्षत्रियधर्मशिक्षायां पूर्णतया पारदृश्वान मकार्षीत् । तस्मिन् आश्रमे शिक्षां प्रददत स्तस्य यशः सर्वत्र प्रससार। शतशो ब्राह्मण-क्षत्रिय-वैश्यादिकुल सम्भवास्तस्मिनाश्रमे शिक्षां ग्रहीतु मारेभिरे।

विष्णुगुप्तचाणक्यस्य जन्म तु कस्यचन महतो महनीयस्य कार्यस्यानुष्ठानाय जातमतः आश्वेव सः चन्द्रगुप्तं वीरं योद्धारं चकार; तत्सहायतार्थञ्च सेनापि स्वबुद्धिकौशलेन कठिनपरिश्रमेण लोकप्रियतया च शीघ्रमेव समायोजिता। एतावदेव न तेनकृतमासीत् स धनमपि प्रभूतं सञ्चिकाय । चन्द्रगुप्तं शक्तिशालिनं दृष्ट्वा चारिन्दमं शत्रुपराभवक्षमम् साधनसम्पन्नं स तं शत्रुणा सह योद्धुं प्रेरयामास । तस्य भयङ्करं युद्धं राज्ञा धनानन्देन सह प्रावर्तत। चाणक्यनिर्दिष्ट पथमवलम्ब्य स वलीयसारिणापि सह निर्भयोभवन् साहसोत्साहपूर्वकं युयुधे । यद्यपि मगधराज्यस्य प्रधानमन्त्री राक्षसो महान् राजनीतिपण्डितः प्रतिभावान् राजभक्तो विज्ञ-शिरोमणि रासीत् परं चाणक्यस्तु ततोऽपिराजनीत्यां प्रतिभायां विद्वत्तायञ्च गुरुतर आसीत् । चाणक्यः स्वबुद्धिकौशलेन,राजनीतिविचक्षणतया च राक्षसस्य सर्वाअपि युक्तीः शक्तीश्च उच्छिद्य, स्वकीयान् गुप्तचरान् सर्वत्र प्रतिपदं प्रसार्य चन्द्रगुप्तद्वारेण शत्रुं नन्दकुलं समूल मुन्मूलयाञ्चकार ।

यवन सम्राजि सिकन्दरे सत्युपरते, तद्राज्यं बहुषु भागेषु विभक्तं बभूव। भारतीय सीमाप्रान्ते सेल्यूकसोऽधिपतित्वं प्राप। यदा सः पाटलिपुत्रे प्रवर्तमानं युद्धं शुश्राव; स तस्माद्द्वैधीभावात् स्वहितसाधनाभिलाषेण स्वकीयं प्रणिधिं राक्षसस्य सकाशे प्रेषयामास। स तस्यसमीपे आगम्योवाच–'भवान् सेल्यूकसस्य सहायता मादाय चन्द्रगुप्तं पराजयतां, कुरुताञ्च मगधराज्योपरि स्वाधिकारम् । इत्थं भवान् नन्द-व्यापादनं प्रतियातयतु'। महामन्त्री राक्षसो भूत्वा गम्भीरोऽब्रवीत्—'अयिदूत, शृणु, अहमवश्यं चन्द्रगुप्तं चाणक्यञ्च विनाशयितुकामोऽस्मि। परमिदं सर्वमहं स्वकौयबलेनैव विधास्यामि। नाहं मातृभूमिं प्रति द्रोहं करिष्यामि। न प्रतियातनानिमित्तेन स्वकीयं देशं वैदेशिक-शक्त्यधीनमनुष्ठास्यामि'। दूतोनिराशो भूत्वा निववृते।

अर्थशास्त्रे नीतिशास्त्रे च महान् पण्डितश्चाणक्यो नोन्मादमाश्रित्य कदापि स्थितोऽदृश्यत। सः सर्वमपि घटित मुदन्तमवेदीत् स्वकीयेभ्यो गुप्तचरेभ्यः । महा-

मन्त्रिणं राक्षसं परमार्थतो देशभक्तं प्राप । तद्देश-प्रेम चाणक्यस्य नयने अश्रुपरिपूर्णे चकार । स राक्षसस्य प्रतिभां राजनीतिज्ञतां तु प्रथममेव कृत्स्नतया अवेदीत् । सः पलमप्येकं न हस्तात् स्रंसयन् भिक्षुब्राह्मण इव तद्द्वारे आगत्य 'भिक्षां देहि' इत्यवदत् । राक्षसस्तस्यातिथ्यं विधाय 'सूचनीया कापिसेवे' त्यगदत् । राक्षसस्य तद्वच आकर्ण्य सोऽतिथिः ( चाणक्यः ) भवान् मम मनोरथं सफलीकरिष्यतीत्येतत् । श्रुत्वै-तन्महामन्त्री राक्षसश्चिन्तां प्रापद्यत; स आचख्यौ–'अपि भवांश्चाणक्यस्तु न'? चाणक्यो-ऽचकथत् 'अहं चाणक्य एव' । भवद्द्वारे भिक्षाप्राप्त्यर्थमुपेतोऽस्मि' । महाराज, नाहमुपहसनीयः, अस्म्यहमयोग्यः । चाणक्यो जगाद—'महामन्त्रिन्, अद्यास्माकं देशः पारस्परिक-वैर-विरोधहेतोः वैदेशिकानां कवलतां गतोऽस्ति । अस्मदीयोधर्मः सम्प्रति विपन्निमग्नोऽस्ति; मर्यादा चास्मदीया सङ्कटे निपतितास्ति, अस्मदीया संस्कृतिश्च कृशतां वहति । एतादृशे विषमे समये भवादृशो देशभक्तो मातृमेदिन्या अपेक्ष्यते । राज्यस्य शासनसूत्र मनुगृह्णातु, देशञ्च पुनः ऐक्येन निबघ्नातु, मातृभूमितो वैदेशिकान् निर्गमयतु च येन वसिष्ठ-याज्ञवल्क्यादिमहर्षीणां राम-कृष्णादिकानां च सन्ततयो न द्वारे द्वारे अपमानभाजो भवेयुः' । राक्षसोऽब्रूत 'न भवान् व्रणेलवणं क्षिपतु; अहन्त्वस्मि पराभूतः सैनिकः' । चाणक्योऽभिदधौ–'यज्जातं तज्जातं; न शोचतु तत्, यस्य प्राप्तिरसम्भवा, मातृभूमिरक्षणात् परं न किमपि गरीयः कार्यम् । जन्मभूमि-रक्षायां स्व प्रतिरोम्ण उपयोग महं नैजं परमसौभाग्यं मन्ये । राक्षसश्चाणक्यस्य तत् सर्वमपि कथनं सम्यग् विचार्य तद्वचनं सादर माद्दृत्य तदेव चक्रे यदसावियेष ।

महामनसा चाणक्येन सत्वरमेव स महामतिमान् राजनीतिविदां वरेण्यो विद्वान् राक्षसश्चन्द्रगुप्तस्य महामन्त्रित्वपदेप्रतिष्ठापितः सकलश्चराज्यभारस्तस्मै समर्पितः ।

राक्षस चाणक्यावुभावपि शीघ्रमेव सकलमपि राष्ट्रं सबल मैक्यनिबद्धं कृतवन्तौ । चन्द्रगुप्तेन यद्यपि स्वतेजः सर्वत्र प्रसारितमासीत् परं यवनसम्राट् सेल्यूकस स्तत्र कठोरं वैरं बबन्ध । स योद्धुमुद्यतो बभूव । चन्द्रगुप्तो फिलिप्सं परिप्लसं च शयानमेव व्यापादयामास; सः समग्रामपि यवन-सेनां कृत्स्नतया निषूदयामास । 'मातृभूमिर्जयतु; सम्राट् चन्द्रगुप्तो जयतु' इत्येतैरुद्घोषै गगनमगुञ्ज्यत । अन्ततोगत्वा यवनसम्राट् सेल्यूकसः सन्ध्यर्थं बाधितोऽभूत् । यथाविधि सन्धिः संवृत्तः । सेल्यूकसः स्वतनयां हेलेनां च सम्राजा चन्द्रगुप्तेन सह विबाहितां चकार । भारतस्य यशोदिशि दिशि विततं बभूव । प्रत्याश्रुतं सर्वं परिपूर्णतां गतमिति दृष्ट्वा चाणक्यः पुनः तक्षशिलां यातु मुद्यतोऽभवत् । चन्द्रगुप्तसम्राजा बहु प्रार्थितोऽपि न सः पाटलिपुत्रमधितस्थौ । स त्यागी महर्षिश्चाणक्यो विद्या-प्रकाशं देशे प्रसारयन् स्वकीयानि दिनानि पर्णशाला-यामेवोषित्वा निनाय ।

आचार्य चाणक्यः शस्त्रेषु शास्त्रेषु तु पारदृश्वासीदेव परं महान् अद्वितीयो देशभक्तो राजनीतिज्ञश्चासीत् । तद्रचितं कौटिल्यार्थशास्त्रं जगद्विदित मस्ति । अस्ति स ग्रन्थोऽनुपमः । अद्यापि न तद्विधो ग्रन्थोऽन्योभुवि दृश्यते ।

कौटिल्यनीकाश इह क्व कोऽन्यः कर्तार्थशास्त्रस्य हि विश्रुतस्य ।
शस्त्रेषु शास्त्रेषु च लब्धवर्णो राष्ट्रप्रियोऽभूदथ राजनीत्याम् ॥



# आर्यभटः

इमां महर्षीणां भारतवसुमतीं यस्मिन् काले नालन्दा विश्वविद्यालयो विभूषयाञ्चकार तस्य कालस्य गतस्य पञ्चदशशतवर्षाण्यतिक्रान्तानि। अस्यैव विश्वविद्यालयस्य आर्यभटः कुलपति रासीत्।

कुलपति राचार्य आर्यभटो विश्वविद्यालयस्य वेधशालायां कदापि; कदापि च कुसुमपुरं निकषा विद्यमानायां विशालायां वेधशालायां खगोलशास्त्रीयगणनायां निलीन एव जगता व्यलोकि। सा हि वेधशाला यत्स्थान मलञ्चकार तस्य स्थानस्य नामैव खगोल इत्येतत् सर्वत्र प्रथितमभवत्।

आर्यभटस्य जनुः स्थान मधिकृत्य विद्वांसः शोधकर्तारः सन्ति नैकमताः। 'कुसुमपुरेऽभ्यर्जितं ज्ञानम्.... ' इत्येतदादिकमार्यभटीयगणितपदस्थं श्लोकमाधारीकृत्य तदीयं जन्मस्थानं पाटलिपुत्रस्याभ्याशेऽवस्थितं कुसुमपुरं ते मन्यन्ते। परं तदितरे तु तज्जन्मावनिः केरल प्रदेश इति शंसन्ति। आर्यभटोऽश्मकपदाभिधानस्य स्थान स्यासीन्निवासीत्येतन्नीलकण्ठः स्वभाष्येऽभिदधाति। आप्टेकृतसंस्कृतांग्रेजीशब्दकोशानुसारेण अश्मकपदं दक्षिणभारते विद्यते। मलयालम भाषायां 'कोट्टम' पदस्य कठोरार्थकत्वात् 'कल्लु' पदस्य च पाषाणार्थत्वात् किञ्च ऊरु पदस्य स्थानार्थत्वाद् आर्यभटस्य जन्मभूमिः कोटुमकल्लूरनगरमासीदिति वदन्ति वहवः प्रधीप्रवराः।

चिरादार्यभटस्य शोधकार्यं केरलेषु नितरां प्रियतां गत मस्ति। तस्य (आर्यभटस्य) सर्वेऽपि समीक्षकाः केरलप्रदेशस्यैव सन्ति। तत्र (केरलेषु) भटाख्याः ब्राह्मणा अपि राजन्ते। आर्यसिद्धान्तमाश्रित्य निर्मितं तिथिपत्र मद्यापि केरलवासिन उपयुञ्जन्ति। आर्यभटः कालीवर्षमुल्लिखन् दृश्यते, केरलवासिनोऽपि तदेवानुहरन्ति। इदं हि सर्वं तस्य (आर्यभटस्य) केरलाधिवासित्वं साधयति। आर्यभटो यत्र स्थितः खं मण्डल वर्तिनो ग्रहान् अधिजगे तत् स्थानं कुसुमपुरम् अशोभत केरलेष्वित्युपरिनिर्दिष्टप्रमाणेन सिद्ध्यति।

कुसुमपुरमधिवसन् आर्यभट आर्यभटीयं लिलेख; स आमनति—

'ब्रह्मकुशशशिबुधभृगुरविकुजगुरुकोणभगणान्नमस्कृत्य।
आर्यभटस्त्विह निगदति कुसुमपुरेऽभ्यर्चितं ज्ञानम्॥

तत्कालवर्तिखगोलशास्त्रीयज्ञानाधारे पञ्चसिद्धान्तो हि स यत्र पैतामहसौर-वसिष्ठ-रोमक-पौलिशानुसारेण क्रियमाणा गणना न शुद्धासिद्धचदतः स्थितिश्चिन्त-नीयतां गतासीत्; खगोलशास्त्राधारेणाभिहितानां वचनाना परिहासास्पदतां वीक्ष्य आचार्य आर्यभटो नवान्युपकरणानि नवान् विधीन् नवाश्च गणनाः आविश्चकार ।

आचार्य आर्यभटो हि विरोधिनां मतानि प्रत्याख्याय समलभत प्रशंसनीयां विजयश्रियम् । श्रीसेन-विष्णुचन्द्रप्रभृतयो न तत्पुरः सफलतामधिजग्मुः । तद्यशः सर्वत्र प्रससार—

सिद्धान्तपञ्चक विधावपि दृग्विरुद्ध मौढ्योपराग मुखखेचर चारक्लृप्तौ ।
सूर्यः स्वयं कुसुमपुर्यभवत् कलौ तु भूगोलवित् कुलप आर्यभटाभिधानः ।।

'पृथ्वी ब्रह्माण्डकेन्द्रास्ति स्थिरा, ग्रह-नक्षत्राणि तस्या विदधति प्रदक्षिणाम्' इत्येतां मान्यताम् आर्यभटः प्रत्याचख्यौ । पृथिवी स्वधुरि परिभ्रमति, सूर्यादिनक्षत्राणि च सन्ति स्थिराणि अन्तरिक्षे इत्येतत् सः सप्रमाणं प्रतिपादयामास ।

'षष्ठ्यब्दानां षष्टिर्यदा व्यतीतास्त्रयश्च युगपादाः ।
त्र्यधिका विंशतिरब्दास्तदेह मम जन्मनोऽतीताः' ।।

इत्येतेन तदीयेन श्लोकेन तस्य ४७६ तमेशवीयाब्दे जन्म जात मिति ज्ञायते । भास्करो ग्रहाश्विनीकुमाररसेशवीयाब्दे वर्तमान आर्यभटीये टीकां लिलेख । स आर्यभटीयम् आश्मकतन्त्रम्, आश्मकीयं वेति वदति आर्यभटञ्च सः अश्मकनाम्ना-ह्वयति । नीलकण्ठस्तस्य जन्म अश्मक जनपदे जात मिति मन्यते । अश्मका ज्योतिः शास्त्रे सुविदिता बभूवुः । आर्यभटस्य कासीन्माता कश्च पिता; क्व सः शिक्षामवाप्नो-दित्येतदादिकं सम्प्रत्यप्यविदितमेव । आर्यभटस्यशिष्येषु पाण्डुरङ्गस्वामी, लाटदेवो, निश्शङ्कुश्च बभूवु रिति भास्करो ब्रवीति । लाटदेवोऽभवत् परमप्रसिद्धः । वराह-मिहिरश्रीपतिकथनेन सः पुस्तकद्वयमररचत् इति विदितं भवति । आर्यभटीये प्रथमेऽध्याये महनीयाः परिभाषाः, सारण्यश्च वर्तन्ते, द्वितीयोऽध्यायो गणितपरकः । तृतीयोऽध्यायः समयस्य विभिन्न मेककत्वं, सूर्यशशि प्रभृतिग्रहस्थितिं निरूपयति । चतुर्थो ग्रहगतिं प्रतिपादयति ।

ईश्वराख्याशक्तिः सृष्टिं कृतवतीत्यत्र नार्यभटः स्वकीयामास्थां दर्शयति । तद्विचारेण समयोऽस्त्यनादिः; अनन्तश्च । युगकल्पसत्ता न कामपि भौतिकीं घटनां संश्रयति । तत्सर्वं खगोलशास्त्रीयघटनाधारकम् । कालमधिकृत्य यन्मतं प्रचलित मस्ति न तत्र सः (आर्यभटः) श्रद्धत्ते । सः सरलं वैज्ञानिकं विधिं प्रादीदृशत् । युगं स

लघुलघु युगेषु विभजन् दृश्यते । युगस्य प्रथमोऽर्धं 'उत्सर्पिणी', द्वितीयोऽर्धोऽपसर्पिणी, मध्ये सुषमा किञ्चादावन्ते च दुशशमा इत्येतदादिकानि नामानि कृतवान् सः ।

भारतस्य सम्मानं जगति प्रतिष्ठापयितुं तस्य गरिमाणञ्चोत्थापयितुं बंगलौरात् प्रतीच्यां दिशायां पीर्नियास्थकुटीरेषु ११. ६. १६७२ तमेशवीयदिनाङ्के गणेश चतुर्थ्यां केचन विज्ञानविदो युवान आर्यभट नामकमुपग्रहं निर्मातुं प्रत्याश्रुतवन्तः । तदर्थं सर्वमपि श्रमसाध्यं कर्मानुष्ठातुं प्रयत्नः कठोरोऽपेक्षितश्च प्रारब्धोऽभवत् । सर्वं विधतया परीक्ष्य चोपग्रहं, १९. ४. १६७५ तमेशवीयाब्दे भारतीयमितिहासमाह्लादयन् आर्यभटसंज्ञक उपग्रहो नभः स्वकीयेन गौरवमयेनास्तित्वेन व्यभूषयत् ।

कार्यमिदं महनीयं विधाय भारतभक्ता वैज्ञानिकाः स्वदेशस्य सेवायां स्वकीयां भक्तिभावविभावितामुपश्लोकनीयां भावनां सक्रियां कृत्वा सादरं समर्पयन्ति स्म ।

खगोलविद्याविदुषां महोद्भटः
ग्रहप्रवीणार्यभटो बभूव यः
जगत्प्रसिद्धो मतिमानवातरत्
स भारतश्रीः शतके हि पञ्चमे ॥



# सायणाचार्यः

भारतीय धर्मस्य ज्ञानार्थं वेदा अपेक्ष्यन्ते । वेदानां बोधो वेदभाष्येभ्यो भवति । वेदभाष्येषु आचार्य सायणस्य भाष्यमग्रियम् । सायणाचार्यो विजयनगराधीशमहाराज बुक्करायस्य अमात्यः सेनानीश्च बभूव । तस्य कालश्चतुः षष्ठ्यधिकत्रयोदशत-मेशत्रीयाब्दतःसप्ताशीत्यधिकत्रयोदशेशत्रीयाब्दंयावत्; स महाराजवुक्करायस्य-हरिहरस्यद्वितीयस्य च प्रधानमन्त्रित्वासनमलञ्चकार । मन्त्रित्वानेहसि स आत्मानं वेदभाष्यरचनायामपि प्रवर्तयामास । वेदभाष्यं कर्तुं तदीयो ज्येष्ठभ्राता माधवो ऽनूनुदत् तम् । तत्कृतभाष्यं सहकृत्य वैदिकभाषा-सुदृढदुर्गे प्रवेशो भवितुं शक्यः; धर्मं जिज्ञासामानानां कृते या हि श्रुतिः प्रमाणं तामवगन्तुं तद्भाष्यमेव प्रमुखं साधनम् । तस्य भाष्यं वेदानामर्थमवबोद्धुं यज्ञानाञ्च रहस्यं ज्ञातु मेक मात्रं पथ-प्रदर्शकम् ।

आचार्यः सायणः पञ्चस्वपि वैदिक संहितासु एकादशसु च ब्राह्मणेषु, द्वयो-रप्यारण्यकयो रुपरि पाण्डित्यपूर्णान् भाष्यग्रन्थान् निरमिमीत । तद्रचितानि वेद-भाष्याणि सर्वत्र परमादरदृष्टया दृष्टानि भवन्ति । धीमतां जगत् तद्वेदभाष्यकर्तृत्वे तु निदधात्यभिज्ञतां परं न तत् तस्य ग्रन्थान्तरप्रणेतृत्वं जानाति । वस्तुतस्तु वेदभाष्याण्येव तस्य कीर्तिं वितन्वन्ति । तान्येव तन्नाम दिग्दिगन्तरेषु प्रसार्य तं विश्ववन्दनीयतां नयन्ति । तान्येव तस्य लोकोत्तरं वैदुष्यं, व्यापकं पाण्डित्यं, विस्मयावहं सदध्यवसायं प्रकटीकर्तुं मद्याप्यतितरां प्रभविष्णूनि सन्ति, भाविनि काले च तानि तस्य यशः पताका मुद्धूनयितुं समर्थानि स्युः ।

यस्य हि प्रभात स्मरणीयस्य महाराजस्य प्रेरणया विद्वदभिनन्दितानि तद्र-चितानि वेदभाष्याणि विश्वस्य पुरतः समुपस्थितानि भवितु मार्हन् सोऽस्ति श्री बुक्करायः । महाराजो बुक्करायः संस्कृतवाङ्मये, आर्यधर्मे, आर्यसभ्यतायां संस्कृत्या-ञ्च भारतीयाया मवदातं प्रकृष्टञ्चानुरागं निदधौ । भारतगौरवस्योत्थापकः सः क्षितिपालः स्वकीयान् उच्चान् विचारान् क्रियायां परिणमयितुं हिन्दूधर्मस्यादिमानां प्राणभूतानां वेदानां पेशलं प्रामाणिकञ्च व्याख्यानमचकमत । स्वकीयां महीयसी माकाङ्क्षां प्रीणयितुं स नैज माध्यात्मिकं गुरुं राजनीतिविशारद ममात्यं माधव-मादिदेश । माधवाचार्यो वेदार्थ मर्म्मज्ञो महान् मीमांसक आसीत् । जैमिनीयन्याय-मालायाः प्रणयनं विधाय सः स्वमीमांसाभिज्ञतायाः प्रकृष्टं परिचयं प्रदत्तवान् । तस्माद् वेदार्थान् व्याख्यातुं तादृशे वेदविदामग्रेसरे तदभ्यर्थनमुचिततरं युक्ततरञ्चा-सीदेव । परं स्वकीयेऽनुजे तस्य (माधवस्य) वात्सल्यममितं बभूव । स तस्य वेदार्थ-

मर्म्मज्ञतायां नितरामेव विश्वासं निहितवान् । तदीयं पाण्डित्यं तं भृशमतूतुषत् अतः स "ममानुजः सायणोऽस्ति वेदानां महान् पण्डितः, स तद्गत गूढगूढतर रहस्येषु गम्भीरां विद्वत्तां निदधाति, तं भवान् वेद-व्याख्यायां नियुङ्क्तामिति राजानमचकथत्।

सायणाचार्यः स्वकीययौवनानेहसं कम्पण-सङ्गमयो र्मन्त्रिकार्ये निनाय। स नल्लूरं निकषा शासने प्रबन्धकार्ये चात्मानं नियोजयामास, अतः स विजयनगराधीशेन बुक्करायेण हरिहरेण च सार्धं न सान्द्रं परिचयं न च गाढ मनुरागमेव लब्धुं सदवसर मविन्दत् । विजयनगरादतिदूरे स्थितत्वाद् अवनिपालान्तराणां सान्निध्ये शासनकार्य-सम्पादने संलग्नत्वाच्च तस्य (सायणस्य) महाराजो बुक्करायस्तद्योग्यतायां विद्वत्ता-याञ्च नाभिज्ञतां प्राप्तुं शशाक । माधवाचार्यस्य तु कालः विजयनगरशासन कारिणां सान्निध्ये, तत्प्रदत्ताधिकारपदासीनतायां व्यतीतो ऽभूत् अतः श्रुत्यर्थप्रकाशनार्थं तस्मिंस्तत्प्रार्थन मुचिततर मेवासीत् । स्वबन्धो र्माधवाचार्यस्याज्ञया आचार्य सायणो वेदभाष्यं विधातु मुद्यतो बभूव । वस्तुतो बुक्करायो यदि वेदार्थान् व्याख्यातुं माधवं नानोदिष्यत्, माधवः सायणं न तत्कार्यार्थं मचोदिष्यत् तदा वेदव्याख्यैव न तादृशी प्रकाशप्रदायिनी समपत्स्यत ।

आचार्यसायणः स्वाग्रजस्यादेशेन वेदार्थव्याख्यायामात्मानं न्ययूयुजत् । एतद् विषयकं विवरणं तैत्तिरीयसंहिताभाष्योपक्रमणिकायामाप्यते—

तत्कटाक्षेण तद्रूपं दधद् बुक्कमहीपतिः
आदिशन्माधवाचार्यं वेदार्थस्य प्रकाशने
स प्राह नृपतिं "राजन्, सायणाचार्यो ममानुजः
सर्वं वेत्त्येष वेदानां व्याख्यातृत्वे नियुज्यताम्
इत्युक्तो माधवार्येण वीर बुक्क महीपतिः
अन्वशात् सायणाचार्यं वेदार्थस्य प्रकाशने
ये पूर्वोत्तर मीमांसे ते व्याख्यायातिसंग्रहात्
कृपालुः सायणाचार्यो वेदार्थं वक्तु मुद्यतः ॥

सायणकृतानि तानि भाष्याणि यानि स तस्मिंस्तस्मिन् ग्रन्थे लिलेख—

(१) तैत्तिरीय संहिता (कृष्ण यजुर्वेदीया)
(२) ऋग्वेद संहिता
(३) सामवेद संहिता
(४) काण्वसंहिता (शुक्ल यजुर्वेदीया)
(५) अथर्ववेद संहिता

तद्व्याख्यातानि ब्राह्मणानि आरण्यकानि च—

(अ) कृष्ण यजुर्वेदीयं ब्राह्मणम्—

१. तैत्तिरीयं ब्राह्मणम्

२. तैत्तिरीयम् आरण्यकम्

(आ) ऋग्वेदे ब्राह्मणग्रन्थाः—

३. ऐतरेयं ब्राह्मणम्

४. ऐतरेयम् आरण्यकम्

(इ) सामवेदीय ब्राह्मणम्—

५. ताण्ड्य (पञ्चविंशमहा) ब्राह्मणम्

६. षड्विंशब्राह्मणम्

७. सामविधान ब्राह्मणम्

८. आर्षेय ब्राह्मणम्

९. देवताध्याय ब्राह्मणम्

१०. उपनिषद् ब्राह्मणम्

११. संहितोपनिषद् ब्राह्मणम्

१२. वंश ब्राह्मणम्

(ई) शुक्ल यजुर्वेदीय ब्राह्मणम्

१३. शतपथ ब्राह्मणम्

तदेवं सायणः पञ्चसु संहितासु, एकादशसु ब्राह्मणेषु, द्वयोरारण्यकयो व्याख्यां कृतवान् । तस्य चतसृष्वपि वेदसंहितासु, चतुर्णामपि वेदानां ब्राह्मण भागेषु च व्याख्या प्राप्ता भवति । सः शुक्लयजुर्वेदस्य सामवेदस्य च सकलेष्वपि ब्राह्मणेषु भाष्यं चकार । विशालकाये शतपथब्राह्मणे च स मनोहरं व्याख्यानं प्रस्तुतीकृतवान् । ऋग्वेदस्य ब्राह्मणद्वयम् आरण्यकद्वितयञ्च प्राप्यते । ऐतरेय ब्राह्मणस्य ऐतरेयारण्यकस्याप्युपलब्धत्वात् तत्रापि स व्याख्यां विहितवान् । स आसीत् तैत्तिरीयशाखाध्यायी ब्राह्मणः अतः सः स्वकीयायाश्च शाखायाः ब्राह्मणारण्यकग्रन्थान् भाष्यभूषितान् विदधौ । तस्य कार्यमेतत् सकल मतितरां महनीयं महत्त्वमयञ्च । नाद्यपर्यन्तं कोऽप्याचार्यस्तत्तुलां मधिरूढो भवितु मशकत् ।

यागानुष्ठाने चत्वार ऋत्विजोऽपेक्ष्यन्ते—अध्वर्युः, होता, उद्गाता, ब्रह्मा च । एतेषु अध्वर्युः प्रधानत्वेन मतस्तस्य यज्ञाखिलानुष्ठानविधायकत्वात् । तत्कृते यजुर्वेदसंहितास्ति । यजुषा यज्ञस्वरूपस्य निष्पत्तिः प्रस्तूयते । तदनन्तरमेव स्तोत्रशास्त्रावयवानामृगवेदेन सामवेदेन च पूर्ति विधीयते । तस्मात्तस्योपकारित्वात् तद्व्याख्यानं सर्वप्रथमं संगच्छत एव । वेदस्य ब्राह्मणाना मारण्यकानाञ्च व्याख्यानस्य तत्संहितायाः भाष्यानन्तरं प्रस्तुतीकरणेन वेदभाष्यं पूर्णतां प्रपद्यते । अतएव सायण इमां पद्धतिं स्वीचकार । अध्वर्योरनन्तरं होतुः कार्यं महत्तामयम् । तदर्थम् ऋग्वेद इष्यते ।

होतुरनन्तरम् उद्गातुः स्थानं कीर्तितम् । सायणोऽत्र सर्वत्र सम्मानं संरक्षन्नवलोक्यते । स वक्ति—

आध्वर्यवस्य यज्ञेषु प्राधान्याद् व्याकृतः पुरा ।
यजुर्वेदोऽथ हौत्रार्थं मृग्वेदो व्याकरिष्यते ॥

सायणः स्ववेदभाष्यं 'वेदार्थ प्रकाश' इति नाम्नाऽऽजुहाव । भाष्यं च स्वकीयमसौ स्वगुरवे विद्यातीर्थाय समर्पयामास । संहिताभाष्येषु कृतेषु सत्सु सोऽथर्वणो भाष्य मजग्रन्थत्—

व्याख्याय वेद त्रितयमामुष्मिकफलप्रदम् ।
ऐहिकामुष्मिकफलं चतुर्थं व्याचिकीर्षति ॥

अथर्वणि सायण एव भाष्यं विदधौ । अथर्वणो विंशतिकाण्डेषु द्वादशकाण्डा एव सम्प्रति सायणकृतभाष्यजुषः प्राप्यन्ते । तेषां प्रकाशनमपि जात मस्ति । तत्कृतं भाष्यं सम्पूर्णेऽपि अथर्वणि क्वापि वर्तते इति श्रूयते । शतपथब्राह्मणे भाष्यं तेनान्येषु भाष्येषु कृतेषु, कृतम् । न साम्प्रतं तत्कृतं सम्पूर्णमपि भाष्यं शतपथे ब्राह्मणे लभ्यते ।

इतिहासकाराणां कथनमस्ति यत् सायणाचार्यः १४२० तमवैक्रमसम्बत्सरात् १४४४ तमवैक्रमसम्बत्सरं यावत् वेदेषु भाष्याणि चकार । स तत्कार्यं चतुर्विंशतिवर्षैः समाप्तिं निनाय । सः स्वजीवनस्यान्तिमे समये तन्महनीयं गुरुतमं कार्यं व्यदधात् ।

सायणः स्वभ्रातरि माधवे महती मादरधियं निदधौ । स तस्मादेव वेदभाष्याणि कर्तुं पावनप्रेरणां प्राप अतः सः प्रह्वतया श्रद्धया च महत्या स्वबन्धुमाधवनाम्ना च कतिपयानां ग्रन्थाना मुपरि भाष्याणि व्यदधात् । सायणस्येमां बन्धुभक्तिं को न नमेत् ?

अहो विविधेषु राजकीयेषु गुरुतमेषूत्तरदायित्वपूर्णेषु कार्येषु लीनोऽपि विशालस्य राज्यस्य प्रबन्धकोऽपि भवन् अमात्य पदाधिष्ठितः सन्नपि सायणो भाष्याणि कृतवान् । एतादृग् महान् विद्वान्, राज्यव्यवस्थाविधायको महान् राज्यकार्यद्रष्टा संसारस्येतिहासेऽन्यः कोऽपि कठिनतयैव लभ्येत । धन्येयं भरतवसुमती यत्र तद्विधो विद्वान् राजनयविच्च जातः । सायणश्चतुश्चत्वारिंशदुत्तर चतुर्दशवैक्रमाब्दे उपरेमे ।

यो भाष्याणि विधाय तिग्मधिषणः पाण्डित्यविद्योतितः
वेदानां प्रकटीचकार निपुणं ह्यर्थान् समग्रान् सुधीः
लीनः सन्नपि राज्यकार्यनिवहे गम्भीरतागुम्फिते
वन्दे राष्ट्रविभूतिसौम्यमनसं तं सायणं सादरम् ॥



# वाचस्पति मिश्रः

अस्मिन् जगति भारतीया एव संस्कृतलब्धवर्णा भूयिष्ठायां संख्याया मजनिषत; ते सांसारिकेषु पदार्थेषु भवन्तोऽनासक्ता अजस्रं शास्त्रेष्वेव रमन्तेस्म। लक्ष्मी रपि न तान् विद्याव्यसनाद् भ्रंशयितुं प्राभवत्। जगतः सन्ति यावन्तः पदार्था न तावत्सु कतमोऽपि तेषां चेतसि विकारलेशमप्युत्पादयितुं क्षमोऽभवत्। न तेभ्यो वैभवानां निकुरम्बं, न सम्पदां वृन्दं, न विलासानां कदम्बकं, न चैश्वर्यमेव समृद्धं कदाप्यरोचिष्ट। सामान्य एव भोजने ते प्रीतिमदर्शयन्, स्थूल एव वाससि तेषां रुचि रवालोक्यत, उटजेऽपि तेषां मनोऽनन्दत्। निःस्पृहत्वात् ते कदापि न कस्याप्यर्थवतो वावनिषते र्वा समृद्धिमतः श्रेष्ठिनः सकाशेऽभ्राजिषुः। भगवतश्चिन्तनं, शास्त्राध्ययनं, शास्त्रप्रणयनं, सतां महात्मना माराधन मित्येतद्विधान्येव तेषां दैनिकानि कार्याण्यासन्। ते विपदि न व्यषीदन्, सम्पदि च नोदमाद्यन्त। युवानः सन्तोऽपि न तेऽसंयतेन्द्रियाः समजायन्त, अधिकारानुच्चानवाप्यापि न ते प्रामाद्यन्त। वक्रता न तान् स्प्रष्टुमपि शशाक। स्वभावस्तेषां मृदुलो हृदयञ्च तेषा मुदार मवर्तत। तेषां धिषणा तत्त्वावगाहिनी सूक्ष्मदर्शिनी, दूरगामिनी चासीत्। तान् पण्डितप्रवरानेवाधिकृत्याभिहितं केनापि—

अधिगतपरमार्थान् पण्डितान् मावमंस्थाः  
तृणमिव लघुलक्ष्मीः नैव तान् संरुणद्धि  
मदमिलितमिलिन्दश्याम गण्डस्थलानां  
न भवति विसतन्तु र्वारणं वारणानाम्॥

तेषां वचस्यनिशं सत्यमशोभत, तेषां जीवनं तपस्याया मप्रीयत, तेषां मनोऽहिंसाया मरमत; शीलं सन्ततं तान् सेवमानमेवावालोक्यत। वस्तुतस्तेषां समग्रमेव चरितमलौकिक मेव भूत्वा विबभौ। अत एव तु कोऽपि तान् अद्भुतैरेव पदै रेवं स्तवीति—

अन्या जगद्धितमयी मनसः प्रवृत्तिः  
अन्यैव कापि रचना वचनावलीनां  
लोकोत्तरा च कृति राकृतिरम्य हृद्या  
विद्यावतां सकल मेव गिरां दवीयः॥

यो हि जनस्तेषामभ्याशे उपातिष्ठन् तस्य सर्वा अपि चिन्ता विषादा ग्लानयश्च तत्काल एव तिरोहिता अभूवन्। गार्हस्थ्येऽपि ते ब्रह्मचारिण इव प्राप्यन्त। ते स्व-

कीयांश्छात्रान् सुतानिवापश्यन्, तेषां मभ्युदयं, तेषां हितं, तेषां सर्वाङ्गीण विकासं सदैव तेऽकामयन्त। तेषां पण्डितानामधीनतायां यावद् विद्यालया पाठशालाः वा विश्वविद्यालयाः अवाप्यन्त तावद्देशे सर्वत्र शान्तिः, सर्वत्रानुशासनं, सर्वत्र सन्तोषः, सर्वत्र सन्नीतिः सर्वत्र च सदाचारा व्यराजन्त। न तदा शिष्या गुरुषु तेषु अविनय माचरन्तोऽलभ्यन्त, न च गुरव एव शिष्येषु असद्भावनां विभ्राणाः प्राप्यन्त। वस्तुत स्तेषु शिक्षावित्सु सत्सु न क्वापि भयमासीत्कस्मादपि। ते जनानामज्ञानं दलयन्तः समाजं कुरीतिभ्योनिवारयन्तो राष्ट्रञ्चोन्नयन्तः समलक्ष्यन्त। धन्यो हि सः समयो यदा-स्मिन् देशे तद्विधा अस्मदीयाः पूर्वजाः आप्ताः पण्डिताः सर्वत्र भूयस्यां संख्यायां वसत्ति विदधुः। तादृशेष्वेव विद्वन्मान्येषु वाचस्पतिमिश्रनामा महान् मनीषी दार्शनिकाग्रेसरः सुधीः सञ्जातस्तस्येह चारुचरित मुद्गीय स्वलेखनी पवित्रीक्रियते।

श्रीवाचस्पति मिश्रश्चत्वारिंशदधिकाष्टशततमे वैक्रमे सम्वत्सरे मिथिलायां प्रादुर्बभूव। आसीदसौ महान् प्रतिभावान् पण्डितः। सर्वेष्वपि दर्शनेषु तस्य समान एवाधिकारोऽदृश्यत। स दर्शनेषु महत्त्वपूर्णान् विद्वज्जगदाहतान् ग्रन्थानजग्रन्थत्। स न्यायवार्तिकस्य प्रतिकूलामालोचनां बौद्धविद्वद्विहितां प्रत्याख्यातुं न्यायतात्पर्यटीकां लिलेख। तद्रचितेषु महिमशालिषु ग्रन्थेषु भामतीनामधेयो ऽस्त्येकोग्रन्थः। स ग्रन्थो वेदान्तदर्शने कृतस्य शाङ्करभाष्यस्य टीकाभूतो ग्रन्थः। टीकाया नामकरणं विद्वाँल्लेखको 'भामती' इत्येतच्चकार। इदमेव तदीयाया वल्लभाया अपि शुभं नामासीत्।

वाचस्पतिमिश्रो महान् विरक्तः प्रकाण्डदार्शनिकविपश्चिद्वरो वभूव। विवाहितः सन्नपि सः गार्हस्थ्यात्पराङ्मुख एवावालोक्यत। दिवसेऽपि निशायामपि सोऽनारतं दार्शनिकं साहित्यं स्रष्टुं प्रयत्नशीलो गम्भीरञ्च चिन्तनं विदधदवाप्यत। एकदा वाचस्पति मिश्रस्य पत्नी भामती दुःखिता भवन्ती वंशरक्षाया नामप्रतिष्ठाया-श्चापेक्षितत्वं प्रति सविनयं भर्तु र्ध्यान मावर्जयाम्बभूव। तदीयां तामाकाङ्क्षां समादधद् विद्वान् वाचस्पति मिश्रो यदचकथत् तद् विश्वसाहित्यस्यात्युच्छ्रितासु सद्भावनासु न नैज मुपमानं निदधाति। सः शशंस—

पुत्रे सत्यपि वंशवल्लरी वर्धिष्यते इत्येतत् को नाम निश्चप्रचतया वक्तुं शक्नोति? अद्यपर्यन्तं चेन्नाहं स्वपदं तद्दिशायामुपासारयं, तदा सम्प्रति कस्मादुप-सरेयम्? परमिदमवश्यं निः संशयभावेन भणितुं प्रभवेयं यदहं स्वकीयायाः सर्वश्रेष्ठा याः रचनाया नाम तदेव करिष्यामि यत् तव नाम तव सुतस्तु (चेत् सः स्यात्) निजपुत्र पौत्रपौत्रादिपर्यन्तं त्वदीयं नाम प्रथयेत्, परमिदानीन्तु तव नाम शाश्वत समयं यावदमरतां नयेत्।

वस्तुतः सुतस्य सत्पथगामित्वं न दृढबलपूर्वकं वक्तुं सुशकं, सोऽसन्मार्गगाम्यपि भवितुं शक्यो वा प्राक्तनानां संस्काराणा मप्रशस्तत्वात् स मूर्खोऽपि भवितु मर्हति । मूर्खः पुत्रः कदा स्वविद्वत्पितु र्यशो रक्षितुं वा वर्धयितुं शक्नोति ? उक्तञ्च—

अजातमृतमूर्खाणां वर माद्यौ न चान्तिमः ।
सकृद् दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥

अथ च विधे विंधानादल्पायु रपि सोऽनुमातुं शक्यः, शैशव एव वा तारुण्य एव तस्योपरतिः सम्भाव्या । अतः यो जनः स्ववंशवर्धनप्रयोजनेन किं वा स्वनामसमुन्नमननिमित्तेन पुत्रं कामयते तस्य तद्‌विधपुत्रावाप्तिपरकविंचारं को नाम मतिमान् श्लाघेत ? विवेकवतो मानवस्य तु कर्त्तव्यं यत् सः स्वबुद्धिवलरक्षणाय स्वशरीरस्य स्वस्थत्वाय, स्वपरिवारस्य कल्याणाय, स्वराष्ट्रोत्कर्षाय च विवेकपूर्वकं स्वजीवनतरी मस्मिन् संसारसागरे चालयेत् ।

वाचस्पति मिश्रं स्थविरावस्था कदाऽऽचक्राम न स इत्येतदप्यजानात् । समस्त मपि तारुण्यं ग्रन्थानां प्रणयने शास्त्राध्ययने च व्यत्यगात् । स मनीषी नूनं स्वकीयया सरस्वतीसपर्यया तत्कुलं धन्यंविदधौ यस्मिन् स उद्‌बभूव; सः स्वकीयेन तेन वैदुष्यपूर्णेन कार्येण नैजं गुरुं त्रिलोचन मपि कृतार्थीचकार, सः स्वकीयेन तेन धृतजगत्सुखनिर्वेदेन पण्डितानां जगतो गरिमाणं महिमानञ्च नितरामुच्छ्रायं प्रापयामास ।

'न हिं सांख्येन समं ज्ञानम्' इत्येतद् यस्य सांख्यस्य महिम्न्याम्नातं तस्यैव सांख्यस्य सुविदितायाः सांख्यकारिकायाः 'सांख्यतत्त्वकौमुदी' त्येतन्नामधेया या विद्वत्सभाजनीया व्याख्या तेन कृतास्ति सास्ति वस्तुतः सांख्यतत्वानां प्रकाशकत्वात् कौमुद्येव ।

योगदर्शने व्यासस्य यद् भाष्य मवाप्यते तस्य परमगूढार्थत्वादवगमन मतितरां कठिनमस्त्यतः वाचस्पति मिश्रेण तत्र तत्ववैशारदी विरचितास्ति । एषा तत्ववैशारदी 'यथा नाम तथा गुणः' इत्येतां भणितिं चरितार्थीकरोति ।

कृतपण्डितस्तोमोपेक्षत्वान्न्यायवार्तिकस्य, तस्य गूढार्थोन्मीलनं नितरां दुःशकमभवदुद्योतकरस्यातिजरत्या वाण्याः मर्म्म बोधयितुं वाचस्पति मिश्र स्तात्पर्यटीकां प्रणिनाय ।

मीमांसायां तत्त्वविन्दु र्वाचस्पतिविरचिता विपश्चित्प्रिया रचना वर्तते । तन्न्यायकलिका च कापि पाण्डित्यपेशला कृतिर्वर्तते ।

वाचस्पति मिश्रकृता स्ततूतद्दर्शनेषु सा सा व्याख्या व्याख्याकारस्य (वाचस्पति मिश्रस्य) नाम वा यशो भारतीय साहित्ये, विदुषां संसारेऽविनश्वरं भवच्चिरं

स्थास्यति । प्रेक्षावतां जगती सप्रश्रयं श्रद्धया तन्नाम स्मरिष्यति स्मारं स्मारञ्च तं स्वमस्तकं नंस्यति । तस्य यादृशीं याञ्च पुण्यश्लोकतां कीर्तिञ्च तदीया एते ग्रन्थाः वितन्वन्ति दिग्दिगन्तरेषु तादृशीं ताञ्च पुण्यश्लोकतां कीर्तिञ्च न गुणवन्तः प्रज्ञावन्तः शतशः पुत्रपौत्रादिका अपि सर्वत्र प्रसारयितुं कदापि समर्था भवितुं क्षमा इत्येषा सम्भावना समुचितैव प्रतिभाति ।

ज्ञानालोकालोकितस्य तस्य वाचस्पति मिश्रस्य चरित्र मेतद्विध मधीत्य वयं गद्गद्कण्ठा रोमाञ्चितगात्रा भवेम । शास्त्राणा माराधनायां, सरस्वत्या वरिवस्यायां, ग्रन्थप्रणयनानुरागितायाञ्चैष त्यागः क्व श्रुतः; एषा तपस्या क्व दृष्टा ? वस्तुतः स बभूव जगतो विभूतिः । तज्जीवने समाविष्टा स्ते ते गुणा निःसंशयं तं देवकोटिं नयन्ति ।

तत्कृतेयं राष्ट्रसेवा अन्याः सर्वविधा अपि सेवाः अतिशेते । तत्कृतस्योपकारस्य कृते नास्मद् राष्ट्रस्यैव सकलस्यापि विद्वज्जगतः सविधे न कोऽपि निष्क्रयो येनात्मानं मोचयितुं तच्छक्नुयात् ।

ये विद्वांसो विना लोभं, विना स्वार्थं, विना स्पृहाञ्च कामपि विश्वस्य सेवामीदृशीं निदधति, तेषामृणात् कदा क उद्धृतो भवति ? राजनीतिज्ञानां मरणन्तु तेषां जीवन एवासकृत् सञ्जायते । परं वाचस्पति मिश्रसङ्काशानां विद्वद्वराणां मृत्युस्तु कदापि न भवति । भौतिकं वपु र्हित्वापि ते नैजेनाध्यात्मिकेन विग्रहेण जीवन्त एव शोभन्ते ।

विद्वद्वराणां स्वमातृभूमेः सेवायां न मनः कदापि किमप्यभिलषते; अत एव तु तान् लक्ष्यीकृत्येद मुक्तम्—

कस्मादिन्दु रसौ धिनोति जगतीं पीयूषगर्भैः करैः
कस्माद् वा जलधारयैव धरणीं धाराधरः सिञ्चति
भ्रामं भ्राममयं च नन्दयति वा कस्मात् त्रिलोकीं रविः
सेवायाः करणे मनः सदैव विदुषां देशस्य धत्ते रतिम् ॥

अस्तु ।

व्यानञ्ज सर्वकवि कोविदवृन्दवंद्यः
श्रेयस्कराणि सकलान्यपि दर्शनानि
वाचस्पतिः सकलशास्त्रनदीष्णमेधो
देशस्य गौरव मभूच्च यशः पताका ॥

—××—

# जगद्धर भट्टः

महाकविः श्रीजगद्धर भट्टः काश्मीर प्रदेश मध्युवास । सः पञ्चाशदुत्तरत्रयोदशशततमेशवीय सम्वत्सराभ्यर्णवर्तिनमनेहसं स्व स्थित्या भारतभुवो गरिमाणमुच्छ्रिततरतां निनायेतीतिहासविदो वदन्ति । तदीयः पितामहो गौरधरः पिता च रत्नधरः स्वकालगामिषु मनीषिषु मूर्धन्यावास्ताम् । गौरधरो भगवतः शङ्करस्यानन्यभक्तः सकलागमनिगमनदीष्णो यजुर्वेदभाष्यप्रणेता बभूव । रत्नधरोऽपि विद्याया गुणानाञ्च धाम समजायत । सरस्वती वश्येव तदनुर्वतिनी भवन्ती तस्मिन्ननुजग्राह । पितेव कविकुलकमलदिवाकरो जगद्धरभट्टोऽपि त्र्यम्वकस्य महानाराधको नानाशास्त्र पारदृश्वा प्रतिभाभिवन्दितो बुधवराग्रेसर आसीत् । तर्कशास्त्रेतु तदीया धिषणातितरां नैपुणी मविभः । न प्रतिवादिनस्तस्य प्रतिद्वन्द्वितां कर्तुं प्रबभूवुः । सरस्वती तस्मिन्नपि कृपामसीमां न्यदधात् । तद्हृदयोद्याने स्वेच्छयानिशं विहरन्त्यवालोक्यत—

स्वामिन् वाङ्मयदेवता भगवती स्वेच्छाविहारक्रिया-
क्रीडाकाननमाननं भव भवद्भक्तस्य नूनं व्यधात्
नो चेन्नूतननूतनः प्रतिदिनं हृद्यः समुद्यन्क्रमा-
दस्मिन्नुज्ज्वलवर्णकोमलपदन्यासः कथं लक्ष्यते ॥

(स्तु० कु० ३३-२)

जगद्धर भट्टः श्रेष्ठः सहृदयेषु, प्रमुदितः पराभ्युदये, भाषणे मधुरः, प्रकृत्याश्च प्रह्वोऽभवत्; तस्य कवितामधीत्य निशम्य वा तदीयं सुन्दरसरससूक्तिशेवधित्वं स्फुटतया विदिततामुपैति । कथं स तद्विधो न स्यात् तस्य कुलमेवासीत् पण्डितं पदवाक्यप्रमाणेषु, प्रथितं काव्यकलायां, भक्त मुमावल्लभचरणयोश्च ।

जगद्धर भट्टः स्तुतिकुसुमाञ्जलि मसृजत् । सा यथा भूते वर्तमाने च विद्वद्वराणां नितरां प्रीतिमती वर्तते भाविनि च तथैव तन्मनः प्रमोदनकरी भवन्ती भास्यति । एतादृशी कृति स्तस्यैव भवति यस्मिन् भगवतः शङ्करस्यानुग्रहः सरस्वत्याश्च अनुकम्पा भवति, भवति च यो विद्वान् प्रतिभावान् शास्त्रमर्मज्ञोऽनुभववान् कृत सत्संसर्गः ।

स्तुतिकुसुमाञ्जला वनेकटीकाः समभवन्निति श्रूयते । परमिदानीन्तु काश्मीराधिवासस्य राजानक रत्नकण्ठस्यैव टीकोपलभ्यते ।

जगद्धर भट्टः कातन्त्रवृत्तिञ्च लिलेख। अयञ्च ग्रन्थः प्राप्यते अन्याः अपि रचनाः सः कृतवान्निति केचन कोविदा मन्यन्ते । परं सः शैशवादेव शम्भोश्चरणयो ररज्यत। भगवति पुरारौ तद्भक्तिः परमप्रौढासीत् । तदन्तः करणमजस्रं तमेव ध्यायति स्म, भगवद्भक्ति-सुधापानप्रमत्तं तन्मनोनान्यत्र क्वाप्यरमत; प्रतिभा शास्त्रज्ञता च तस्मिन् वस्तुतः सा व्यराजत या श्रीहर्षरत्नाकरादिप्रतिभामप्यवमन्तुं क्षमाऽऽसीत् । स लौकिकचरितवर्णने स्ववाण्याः उपयोगं न युक्तममंस्त कदाचिदत एव न तत्रात्मानं न्ययूयुजत् । सः पिनाकिनः स्तवनेन स्वं मानवत्वं ब्राह्मणत्वं विज्ञवरत्वं मतिमत्वं च कृतार्थं मेने तस्मात् भवोपासनायामेवात्मानं प्रवर्तयाम्बभूव—

हृदय भावय भाव मनाविलं
निरवधान बधान दृढां धृतिं
त्वमसमर्थ समर्थयसे सुखं
किमविनाशि विनाशिवसेवनम् ॥१०।६६

उदारमना दीनवत्सलः सुयोग्यः सद्गुरुः करुणाप्रेर्यमाणः स्वकीये सत्पात्रे शिष्ये दयालुर्भूत्वा ज्ञानशक्ति क्रियाशक्तिञ्च सञ्चारयति । कश्चित् सिद्धः सद्गुरु र्जगद्धरभट्टे करुणादृष्टिञ्चकारेति प्रतिभाति । अतः सोऽभिरामां प्रतिभा मद्भुतां कवित्वशक्तिश्च प्राप—

कारं कार मकारि वारितशमैं रक्षैं ररक्षैं रिदं
निघ्नं विघ्नितशम्भुसेवन सुखाभोगोपयोगं मनः
किन्तु क्वापि कदापि कापि पतिता सा साधुदृष्टिर्यतः
प्राप्तः सूक्तिवपुर्जितोर्जितसुधास्वादः प्रसादः प्रभोः ॥३९।१५

जगद्धरभट्टस्य स्तुतिकुसुमाञ्जलि रद्भुतः । तस्य प्रभावः आधुनिकेषु महत्सु विपश्चित्सु, प्रकृष्टेषु भक्तेषु चिरात् निपतन्नवलोक्यते। इदं हि तथ्यं गो० तुलसीदास प्रभृतिकृतीनामवलोकनेन स्पष्टीभवति ।

जगद्धरभट्टो निःस्पृहोमहान् मानव आसीत् । न सः कस्मादपि नृपाद् धनिकाद् वा न पदं न वैभवं न मानं न चान्यदेव किमपि कामयते स्म । वस्तुतोऽसौ निष्कामः पुरुषप्रवर आसीत् । अत एव न स्वां वाणीं स जगति कस्यापि भूभृतः स्तवने प्रयुयोज—

उष्णं निःश्वसिति क्षितिं विलिखति प्रस्तौति न प्रेयसः
प्रीतिं सूक्तिभि रीशितुः करतले धत्ते कपोलस्थलम् ।
वाग्देवी हृदयज्वरेण गुरुणाक्रान्ता हताशैं वृथा
नीताविष्कृतकोपनिष्कृपनृपस्तोत्रत्रपा पात्रताम् ॥५।३४

स्वकवित्वमधिकृत्य जगद्धरो ब्रवीति—

एताः पूर्वकविप्रणीत विविधग्रन्थामृतास्वादन-
क्रीडादुर्ललितं हरन्ति हृदयं वाचः कथं धीमतां
केषाञ्चित् पुनरीश्वर स्तुतिपदव्याहारहेवाकिनां
यास्यन्ति स्पृहणीयतां भुविभवक्लेशस्पृशां मादृशाम् ।।५।२३

जगद्धर भट्टस्य स्तुतिकुसुमाञ्जलि मुक्तकबन्धकाव्यं वर्तते । नात्र कविना काचिद् विस्तृतादीर्घकाया कथाऽऽदृता न चेतिवृत्तस्यैव कस्यचित् सम्मानमिह कृतम् । विषयस्त्वस्य विद्यते भगवतः शङ्करस्य स्तवनम् । शिवस्तु स्वयं विषमत्ति परं भक्तेभ्यः स्वकीयेभ्योऽमृतं प्रयच्छति, अहो, कपोलवादनपरेऽपि सः प्रसीदति । स विश्वम्भरः स्वयं दिगम्बरो दृश्यते, स्थितिश्च तस्य श्मशाने । आदिरन्तश्च न तस्य ज्ञायेते । कविः कालिदासस्तमुद्दिश्य कियत् सत्यं समीचीनञ्च शंसति—

(क) वपुर्विरूपाक्षमलक्ष्यजन्मता दिगम्बरत्वेन निवेदितं वसु
(कुमार सम्भवे, ५।८२)

(क) अकिञ्चनः सन् प्रभवः स सम्पदां
त्रिलोकनाथः पितृसद्मगोचरः
स भीमरूपः शिव इत्युदीर्यते
न सन्ति याथार्थ्यविदः पिनाकिनः ।। (तत्रैव, ५।७७)

(ग) विभूषणोद्भासि पिनद्धभोगि वा
गजाजिनालम्बि दुकूलधारि वा
कपालि वा स्यादथवेन्दु शेखरं
न विश्वमूर्ते रवधार्यते वपुः ।। (तत्रैव, ५।७७)

क्वापि शिखरिणि जगद्धरश्चिर मकरोत् तपोऽवश्यमेव । अतएव, ज्ञायते तत्र प्रगाढा शिवभक्तिर्विद्वत्ता च द्वेऽपि विरेजाते । एतादृक्कोऽपि न श्लोकस्तद्रचितोऽस्ति यस्मिन्ननुपद मनुमात्रं भगवच्छङ्करे भक्तिभाव उत्कटो न वीक्षितः स्यात् अथ च रमणीया कवित्व सुषमा, मनोऽभिरामा वैदुष्यश्री र्नावलोकिताभवेत्, न पर्यवप्रेक्षिता-भवेत् भव्या साहित्यिकी रमणीयता । अलङ्कारा, मन्ये, तस्य लेखन्या अनुगामिनो भूत्वाञ्जलिं निबध्यानुगच्छन्तो दृश्यन्ते । गुणानां गरिमा ध्वनेश्च दिव्यं सौन्दर्यं तत्र सचेतसां चेतांसि भृशं चोरयति । कविना या हि गर्वोक्तिः प्रकटीकृता सा सर्वानपि सहृदयान् विद्वद्धौरेयांश्च प्रीणाति न च क्लिष्णाति । तदीयसुक्तिषु राजतेऽद्भुतमेव विज्ञानम् ।

अत्र केचन श्लोका इह निधीयन्ते तैस्तस्य तत् तद् वैशिष्टये मनाक् परिचयः प्राप्तो भवेत् । कवे रनुप्रास यमकयोः संगठनेदृशी यान्यत्र संस्कृत साहित्ये दुर्लभा—

सर्वस्व मेव ममदत्त महाप्रहारा हारामलं हर हरन्त्यरयो विवेकम् ।
रक्षाकरी तवकृपात्र कृतावपारा हा राजशेखरमणेः पुरतोहतोऽहम् ॥९।४१

विरोधाभासश्रीः प्रेक्ष्यताम्—

त्वां नीतिमान् भजति यः स भवत्यनीतिः
मुक्तः स यो हि-भवता हृदयान्न मुक्तः
यस्ते रतोऽपचितयेऽपचिर्ति स नैति
तत्त्वां श्रितोऽस्मि भवमस्म्यभवो न कस्मात् ॥११।३५

ध्वनिः सर्वत्र काव्येऽस्मिन् संशोभते तस्मात् काव्य मिदमुत्तमं काव्यम् । कोऽपि श्लोकः कदाचिदेवेदृक् स्यात् यत्र न ध्वनिः संस्फुरन्नवलोक्येत । इहैक एव श्लोको निधीयते यत्रास्ति विभावनालङ्कारध्वनिः—

इदमसाधितमेव रसायनं निरूपभोग मिदं सुखमक्षयम् ।
अमृतमेतदनम्बुधिमन्थनं यदविनश्वर मीश्वर सेवनम् ॥१०।३३

समासोक्तेः सौन्दर्य मीक्ष्यताम्--

अभिनवस्तवकस्तनसन्नताः पवननर्तितपल्लवपाणयः ।
यदि न बन्धनिबन्धन मृध्नुयु र्मधुपगुञ्जित मञ्जुगिरोलताः ॥१०।१७

काव्यस्यास्येदृशः सर्गा अनेके यत्र चित्रचारुतोन्मेषः सान्द्रतां गतोऽस्ति—

जगति विबोधितविधुरं विधुरञ्जितचारुशेखरं गिरिशं ।
गिरि शंसामि स साध्वस साध्वस मानन्ददानपरम् ॥२३।१

निपीयतां करुणरसः---

दीर्घाण्यघान्यधिशुचीव भवन्त्यहानि, हानि र्बलस्य शरदीव नदीजलस्य ।
दुःखान्यसत्परिभवा इव दुःसहानि, हानिः सहौऽस्मि कुरु निःशरणेऽनुकम्पाम् ॥९।३६

प्रसादस्य माधुर्यस्य स्वाभाविकतायाश्च कमनीयता दृश्यताम्--

देवालये वसति मर्थयते कपोतः सिन्धौ वणिग् भजति वृत्तिमशङ्कपोतः ।
पृष्ठे श्रियं वहति नित्यमनेकपोऽत स्त्वद्भक्तिमेमि सरसीमिव भेकपौतः ॥९।४२

महायमकपुटेन सह उच्चकोटिमाटीकमानो भावो निभालनीयः—

घनै रहन्ताक्ततलङ्घनै रहं महारिभि र्निर्मलशर्महारिभिः ।
निराकृतौजा धृतहानि राकृतौ न तेऽवलेपावसरो न तेऽबले ॥२०।१८

श्लेषालिङ्गिताया उपमायाः रमणीयता विलोकनीया—

उदारवर्णैं रथसंगतै रहं मुदाभिधावद्भि रूपोढलक्षणैः ।
पदै रमन्दध्वनिभि र्महेश्वरं प्रभुं प्रपद्ये तुरगोत्तमैरिव ॥२६।१

यो हि महाकवि र्भारतस्यास्मद्राष्ट्रस्य कृते एतद्विधं भक्तिरसमयं महाकाव्यं प्रदाय तस्य महिमानं गरिमाणञ्चोत्कर्षशिखरस्यान्त्यमुच्छ्रायं नीतवांस्तस्य कवे श्चरणयो र्भक्तिभावेन प्रत्यब्दं कस्मिंश्चिद्दिनेशुभे श्रद्धाञ्जलिः समर्पणीयो राष्ट्रेण । अहो, तदीयोऽयं स्तुतिकसुमाञ्जलिः किं किं न कुरुते । स तदध्येतुः श्रोतुश्च हृदयस्य सर्वामपि मलिनतां हिनस्ति; तदन्तः करणे पवित्रान् उत्तुङ्गांश्च भावान् उद्भावयति; तज्जीवनं संयमशीलं विदधाति; पापेभ्यो दूरीकृत्य पुण्येषु प्रवर्तयति; भगवतः शङ्करस्य च चरणयो र्भक्तिं तन्मानसे सञ्चारयति ।

आगम्यतां, वयमपि कवेरेव कतिपयैः श्लोकैः शम्भु मुपश्लोकयामः—

(क) संसार दारुण दवानल दह्यमान-
वाक्चित्त कायकुशलीकरणौषधानि
श्रीभुक्ति मुक्ति वशकर्मणि कार्मणानि
शम्भोर्जयन्ति नुतिचिन्तनपूजनानि ॥८।३

(ख) जयति जन्मजरामरणव्यथा
शमसमर्थ मनर्थ निवर्हणम् ।
सकल मङ्गलधाम सुधामयं
भगवदर्चननाम महौषधम् ॥१०-३२

(ग) त्वामेव देवि शरणीकरवाणि वाणि
कल्याणि सूक्तिभि रुपस्तुहि चन्द्रमौलिं
मातर्नयामि न पुनर्भवती मलीक
वाचाल वालिश विलङ्घनभाजनत्वम् ॥११।२६

(घ) प्रभुं प्रपत्तुं स्थल मेहि मालयं
महीधरं मानस वा हिमालयं
रसातले वौपयिका हिमालयं
श्रयन्त मन्वेषय या हिमालयम् ॥१६।१८

ग्रन्थमुपसंहृत्य जगद्धर भट्टः 'भवन्तो ममेमामुपदां भगवतः शङ्करस्य चरणेषु कृपया प्रापयन्तु' इत्येतां प्रार्थनां गणपति-कार्तिकेयनन्द्यादिषु विदधत् प्राप्यते—

अयि प्रमथनायक त्रिजगता मधिष्ठापक
प्रसन्नमुखषण्मुख त्रिदशवन्द्य नन्दीश्वर
निवेदयत भक्तितश्चरण किङ्करेणार्पितं
पुरः पुररिपो रिमं विकचवाक्य पुष्पाञ्जलिम् ॥३८।२७

तुच्छमति र्जनोऽयं कविं नमति सादरम् एभिः शब्दैः—

नालङ्कृता न मधुरा न च रम्यवर्णा
चैवास्ति नो ध्वनिमयी गुणगुम्फिता नो
वाणी जगद्धर कवे कृपया तथापि
कार्यात्र नैजकरुणा शिवभक्त विद्वन् ॥



# कल्हणः

यस्य कृतिः काश्मीर प्रदेशस्य राजनीतिकेतिहासस्य, भौगोलिकस्य विवरणस्य, सामाजिक्या व्यवस्थायाः, साहित्यिक्या समृद्धे रार्थिक्याश्च दशाया अवगमनार्थं वर्तते विश्वकोशः; व्यापकदृष्टियुक्तत्वादाधारभूतग्रन्थोपादेयत्वाच्च यदीया सा संस्कृतवाङ्मयेऽतिद्वयीभूत्वा चकास्ति सोऽस्ति काश्मीरवास्तव्य आढ्यविप्रकुलोद्भवो लब्धराजसभाजीवनानुभवो विद्यावतां वन्दनीयः कवीन्द्रो राजतरङ्गिणीकारः कल्हणः ।

कल्हणः सुस्थलात्मजक्षितीशजयसिंहस्य शासनानेहसि राजतरङ्गिणी मररचत् । स महीररूणः सप्तविंशत्युत्तरैवादशेशवीय शततमाब्दादेकोनषष्ठ्यधिकैकादशशततमेशवीयाब्दपर्यन्तमशिषत् । राजतरङ्गिण्यां कल्हणो यमितिहासं निबवन्ध सः पुरातनकालमारभ्य द्वादशेशवीयशतक मभिव्याप्य विभ्राजते । आदिमेषु तरङ्गेषु राजतरङ्गिण्याः, पुराणोपश्लोकितानां महीपालानां चरितानि गीतानि सन्ति । आधुनिकेतिहासकाराणां मते ते राजानः सन्ति कल्पनाजगत्याः प्राणिनोऽत स्तावान्भागो राजतरङ्गिण्याः न प्रामाणिकेतिहासत्वेन मतोभवितु मर्हति । परं यथा यथा कविः स्वसमयस्य प्रत्यासन्नता मायाति तथा तथा तद्ग्रन्थस्थ इतिहासः प्रामाणिकतां शुद्धताश्लिष्टतरामवितथततामञ्चति । ईशवीयनवमशतकाद् द्वादशेशवीयशतकं यावत् यः कालः परिस्फुरति तस्य कालस्येतिहासोऽस्ति नितान्तपरिपूर्णोऽतिप्रामाणिकश्च । अष्टमतरङ्गोल्लिखित घटनाः कविदृष्टाः प्रतिलक्ष्यन्ते । तासु भूयस्यो घटनाः कव्यनुभूताः प्रतीयन्तेऽतः स भागो नितरां सत्यतां बिभर्ति ।

अर्वाचीनस्येतिहासपण्डितस्य शोधकदृष्टिरिव कल्हणस्यापि दृष्टिरवर्तत । अतः सः साधनै रूपकरणैश्चोचितैस्तत्तद्वृत्तं कृत्स्नतया परीक्ष्यैव तदुल्लेखं विधातुं प्रावर्तत । सः स्वदेशस्येतिहासं भूगोलञ्च समीचीनतयाऽभ्यजानात् । सः स्वरचनायां प्रत्नानामेकादशग्रन्थानां प्रयोगं पूर्णतया मार्गण-परिवीक्षण-परीक्षणानि च विधायैव विदधाति स्म । आसीत् स मर्मावगन्तान्त्यतलावगाही शोधनपरिश्रमी मनस्वी मनीषी । तस्मादसौ शिलालेख–दानपत्र–प्रशस्तिपत्र-ताम्रपत्रप्रभृतिविविधैतिहासिकोपादानानां साहाय्यं परिगृह्य स्वकीयं ग्रन्थं सर्वविधतया परिपूर्य जिज्ञासूनां सर्वा अपि जिज्ञासाः परिप्रीणयितुं प्रणिनाय । आसीत् तदीया दृष्टिरुदारा तस्मात्तं न सङ्कीर्णता न चैकदेशिता स्पृष्टु मपि शशाक ।

कविः कल्हणः प्रत्यभिज्ञादर्शनस्यासीदनुयायी। तन्त्रेषु स आस्थां निदधौ। परं कदाचारिणां तान्त्रिकाणां दुराचारान् दुष्टाश्च प्रवृत्तीः सोऽनिशं निनिन्द। सः सन्नपि शैवो बौद्धधर्मे नाविश्वात्तं न चानास्थामेव प्रादीदृशत्। स तु तदभिमत महिंसा-तत्त्वं भृशं प्रशशंस। अशोकस्य प्रयत्नेन बौद्धोधर्मः काश्मीरस्याधित्यकायामुपत्यकायाञ्च प्रवेश मवाप्तु मशकत्। इदं हि सम्राजोऽशोकस्य बौद्धधर्मपरकं प्रकृष्टं कार्यंपुनः पुनः सः श्लाघाञ्चक्रे। काश्मीरनरपतिभि र्निर्मापितानां बौद्धमन्दिराणां विहाराणा ञ्चोल्लेखः प्रशंसा पूर्णैः पदैस्तेन विहितोऽस्ति। उदारहृदयानां काश्मीरधरित्रीशाणां पात्रताया अभ्यर्चनं तं भृशमप्रीणात्। धार्मिकसहिष्णुत्त्रे बौद्धशैवयोः सौहृदे च नैजप्रीतिं प्रकटीकृत्य तेन स्वकीयाया वदान्याया मनीषाया वन्धुरस्य च विवेकस्य गम्भीरः परिचयः सम्यक् प्रदत्तोऽस्ति।

बभूव विद्वान् कल्हणो निष्पक्षेतिहासलेखकः। सोऽराते रपि गुणान् बिना सङ्कोचं सहर्षं जगौ। सन्नपि काश्मीरवासी सः काश्मीरजानां भीरुता मनृतभाषितां मृधपलायनं, पारस्परिकं कलहं, विद्रोहं, दुरभिनिवेशं, पक्षपातं, क्षुद्रं संघर्ष, हृदयदौर्वल्यं च निगूहितुं न प्रायतिष्ट। ब्राह्मणानामपि दोषान् ज्ञापयितुं सः कदापि पराङ्मुखो नावाप्यत। तेषां ते दोषा दूरीभवेयुरित्येतदर्थं सः सदायतत। परमार्थकथने यस्य वाणी समतिष्ठत तमेव सः प्राशंसत्। स आह—

श्लाघ्यः स एव गुणवान् रागद्वेषवहिष्कृता।
भूतार्थकथने यस्य स्थेयस्येव सरस्वती॥

कल्हणस्य निष्पक्षप्रकृतिमत्वादेव तदीया राजतरङ्गिणी सर्वत्राद्य गतास्त्या-दृता। सा इमान् गुणान् जुषते—

(अ) मानवहृदयपरीक्षणपटीयस्कता
(आ) अतीतप्रत्यक्षीकरण निपुणता
(इ) ऐतिहासिक मार्मिकघटनाभ्य उपादेयायाः शिक्षायाः परिग्रहणम्
(ई) मननार्हेषूपदेशेष्वनुरागः

एतद्विधविशिष्टतायुक्तत्वात् तदीयो ग्रन्थो मान्येषु महनीयेषु ग्रन्थेषु गण्यते। तन्महीयस्कतायास्तन्महत्तायाश्च रहस्यं वस्तुतस्तद्दृष्टे रर्वाचीनताप्रियत्वे, मनसश्च तदीयस्य सहानुभूतिसुन्दरत्वे सन्तिष्ठते। अस्ति सः कठोरो यथार्थवादी। न सः कल्पनासु प्रीयते। सः सुदृढानुभवे प्रामाणिकतायाश्चोपरि घटनानां वर्णनं श्रेयस्करं मन्यते। स इतिहासस्य कारुणिके मानवपक्षेऽनुरज्यति। सः स्वयं धनाढ्यवंशे जन्म जग्राह, अतः सर्वविधान्यपि सुखानि तम्प्रति स्वस्वसेवां समर्पयितुं सदैव वद्धाञ्जलीनि भूत्वा तदाज्ञामवाप्तुं तस्याननं सोत्सुकं प्रतीक्षाञ्चक्रिरे। परं सः सन्ततं समाजस्य दीनेषु

दरिद्रेषु पददलितेषु पुंसु प्रगाढां सहानुभूतिं निदधत् तत्साहाय्यं तद्धितञ्च चकार। श्रेष्ठमानवस्वभावत्वान्मानवताराधकत्वाच्च तस्य राजतरङ्गिणी क्षोणीशानां विप्लवस्योत्थानस्य पतनस्य चेतिहास एव न, अस्ति सा मानवीयाना मवदातानां भावनानाञ्च रमणीयारामभूमि रपि। हरिजनव्यवहारविषयिकाः अनशनादिपरिग्रहपरकाश्च याः सन्त्यंद्यतन्यो घठनाः; याश्च सन्ति बहुविधा राजनीतिक्योहि समस्यास्तासां समाधानञ्च प्रति तदीया यशस्विनी कृतिः सङ्केतं विदधती संलक्ष्यते।

कल्हणः सन्नपि महानितिहासकारः स आत्मगरिमाणं कवित्व एव मेने। तत्र कारणमस्ति तस्य कवे र्महनीयेषु गुणेषु आदरभावः। कवेर्वाणी सुधामपि अधरीकरोति—इत्येतत् सः साध्वजानात्। सः कवे र्वाणीमुपश्लोकयति सभाजयति चैवम्—

वन्द्यः कोऽपि सुधास्यन्दास्कन्दी स सुकवे र्गुणः।
येनायाति यशः काये स्थैर्यं स्वस्य परस्य च॥

कवे र्विधेश्च द्वयो रपि कार्यं सृजनमस्त्यतः स आचष्टे—

कोऽन्यः कालमतिक्रान्तं नेतुं प्रत्यक्षतां क्षमः।
कविप्रजापतीरत्यक्त्वा रम्यनिर्माणशालिनः॥

कल्हणस्य राजतरङ्गिणी काव्यमप्युत्तमं भवन्ती विभासते। सा सचेतसां चेतांसि स्वकीयैः काव्यापेक्षिभिर्गुणपूगै र्नितरामावर्जयति। तस्या वर्णनपेशलता तस्याः सरसता प्रसादगुणोपेतता च नितान्तश्लाघनीयास्ति। कवेः कल्हणस्योपरि व्यासवाल्मीकिविल्हणादिकवीनां प्रभावः स्फुटतयैव परिलक्ष्यते। विल्हणस्य काव्यं तमतितरामप्रीणयदिति प्रतीयते। इह तद्रचिता द्वित्रिश्लोका उद्ध्रियन्ते, पाठका स्तानवलोक्य तत्काव्यमधिकृत्य गीतान् कांश्चन गुणान् जानीयुः—

(अ) हा कष्टं तटवासिनोऽपि विफलप्राग्भार मालोक्य मा—
मन्यत्रैव पिपासवः प्रतिदिनं गच्छन्त्यमी जन्तवः
इत्थं व्यर्थगलातिभारवहनप्रोद्भूतखेदादिव
स्वां मूर्तिं वडवानले जलनिधि र्मन्ये जुहोत्यन्वहम्॥

(आ) रत्नोज्ज्वलाः प्रविकिरँल्लहरीः समीरे—
रब्धिः क्रियेत यदि रुद्धतटाभिमुख्यम्।
दोषोऽर्थिनः स खलु भाग्यविपर्ययाणां
दातु र्मनागपि न तस्य तु दातृतायाः॥

(इ) यो यं जनापकरणाय सृजत्यपायं तेनैव तस्यनियमेन भवेद् विनाशः ।
धूमं प्रसौति नयनान्धकरं यमग्नि र्भूत्वाम्बुदः स शमयेत् सलिलैस्तमेव ।।

कल्हणः स्वसमयवर्तिनां भूपतीनां पारस्परिकं संघर्षं युद्धञ्च स्वकीयाभ्याभ्यामक्षिभ्यां ददर्श; अतः सांसारिका व्यापारास्तस्मिन् निर्वेदमजीजनन् । स निर्वेदोऽत एव ध्रुवं, काव्यस्य प्रधानो रसः शान्त इत्येतां भावनामुदपीपदत् । भवितव्यता बलीयसी, सा भवति अपरिहार्या दुर्दमनीया चेत्यत्र स दृढीयांसं विश्वासं निदधौ ।

कल्हणस्येतिहासे काव्यकौशलं जीवनदर्शनञ्चोभयमपि दृग्गोचरतां याति । कविताया अलङ्कारबहुलता शब्दचमत्कारवत्ता च न तस्मा [illegible]रुचित । तत्कविता वर्णनात्मिका भवन्त्यपि प्रवाहवती बर्तते । मनोऽभिरामत्वं तत्र सान्द्रं दृश्यते । तद्रचनायां चरित्रचित्रमपि साधु सफलतां गत मस्ति । तत्र अनन्तावन्तिवर्म-हर्षप्रभृति-पृथिवीपतीनां चित्रणं यथार्थ माप्यते । तस्य कवितायाः प्रधानं लक्ष्य मस्तिअर्थाभिव्यञ्जनम् । स घटनानामनुभूतिभव्यस्य विवरणस्योपस्थापनं च नैजमुद्देश्य मवगच्छति ।

"चण्पकात्मजः कल्हणः कश्मीराधिपते हर्षस्य, यस्य काल एकोननवत्यधिकैकसहस्राब्दशवीयादेकाधिकैकादशशतकेशवीयाब्दं यावन्मतः, विश्वासास्पदजन आसीत् । न तस्य पिता हर्षं तदीयायां विषमायामपि परिस्थित्यां तत्याज । डॉ० कीथमतेन कल्हणस्य जन्म एकादशशतकेशवीयाब्दाभ्यर्णेऽभवत् । स राजाश्रयं परित्यज्याश्रयदातु रलकदत्तस्य प्रेरणया ग्रन्थमैतिहासिकं स्वकीयं प्रणेतु मारभत" इत्येतत्तथ्यं डॉ० कपिलदेवद्विवेदिरचित 'संस्कृत साहित्यका समीक्षात्मक इतिहास' ग्रन्थतो गृह्यते ।

राजतरङ्गिण्याः प्रणयने प्राचीनेभ्य एकादशैतिहासिकग्रन्थेभ्यो नीलमतपुराणाच्च साहाय्यमवाप्तमित्येतदुल्लिखन् कल्हणः प्राह--

दृग्गोचरं पूर्वसूरिग्रन्था राजकथाश्रयाः ।
मम त्वेकादश गता मतं नील मुनेरपि ।।

नूनं राजतरङ्गिणीकारः कल्हणो भारतीयदृष्टिनिष्ठो यथार्थादर्शेतिहासप्रणेता । सत्यथार्थकवित्वगुणविद्योतितश्च महान् कविः ।

यस्यां कवित्वयमुनातटिनी विभाति ।
ऐतिह्य सत्यसुषमाप्रियजह्नुकन्या ।।
चक्रे च तां सरसराजतरङ्गिणीं यो ।
वन्दामहे सविनयं कविकल्हणं तम् ।।



# क्षेमेन्द्रः

भारतस्य काश्मीरावनिः सा सभाजनीयावनि र्या अतीतेऽनेहसि शतशः प्रतिभावतः प्रकाण्डपाण्डित्यभृतः परमेश्वरभक्तान् विद्वदग्रेसरान् सात्विकतारतान् साधुस्वभावान् सुजनानजीजनत् । भर्तृमेण्ठ-श्रीहर्ष-शिवस्वामि-रत्नाकर-मंखकादीनां बहूनां महाकवीनां, मम्मटानन्दवर्धनाचार्यादिसाहित्यशास्त्रकाराणामन्येषाञ्च प्रत्यभिज्ञा-शैव दर्शनाचार्याणा मभिनवगुप्तादीना मनेकेषां कैयटप्रभृतिपरमौद्भटवैयाकरणानां जननीत्वात् काश्मीर वसुमती वर्तते जगति परमसौभाग्यशालिनी वसुमती । इयमेव धन्या वसुधा क्षेमेन्द्रमपि सुषुवे । क्षेमेन्द्रोऽलौकिक महिममञ्जुलो महाकवि र्बहून् विविधांश्च ग्रन्थान् विरचय्य स्वराष्ट्रस्य भारतस्य गरिमाण मतितरा मुदनीनमत् । पिता तस्य प्रकाशेन्द्रो, गुरुरभिनवगुप्तो, दीक्षाप्रदश्चाचार्यो भागवताचार्यः सोमपादो बभूवुः । अनन्तस्य तत्सुतस्य च कलशस्य महीवल्लभस्य शासनकाले तस्य जीवनं राष्ट्रस्य साहित्यकोशं संवर्धयच्चतुर्दिग्व्यापिनीं कीर्तिं मविन्दत् । निर्दिष्टयोरुभयोरपि भूपालयोः शासनानेहा १०२८ तमेशवीयाब्दात् १०६३ तमेशवीयाब्दं यावत् प्रावर्ततेति ऐतिह्यविदो वदन्ति । समयोऽयमतिशयवैक्लव्यविविधोपप्लवमय आसीदतोऽस्मदीयस्य चरितनायकस्य क्षेमेन्द्रस्य हृदय मपरितोषो विषादश्च भृशमव्यथयताम् । स तद्विधमशान्तं कालमुपसंहर्तुं परिमार्ष्टुञ्च स्वलेखनीं न्ययूयुजत् । स जनतायाश्चरित्र मुन्नमयितुं क्षालयितुञ्च रामायण महाभारतयोः सुविदितानां कथानां वर्णनं नितरां समासेन परं प्रभावस्थापकेनाभिरामेण प्रकारेण ययोः स्वकीययोः रचनयोश्चकार ते स्तः— १. रामायण मञ्जरी, २. भारत मञ्जरी । गुणाढ्येन वृहत्कथाभिधाना या कृतिः पैशाच्यां भाषायां विहितास्ति, या च विचित्रतायां, दिव्यतायां, रसमधुरतायां च सर्वत्र विख्यातास्ति तां कविना क्षेमेन्द्रेण संस्कृतभाषायां परिणमय्य संस्कृतानुरागिणां समक्षे कथानां महान् निधिरुन्मीलितः । तस्य यशस्विनी रचनेयं वृहत्कथामञ्जरीति नाम्ना प्रथते । बोधिसत्त्वावदानकल्पलता तस्यास्ति रम्या तुरीया कृतिः । अत्र कविना भगवतो बुद्धस्याख्यानानि गीतानि सन्ति । ग्रन्थस्यास्य यो ऽस्त्यन्तिम पल्लवस्तस्य निर्माणं क्षेमेन्द्रस्य तनूजः सोमेन्द्रः कृतवान् क्षेमेन्द्रस्योपरतत्वात् । ग्रन्थस्यास्यानुवादस्त्रिविष्टपीयभाषायामपि जातोऽस्ति । बौद्ध समाजे तस्य तावानादरः क्षेमेन्द्रस्य धर्मपरकामुदारतां, विशाल मनस्कताञ्च विनिगमयति ।

क्षेमेन्द्रः कथाकलायां महान् कोविद आसीत् । कथासु घटनानामेव सन्निवेशनं न

तस्मै अरोचत् । तत्कृतेष्वाख्यानेषु कला प्रमुखीभूय परिस्पन्दते । तदीयान्याख्यानानि सन्ति भव्यवर्णनालङ्कृतानि; तस्मात् तानि पाठकानां मनांसि भृशमावर्जयन्ति स्वकीयं चिरस्थायिनं प्रभावञ्च तत्र क्षिपन्ति । तत्कृतानि तानि चरित्रप्रधानानि सन्ति न च वृत्तप्रधानानि । यानि यानि वर्णनानि सन्ति रसमनोज्ञानि, रसज्ञः कवि-क्षेमेन्द्रः कदापि न तेषूपेक्षां प्रमादं वाऽऽददानः प्राप्तो भवति । सः स्वकीयेन काव्यचातुर्येण तानि सर्वाण्यपि हृदयग्राहीणि वर्ण्यानि सौन्दर्यसुन्दराणि कुरुते । तदीयासु सर्वास्वपि रचनासु ईदृशी भव्यता दृष्टा भवति ।

क्षेमेन्द्रो हास्यकथायान्त्वद्वितीयामाचार्यतां निदधाति । हास्यकथायां तद्विधः सिद्धहस्तो लेखको नापरः प्राप्यते । तदीया लेखनी तत्र दक्षतां बिभर्ति सा पूर्णतया पाठकानां हृदयेषु केन प्रकारेण प्रहारः कार्य इत्येतत् सम्यग्वेत्ति । परं तत्कृतः प्रहारो भवति नाप्रियः । हास्याघातो जायतेऽतितरां सन्तुलितः । समाजस्य नग्नं चित्रमसमत्पुरः स्पष्टीभूय समुपस्थितं सञ्जायते—इत्येतदस्ति तदीयं सौन्दर्यम् ।

दृश्यताम्—

१. सदा खण्डनयोग्याय तुषपूर्णाशयाय च ।
नमोऽस्तु वहुवीजाय खला योलूखलाय च ॥

२. जिह्वादूषित सत्पात्रः पिण्डार्थी कलहोत्कटः ।
तुल्यतामशुचि नित्यं विभर्ति पिशुनः शुनः ॥

३. ख-चित्रमपि मायावी रचयत्येव लीलया ।
लघुश्च महतां मध्ये तस्मात् खल इति स्मृतः ॥

क्षेमेन्द्रो न केवलं विदुषां कविः सः साधारणजनस्यापि कवि र्वर्तते । तद्रचना या उद्देश्यमेवास्ति मनोरञ्जनपूर्वकं जन-चरित्र-निर्माणम् । सः स्वकीयेऽस्मिनुद्देश्ये श्लाघनीयां सफलतामप्यश्नुते । अनयैव सद्भावनया प्रेरितो भूत्वा सः कलाविलासं, चतुर्वर्गसंग्रहं, चारुचर्यां, नीतिकल्पतरुं, समयमातृकां, सेव्य सेवकोपदेशञ्च प्राणैषीत् । सन्ति तु एता रचनाः लघुकायाः परं लोकव्यवहारस्ताभ्योलभ्यते अतः सन्ति ताः उपादेयाः ।

विलोक्यतां तदीया प्रसादपेशला सरसा सुवोधा च कविता यास्ति चरित्र-निर्माणकुशला—

(क) स्वाम्ये पेशलता, गुणे प्रणयिता, हर्षे निरुत्सेकता ।
मन्त्रे संवृतता, श्रुतो सुमतिता, वित्तोदये त्यागिता ।

साधौ सादरता, खले विमुखता, पापे परं भीरुता ।
दुःखे क्लेश सहिष्णुता, च महतां कल्याण माकाङ्क्षति ।।

(ख) व्रते विवादं विमतिं विवेके सत्येतिशङ्कां विनये विकारम् ।
गुणेऽवमानं कुशले निषेधं धर्मे विरोधं न करोति साधुः ।।

भाषा कियती मधुरा प्रवाहमयी वर्तते । न क्वापि पाण्डित्यप्रदर्शनं न चानपेक्षितश्चमत्कार एव दृश्यते । पदावल्याः स्निग्धता हृदय मावर्जयति । क्वापि न विद्यतेऽसंगतः पदप्रयोगः । शिक्षा चानुपदम् ।

प्रेक्ष्यताम्—

धर्मः शर्म परत्र चेह च नृणां धर्मोऽन्धकारे रविः
सर्वापत्तिशमक्षमः सुमनसां धर्माभिधानो निधिः
धर्मो बन्धुरबान्धवपृथुपथे धर्मः सुहृन्निश्चलः
संसारोरुमरुस्थले सुरतरु र्नास्त्येव धर्मात्परः ।।

क्षेमेन्द्रो नूनं सरस्वती वरदत्त पुत्र आसीत् । संस्कृतभाषायाः महाकविषु सोऽलौकिकप्रतिभाविभूषितो महाकवि र्बभूव । आत्मानं व्यासदासत्वेन इति—

"इत्येष विष्णोरवतारमूर्त्तेः
कथामृतस्वादविशेषहृद्या
श्री व्यासदासान्यतमाभिधेन
क्षेमेन्द्रनाम्ना विहितः स्ववाग्रयः ।।

यदवोचत् तदस्त्यक्षरशः सत्यम् ।

प्रकृष्टपाण्डित्यवत्वात् प्रतिभाचितत्वाच्च सः साहित्यस्यविभिन्नेषु क्षेत्रेषु नैजं देदीप्यमानं प्रकाशं व्यकिरत् । उपरि तद्रचितानां चतुर्णां रचनानां विशेषतः किञ्च षड् रचनाः नामग्राहं निर्दिष्टा एताश्च व्यतिरिच्य स विलक्षणो विचक्षणोऽधोऽङ्किताभिधान् ग्रन्थांश्च अजग्रन्थत्—

१. औचित्य विचार चर्चा
२. कविकण्ठाभरणम्
३. अमृतरङ्गकाव्यम्
४. पद्यकादम्बरी
५. वात्स्यायनसूत्रसारः
६. अवसार सारः
७. कनकजानकी
८. कविकर्णिका
९. चित्रभारतनाटकम्
१०. देशोपदेशः

११. शिववंशमहाकाव्यम्
१२. शिवसूत्र विमर्शिनी
१३. पवन पञ्चाशिका
१४. मुक्तावली
१५. ललितरत्नमाला
१६. लावण्यवती काव्यम्
१७. विनयवती
१८. मुनिमतमीमांसा

एतेषां विविध विषयाणां ग्रन्थानाँ प्रणयनं स एव मनीषी कर्तुं शक्नोति यस्य बहुषु शास्त्रेषु अधिकारो वर्तते, निदधाति च आशु नवनवभावोद्भाविनीं रचना-विरचनपटीयसीं प्रतिभां भगवत्याः सरस्वत्याश्चानुकम्पामसीमाम् ।

औचित्यविचारचर्चायां साहित्यसंसार सोम औचित्य पक्षे यान् स्वकीयान् विचारान् प्रकटीचकार तेषामुपरि विचारणार्थं सः स्वोत्तरकालवर्तिनो मनीषिणो न्ययू-युजत् । वस्तुत औचित्यस्य नैजं स्थानं वरीवर्ति । विना तत् सर्वोऽपि प्रयासो व्यर्थतां याति । औचित्यमेव पाण्डित्यमौचित्यमेवोत्तमां पदमाला मन्वर्थीकरोति । औचित्यमेवतु रसस्य सर्वस्वम् । विना तद्रसोऽपि न स्थातुं प्रभवति । तद्भवति रङ्ग भङ्गस्य कारणम् ।

कविकण्ठाभरणे साहित्याचार्येण पण्डितकुलभूषणेन येषां विषयाणां विवेचनं कृतं तैर्वस्तुतः कविकण्ठस्य शोभा भवति । तदीया सा कविकण्ठाभरणाख्याकृति र्निःसंशयं कविकण्ठस्याभरणत्वाय कल्पते । परं सत्यपि ग्रन्थे साहित्यस्योत्तमेषु ग्रन्थेषु यद्ग्रन्थहेतोस्तस्य गणनालङ्कारिकेष्वाचार्येषु भवति स तु औचित्यविचारचर्चेव । स औचित्यं रसस्य जीवनं मन्यते—

"औचित्यस्य चमत्कारकारिणश्चारुचर्वणे ।
रसजीवितभूतस्य विचारं कुरुतेऽधुना ॥"

औचित्यस्यात एव केनापि रसस्य परमरहस्यत्व मुक्तम्—

"अनौचित्याद् ऋते नान्यत् रसभङ्गस्य कारणम् ।
प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परा ॥"

कविकण्ठाभरणाध्ययनेन कवित्वप्राप्ति र्भवितुं शक्यास्ति । तत्र ते उपायाः प्रदर्शिता यैः कवित्व मुत्कर्ष मुपैति । तत्रोक्तम्––

१. अत्रकवेः कवित्वप्राप्तिः, २. शिक्षाप्राप्तगिरः कवेः, ३. चमत्कृतिश्च शिक्षाप्तौ, ४. गुणदोषोद्गतिस्ततः । ५. पश्चात् परिचय प्राप्तिः ।

क्षेमेन्द्रेण चतुश्चारिंशत्संख्यका ग्रन्था अलेखिषत इति विद्वांसो वदन्ति परं न साम्प्रतं ते सर्वे प्राप्यन्ते। शैवदर्शने तदीया रचनाः सन्ति बहुधाः। अभेदवादिनां कथनमिदम्—क्षेमेन्द्रः प्रथमं शैव आसीत् ततश्च स वैष्णवो जातः। अस्तु, यथा आनन्दवर्धनो ध्वनि सम्प्रदायस्य, वामनो रीतिसम्प्रदायस्य, कुन्तकश्च वक्रोक्तिसम्प्रदायस्य संस्थापकस्तथैव क्षेमेन्द्र औचित्यसम्प्रदायस्य संस्थापकत्वेन साहित्यशास्त्रेतिहासेऽस्ति प्रख्यातः।

अस्मद् भारतवर्ष देशमनिशं क्षेमेन्द्रविद्याम्बुधिः
साहित्यं विरचय्य मङ्गलमयं लोकोदयाकांक्षि यः
प्रीत्या सेवितवान् भवेदिहभवे येन प्रकृष्टो हि सः
तं भक्त्या सुकविं दयालु मनसं वन्दामहे सादरम् ॥



# नीलकण्ठदीक्षितः

महाकवि र्नीलकण्ठ दीक्षितः स्ववंशवर्णनं नैजगङ्गावतरणाभिधस्य महाकाव्यस्यारम्भे करोत्येवम्—

मुनिरस्ति भरद्वाजः ख्यात स्त्रिभुवनेष्वपि ।
अत्रे र्यस्य जहौ रामोऽप्यरण्यभ्रमणश्रमम् ॥
तस्यान्वये महत्यासीत् क्षीरोद इव चन्द्रमाः ।
श्रीकण्ठचरणासक्तः श्रीमान् अप्पय्यदीक्षितः ॥
तत्समानप्रभावस्व तदनन्तरजन्मनः ।
आसीदाच्चादीक्षितस्य पुत्रो नारायणाध्वरी ॥
जयन्ति तनयास्तस्य पञ्च सौभ्रात्रशालिनः ।
गर्भदासा महेशस्य कवयश्च विपश्चितः ॥
तेषामहं द्वितीयोऽस्मि भूमिदेवीतनूद्भवां ।
नीलकण्ठ इति ख्यातिं नीतः शम्भोः प्रसादतः ॥
वार्तिकाभरणग्रन्थनिर्माणव्यक्त नैपुणः ।
श्रीवेङ्कटेश्वरमरवी शिष्ये मय्यनुकम्पते ॥

महाकवि र्दीक्षितः १६०० तमेशवीयाब्दात् १६७५ तमेशवीयाब्दं यावत् भारतभुवं विभूषयामास । सः पाण्ड्यराजस्य तिरुमलनायकस्य सचिवोभूत्वा तत्सभाया आध्यक्ष्यं चकार । राजकीयानि कार्याण्यनुतिष्ठन् सः पञ्चत्रिंशद्वर्षाणि साहित्यं सृजन् स्वसमयवर्तिनं समाजं सद्दिशां नयन् स्वकीयं राष्ट्रं प्रति नैजसेवाः समर्पयाञ्चकार ।

नीलकण्ठदीक्षितस्य व्यक्तित्वं महाकवित्वे चकासाञ्चक्रे । तत्कालवर्तिनो वुधवराः कविवरेण्याश्च तदीयं कवित्वं, पाण्डित्यं, प्रतिभापाटवञ्च भृशं प्रशशंसुः । विद्वत्परितोषावहस्य तस्य वैदुष्यस्य सभाजनं दृश्यते ग्रन्थान्तरे । शृङ्गारकोशभाणे शोभमानौ श्लोकाविमौ दृश्येते—

(अ) अस्त्यस्तोकगुणो हिमाद्रिशिखरोत्सङ्गापतज्जाह्नवी–
साहङ्कारतरङ्गसङ्गसहजश्रीधीरसूक्तिक्रमः ।
किञ्चोन्मीलयितुं पुनश्च सुदृढीकर्तुं कलासु प्रभुः
सर्वज्ञो हरिदत्तविश्रुतयशाः श्री नीलकण्ठाध्वरी ॥

(आ) यस्मिन् क्षोणिभुजां सभासु विदुषा मग्रसरे जातुचिन्
स्वातन्त्र्यं विविधं विवृण्वति निजं सर्वासु विद्यास्वपि
जायन्ते गगनप्रचोदितदृशस्तव्योपलब्धिक्रमाः
स्वेदाम्भः कणसिक्तसर्वतनवो दीनाः प्रतिद्वन्द्विनः ॥

आसीद् दीक्षितः कवि र्महान् कर्ता काव्यानां, व्याकर्ता तन्त्राणाम्, आहर्ता क्रतूनां, व्याहर्ता सकलनृप सभासु दिग्दिगन्तविश्रान्तकीर्तिः, शिरोमणिः कृतीनाम्, अग्रणीश्च अध्वरिणाम् ।

नीलकण्ठदीक्षितो वहूनां ग्रन्थानां प्रणेता बभूव । तस्य शिवलीलार्णव नामकं महाकाव्यं तद्रचितासु कृतिषु मूर्धन्यम् । तत्र सः पाण्ड्यपृथिवीपतीनां कुलदैवतस्य चतुष्पष्ठिकथाः रमणीययोः सुललितयोः शब्दार्थयोः गायति स्म ।

द्वितीयं तस्य महाकाव्य मस्ति गङ्गावतरणम् । अस्मिन् महाकाव्ये धराधिपस्य भगीरथस्य सत्प्रयत्नोत्साहप्रवर्त्तकं लोकपावनं वृत्तं निबबन्ध ।

तृतीयास्ति तदीया रचना नीलकण्ठविजयचम्पूः । तत्र तेन अमृतमथनकथोपनिवद्धास्ति ।

चतुर्थी तद्रचना वर्तते—कलिविडम्बनम् । तत्र कविना कलियुगप्रभावः प्रतिपादितः ।

पञ्चमी कृति र्विद्यते—गुरुतत्त्वमालिका । तस्यां कवि र्गीर्वाणेन्द्रसरस्वतीं भक्तिपूर्वकं सम्मानेन स्तवीति स्म ।

अन्यापदेशशतके षष्ठे ग्रन्थे अन्योक्तिभि र्लोकयात्रां प्रतुष्टाव ।

आनन्द सागरोऽस्ति तस्य सप्तमी रचना । इयं रचना सचेतसां चेतांसि भृशं प्रीणयति । वस्तुतः कृतिरियं स्वनामान्वर्थीकरोति ।

चण्डीरहस्यं नाम अष्टमी कृति रस्ति स्तोत्रात्मिका । स्तोत्राणि भक्तिभावविभावितेन ध्यानावस्थितेन चेतसा गीतानि सन्ति ।

रघुवीरस्तवोऽस्ति नवमं पुस्तकम् । तत्र रामकथापरकः स्तवो वर्तते ।

वैराग्यशतकाभिधाने तद्रचिते दशमे पुस्तके अनश्वरतत्वोन्मुखीकर्तुं मनो नश्वरतायाः प्रतिपादनं तथा कृतं यथा पाठको नश्वरतातः पराङ्मुखीभूय अनश्वरतायां प्रवर्तेत ।

एकादशश्च तदीयः शान्तिविलासो मुक्त्यभिलाषिणां कृते रचितोऽस्ति । इह मुक्त्यभिलाषाः पुष्टतायाः प्रवलताया गुरुतायाश्चाधिगमनाय अनुकूलानि साधनान्यश्नुवते ।

द्वादशी च तस्य शिवोत्कर्षमञ्जरी शिव एव शरणं सर्वेषामिति पठकानां पुरः प्रस्तुतीकुर्वन् कवि स्तथा प्रयतते यथा तद्ग्रन्थाध्येतारः स्वशिवभक्तिं दृढीकर्तुं मवसरं लभेरन् । कविः काङ्क्षति पाठकानां मानसे शिवभक्ति रुदिता स्याद् येन ते भद्राणि पश्येयुः ।

त्रयोदशी च कृति र्वर्तते नलचरित्रनाटकम् । नाम्नैव तस्य नलचरित्रवर्णन-परत्वं प्रकटीभवति । कथावस्तूपस्थापनाय नाटकं यां पद्धतिं, यश्च विधिमपेक्षते तामेव पद्धतिं विधिश्च तमुपयुज्जानः कविः प्राप्यते ।

नीलकण्ठदीक्षितः कैयटकृतमहाभाष्यटीकाया व्याख्यामपि कृतवान् अथ च शिवतत्वरहस्यं नाम ग्रन्थमपि लिलेख इत्येतत् संस्कृतसाहित्येतिहासेऽस्ति प्रकथनं, परं द्वावप्येतौ ग्रन्थाविदानीं न प्राप्येते ।

श्री दीक्षितश्चित्रमीमांसादोषधिक्काराख्यमपि पुस्तक मेकं प्रणिनाय अत्र पण्डितेन्द्रेण दीक्षितेन पण्डितराजजगन्नाथकृतं चित्रमीमांसाखण्डनं प्रत्याख्यातं स्वपितामहस्य चाप्पयदीक्षितस्य मतं मण्डितम् ।

सौभाग्यचन्द्रातपाभिधानोऽपि कश्चिद् ग्रन्थ स्तेनाक्रियत । स ग्रन्थोऽस्ति तन्त्र-शास्त्रविषयकः । परं क्वास्ति स इति न ज्ञायते ।

नीलकण्ठ दीक्षित कवि कृतेषु काव्येषु सर्वत्रैव निर्मलः प्रवाहः ।

वीक्ष्यताम्—

छायावृक्षमुपाश्रयन्ति पथिषु श्रान्ता हि पान्थाः समं
तेष्वेकोऽस्य शुभं शुभेन मनसा हृष्यन्ननुध्यायति ।
अन्यो हर्तु मपेक्षतेऽस्य विटपान् आधारयष्टेः कृते (अन्यापदेश-
कश्चिन्निश्चिनुते कवाटफलकं कर्तुं तमेवक्षणात् ।। शतकम्)

कवेर्विषयाभिव्यक्तिरीति रद्भुतैव—

खाद्या यत्र सुधैव, यस्य जठरे साक्षात् स धन्वन्तरिः
शेते यत्र समस्तरोगशमनो नाम्नैव देवोऽच्युतः ।
तस्मिन् दुग्धनिधावपि स्पृहयते नैवस्थिता मासिकाम्
अन्तर्लीनहलाहलोष्मचकितो नाथः स्वयं पाथसाम् ।।(नीलकण्ठचम्पूः)

ओजः पूर्णा च रचना कवेः प्रेक्षणीया—

उद्यन्निर्घातघोषप्रतिभयमुदयद् धूमकेतूपकेतु—
क्रन्दद्दिक्पालगन्धद्विपमुदधिपतत् तुङ्गशैलाग्रश्रृङ्गम् ।

उड्डीनश्येनकङ्कप्रकर मुपचितध्वान्त मुद्भ्रान्तवातं
प्राप्तं मृत्योरकस्माद् इव वदनविलं विश्वमासीत् तदानीम् ॥

निस्सङ्ख्यस्फुरितस्फुलिङ्गजटिलोत्सङ्ग ज्वलत्पावक—
ज्वालाभङ्गविटङ्कसङ्कलितधूमस्तोमभीमस्ततः
क्रुध्यत्कालविवृत्तवक्त्रकुहरोन्मुक्ताट्टहासोद्भट—
स्फूत्कारध्वनिभीषणः प्रववृत्ते कोऽप्यद्भुतो मारुतः ॥ (तत्रैव)

आहवस्य च दृश्यं दृश्यताम्—

सेनामुखे निविष्टम् अन्तकम् अपहृत्य तदीयमेव कालदण्डममोधम्,
अभिहृत्य तेनैव तम् आदिमं जयम् आपेदिरे ।
कालदण्डहतस्यास्य कण्ठे प्राणाः जुघूर्णिरे ।
अन्तकं यद्धतं नेतुम् अन्तकोऽन्यो न विद्यते ॥(नीलकण्ठविजय चम्पूः)

गङ्गया किमुपस्थापितं तद् दृश्यताम्—

(क) प्राप्य जानु मतिलङ्घ्य नाभिमप्यम्भसिक्षणमथाऽऽस्यसस्मिते ।
क्रन्दता मशरणं तपस्विनां शुश्रुवे कलकलान्वितं वचः ॥
(ख) सर्वतः सुरतरङ्गिणीजलैः सम्प्लुते सदसि तत्र वेधसः ।
प्राणसंयमनशिक्षया परं मज्जिता न कतिचिन्महर्षयः ॥
(ग) वक्त्रसौधवलभीगता विधेः शारदापि सहसोत्थिता सती ।
उद्गृहीतकरपुस्तका भयाद् अक्षिपद् युगमिव क्षणं क्षणम् ॥(गङ्गावतरणम्)

अयं मेधावान् कविः स्थविरावस्थायामागतायां सत्यां संन्यासं संश्रयन् आयुषोऽवशिष्टं भागं गमयित्वा ताम्रपर्णीतरङ्गिण्यास्तटे समाधिमाललम्बे ।

धन्या भारतभूरियं क्षितितले यत्राभवद् दीक्षितः
विद्वन्मान्यकविप्रियः शुचिमतिः श्रीनीलकण्ठोऽध्वरी
नानाभावरसार्द्रमञ्जुलपदा रम्यार्थसंशोभिताः
दीप्ता दिव्यगुणै रनेकरचनाश्चक्रे स विद्याम्बुधिः ॥



# रूप गोस्वामी

पञ्चाशीत्यधिकचतुर्दशशततमेशवीयाव्द मारभ्य त्रिंशदधिकपञ्चदशशततमेश-वीयवर्षपर्यन्तं यः कालः प्रावर्तत स एव कालोनिरिवलरसामृत मूर्ते र्महाप्रभोश्चैतन्य-स्यापि कालौ वर्तते । महाप्रभोश्चैतन्यदेवस्य श्रीरूप गोस्वाम्यासीच्छिष्योऽतः स एव कालो रूपगोस्वामिनो ज्ञेयो यं वर्णयितुमिहोपक्रम्यते ।

श्रीरूप गोस्वाभी वैष्णवेषु प्रतिभाधनो महा्न् प्रेक्षावान् कविर्बभूव । राधा-कृष्णयो र्भक्तेषु तस्य गणनां परमादरपूर्वकं संस्कृतसुधियो विदधति । अनारतं स्वेष्ट-देवस्य चिन्तनं, कीर्तनं, स्मरणं, भजन मर्चनञ्च विदधतस्तस्यानेहा व्यत्येतिस्म; अतस्तस्य हृदयं दर्पण इव स्वच्छमासीत् । भगवद्भक्तिनिलीनो हि स यां यां गीतिं स्तुतिञ्च प्राणयत सा सा गीतिः स्तुतिश्च कामप्यनिर्वचनीयां मृदुलतां सरसतां हृदय मर्म्मस्पर्शनकुशलताञ्च जुषते । सः श्रीकृष्णस्य, वृषभानुजायाः, यमुनायाः, वृन्दावनस्य च नितरामेव ललितं मधुरं श्लक्ष्णञ्च वर्णनं विधाय संस्कृतभाषाया मधुरिमाणं गुरूतरं मधुरिमाणं निनाय । तदीयान् हृद्गतभक्तिभावान् सर्वेऽपि सचेतसः सप्रश्रयं सभाजयन्ति । तदीयं स्तोत्रात्मकं काव्यं, यत्र अधौघविध्वंसिनीनां श्रीकृष्णस्य लीलानां वर्णनं विहितमस्ति, भक्तानां जीवनस्य सर्वस्वमेव । तदधीत्यनिशम्य च स्वसमयं नयन्ती वैष्णवानां जगती सर्वथैवात्मानं धन्यां मनुते ।

दानकेलिकौमुदी-ललितमाधव-विदग्धमाधवनाटकेषु श्रीकृष्णस्य ललितां वृन्दावन-लीला मेव सरसतया न वर्णयामास रूप गोस्वामी, अपितु सोऽधोलिखितेषु ग्रन्थेषु भक्तिरसस्य साङ्गोपाङ्गां विवेचनां च विहितवान्—

[१] लघुभागवतामृतम्

[२] उज्ज्वलनी लमणिः

[३] भक्तिरसामृतसिन्धुः

[४] स्तवमाला

रूप गोस्वामिनो भाषा वस्तूपस्थापनपद्धति द्वेऽपि हृदयहारिण्यौ । तस्य कापि-रचना नेदृशी या तत्प्रतिभोद्भासिता न स्यात् । तद्रचनायां बङ्गभाषायाश्छन्दसामपि प्रभावः प्रतिलक्ष्यते । अत्र तत्प्रणीतं गीतकमेक मुद्ध्रियते यत्र राधायाः सखी कृष्णस्य पुरो विरहिण्या राधाया दयनीयां दशामुपन्यस्यति—

अनधिगताकस्मिकगदकारणम्
अर्पितमन्त्रौषधिनिकुरम्बम्
अविरतरुदितविलोहितलोचनम्
अनुशोचति तामखिलकुटुम्बम् ॥

देव हरे भव करुणाशाली
सा तव निशित कटाक्षशराहत-
हृदया जीवतु कृशतनुराली
हृदिवलदविरल संज्वरपटली
स्फुटदुज्ज्वल मौक्तिकसमुदाया
शीतलभूतलनिश्चलतनु रियम्
अवसीदति सम्प्रति निरूपाया
गोष्ठजनाभयसत्रमहाव्रत-
दीक्षितभवतो माधवबाला
कथमर्हति तां हन्त सनातन-
विषमदशागुणवृन्दविशाला ॥

रूप गोस्वामिन इमाश्च सन्ति कृतयः —

१. पद्यावली, ४. मुकुन्द मुक्तावली,
२. गन्धर्व प्रार्थनाष्टकम्, ५. उद्धव सन्देशः,
३. हंसदूतम्, ६. श्रीहरिभक्तरसामृतसिन्धुः ॥

रूप गोस्वामिनो ज्येष्ठभ्राताऽऽसीत् सनातनगोस्वामी । सोऽपि महानुद्भटविद्वान् कविश्च श्रेष्ठो बभूव । तस्य—

१. वृहद्भागवतामृतम्, २. भागवतदशमस्कन्धस्य वैष्णवतोषिणो टीका,
३. हरिभक्तिविलासः ।

इत्येते ग्रन्थाः सन्ति सुविदिताः ।

हरिभक्तिविलासे चैतन्यमतस्य सिद्धान्ताना माचाराणाञ्च साधु सविस्तरं प्रतिपादनमस्ति ।

रूप गोस्वामिनो वन्धु र्जीवगोस्वामी चासीत् । जीवस्य नाम चैतन्यमतेतिहासे परम सम्माननीयं नाम वर्तते । चैतन्यस्य मतमधिकृत्य कृतं तदीयं निरूपण मनुपमं; तस्य कमनीयतां रमणीयताञ्चान्यकृतं तत् कदाचित् कदापि नानुहरति ।

१. दुर्गमसंगमती, २. क्रमसन्दर्भः, ३. षट्सन्दर्भः ।
इत्येते सन्ति तदीयाः साहित्यगौरवभूता महनीया महान्तो ग्रन्थाः ।

भक्तिरसामृतसिन्धौ दुर्गमसंगमनी, भागवते क्रमसन्दर्भनाम्नी च व्याख्या कस्य न नाम व्याख्येऽध्येतव्ये स्तः ? षट्सन्दर्भे भागवतसम्मताया भक्ते र्भगवतः स्वरूपस्य च विशदं विस्तृतञ्च निरूपणं शोभते ।

भागवतस्य समींक्षात्मकोऽसौ ग्रन्थो जीवगोस्वामिनो भक्तिभावनां तस्य चातुलमगाधपाण्डित्यं सदैव विद्योतयन् संस्थास्यते ।

'सर्वसंवादिनी' इत्येतयाटींकया भूषितः षट्सन्दर्भो वस्तुतोऽचिन्त्यभेदाभेद-सम्प्रदायस्य सर्वोत्तमो ग्रन्थः ।

रूप गोस्वामिकृता स्तवमाला सुविदितासु रचनास्वन्यतमा । ततो गीतिरेकात्र प्रस्तूयते—

मरन्दभरमन्दिर प्रतिनवारविन्दावली-
सुगन्धिनि विहारयो र्जलविहारविस्फूर्जितैः
तपेसरसि वल्लभे सलिलवाद्यविद्याविधौ,
विदग्धभुजयो र्भजे व्रजनवीनयूनोर्युगम् ॥

रूप गोस्वामी स्तोत्राणि विरचय्य जनताया मनो भगवदुन्मुखं विदधत् तद्‌गतं मालिन्यं माष्टुं कामयते स्म । यावद्‌भगवतो भक्ते रवतारणा न सञ्जायते चेतसि तावत् कल्याणं कुतः सम्भवम् । भक्तिरेव मनस आविलतां विनाश्य तद्ज्ञानज्योतिः प्राणिनि प्रदीपयति । यस्यालोक मधिगम्य सः स्वकीयं गन्तव्य मध्वानमभिज्ञातुं शक्नोति । तस्मिन् प्राप्ते सति मोहो विनश्यति, दुःखानि विलयं यान्ति, सर्वा अपि चिन्ताः म्रियन्ते, द्वेषरागादिका दोषास्तिरोदधते । तस्यां स्थित्यां सोऽनिर्वचनीयां शान्तिं प्रीतिञ्च प्राप्नोति । ज्ञानसागरे भवति स निमग्नः । यस्य भगवतो दर्शनं तपस्विन ऋषयोमुनयश्च तपांस्यापि कठोरतराणि विधाय न प्राप्तुं पारयन्ति तस्यैव स भक्तेरनुक्रोशेण जन्म मरणजरादि सकलदुःखावसानकरं दर्शनं लभते । एषः प्रभावो भक्तेरेव । इमाञ्च भक्तिं स्तोत्राण्यपि जनयन्ति । स्तोत्राणा मस्त्युद्देश्यम्—

मानवं सांसारिकेभ्यो दुःखेभ्यो विमोच्य भगवद्भक्तौ प्रवर्तनम् ।

स्तोत्रस्यैतादृशं महनीयं महत्त्वं वीक्ष्यानुभूय च रूप गोस्वामी स्तुती विरचयामास । आसां स्तुतीनां पठनेन श्रवणेन च चित्तं सर्वेभ्योऽपि विषमेभ्यः दूरीभूय भगवतो ध्याने चिन्तने चावस्थितं जायते । एतद्विधस्य पावनस्य कार्यस्य सम्पादनं ये हि भगवद्भक्ताः कवयः कृतवन्तस्तेषु रूप गोस्वामी वर्ततेऽन्यतम एव ।

रूप गोस्वामिनि इदमेव स्तोत्र साहित्यप्रणयनपाटवं न, प्रत्युत तस्मिन् विस्मयावहं वैदग्ध्यमपि देदीप्यते । एकतो मधुरमधुरतराणि सः स्तोत्र साहित्य मसृजदन्यतश्च प्रकाण्डवैदुष्यबन्धुरं ग्रन्थं प्राणयत् ।

वस्तुत इमे साहित्यकारा वैदुष्यवन्तो भक्तिमन्तो रसिक शिरोमणय स्तास्ता रचना: प्रणीय राष्ट्रस्यास्मदीयस्य तां महत्तासभाजितां सेवा मकार्षुर्यां सेवां न कश्चिद् राजनीतिज्ञो नेता कर्तुं प्राभवत् कश्चिच्छिल्पकारो मूर्तिकारश्चित्रकारो वा विधातु मपारयत् ।

अस्माकं भारते जाताः सर्वेऽपि कवयः प्रकृत्याः भगवद्भक्ता भवन्ति स्म, अभूवंश्च, भाविनि च भविष्यन्ति । अत्रत्याः कवयः स्वकीयेन साहित्येन भारतीयां जनतामुपचक्रुर्भृशम् । चेद्आधुनिकी भारतीया जनता तद्रचितं साहित्य मधीयीत, शृणुयाद् वा तदा सा स्वकीयं धर्मं, स्वकीयं कर्तव्यं, स्वकीयमाचारञ्च सम्यग् ज्ञातु मर्हेत् । यदाप्रभृत्येवास्मदीयाना मेषां भगवद्भक्तिजीवनानां विवेकवन्द्यमानानां विद्वद्वराणां कविमहाभागानां साहित्यस्य स्वाध्यायः परित्यक्तोऽभवत् उपेक्षितो जातस्तदाप्रभृत्येवराष्ट्रस्य युवानोऽनुशासनविमुखाः, स्वमातृपितृगुरुजनादरमन्दाः संवृत्ताः । अद्य या जनसंख्यावृद्धिरेका दुस्तरा समस्या सञ्जातास्ति, तत्कारणमपि वर्तते, आध्यात्मिक्या भगवत्प्रेमपरकायाः भावनाया उद्भावनकराणां स्तोत्राणा मुपनिषदादीनाञ्चाध्ययने स्वाध्याये चानभिरुचिः । न युवस्वेव तत्तत्क्षेत्रमध्ये कार्यकारिषु कर्मचारिषु च तदुन्मुरवत्वं नैवदृश्यते । तेषामपि दृष्टिः कर्त्तव्ये नास्ति, अस्ति सा अर्थे त्वधिकारे च । विप्रलब्धतायाः प्रखरत्वमेव सर्वत्र वीक्ष्यते । समेषामपि जनानां प्रतीच्यसभ्यतोन्मुखत्वाद् देशे सात्विकतायाः ऋजुतायाश्चाभावः संवृत्तोऽस्ति । सर्वत्र रजसस्तमसश्च प्रावल्य मस्ति । विलासितायाश्छलच्छद्म कपटधूर्ततादिकानाम-सद्भावनानामुद्दाम प्रसरः प्रसरति । व्यासो यं मार्ग मदीदृशद्, वाल्मीकिर्यं प्रकाशदीप मज्वालयत्, कालिदासो यां दिशामदर्शयत्; उत्पलदेव-जगद्धरभट्टप्रभृति स्तोत्र साहित्यस्रष्टारो यस्य वर्त्मनः पान्थोभवितु मादिदिशु र्वयं भारतीया स्तत्पथं विहाय कमप्यन्यमेव गर्हणीय मध्वानं संश्रयामः ।

नैतिकं चारित्रिकञ्च बलं तदैवोत्तिष्ठति गृधते च यदा मनः स्याद् विमलं; यो हि मनसो बिमलत्वाय प्रयतते, स्वकीयेन च प्रयासेन जनतायां मनसो जीवनपातिनौ-दोषान् निःसारयितुं सततमीहते तस्मात् परः को हि राष्ट्रस्य महोद्धर्ता भवेत् । स एव राष्ट्रस्य महान् नेता, स एव राष्ट्रस्य महान् लेखकः स एव च राष्ट्रस्य महान् विद्वान् ।

रूप गोस्वामी नैतिकबलजन्मदात्री सकलकालुष्यविनाशनपटीयसीं मनो-मालिन्यापनमनविदुषीं भगवद्भक्तिमादाय भारतेऽवातरत् । तस्मात् तत्साहित्यं जयति जयतितराम् ।

(अ) यदि हरि स्मरणे सरसं मनो
यदि हरेश्चरितश्रवणे रुचिः
यदि हरेश्चरणार्चनभावना,
पठ तदा कविरूपकृतीः प्रियाः ॥

(आ) आयुः कल्लोल लोलं कतिपय दिवस स्थायिनी यौवनश्रीः
अर्थाः सङ्कल्पकल्पा जलधरगततडिद्विभ्रमा भोगपूगाः
तस्मान्नित्यं भवन्तो हरिचरणपरकं स्तोत्र काव्यं पठन्तु
यद्रूपेण प्रणीतं मधुरमधुरतरं स्निग्धसान्द्रं मनोज्ञम् ॥



# राजा रविवर्मा

अस्ति कला विश्वस्य समाजस्य व्यक्तेश्च कल्याणार्जने परमसुन्दर सहायिका। यदा हि वयं सामाजिकात् कौटुम्बिकाच्च विप्लवाद् उद्विग्ना भवेम तदा कलैव अस्मान् आश्वासयति प्रीणयति च। अस्मदीयाः प्रवृत्तयोऽन्तस्तले निगूढा भूत्वावतिष्ठन्ते। यदा कवितायां वा सङ्गीतकलायां यद् वा चित्रकलाया मथवा मूर्तिकलायां पूर्णमनोयोगपूर्वकं लीयेमहि तदा नैजस्वान्तस्थाः सुप्ताः पीडिताश्च भावनास्तत्र सादरं विकिरामः। एतेन स्वव्यक्तित्वं वयमुन्मुक्तमनुभवामः। भावुकतावशाच्च मानवः स्वकीया निपीडिता भावनाः उद्विग्नतयाधिकयाभिव्यनक्ति; परं कलारूपोपादानद्वारेण भावनानामुन्मीलनं मितव्ययितापूर्वकं सञ्जायते। तदेवं पीडाभ्य एव नोन्मोचयति जनं परं सा तस्मिन् शक्तिमपि सञ्चारयति। सा कुरुते च तमुत्साहपूर्णं स्फूर्तियुतञ्च। कलामवलम्ब्य नूनं मानवः परमात्मनो दर्शनं विधातुं शक्नुते आसाद्य स आनन्दं वलमलौकिकं शमञ्चाश्नुते। अस्ति सा वस्तुतः कष्टनिवारकं शान्तिप्रदायक मौषधम्।

कला सभ्यतायाः स्थायिनीनां सफलतानामस्ति संरक्षिका। सा मानवस्य ज्ञानं, भावनां, कल्पनाञ्चोद्दीपयन्ती समाजस्य गतिमनुशासती सत्पथमाकलयति। यदीयायाः शाश्वतिक्याः स्थिते राभ्यन्तरे भागे मानवस्य चिरन्तनभावनानां मूर्त्तं रूप मेव न, अपितु तत्राध्यात्मिकतायाः आधारशिलापि सन्तिष्ठते।

भारतीयता कलामपि साधनास्वन्यतमां प्रकृष्टां साधनां मनुते। यन्महत्त्वं योगसाधनायास्तपस्यायाश्च साधनाया महत्त्वान्नोनतरम्। देवी-देवतापरकमूर्तिनिर्माणात् प्राक् कलाकारस्तत् तद्देवीदेवताः स्वध्यानपथेऽवतारयति ताभिश्च सह सः स्वैकरूपतामनुभूयात्मानं तत्र विपरिणमयति। भारतीयकलाकारश्चेतनाचेतनयोरुभयो रेकस्यैव परमतत्त्वस्याभिव्यक्तिदेनाङ्कयन् प्रतिलक्ष्यते। अत स्तत्राध्यात्मिकता मूर्ता भूत्वा प्रादुर्भूततां गतास्ति। सत्यमेवेदं यत् कलाकारस्य सङ्कल्पात्मिका शक्ति स्तदीयकलाम्प्रति सञ्जायते प्रेरणाप्रदं तत्त्वम्।

एकोनविंशतिशततमेशवीयाब्दे त्रावनकोरराज्यान्तर्गतकिलीमानूराख्यग्रामे, सम्भूतस्य राजवंशे, राज्ञो रविवर्म्मणः कलायां भारतीयकलाप्रिय मुपरिगीतं महनीयत्व मलौकिकं जगदखिलं विलोकयितुं सौभाग्यमविन्दत्। यदाहि सः षडवर्षवयस्क आसीत् भित्तिपु रेखानामङ्कनं कारं कारं कलामध्येतु मात्मानं संलग्नीकर्तुमुद्यतो

बभूव । आसीद् रविवर्मा प्राक्तनोज्ज्वलशुभसमुत्थापकसंस्कारसुसंस्कृतः । तस्मात्-कारणात् तत्र तदीयाभिरुचि नितरामनुदिनं वृद्धि जगाम । स लघुलघुचित्रविषयक-विधौ भृशं प्रायस्यत् । त्रिवेन्द्रं कला-केन्द्रं चिकीर्षु रसौ स्वल्पं समयं मवेलीकाराममप्य-ध्युवास । तत्रैव सप्तदशवर्षवयसि पेरोरुत्तातीमुपयेमे । तद्बन्धुरपि, यः स्वयमपि चित्रेष्वासीत् सिद्धहस्तः, तं, यथासम्भवं, कलायां प्रोत्साहयाम्बभूव । अशीत्यधिकाष्टा-दशशततमेशवीयाब्दे, त्रावणकोरे स आंग्लचित्रकार थियोडोर जेसन महाभागे मिमेल । स (थियोडोरः) तं तैलचित्र विधिषु स्वमतिना वेदितव्यतास्ववगतीचकार ।

सप्तत्यधिकाष्टादशशततमाब्दे मुकाम्बिका मन्दिरं द्रष्ट्वा निवर्तमानो रवि वर्मा दस्युभि विप्रालभ्यत । कलामवलम्ब्यैव स न्यायाधिकारिणो मेननस्य सविधे कालीकटं ययौ । तत्र स मेनन परिवारस्य सदस्यानां सामूहिकं चित्रं, यदिदानीमपि ओट्टापालमे तदुत्तराधिकारिणां संग्रहालये शोभते, आलिलेख । चित्रस्य तस्यावलोकनेन कलाकारस्य साधनायाः क्षमतायाश्च बोधो भवति ।

उपर्युक्ताया घटनाया स्त्रिषु वर्षेषु जातेषु सत्सु १८७३ तमेशवीयवर्षे आयो-जितायां कलाप्रदर्शन्यां सः स्वकीये उत्तमे चित्रे, यत्र मल्लिकाभिः केशान् प्रसाधयन्ती सुन्दरी चित्रितासीत्, पुरस्कृतोऽभवत् । राज्यपालस्तदा तं सुवर्णपदकेनाभूषयत् । ततो मद्रासकलाप्रदर्शन्यां पुनः सः पुरस्कारेण राज्यपालेनाभ्यर्च्यत । येषु चित्रेषु सः पुरस्कारमलभत तेषु चित्रं प्रथमन्तु तद्, यत्र तुम्बुरुं वादयन्ती महिला किञ्च द्वितीयं तद्, यस्मिन् प्रेम-पत्रं लिखन्ती शकुन्तलाऽऽलिखितास्ति, स्तस्ते द्वेऽप्युल्लेखनीये ।

रवि वर्मासीद् यथार्थवादी चित्रकारः । आसीत् तदीया तूलिका आदर्शे अदृश्ये च सौन्दर्य्ये सुपरिचिता । स तेषु चित्रकारेष्व न्यतमो येन न कस्मिन्नपि विद्या-लये चित्रकलायां प्रशिक्षण मधिगतम् । सः स्वकीयसंस्कारवशादेव तत्र ज्ञानं वैचक्षण्य-ञ्चानुपममानर्ज ।

रविवर्मा स्वप्रेयस्यामगाध प्रेम निदधौ । देशाटनात् सः सदा तदर्थमुपहार-माजहार । तत्तत्प्रदेशवासिन्यश्चित्रकलाचतुरा रमण्य स्तस्मिन् भक्ति निदधु स्ताः स्वकृतेषु तेषु चित्रेषु पुरस्कृता अभूवन् येषु स मानवोच्छ्रायप्रमाणोऽस्ति चित्रितः ।

रविवर्मा असकृत् पुरस्कारैः पदकै रन्यैश्च सम्मानैः ससम्मान माहतोऽभवत् । स भारतीयानां चित्रकाराणां चित्राणि किञ्च तदङ्गीकृता शैलीश्च प्रति नैजं चेतः सुरुचि पूर्वकमावर्जयामास ।

विक्टोरिया स्मारकशालायां कलिकातायां माधवरायस्य, मद्रासस्य राजभवने ड्यूक ऑफ वंकिन्हमस्य चित्रं तत्कृतिषु उच्चतमकृतित्वेन मन्येते। 'भू प्रवेशः' अथ च 'नायर सुन्दरी' इत्येताख्ये द्वे ऽपि चित्रे–तैलचित्रे–वडौदानगरस्य शोभां वर्धयत्यद्य तत्र राजेते। स रवि वर्मा गायकवाडस्वर्ण पदकेन सप्रश्रयं सभाजितश्च बभूव। वड़ौदा वासिनी निखिलापि जनता तच्चित्रचातुर्य्यां भृश ममुह्यत। अनुदिनं रवि-वर्मणो यशः शुक्लपक्षे सुधाकर इव ववृधे। महाराजः सयाजीराव गायकवाडः सादरं तमामन्त्रयामास। तत्र स लक्ष्मीं, सरस्वतीं, भारतीय संस्कृतिसम्वद्धकथाश्च बहुलाश्चित्रिताश्चकार।

१८८८ तमेशवीयवर्षे महाराजगायकवाडेन पुनः स आमन्त्रितः। तदा स महाराजस्य लक्ष्मीविलाससौधं चतुर्दशभिः पौराणिककथाधारैश्चारुतमैश्चित्रै रासज्ज। द्विनवत्यधिकाष्टादशशततमेशवीयाब्दे तत्कृतानां चित्राणां प्रदर्शनं वियानायां शिकागो इत्येतदाख्ये च स्थाने कृतमभूत्। तत्र तदीयानि चित्राणि समुचितं सम्मानं प्राप्नुवन्। स उदयपुरस्य पूर्वजानां महीपालाना मनेकेषां चित्राणि तत्रत्यमामन्त्रणं प्राप्य रचितवां स्तेषु चित्रेषु महाराणा प्रतापस्य चित्रं सर्वोत्तमं मतं भवति। १९०४ तमेशवीयवर्षे मद्रासराजभवनार्थं सः सर आर्थर हेवलाकस्य चित्रं कर्तुमाहूतो बभूव। अस्मिन्नेवाब्दे स 'केसरे हिन्द' स्वर्णपदकं प्राप्तवान्। सम्मानस्यास्य प्राप्तस्य वर्षद्वये जाते सति सः २।१०।१९०६ तमेशवीय दिनाङ्के त्रिवेन्द्रं निकषा आर्टिंगले दिवंगतो बभूव।

रविवर्मणश्चित्राणि वहूनि राजभवनानि संग्रहालयांश्च विभूषयन्ति। राष्ट्रिये आधुनिक कला संग्रहालये, नवदिल्ल्यां च तदीयानि त्रीणि तैलचित्राणि शोभन्ते। एतानि तदीयानि तानि चित्राणि सन्ति येषां प्रसिद्धिः सर्वत्रैव वर्तते—

(क) शकुन्तला, (ख) कृपणोवृद्धपुरुषः, (ग) प्रस्थानम्, (घ) सेवानिवृत्तः सैनिकः, (ङ) महिला दर्पणश्च, (च) शाकं पचन्ती माता च।

रविवर्मा युवत्याः विलक्षणतामभिज्ञातुं प्रययास। साधनया प्रसाधनया च तद्वपुषो यदपि सौन्दर्यमद्वितीयं प्राप्तं भवितु मशकत् तत्कल्पनां वस्तुतस्तदीयं कला-कोविदमन्तः करणं कर्तुं प्राभवत्। तत्कलाकृतिषु कथाप्रसंगस्यैव महत्ता न तत्र चित्रात्मकं च मूल्यं वर्तते। रङ्गेषु, शैलीषु आकृतिषु च सः सफलतां लभमानो दृश्यते। तुलनायां तच्चित्राणि स्वगुणै श्चित्रान्तराणा मन्यकृतानां गुणान् अधरीकुर्वन्ति। एतदर्थं १९०७ तमेशवीय वर्षे प्रकाशिता सरस्वती दृष्टव्यास्ति। सास्मदुपरि कथितं कथनं प्रमाणैः परिपुष्टीकरोति। रविवर्मण श्चित्राणि प्रमाणीकुर्वन्ति तस्य धार्मिक पौराणिक ग्रंथ स्वाध्यायशीलत्वम्। "अशोकवाटिकायां सीता", "विराट भवने द्रौपदी

कीचकश्च" इत्येतदादीनि सन्ति प्रायेण त्रिंविंशतिसंख्याकानि चित्राणि यान्यधिकृत्य ज्ञान मस्मदीयं न किमपि विद्यते ।

राजस्थान-दिल्ली-लाहौर-नाभा-कलकत्ता-तन्जौर-मायावर-चिदम्वर-श्रीरङ्ग-प्रभृति वहूनि स्थानानि सोऽगमत् पर्यटने सः प्राचीन भारतीयवेषादिविषये ऽध्ययन-ञ्चकार गम्भीरतया सूक्ष्मतया च। तत्रत्येषु कलाकारेषु च सोऽमिलत् । अहह, रेलादि वाहन-साधनाभावेऽपि सः कथं तां तां दीर्घां यात्रां चकारेति न विद्म. ।

आधुनिक कलाजगति रवि वर्मण श्चित्राणि विशिष्टमेव स्थान मधिष्ठाय शोभन्ते । दिने दिने तत्कृतीनां महत्त्वं वृद्धि गच्छद् विलोक्यते । एतदीयान्यपि चित्राणि सन्ति वस्तुतो भारतनिधिभूतानि ।

भारतस्य भुविचित्रकलायां, नाम येन कृत मुच्छ्रितमस्याम् ।
अस्ति धन्यचरितो रवि वर्मा, चित्रकर्म निपुणेषु धुरीणः ॥



# ईश्वरचन्द्र विद्यासागरः

केनापि विपश्चिता 'क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे' इत्येतद् युक्तमेवोक्तम् । मनस्विनो भवन्ति धीराः । ते सतीष्वपि दुस्तरास्वापत्सु विद्यमानेष्वपि घोरेषु प्रत्यवायेषु नोद्योगपथात्प्रविचलन्ति । ते विपुलं धैर्य्यं प्रभूतं परितोषं पुष्कल मध्यवसायञ्चादाय क्षुधां पिपासां वसन विहीनतामन्यानि च दारिद्र्यजनितानि सकलानि कष्टानि सहमानाः शैत्ये शैत्यं निदाघे निदाघत्वं प्रावृषि च प्रावृड्भावमवगणय्य मानवीयं जीवनमन्वर्थीकर्तुं शैशवे विद्यामर्जन्ति यौवने च तानि तानि युक्त युक्ततराण्यभिनन्दनीयानि सदाचारसमुल्लसितानि ललितललिततराणि कर्माण्या चरन्ति यैस्तदीयं जीवनं, तेषां कुलं, तेषां प्रदेशस्तेषां देशो देशस्य साहित्यं, संस्कृतिः, समृद्धिश्च समुत्कृष्टतरां श्रियं प्रपद्यन्ते । ते तदेवानुतिष्ठन्ति तत्रैव रज्यन्ति, तस्मिन्नेव कर्मणि स्निह्यन्ति येन मानवधर्म एधेत, समाजश्रीःसंवर्धेत, संसारो मङ्गल मीक्षेत । सत्स्वपि विद्यावत्सु तेष्वविनयः, सत्स्वपि धनवत्सु तेषून्मादः, सत्स्वपि प्रभुतावत्सु तेषु प्रमादः, सत्स्वपि तरुणेषु तेषु तरलत्वं न दृश्यते । तेषां मनोवृत्ति रार्जवे सात्विकत्वे च स्पृहयति । ईश्वरचन्द्र विद्यासागर स्तेष्वेव सुजनसत्तमेषु अन्यतमो बभूव ।

ईश्वर चन्द्र विद्यासागरो वङ्गेषु विंशत्यधिकाष्टादशशततमेशवीयाब्दे समुत्पेदे । यदन्वयं सः स्वजनुषोज्ज्वलतरं चकार तदासीद् विप्रकुलम् । यन्मण्डलं तद् बाल्यकालिक कौमुद्याह्लादमवाप तदस्ति हुगलीमण्डलम् । तस्यमाता भगवती देवी पिता च ठाकुरदासो वस्तुतः आस्तां पुण्यभाजौ पितरौ यौ हि विद्यायाः सागरं विद्वज्जगतो वन्दनीयमीश्वर चन्द्र मात्मज मवाप्तवन्तौ । स्वभावे सरल आचारे चारुतरः पण्डित ष्ठाकुरदास एकोऽकिञ्चन एव जन आसीत् । स भृत्यायाः अतिसाधारणत्वात् अल्पतमपणप्रदायित्वाच्च तस्याः, येन केन प्रकारेण नैजजीवनं गार्हस्थ्यञ्च पालयितुमशकत् ।

मातुः पितुश्च दरिद्रत्वादीश्वरचन्द्रो भूयांसि दुःसहानि कष्टानि सहित्वा विद्यार्जनं कर्तुं प्रबभूव । आदौ सः स्वग्रामस्यैव एकस्यां पाठशालायामपाठीत् ततश्चोच्चशिक्षाध्ययनाय कलिकातास्थिते संस्कृतकालेजेऽन्विर्तिं चकार । यस्यां गुरुतरकठोरतरपरिस्थित्यां स विद्या मानर्ज तस्या वर्णनं न सम्भवम् । स्वशयांम्यामेव भोजनस्य संसाधनं स्थाल्यादिपात्राणां मार्जनञ्च तेनैव प्रत्यहमकारि । यम् आवासं सोऽध्यवात्सीत् तत्रपाणि पादं प्रसार्य शयनमपि सम्भवं नासीत् । निःस्वता तथा तमक्लिश्नात् यत् त्रियामायामध्येतु तैलस्याप्यप्यभाव स्तत् पुरत आननं व्यादाय संतस्थे । वृत्या यानपि पणान् प्राप तैलादिक्रयणे तानुपयुयोज । निशास्तदीयाः पठन एव व्यति-

जग्मुः । विद्याध्ययनेऽनारत कृतश्रमत्वात् तस्य, स विद्यालयीयेषुच्छात्रेषु सर्वदैव श्रेष्ठः सुयोग्यश्छात्रोऽसिद्धयत् । परीक्षासु च सः सफलतां प्रथमश्रेणीयां प्राप्तवान् । सरस्वती तस्मिन्नेव प्रसीदति यो हि तस्यां श्रद्धांभक्तिं च निदधाति, यो हि तामेव सर्वस्वत्वेन मत्वा तामेव सततं ध्यानावस्थितो भूत्वाराधयति, योविद्याव्यसनी भूत्वा स्वकीय बाल्यं यापयति । सोऽप्येतादृगेवासीदतोऽल्पेनैवानेहसा साहित्येदर्शने च व्याकरणे अन्येषु च शास्त्रेषु पारदृश्वा बभूव ।

शिक्षा मुपार्ज्य भूत्वा च महान् विपश्चित् सः शिक्षकोऽभवत् । गच्छता कालेन सः संस्कृतकालेजे उच्चतमाचार्यपदासीनः कृतोऽभूत् । कञ्चन कालं यावत् स विद्यालयानां निरीक्षकताया अपि कार्यं चकार । अगाधवैदुष्यत्वात् परमव्युत्पन्नत्वात् कार्यसम्पादनकुशलतासम्पन्नत्वादधिकारिपदसञ्चालने च निष्णातत्वात् तस्य, शिक्षा-विभागः प्रतिमासं रूप्यकाणां पञ्चशतीं तस्य भृतित्वेन प्रददौ ।

नात्र संशयो मनुष्यो विद्यावत्तया गुणवत्तया कर्मण्यतया सच्चरित्रतया च सम्मानितो भवति । सः सत्वर मेवोदग्रोदग्रतरं पदम् अनन्यलब्धां प्रतिष्ठां च स्वेन सदाचारसुन्दरेण सुयोग्येन वैचक्षण्येन आसादयितु मर्हति । भवतु नाम तस्याकिञ्चना न्ववाये जनुः, भवतु वा तस्य जनकः सूपकार एव, परं गुणग्राहिणां जगतीयं किमपीदं न विलोकयति, तत्तु मानवे चरित्रचारुतां प्रतिभां कर्मठतां व्युत्पन्नतां विद्यां गुणाव-लीञ्च प्रेक्षते । यस्मिन् पुरुषे सा उक्तविधा विशिष्टता, विलसन्तीः पश्यति सा द्रागेव तम्प्रति स्वकीयां श्रद्धासम्मानशोभिनीं वरिवस्यां भूयोभूयः समर्पयति सादरम् । सत्यमेव भणितं भवभूतिना 'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः'। ईश्वर चन्द्रोऽत परां प्रतिष्ठा मुत्कृष्टतमञ्च सम्मानं नीतोऽभूत् । न केवलं स उच्चतर पदप्रतिष्ठापनगरिम्णा सम्मानश्रिया चार्चितो बभूव परं 'विद्यासागर' इत्येतेनो-पाधिना च व्यभूष्यत ।

मनस्विनो मनीषिणो भवन्ति मानधनाः । ते प्रभूतमर्थराशिमुच्चोच्चतरं पद-मेश्वर्यं च प्रकृष्टं सहर्षं जहति परं मानं न मुञ्चन्ति । ते सौहृदपूर्वकमेव क्वापि कार्यं कर्तुं मुत्सहन्ते; न तेषां कस्याप्यप्रियता प्रिया भवति; विवादाद्वैमत्याद् वा ते दूर एव तिष्ठासन्ति । अस्मादेव कारणादीश्वरचन्द्र विद्यासागरोऽदभ्रार्थराशिप्रदं पदमपि पर्यत्यजत् ।

विद्वत्तायाः समुचिततर उपयोगो भवनि साहित्यसम्पदो वर्धनम् । यो विद्वान् स्वस्य देशस्य साहित्यं-वाङ्मयं-नैजेन ज्ञानेन स्वकीयया विद्याश्रिया प्रवर्धयाति द्योत-यति चातितरां स धन्यः । बिद्वान् विद्याया ऋणात् तदैव विमुक्तो भवितुं शक्नोति यदा स तस्या भाण्डागारं तस्या कोषं वा यथाशक्ति एधयितु मीहते । यद्यशो विद्यानु-

ग्रहेण मानवो विन्दति वा सः यानि मान-प्रभुत्व-सम्पत्सुखादिकानि प्राप्तु मर्हति तेषा मनुरूपतया चेत्कार्यं नाचरति किञ्च विद्यां निधिं न गोपायति, न तं पोषयति, न तं वर्धयति, न तं कुशयति तदावश्यमेव न स मानवोत्तमः। ईश्वरचन्द्रो विद्यासागर आसीदेकः पुरुपर्षभः। स बहून् लघु-गुरून् ग्रन्थान् प्रणीय सरस्वत्याः कोषस्य संवर्धने स्वकीयं श्लाघनीयं योगं प्रदत्तवान्। आसीद् स महान् कुशल लेखकः। अतः कीर्ति मर्थञ्च प्रचुरं लेभे। श्रूयते यदसौ स्वरचित ग्रन्थेभ्यःप्रतिमासं प्रायेण रूप्यकाणां सहस्रत्रय मायत्वेन प्राप्नोत्।

ईश्वरचन्द्रो विद्यासागरो मातृपितृभक्तो युवासीत्। सः स्वमातरि स्पृहणीया मसीमभक्ति निदधौ। तस्या आज्ञापालनं सः स्वप्राणानपि हुत्वाचिकीर्षत्। एकदा तस्य विद्यार्थि जीवने, तदीयाम्बा तमाजुहाव। स तदाह्वानोदन्तं विलम्बेन प्राप। रात्रिरासीत्, मार्गश्चासीद् दुस्तरसरिद्युतः। परं मातृभक्तः स तरुणस्तदैवोदतिष्ठत् तमिस्रायां, नदींञ्चोत्तीर्य मातुः सम्मुखे समुपस्थितो बभूव। यदा सः शिक्षामधिगम्य अर्थार्जनयोग्यः सञ्जातस्तदाक्षिप्रमेव स्वकीयं पितरं सविनयं प्रार्थयाञ्चक्रे यत् सः भृत्यतां विहाय ससुख मानन्दपूर्वकं जीवन नयेत्। वस्तुतस्तस्यैव यूनो जीवनं धन्यं प्रशंसास्पदं च यः स्वकीयेन सुचरित्रेण नैजं मातरं पितरं च प्रीणति।

ईश्वरचन्द्रो विद्यासागरः कदापि न भौतिकतायामरज्यत्। सः प्रभूतातुलस-म्पदर्जनकृद् भूत्वापि सदैव सरलतरं शुचितरं जीवनमगमयत्। न सः स्वशरीरभरणे ऽधिकधनव्ययीकरणं वरममंस्त। स यावता शरीररक्षा भवितुं शक्या तावदेव धनं तत्र अव्यासीत्। सः सर्वदान्तरीयमेक मुत्तरीयञ्च अवस्त। आसीत् स उदारचेताः शील-वान् मानवसत्तमः। स एकदा कलिकातातो मिदिनापुर मयाञ्चक्रे। यानाद् यदा सोऽवातरत् कश्चित् कालेजीयश्छात्रोयस्य सविधे एकातिलघ्वी मञ्जूषावर्तत, उच्चैः भारवाहिनं मञ्जूषां वोढु माह्वास्त। परं नागतः कोऽपि। ईश्वरचन्द्रो द्रुत मात्मानं तन्मञ्जूषां वोढुं प्रस्तुतीचकार। छात्रः स मञ्जूषां तस्य दत्त्वा साभिमानं चचाल। स्टेशनाद् वहिरागम्य विद्यासागरान्मञ्जूषां गृहीत्वा तस्मै पणचतुष्टयं दातुमारभत। विद्यासगरो नैतदपेक्ष्यत इत्यभिदधत् तूष्णीं ततः प्रातिष्ठत। आगामिन्यहनि छात्रोऽसौ पण्डितेश्वरचन्द्रस्य सम्माननाय समायोजितं समारोह मेकं सम्भावयितुं गतः। तत्र सः सम्माननीय मतिथिं तमेव ददर्श यस्तस्य मञ्जूषां ह्योऽवहत्। स भृशं लज्जितो भूत्वा तच्चरणयोरपप्तत्।

विद्यासागरः परमप्रह्वः पुरुषरत्नमासीत्। कस्मादपि धर्म्यान्न्याय्यात् करणी-याच्च सत्कार्यात् कदापि स नात्मानमस्रंसयत्। तं न किमपि युक्तमुचितं कार्यं लघु वा अलघु ह्रेपयितुं शशाक।

ईश्वरचन्द्रो न विद्यासागर एव दयासागरोऽप्यासीत्। प्रपीडितान् दीनान् दुःखितांश्च जनान् विलोक्य तस्य हृदयं दयार्द्रं मभवत्। सः सततं दीन दरिद्रदुःख-दलने व्यापृत एव प्राप्यत। स तेषां दुःखे सहायको बभूव। निस्सहायांश्च छात्रान् प्रति सः पुस्तकानि वसनान्यन्यानि च तदुपकारीणि वस्तूनि छात्रवृत्तिं च प्रददद् व्यालोक्यत। आसीत् स लोकप्रिय प्रधीप्रवरः। सः साधारणसाधारणतरेष्वपि मानवेषु सद्भावपूर्वकं समवेदनापुरस्सर ममिलत्। सः समेषामपि वक्तव्यमवधानमाधाय अश्रौषीत्। मन्ये परोपकारस्तद्रूपं निधाय अवतीर्णो भुवि बभूव। सः

'देहे पातिनि का रक्षा यशोरक्ष्य मवेत् सदा।
नरः पतितकायोऽपि यशः कायेन जीवति'॥

इत्यत्राततरां विश्वसिति स्म।

आसीत् स उपश्लोकनीयचरितः सदोज्ज्वलचरितचारुः। न तस्मिन् जातु कलिकोपक्रमोऽदृश्यत; न तस्मिन् परमहिमोपघातः पर्यबालोक्यत; न च मित्रोदयद्वेष एव कदापि पर्यलक्ष्यत। भारतालङ्कारभूतो हि स धाम धर्मस्य, आस्पदं गुणानाम् आश्रयः श्रेयसाम्, आकरः साधुव्यवहाररत्नाना मावासस्थलञ्च आर्यमर्यादासम्पन्निचयानां बभूव। सुशोभितसत्त्वबुद्धिपौरुषपराक्रमः शास्त्रानुशीलननीतसमयो नवनवग्रन्थ-प्रणयनसंवर्द्धितसंस्कृतवाङ्मयोऽनुशासनप्रियः कर्त्तव्यरतो धृतपरमेश्वरचरणाम्बुजहृदयो मातृपितृभक्तिसेवैकसर्वस्वोनिरभिमानः स महान् मानवः प्रभुत्वमवाप्यापि न प्रमत्तो धनमधिगम्यापि नोन्मत्ततामधारयत्। तदीयं प्रेम न प्रयोजनापेक्षमासीत्; तदीया नीतिश्चन्द्रकौमुदीव विमलाह्लादप्रदर्शमभावसञ्चारणक्षमासीत्; तदीये आर्जवेऽद्भुतमेव किमपि माधुर्यं निवसति स्म। तेन सार्धं वार्तां विदधतां सर्वेषामपि मानवानां मानसे भावनेयंसमुत्पन्ना भवन्ती समुपालभ्यत—"नखलु कश्चिद् धीमतामविषयो नाम"। तस्य सकाशे यः कोऽपि क्षणमेकमपि चेत् स्थातुं लब्धवात् तस्य जनस्य चित्तं तम्प्रति नितरामेवावर्जितं सञ्जातं; तत् प्रसन्नतोल्लसितमजायत सत्यमेवेदम्—

यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम्।
न हि कस्तूरिकामोदः शपथेन विभाव्यते॥
नमाम्यहं तं विनयेन विज्ञंयस्याभवत् कुन्दनिभं हि वृत्तं।
पीयूषनिष्यन्दिनि यत्र हर्षं केषां न धत्तेस्म नितान्तशुभ्रम्॥



# कवीन्द्रः रवीन्द्रनाथः

रवीन्द्रनाथोऽस्मद्युगस्यास्ति लिऑनारडो डाविञ्ची। तस्य वाग्मिता लोकोत्तर शक्ति मजुषत। आसीत् सः कविः, रूपककारः, कलाकारः, रचनाकारः, अभिनेता, दार्शनिक श्चित्रकारः शिक्षकः सन्देशहर ईश्वरीयः प्रणिधिश्च। परं प्रथमं स आसीत् कवि स्ततश्चान्यत् किमपि। तद्रचितरचना स्तस्य विश्वकवित्व मुद्घोषयन्ति। तत्कृतयः सामान्यतो यं हि प्रभावं पाठकेषु क्षिपन्ति तमवलम्ब्य ते तं धार्मिकः कविः स इति विभावयन्ति। निःसंशयं, स महान् धार्मिकः कवि र्बभूव; परं धार्मिकः कविः सन्नपि स युगपदेव, प्रकृतिकविः राष्ट्रकविः, प्रेमोपासनापरः कविः कविश्च बाल्यस्यासीत्। तत्र विलसन्ती प्रतिभा पुरन्दरकार्मुकमिवानेकविधहृदयहारि सौन्दर्यं पुष्णन्ती व्यालोक्यत। तस्मिन् यथार्थवाद आदर्शवादश्चोभौ व्यराजेताम्। सः प्रलयङ्कारिदृश्योद्भाविलोलोल्लोलभयङ्करं समुद्रं गातु मशकद् यथा, तथैव सः सुमृदुलं सौरभसुसेवितं सुमनमपि लघीयो गातुं क्षमते स्म। कोमलस्य कठोरस्य च भावस्य वर्णने सः सफलां क्षमतां निदधानोऽवाप्यत। विषयः कीदृगपि स्यात् तस्य लेखन्यबाधगत्या तत्र तरन्ती प्राप्ताभूत्। प्रहसने, कारुणिके भावे, भङ्ग्यां, वक्रोक्त्यां, श्लेषे च—सर्वत्रैव—स आचार्यत्वे जगाहे। अधिकारपूर्वक मखिलानामपि मूर्तामूर्तभावाना माकलने कुशलं कोविदत्वं बिभ्राणोऽसौ व्यद्युतत्। वङ्गसाहित्यं प्रति तदीयं योगदानं भूयस्कं वरीवर्ति। सः शतशो गीतीः विभिन्नेषु स्वरेषु लयेषु च प्रवते स्म। वस्तुतस्तादृशं नानाकलाकुशलं सर्वविधभावावगाहनप्रवीणप्रतिभापेशलं महाकवि मनेकशतकानन्तरं जगद् द्रष्टुं शक्नुते स्म।

हन्त, अस्मद्देशे भारते तदीयाः सर्वाः रचनाः राष्ट्रभाषायां हिन्द्यां न सन्त्यनूदिताः किंवा देवनागरीलिप्या मङ्किताः तस्मात् तस्य महाकवेः सर्वेऽपि देशवासिनो रचना-सुधां पातुं न भवन्ति क्षमाः। आग्लभाषायां लिखिताः किञ्चांग्लभाषायामविकलतयानूदिताः कृतीस्तएवाध्येतु मर्हन्ति ये सन्ति तद् भाषाविदः।

रवीन्द्रनाथः पद-वाक्यपारावारीणः प्रेक्षावान् बभूव। स नैजस्यायुषोऽष्टमाद् वर्षात् स्वां लेखनीं रचनायां प्रावीवृतत्। तस्मात् समयात् सोऽजस्रं रचनाः सृजन्नेव समलक्ष्यत। नैतादृश मेकप्यहोऽघटत यद्धि स लेखनकर्मणि न प्रायुङ्क्त। सोऽशीतिवर्षाण्यजीवत् परं कृतीः कुर्वाण एवाजीवत्। कुर्वन्नेवेह कर्माणि जिजीविषेदिति यदुपनिषदुपदिशति तत् तज्जीवने व्यवहारे परिणतं भवददृश्यत। साहित्यस्रष्टृषु एवंविधा न्यूनतमा एव साहित्यस्रष्टारो विलोक्यन्ते ये स इव स्वजीवनस्यैकैकं क्षणं साहित्य-

प्रणयनेऽतिवाहयितुं क्षमा भवितुमशक्नुवन् । सः को यो मरणशय्यासीनोऽपि स्वां लेखनीं न व्यरीरमदिति चेदस्मद्देशस्य तरुणा जिज्ञासन्ति तर्हि ते विदाङ्कुर्वन्तु यत् स आसीत् कवीन्द्रो रवीन्द्रः ।

कवीन्द्रो रवीन्द्रस्तत्कार्यं गुरुतम मेकाक्येव चकार यत्प्राप्तवागर्थाधिकाराः षड्-विद्वांसः संहता भूत्वानुष्ठातु मर्हन्ति । तस्या लेखनी स्रोत इवानवच्छिन्नतयानिशं विज्ञान संगीत साहित्य-समालोचना-समाजोद्धार-शिक्षा-धर्म-राजनीत्यादि विविधविष-येषु लेखान् प्रावीवहत् । सा न कदापि कस्मिन्नपि यामे अकर्मण्या भूत्वा समतिष्ठत । सः कदापि गीतीः, कदापि नाटकानि, कदापि कथाः, कदाप्यभिनन्दनपत्राणि, कदापि स्तोत्राणि, कदाप्याह्निकीं, कदापि प्रबन्धांश्चानेकविधानुद्भावयन्त्येव विश्वेनावा-लोकि । वङ्गभाषाया मांग्लभाषायाञ्च यद्विशालतरं साहित्यिकं कार्यं सः कृतवान्, यदि तत् सकलं केनापि विधिना सङ्कलितं स्यात् तदा स्थूलतरा बहुशो ग्रन्था निर्मिता भवितु मर्हन्ति । तत्सृष्टस्य धराधराकारस्य साहित्यस्य केवलमाङ्ग्लभाषानिबद्ध मेक-देशगं भागं निशम्याधीत्य वा धीमन्तो जना ये 'स वस्तुतोऽलौकिकीमनिर्वचनीयां प्रतिभा-मादाय धरित्र्यामवातरदिति तं लक्ष्यीकृत्य शंसन्ति, ते तत्प्रणीतं समग्रमपि साहित्यं पठित्वा किमभिधास्यन्तीति न वयं विद्मः ।

रवीन्द्रः कविः किंवा कलाकार एव नासीत् परं स मानवतायाः सन्देशवाही कश्चिद् दूतोऽप्यासीत् । मानवतायां सः तथैव अप्रीयत यथा कलायां कवितायां च । तन्मेधा मानव प्रेमभावं धर्मस्याधारग्रावाणममंस्त । स मातृमहीं स्वर्गादपि गरीयसी-ममन्यत । तदीयं दर्शन ज्योतिर्मण्डलायते स्म; स मानवं तत्साधनं मन्यते स्म येन सर्वेऽपि पदार्था मातुं शक्या भवन्ति । किमपि तथ्यं मानवेन सह न स्वसम्बन्धमनु-मन्यते चेत् । तदा तद् वस्तुतोऽस्त्येव नेत्येतेन तदीयेन वक्तव्येन तद्धृदयस्य मानव-निहितासीमप्रेमवत्त्वमभिव्यक्तीभवति । सोऽसकृद् जगतीतलवर्तिषु देशेषु पर्यटनं कृतवान् । तत्रत्यानां मानवाना माक्रमणकारिणी मनोवृत्तिस्तस्यान्तः करण मतितरामदुनोत् । अतः स तेषां परोदयासहनशीलां परापकाररतां प्रवृत्तिं नितरा मभर्त्सयत् । तां दुर्भावनां मानवताम्प्रति क्रियमाण मेक मक्षम्य मागः सोऽवागमत् । वैज्ञानिकैः प्रहरणै रुपलब्धै र्भास्वरैः साधनैः संगठनैश्च दुर्बलराष्ट्रसमुत्सादनपरतायाः प्रतीच्यायाः मानवताया उपरि दम्भोलिनिपातनमेव सोऽमंस्त । अतः स इदञ्चेदभिहितं भवेत् कदापि नायुक्तं यत् दुष्कर्मतु तद् दुष्कर्मकारिण एव गच्छताकालेन विध्वंसयेदिति स एकदा बभाण । मानवतायाः संत्राणाय अवतीर्णोऽसौ दूत स्तां (मानवताम्) रक्षितुं पोषयितुं चासकृद् विश्वस्य महान्ति राष्ट्राणि भृशमन्वरौत्सीत् परं तानि केन प्रकारेण तदीयां तां बाणीं प्रति स्वकीयानि श्रवणेन्द्रियाणि बधिरीकृत्योदासीनता मदर्शयन्नि-

त्येद्विश्वस्य भाविन इतिहासकारा अङ्कयिष्यन्ति । द्वितीयं विश्व युद्धन्तु तदीयां सर्वामप्याशां दलयाम्बभूव । मृत्युशय्यासीनं तं तद् भृशमतौत्सीत् । स आह—'आइ हैड एट वन टाइम विलीव्ड दैट दी स्प्रिंग्स ऑफ सिविलाइजेशन उड इसू आउट आफ दी हार्ट आफ यूरोप. वट टुडे, व्हेन आई एम एबाउट टुक्वीट दी वर्ल्ड, दैट फेद हेज् गॉन वेङ्क्रप्ट आल्टु गेदर. एज आइ लुक एराउण्ड, आइ सी दी क्रम्बलिंग रयून्स ऑफ ए प्राउड सिविलाइजेशन स्ट्रयून लाइक ए वास्ट हीप ऑफ फ्यूटीलीटी' ।

नूनं यद् विश्वं परितोऽवलोक्यते तद्वीक्ष्य सर्वाप्याशा निरस्ता जातास्ति दृश्यमानोऽयं संहार उत्सिक्तामिमां सभ्यतां निःसारताया राशिमेव विनिगमयति ।

रवीन्द्रनाथो महान् प्रकृत्यनुरागी कवि रासीत् । भवंश्च रहस्यवादी सः कविः प्रकृतिं मानवं च, जीवनं मृत्युं च, प्रणयं सौन्दर्यं च लक्ष्यीकृत्य यदगायन् मधुरं तन्माधुर्यं तन्नैसर्गिकत्वं तत्सरसत्वं च नान्यस्य गीतिकारस्य गीतिषु कवेश्च कवितासु दृग्गोचरीभवन्ति । तदनुभूत्यां प्रकृति र्मानवात्, प्रकृतेश्च मानवो न पृथक् पृथगभवत् । तन्मतेन शिशोः स्मितं, कुसुमस्य सौन्दर्यं, सतां स्तोत्रं चासीमताया वक्षसि प्रवहमानो-रय एव । 'प्रत्यगात्मा सनातनसत्य सागरगामिनी सरिदिवेति' सोऽमन्यत । सः साधनाभिधेयायां स्वकीय दार्शनिकलेखमालायां यान् हि चारुतरान् विशदविशदतरान् विचारानभिव्यानक् ते तस्यौपनिषदं कवित्वं प्रथयन्ति । तदीयं जीवन माध्यात्मिक-स्वरूपावाप्त्यै यस्मात् साहाय्य मलब्ध तदस्ति बुद्धोपदेशसंजुष्ट मौपनिषत्कं ज्ञानम् । सः स्वयमेवामनति—'उपनिषदां वचांसि बुद्धस्य च गिरः परमात्मन उपदेशा इव मे प्रतिभान्ति । ततोऽह मात्मानं निरवधिकामुन्नतिमध्यासीनं भावयामि । अहं तद्भणितीः स्वजीवने स्ववक्तव्येषु चाजस्रं सोत्साहं प्रयुनज्मि ।

डॉ० सर्वपल्ली राधाकृष्णन् आह—

कवीन्द्रस्य रवीन्द्रस्य जीवनदर्शनं भारतस्य प्राचीनतरं बौद्धिकं धनम् । तत्रा-धुनिकं जगन्नूनं स्वाभीप्सितानि पूरयितुं क्षमं भूत्वा मङ्गलमयमभ्युत्थानं कर्तुं मर्हति । तत्रोपनिषदां सा व्याख्योपलभ्यते यां संश्रित्य साम्प्रतिको लोकोऽनायासेनोपकृतो भवितुं शक्नोति । सत्यंत्विदं यदीयायां व्याख्यायां किंवा वाण्यां प्रत्नं भारतीयं ज्ञानं दर्पणे प्रतिबिम्ब मिव प्रतिभाति । सः सौन्दर्यं तदेव मन्यते यदर्थ मस्मत्तः परमेश्वर उत्सर्ग माकाङ्क्षति ।

रवीन्द्रनाथ आसीत् महान् देशभक्तः कविः । सः स्वकीयमातृभूमिभारतेऽगाध-मनन्तं च प्रेम न्यदधात् । तल्लेखनी प्रसूतानि देशभक्तिगीतानि नवतरुणानां स्वान्तेषु निरन्तरं जीवनं सञ्चारयन्ति तत्र देशानुरागं प्रबलमुत्साहमितमोजश्च संधुक्षन्ति ।

तानि दिव्यं शान्तं प्रसन्नं च प्रकाशं सर्वास्वप्याशासु विकीर्य पथभ्रष्टान् प्रति पन्थानं, विस्मृत कर्त्तव्यान् प्रति कर्त्तव्यं च दर्शयन्ति ।

रवीन्द्रनाथो वस्तुत आसीदस्मद्देशास्य विभूतिः । यदि कश्चिद्ज्ञातु कामो धर्मस्य ज्ञानस्य च मधुरं रहस्यं, तर्हि सः तद्रचित-गीताञ्जलिमधीयीत । तत्प्रतिष्ठापितं शान्तिनिकेतनं मानवलोकस्यास्यैकाऽऽदर्शभूतसंस्था । सम्प्रति हि तदीयं तन्निकेतनं विश्वभारतीत्येतेन नाम्ना प्रथते । दिग्दिगन्तेभ्यो महामहापण्डिता अपि तत्रागम्याध्ययनं विधाय ज्ञानज्योतिश्च प्राप्य धन्या भवन्ति ।

विश्वविदितयशा म० गान्धी रवीन्द्रं कवीन्द्रं 'गुरुदेव' इत्यभिधाय तम्प्रति सदैव स्वां भक्तिं स्वसम्मानं च प्रकटीचकार । समेषामपि विदित मेव यद् नॉवेल-पुरस्कारं समर्प्य विश्वस्य विद्यावारिधयस्तम्प्रति स्वकीयं श्रद्धासौरभमनोज्ञ मञ्जलिमर्पितवन्तः ।

यो भवति महांस्तस्य जीवनं प्रायेण महासङ्कटसङ्घर्षेषु निपतितं प्राप्यते । कवीन्द्र रवीन्द्रस्यापि जीवनं घोरासहनीयविपदोऽसहत । तदीयां वेदनां वयं तद्रचित स्मरण-रवेयाख्य कवितासंग्रहे द्रष्टुं शक्नुमः । परं ता विपद श्चित्राचित्राङ्गदावलि-दानगोरादिग्रन्थलेखकं तं न कर्त्तव्य पथाच्चालयितु मशकन् । स महान् आत्मा य इदं जगत् स्वप्रतिभया अजजागरत्, १९४१ तमेशवीयाब्दे व्रह्मणि व्यलीयत ।

विद्यावदातप्रतिभः कवीन्द्रः
कान्तः कलानां हि रवीन्द्रनाथः
चेतोऽभिरामाः कृतयस्तदीयाः
साहित्यविद्याप्रियभूषणानि ।।१

प्रणम्यते विश्वमहाकविः सः
स्वर्ग प्रदेशाइव वाग्विलासाः
पीयूषनिष्यन्दिषु येषु हर्षं
केषां न धत्ते सुरसार्थलीलाः ।।२

---

# महात्मा हंसराजः

राष्ट्रस्य नैजपुरुषार्थमहत्त्वमान्यो
धर्मं चरित्र मथ संस्कृतिसभ्यतेऽपि
यो मानवोऽनुदिवसं नयते नितान्त
मुत्थानमेव स महान् जगतीषु धन्यः ।।

सर्वेष्वपि राष्ट्रेषु प्रत्यहं सहस्रशो जना उत्पद्यन्ते म्रियन्ते च परं तस्यैव मानवस्य जन्म जीवनं निधनं च कवयो गृणन्ति यः स्वकीयस्य राष्ट्रस्य धर्मं संस्कृतिं सदाचारं शिक्षाञ्च सवर्धयितुं जायते जीवति म्रियते च । स्वकीयाभिः श्लाधनीयाभिः सेवाभि राधुनिके युगे ये सुजनाः स्वदेशं प्रकर्षवन्तं विदधु स्तेषु महात्मा हंसराजोऽप्येको देशोद्धारकोऽभूदिति को न वेत्ति ?

महात्मा हंसराजश्चतुष्यष्ठ्यधिकाष्टादशशततमेशषीयाब्देऽप्रेलमासे एकोन विंशे दिनाङ्के होशियारपुरमण्डलान्तर्गतवजवाडाभिधे संवसथे जनुर्जग्राह ।

शैशवादेव हंसराजः स्वप्रतिभोन्मेषेण जनान् विस्माययति स्म । सः प्रतिदिनं यथासमयं पठितुं पाठशालां तु गच्छन् व्यालोक्येव सर्वैः, परं स निहितविद्योपार्जनमना वालो यदा तदा वहून् बालान् समवेतान् विधाय तान् सैनिकान् आत्मानं च सैनिकाध्यक्षं मत्वा सैन्यशिक्षाप्रदानसम्बन्धिन्यां क्रीडायाञ्च सन्नियोजयंश्च समलक्ष्यत । आसीत् स धृताद्भुतबुद्धिवलो बालः । पाठशालायां यदा सोऽधीते स्म तदैव तस्मिन् परहितधी विलोकिताऽभवत् । सर्वेषामपि जनानां मन स्तस्य विद्याभिरुचिस्तस्य पर हितपरता च नितरां प्रीणाति स्म । एकदा हि स बालः कस्मिंश्चित् प्रसङ्गविशेषे 'यावन्मात्रमधीतं तावदेव जनोपकाराय न चेद् भविष्यति किं मधिकेनाध्ययनेने' ति निगद्य मातरं भृशमप्रीणयत् । स वाल उच्चशिक्षा मवाप्तु लवपुरम् ( लाहौरम् ) अगमत् । तत्र सोऽध्ययनप्रयोजतेन कस्य चन क्रिश्चियनविद्यालयस्य विद्यार्थी सञ्जातः । तदानीं बालस्य हंसराजस्य आर्थिकी स्थिति नितरामेव शोचनीयाऽऽसीत् । तं वालं तदीयः पितापि विहाय तदा दिवं प्रयातः । यो हि तस्य एकमात्रः सहोदरो मुल्कराजनामा भ्राताऽऽसीत् सोऽपि तस्मिन् काले छात्र एवासीत् । स हाईस्कूल परीक्षा मुत्तीर्य रूप्यकाण्यष्टौ छात्रवृत्तित्वेन तदालभतेस्म प्रतिमासम् । लाहौरे विद्याध्ययनानेहसि तं भ्रातरं विहाय नान्यः कोऽपि तस्य वालस्य हंसराजस्य सहायक आसीत् । स्वज्येष्ठभ्रातुः स्नेहमयं साहाय्य मवाप्य हंसराजो विद्यार्जनं कर्तुमारेभे । अर्थाभावजनिता दरिद्रता

न तस्य विद्यानुरागं हृदयं विद्यार्जनपथाद् भ्रंशयितु मशकत्। सः सर्वविधान्यपि कष्टानि सहमानो धैर्यपूर्वकं परमोत्साहेन सार्धं विद्याधनसञ्चमनरतो बभूव।

बालो हंसराजः प्रकृत्यैव सौम्य आसीत्। परं न तदीया सौम्यता भीरुतायाम-प्रीयत। तदीयाहि चेतोवृत्तिः स्वकीयायाः श्रेष्ठाया भारतीयताया गरिम्णि प्रगाढां भक्तिं निदधौ स्वभाषायाः स्वदेशस्य च गौरवे स आसीदहङ्कारवान्। स्वधर्मग्रन्थेषु च स दृढीयसीमादरधियं न्यवध्नात्। यस्मिन् विद्यालये स छात्र आसीत् सं विद्यालयः स्त्रैस्तमतावलम्बिनामासीदतः सः प्रायेण भारतीयसंस्कृतिधर्माचारादिकमाक्षिपतं स्तत्रत्यान् प्रधानाचार्यादीनश्रृणोत्। एकदा हि ऋजुः स आत्मानं सहिष्णुतायाः सीमायां निधातुं न क्षमोऽजायत। स भारतीयतां, शास्त्राणि च न्यक्कुर्वाणं स्वप्रधाना-ध्यापकं 'यथा भवान् यदाह न तत् तथा' इत्येतदभिधाय तद्वक्तव्ये नैजं कठोरं विरोधं सम्प्रतिष्ठापयामास। प्रधानाचार्यस्तदुत्थापितां तामापत्तिं न सोढुं शशाक। तेन सः स्वराष्ट्रगौरवाभिमानी नव युवा प्रताडितो निष्कासितश्च। परं तस्यच्छात्रस्य प्रतिभावत्वाद् व्युत्पन्नत्वात् कक्षायाः सर्वेष्वपि विद्यार्थिषु सुयोग्यत्वाद् विनयवत्वाच्च सः प्रधानाचार्य स्तं प्रताड्य निष्कास्य च भृशं मनस्यदूयत। विचारणानन्तरं स तत्प्रताडन-निष्कासनदण्डमनुचितं मत्वा पुनः तं विद्यालये पठितुमन्वमंस्त।

वस्तुतस्तानि दिनानि भारतीयसंस्कृतिसभ्यतादावभिमानवतो जनान् प्रति नानुकूलान्यासन्। आंग्लानां शासनमासीत्। कठोरया पराधीनतया जनानां मनोवलं निहतं कृतमासीद्; आत्मबलञ्च तेषां सर्वथैव क्षीणतां नीतमासीत्; स्वदेशस्य भाषायां, साहित्ये, पूर्वजेषु आचारेषु विचारेषु च भूयांसो जनाः घृणा मरुचिञ्च प्रदर्शयन्त एव प्राप्यन्त। पारतन्त्र्यमलिनान्तः करणास्ते दासतां स्वशिरोभूषणमिवामन्यन्त। आंग्ल-भाषां ते सर्वस्व मवागमन्, अभिमानश्चेत् क्वापि तेपामदृश्यत् तदा स भृत्यतायां दृष्टोऽभूत्; श्रद्धाधी र्यदि क्वापि तेषा मवलोकिता जाता तदा सा वैदेशिक्यां रीत्यां नीत्यांञ्च वीक्षिताभवत्, सम्मानं च यदि क्वापि तेषां लक्षितमभवत् तदा तत् प्रतीत्येषु प्रधीषु प्रेक्षितमजायत। सर्वत्र तदा प्रतीच्यता आदृताऽऽसीत् प्राच्यता च भृशं निरा-दृता। भारतीयतापक्षपातिनः, भारतीयवेषभूषाभाषाव्यवहारिणो भारतीयान् भारतीया एव तिरस्कुर्वन्तोऽवालोक्यन्त। आँग्लभाषानभिज्ञो विद्वानपि षट्सुशास्त्रेषु पार दृश्वापि मूर्खो मतोऽभवत्। नितरां चिन्तनीया स्थिति रासीत्; स्वकीयो देश एव परकीय देश इव सञ्जातः। भारतमाता दास्यदुःखदुःखिता भूत्वातितरा मुच्चैः क्रन्दन्ती तदाऽश्रूयत। कोऽपि विरल एव जन स्तत्कालस्थितं वातावरणं प्रतिववतुं विरोद्धुञ्च समर्थः समजायत। यान् हि स्वदेशाभिमानिनो महत्तायां महीयसः सुजनान् सा स्वदेशावस्था नितान्तमपीडयत्तेष्वग्रणी हंसराजोमतोऽभवत्।

हंसराजश्छात्रजीवनकाल एव देश-सेवायां स्वकीयं चेतः प्रवर्तयितुं कृत सङ्कल्पोऽभवत् । स तथा प्रायतिष्ट यथा तदीयाना वयस्यानां विद्यार्थिनां यूनाञ्च चेतांसि स्वदेशस्य गरिमाणं महिमानं चावगन्तुमारभन्त । स तस्मिन्नेव छात्रजीवन-काले एतादृशीमेकां संस्थां स्थापयितुं प्रत्याश्रौषीत् यस्यां प्रदास्यमाना शिक्षा देशस्य युवकान् भारतमातृभक्तान् भारतीय संस्कृतिनिष्ठान् भारतीयभाषाचार विचाररीतिनीतिसंसक्तान् स्वकीयश्रुति-स्मृतिशास्त्रानुरागांश्च विधातुं प्रभवेत् । तत्कालवर्तिनीषु भारतीयताविरोधिनीषु भारतीयाचारविचार परिपन्थिनीषु भारतीय संस्कृतिक्षयकारिणीषु वैदिकधर्मद्रोहविधायिनीषु शिक्षासंस्थासु तस्य मानसेऽतितराम-रुचिः समुदपद्यत । स यथाशक्ति देशहितपरं वातावरणं सृजन् शिक्षां, नानाकष्टानि-सहमानः, समुपार्जयितुं शशाक । विशिखवसुवसुविध्वब्देशवीये स 'बी. ए.' इत्येतमुपाधिं प्राप्य स्वकीयं जीवनपूर्णविधिना देशहितकार्ये मनसा प्रेम्णा च न्ययूयुजत् ।

देश-सेवायां कृतायाः स्वकीयायाः अवतारणायाः प्रागेव नरेन्द्रनाथगुरुदत्त-लाला लाजपतराय-शम्भुनाथ-संसारचन्द्र-कुञ्जविहारीप्रभृतयो बहवः सुविदिता जनास्तदीयाः सुहृदोऽजायन्त । तदीया लोकसंग्रहणप्रवृत्तिस्तस्य महनीये कार्ये परा सहायिकाऽजायत । नूनं मनीषिणो मनस्विनो मार्गं ननिर्धनतोपकरथविहीनताविपदो निरोद्धुं क्षमा भवन्ति । हंसराजो देशस्य स्वस्य संस्कृति माचारं वाङ्मयं धर्मं च पातुं वर्धयितुं च यं विचारं कृतवान् तं सः प्रथमं स्वकीयस्य ज्येष्ठभ्रातु र्मुल्कराजस्य पुरः प्रास्तावीत् । 'देशवासिनां सेवां कर्तुं शिक्षायाः पतनं च रोद्धुं देशनिर्माणकारिणीं शिक्षां प्रसारयितुं देशस्य च जने जने स्वदेशगौरवाभिभानं जनयितु महं स्वकीयं सम्पूर्णमपि जीवनं समर्पयितुकामोऽस्मि, अतः वन्धो, मां शुभाशिषाऽनुगृह्णातु भवान् येनाहं स्वकीये साध्ये सिद्धिमासादयितुं समर्थो भवेयम्' इत्येतत् सः सविनयं तच्चरणयो र्नतमस्तको भूत्वा सादरं न्यवेदयत् । ज्येष्ठो बन्धु र्मुल्कराजस्तदीयं तं निश्चयं विज्ञाय नितरामप्रीयत समतुष्यच्च । भूयास्त्वं स्वसत्प्रयासे सफलः, अहं स्वकीयस्यायस्यार्धांशं तव कृते व्ययप्रयोजनेन दास्यामीति प्रणिगद्य स हंसराजस्य, देशाभ्युत्थानार्थं प्रदर्शितं परमोत्साहसम्पन्नं शिव-सङ्कल्पं प्रीत्यान्वभंस्त । हंसराजोऽपि ज्येष्ठवन्धो राशिषं साहाटयञ्च संश्रित्य स्वा-भिमतस्य पथः पान्थो भवितुं सहर्षं समुद्यतः सञ्जातः ।

तेषु दिनेषु लवपुरीया आर्यपरिषद् दयानन्द महाविद्यालयमुद्घाटयितुं बलीय-सीमिच्छां न्यदधात् । आर्यपरिषदः सः पावनो विचारो हंसराजं भृश मनन्दयत् । स तु महर्षे र्दयानन्दस्य सच्छिक्षां प्रसारयितुं प्रगाढमौत्कण्ठ्यं चिरान्मनसि निहितवान् । वैदिकसिद्धान्तसम्पोषिणी शिक्षा भारतीयतरुणानां हृदयेषु विश्वजनीनाननवद्यान् विचारान् सञ्चारयितुं समर्थास्ति, सा तेषु स्वदेशं स्वदेशस्य च आस्थां संस्कृतिञ्च प्रति भक्तिभावमुत्पादयितुं क्षमास्ति, सैव तान् (तरुणान्) पारतन्त्र्यपाशादुन्मोचयितुञ्च

प्रभवेदित्येतत् सम्यग् विचिन्त्य आर्यसमाजस्याभिमतं तं शुभं मनोरथं प्रशंस्य स्वकीयां सेवा मार्यसमाजम्प्रति समर्पयितु तेन सह नैजं सम्पर्कं संस्थापयामास । आर्य-समाजस्य सर्वेऽपि अधिकारिणः परामेव प्रीतिं जग्मुः । संस्थायास्तादृश्याः सञ्चालनाय यादृशं सुयोग्यं समर्थसेवाभावभावितं विपश्चित्प्रवरं तेऽचीकमन्त तादृश एव महाम-तिमान् मनीषी तैः प्राप्तः, अतस्ते सर्वथैवात्मानं कृतकृत्यं मेनिरे ।

आर्यसमाजस्य विस्तृतेविशाले मनोऽभिरामे भवने रसवसुवसुसुधांशुरब्रैस्त-सम्वत्सरे जून मासे प्रथमेदिनाङ्के दयानन्दविद्यालयस्य मङ्गलमयमभूदुद्घाटनम् । तत्र हंसराज एव प्रथमः स विद्वान् यो हि प्रधानाचार्यपदमध्यासाञ्चक्रे । न स तपस्वी त्यागमूर्तिः संस्थात एकमपि पणं परिगृह्य मातुः सरस्वत्याः सेवां–विद्याप्रदानस्य पुण्वतमं श्रेष्ठ कार्यंकर्तु मनसा वचसा कर्मणासंलग्नो बभूव । भारतीयमेधा ज्ञान-प्रकाशविकिरण मेव मानवजातेः सर्वोत्तमां सेवां मनुते, सा अज्ञानतमोविध्वंसनात्परं नान्यत् किमपि कार्यं गुरुतरमवगच्छति । अज्ञानमेव सर्वेषामपि दुःखानामास्पदं किञ्च ज्ञान मेव सर्वविधानामपि सुखानां जनकं, तस्मादेव मानवश्चतुर्णामपि पुरुषार्थाना-मनुष्ठाने क्षमः सञ्जायते । अत उक्तं 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति । पुण्यचरितचारूहंसराज एतस्मिन्नेवोत्तमे कार्ये आत्मानं व्यापृतं चकार । तादृशं कर्मठ विद्वांसं प्राप्य सा शिक्षा संस्थानुदिनं वृद्धिमगात् । विद्यालयोऽचिरादेव महाविद्यालयतां प्रापद्यत । तत्रोपाधिकक्षाणामपि सन्निवेशः कृतोऽभूत् ।

षडशीत्यधिकाष्टादशशतमेशवीयाब्दादेकादशोत्तरैकोनविंशतिशततमेशवीयाब्दं यावत्—पञ्चविंशतिवर्षपर्यन्तम्—सततं हंसराजो, विद्यादान मेकमपि पणमगृह्णन्, परमोत्साहेन प्रकृष्टप्रेम पुनीतहृदयेन व्यदधात् । विद्यादानेन सार्धमेव सोऽजस्रं विद्या-लयस्योन्नतौ स्वकीयं मनो निहितं चकार । तदीयया त्यागवत्या तया महनीयया सेवया क्षिप्रमेव दयानन्दमहाविद्यालयो विश्वविदिततामगमत् । तदीयं यशः सर्वास्वपि दिशासु प्रससार । अन्ततः स तपस्वी महान् आत्मा द्वादशाधिकैकोनविंशतिशतत-मेशवीयवर्षे फेब्रवरी मासे तत्सेवात आत्मानं मोचयितु त्याग-पत्रं समर्पितवान् । त्याग-पत्र समर्पणस्य प्रयोजनं तदीय मकर्मण्यतापूर्णं विश्रामग्रहणं नासीत् । स देशस्यान्येपु क्षेत्रेष्वपि स्वकीयां सेवां समर्पयितु वस्तुतस्तत् त्यागपत्रं प्राददात् ।

अथ भारतं हंसराजं विभिन्नेषु क्षेत्रेषु सेवामनुतिष्ठन्तं प्रेक्षाञ्चक्रे । सः कदाचिद् दुर्भिक्षपीडितात् जनान् सेवमानोऽदृश्यत; कदापि स भूकम्पविपद् ग्रस्तान् जनान् भजमानोऽवालोक्यत; कदापि स तत्तद्रोग प्रपीडितां जनता परिचरन् प्राप्यत; कदापि सः स्वकीयेन सदाचरणेन सदुपदेशेन च जनवृन्दमसत्पथात् सत्पथम्प्रति आनयन् परिवीक्षितोऽभवत्; कदापि च स दीनदरिद्रेभ्यः साहाय्यं प्रददत् समलक्ष्यत ।

विद्वान् इन्द्रदत्त उनियालो 'विश्वसंस्कृत' पत्रे तं महात्मानमधिकृत्य लिखति—
" .. ....एवं पारतन्त्र्यपाशनिबद्धं भारतं पुनरपि स्वतन्त्रीकर्तुं दैवदुर्विपाकेन विनष्टां प्राचीनां संस्कृतिं च पुनरपि जीवयितुं स आजीवनं यत्र तत्रात्राजीत् । न च कदापि कमपि अववञ्चत नापि चालुम्बीत् । सः सर्वदैतत् एवालषीत् यत् कथम् अस्माकं भारतं भारतं भवेत् । एतत् कृते एव च स आजीवनं कष्टम् अमीमृषत् । प्रतिपलं हि सः स्वकीयं कर्त्तव्यं मिम्नासतिस्मापरेषां कर्त्तव्यञ्घाऽमिम्नपत्" .... ।

आंग्लशासनस्य कूटनीति र्यस्मिन्ननेहसि भारतीय जनतायाश्चेतो भारतीय-वाङ्मयविमुखं कुर्वाणा सर्वत्र तरस्विन्या गत्या विचरन्त्यदृश्यत; यस्मिन् काले भारतीया नवयुवानो वसिष्ठभरद्वाज याज्ञवल्क्यप्रभृति महर्षिसु व्यास-वाल्मीकि-कालि-दासादिकविषु शङ्कररामानुजनिम्बार्का द्याचार्येषु कणाद-गौतम-पतञ्जलि वाचस्पति मिश्रादिविपश्चित्प्रवरेषु अन्येषु च यास्क-पाणिनि-भर्तृहरि चाणक्यादिविद्याधामसु नितरामरुचि नीरसता मनभिज्ञताञ्च दधानाः किञ्च सेक्सपियर मिल्टनकॉण्ट-हेगल-स्पेन्सरप्रभृति प्रतीच्यसंख्यावत्सु प्रगाढां भक्ति प्रीति मनुरक्तिञ्च बिभ्राणाः पर्यलक्ष्यन्त; यस्मिन् समये भारतीयाः प्रज्ञावन्तोऽपि स्वकीयानि शास्त्राण्युपहसन्तः स्वकीयां मान्यतां मर्दयन्तः स्वदेशस्यास्थां निषूदयन्तः स्वामेव संस्कृतिमवजानन्तश्च समुपालभ्यन्त तस्मिन् काले हंसराजः स्वराष्ट्रस्य जनतां, स्वमातृभूमे र्नवतरुणानां मनांसि, स्वस्य देशस्य च मतिमतां राजिं नैजस्य भारतस्य विश्ववंद्य मनुपमं साहित्यं, गौरवं वैदुष्यं चारुतमसर्वहितपरकल्याणमयीं संस्कृतिञ्च प्रति प्रसह्य आचकर्ष । सः स्वदेशस्य जनतां ताः शिक्षा संस्थाः प्रतिष्ठापयितुं प्रेरयामास यासु भारतीयर्षिसम्मता शिक्षा प्रदत्ता स्यात्, या हि संस्थाः भारतीयानां तरुणानां चेतःसु वैदिकं धर्मं वैदिकीं संस्कृतिं, वैदिकी माचार-विचारपद्धतिञ्च प्रति प्रकृष्ट मनुरागं जनयितुं क्षमाः स्युः; यानि च शिक्षा मन्दिराणि संस्कृतभारत्यां भाषासु च भारतीयासु सर्वेषामपि भारतीयानां चेतोवृत्ति रमयेयुः ।

हंसराजो महात्मा वेतनमपरिगृह्य निष्कामभावनया शिक्षा संस्थाया मध्यापन-कार्यं विधाय पुनः स्वकीयस्य देशस्य विद्याप्रदातृगुरूणां पवित्रं माननीयं मार्ग मुद्घाटयामास अथ च भारतीयानां हृदये भारतीयतां भूयः सञ्चारयामास । तदीया स्वदेशार्थ कृतेयं सेवा वस्तुतोऽन्यविधाः सर्वा अपि सेवाः अतिशेते ।

प्रतीच्यतातो मतिमान् महात्मो —
निनाय यूनां जगतीं प्रसह्य
यः प्राच्यतां भारतभू विभूतिः
वंद्यो न सः कस्य हि हंसराजः ?



# जगदीशचन्द्र वसुः

तस्य कालस्य गतस्य वत्सराणा मनेकानि शतकानि व्यतीतानि यदा हि अस्मदीयः प्रियो भारतदेशः पतञ्जलि नागार्जुनार्यभट्ट चरक सुश्रुत वराह मिहिर ब्रह्मगुप्तभास्करप्रभृति परमोद्भटविज्ञानाचार्यान् एतस्मै जगते प्रदत्तवान् । अस्मिन् वर्तमानेऽहसि वैज्ञानिकमहत्तामञ्जुलं क्षेत्रं शून्यमेव सत् सन्तिष्ठेत इत्येतत् कदा सम्भवं भवितुं शक्नुयात् ? अतोऽभ्युदयवति एतस्मिन् नवीने युगेऽवतीर्णे सति वसन्त-प्रिये, एकतो धर्म-समाज-राजनीत्यच्छच्छविसुशोभितेषु कला-साहित्य-सौहित्यकेदारेषु मनोज्ञानि कुसुमानि समुन्मीलितानि भवितु मारभन्त; अन्यतश्च विज्ञान-शाखायामपि कतिपयानीदृशानि पुष्पाणि समुदपद्यन्त येषां भव्यं हि सौरभं संसारस्य दिग्दिगन्तराणि सद्गन्धमयान्यकार्षीत् ।

सञ्जाता हि अस्मिन् महनीये युगे ते विज्ञानविदां वरेण्या विश्व वन्दनीया वुधा ये स्वकीय प्रियभारतमातुः शिरः संसारे समुन्नतरं कृतवन्तः । श्रीजगदीशचन्द्र वसु-प्रफुल्लचन्द्रराय-श्रीनिवास रामानुजन्-चन्द्रशेखर-वेङ्कटरमणप्रभृतयो हि भारते ते विज्ञानाचार्या अस्मिन्ननेहसि, विज्ञानजगति जगता विलोकिता येषामाविष्कारा अद्भुता जगती माश्चर्यार्णवे न्यमज्जयन् । एतेषूपरि निर्दिष्टनामधेयेषु विज्ञानविद्वत्सु यशः प्रकाश-धवलीकृत दिग्दिगन्तस्यौल्लेखनीय चरितस्य विज्ञानाचार्यस्य श्रीजगदीचन्द्र वसु महाभागस्य चर्चां विधातुमुपक्रमः क्रियते ।

डॉ० जगदीशचन्द्र वसुः साम्प्रतिकेषु विज्ञानविशारदेषु देदीप्यमानेषु नक्षत्रेषु इवादित्योभृशं विभासते स्म । तस्य लोकोत्तरोद्योतेन न केवलं भारतस्य विज्ञानेतिहासः समुद्योतितोऽभवदपि तु समग्रस्यापि विश्वस्य विज्ञानेतिहासोऽतितरा मालोकितो भूत्वाद्य विभ्राजते । सोऽद्यतनेषु अङ्गुल्यवच्छेद्येषु नवदशसु सुधीशिरोमणिष्वन्यतमो महान् प्रकाशस्तम्भ सन्निकाशः सन् भारतं येन गौरवेण विभूषितवांस्तद्गौरव मवाप्य तन्मोमुदीति ।

प्राच्येषु वङ्गेषु, ढाकामण्डलान्तर्गत विक्रमपुर पत्तन परिधौ, राढीखेल ग्रामे, कायस्थकुले, ऽष्टपञ्चादशाधिकाष्टादशशततमेशवीयाब्दे, नवम्बरेमासे त्रिंशत्तमे दिनाङ्के श्रीजगदीशचन्द्र वसु र्जनुरग्रहीत् । तस्य पिता भगवानचन्द्र वसु फरीदपुरे उपमण्डला-धीश आसीत् । श्रीजगदीशचन्द्र वसु रादिमां शिक्षां स्वस्य ग्रामस्य पाठशालायामेव प्राप । तत्र मानवतायाः प्रकृतिप्रेमपुनीततायाश्च ये द्रढीयांसः शुभाः संस्कारास्तं परितः

आवृण्वंस्तेषां प्रभावस्तदीये चित्ते जीवनं यावत् पर्यलक्ष्यत । उच्चतर-शिक्षाधिगमनाय सः कलिकातामयासीत् तत्र स बी० ए० भूत्वा ततः सत्वरमेवाध्ययन विशेष मनुष्ठातु मिङ्गलेण्ड मगमत् । तत्रत्यायाः शिक्षाया व्यय आसीदतितरां प्रभूत स्तस्मात् तदीयाम्बा स्ववत्समुच्चतमशिक्षावन्तं कर्तुं नैजानि सौवर्णानि भूषणान्यपि व्यक्रीणात् । श्रीजगदीशचन्द्र वसुः स्वयन्तु आई. सी. एस् अबुभूषत् परं तदीयो जनक स्तस्य प्रकृतिं विज्ञानविषयोन्मुखीमपि विलोक्य तं विज्ञानार्जनाय अनूनुदत् । प्रथमं तु स लन्दनं प्रयाय मेडीकल कालेजे आत्मानमन्वगमयत् परं विधि विधानस्य प्राबल्यात् चिकित्सा विद्यां विहाय स विशुद्धं विज्ञान मेवाध्येतु मग्रेसरो बभूव । स रसायने, भौतिक्यां, वनस्पति शास्त्रे च उच्चतममुपाधि मधिगम्य पञ्चशीत्यधिकाष्टादशशततमेशवीयाब्दे स्वकीयं देशं निववृते । यदैव सः कलिकाता माजगाम तत्रत्यः प्रेसीन्डेन्सी कालेज स्तेन भौतिक-विज्ञान-प्रोफेसरासनं नैजं विभूषित मकारयत् । प्रारम्भे कस्माच्चित् कारण विशेषवशात् सः पर्याप्त मर्थसङ्कट मसहत परं शीघ्रमेव तत उन्मुक्तिं प्राप्य स्वकीयं जीवनं वैज्ञानि-कांश्चमत्-कारान् प्रदर्शयितुं प्रावीवृतत् । नैजेनविज्ञानवैदग्ध्येन सः सर्वमपि संसारं विस्माययन् भारतस्य पुनरुत्थानद्वारं विवृतीचकार ।

यदा हि युव संसार शिरोभूषणं जगदीशचन्द्र वसु र्ज्ञानपिपासाप्रेरितो भूत्वा प्रथममेव प्रकृते रविदितरहस्य लोकं स्व वीक्षणस्य शरव्यं विधातुं नैजं चरण मुपासीसरत् तदा कलिकातायां न कापि परितोषकरी प्रयोगशालासीन्न च शिक्षा-धिकारिषु स उत्साह एव पर्यवालोक्यत यस्तां दिशाम्प्रति प्रोत्साहयति । सत्यामप्येता-दृश्यां कठिनायां स्थित्यां सः प्रारम्भे स्वयमेव स्वकार्य निर्वहणार्हं प्रबन्धमकरोत् । कठोरायामपि आर्थिक्यां परिस्थित्यां स आशु लघीयसीमेकां प्रयोगशालां स्वकीये निकेतन एव प्रातिष्ठिपत् । अविलम्वेनैवानुसन्धानात्मकं कार्यं प्रारब्धं व्यदधात् । प्रारम्भवत्सु दिनेषु सच्छायाचित्रणे ध्वन्यालेखने चानुसन्धाने स्वमनोऽभिरुचि मायूयुजत् । ततश्च सः स्व समयवर्तिनोऽन्यान् विज्ञानाचार्यान् पश्यन् स्वकीयं मानसं हर्ट्जसूचितां स्तान् विद्युच्चुम्बकीयतरङ्गान् प्रति भृशमाचकर्ष यदीयाद्भुतगुणै र्विस्मितं भवत् सकलमेव विज्ञान जगत् तेषु दिवसेषु शाम्बरी प्रतीकाशाना मद्भुतानां सम्भावना-स्वप्नानां मध्ये निपतित मासीत् ।

मातुः सरस्वत्याः अनुकम्पया प्रथम एव तद्विहितः प्रयास स्तस्मै तान् नूतनान् ज्ञान-मणीन् प्रायच्छत् येषां संश्रयं लब्ध्वा सुप्रसिद्धे टलीवास्तव्याविष्कारकमार्कोनी-कृतातारानुसन्धानात् प्रागेव कलिकातायां नागरालिन्दे प्रादेशिक राज्यपालस्योपस्थि-तावुपरिनिर्दिष्ट विद्युत्तरङ्गशक्तिं प्रदर्श्य तारसाहाय्य मन्तरेणैव दूरस्थितां घण्टिकां सस्वनां कृत्वा गुरुतरञ्च भारमुत्तुलितं विधाय सर्वानपि समुपस्थितान् विस्मयसागरे

निमग्नांश्चकार । तदेवं रेडियो' यंत्रस्य अतारस्य चाविष्कारकस्तिथिक्रमदृष्ट्या यथार्थतयाद्यो जगदीशचन्द्रो वसुरेव सिद्धो भवति ।

विद्युत् तरङ्गक्षेत्रे कृता एता महनीया गवेषणाः सर्वप्रथमं संसारस्य ध्यानम् आचार्य जगदीशचन्द्र वसुम्प्रति श्रद्धापूर्वक मावर्जयामासुः । तरङ्ग-गुणेषु, तत्परावर्तन-विषयकनियमेषु, मणिमसहकारिध्रुवन परकविधिषु च गम्भीर गवेषणात्मका ये लेखा स्तदीया स्तदानीं देशदेशान्तरीयपत्रपत्रिकासु प्रकाशिता अजायन्त तत्प्रभावादेव स लन्दनस्य प्रख्याततया रॉयल सोसायटचा सम्मानितः पुरस्कृतश्च सञ्जातः । अथ च कालान्तरेण अन्वेषणात्मककार्यसञ्चालनप्रयोजनेन ब्रिटिश–शासनाच्च स विविधा अनुकूलताः आर्थिकीश्च सहायता अधिगन्तु मशकत् । तस्मिन्नेव कालान्तराले तत्कृता नुसन्धानसम्बन्धिनीं महत्तां तन्मौलिकताञ्चाभ्यर्चन् लन्दन विश्वविद्यालयस्तं 'डी. एस. सी.' इत्येतेनोपाधिना सम्मानितं विदधौ । उपरिनिर्दिष्टविद्युत्तरङ्गान् अभिव्याप्य यानि च सूक्ष्मग्राहीणि यन्त्राणि सः प्राणैषीत् तेषामुल्लेखश्च सादरम् 'एनसाइक्लोपीडिया ब्रिटानिका' इत्येतन्नामवेये लब्धप्रतिष्ठे विश्वकोषे च विस्तार-पूर्वकं कृतोऽभवत् ।

भौतिकविज्ञान क्षेत्रेऽनुपमा सिद्धिस्तु प्राप्तैव डॉ० जगदीशचन्द्र वसुना, परं वस्तुतस्तु तदीयं यथार्थ कार्यक्षेत्र मन्यदेव जातं; तेन विहितं तन्नाम जराभरणरहितम् । वनस्पति विज्ञानविषयकं यद् अभवत् तदीयं भाविकार्यक्षेत्रं, तद्दिशि तदीया प्रवृत्ति विचित्रेणैव प्रकारेण जाता । विद्युच्चुम्बकीय तरङ्गेषु यदा हि सोऽध्ययन-गवेषण-निलीन आसीत् तदाकस्मादेव स 'जडपदार्था अपि श्रमानन्तरं चेतन पदार्था इव श्रान्ति क्लान्तिञ्चानुभवन्ति इत्येतन्निदध्यौ । एतस्यां विचारणाया मवतीर्णायां सत्यां, स विश्रामानन्तरं ते गतश्रान्तिकाश्च सञ्जायन्ते; स जीव मांसपेशिराशिरिव ते जडधात-वश्चोद्दीपक प्रभावैरावर्ज्यन्ते, तेषां संवेदनशीलतायां तापस्यारोहोऽवरोहश्च नैजं प्रभावं निपातयतः; एतावदेद न, तीव्रतरविषेण ते म्रियन्ते च इत्येतच्च सर्वं निश्चिकाय ।

एतै रद्भुतै रनुभवैः प्रेरितः प्रोत्साहितश्च भूत्वा डॉ० जगदीशचन्द्रो वसुः प्रकृते र्गुह्यरहस्योद्घाटनस्याकाङ्क्षया चराचर जगतो मध्यवर्तिसीमाश्लिष्टसन्धि-प्रदेशभूतवनस्पतिं क्षेत्रं सूक्ष्मतयानुसन्धातु रग्रेसरो बभूव । जडपदार्थानधिकृत्य यो हि प्रकाश स्तेन क्षिप्तः सः सकल मपि वैज्ञानिकं संसार मेकेनैव क्षणेन पूर्णतयादूधुनत् । स्वकीयैरेतैरनुसन्धानै र्निगूढैः सः सप्रमाण मिदमदीदृशद् यज् जीवा इव वनस्पतयोऽपि संवेदतशीलासुमन्तो भवन्ति । तत्रापि सन्ततं प्राणधारा प्रवहति । तेऽपि प्राणिन इव स्वस्वरीतिनीतिविधिना सुखं दुःखं, क्षुधां पिपासां, शैत्यम् औष्ण्यञ्चानुभवन्ति । निस्तब्धताविधायक मिदं विस्मयकारकं सत्यं सिद्धान्ततया प्रतिपाद्यैव न स विरराम,

अपितु सूक्ष्मताग्राहीणि गृन्यिलानि यन्त्राणि च प्रणीय तत्साहाय्येन उपर्युक्ता निखिला अपि क्रियाः प्रत्यक्षीकृत्य जगतः पुरः समुपस्थापयामास । समग्रोऽपि संसार स्ताः क्रियाः मूर्तिमतीः सम्प्रेक्ष्य नितरां विस्मयं प्रापद्यत । चित्रपठे इव अवतारिता स्ताः सर्वानपि जनान् भृश मनन्दयत् । तेषु 'मैगनेटिकक्रेस्कोग्राफ'-'फोटोसिन्थेटिक रिकार्डर'-डाईमेट्रिक कन्ड्रेक्शन अपरेटसादीनि यन्त्राणि नितरामेव सूक्ष्माणि आसन्; तानि विलोक्य तु गुरूगुरूतरा महान्तो वैज्ञानिकाः अत्यन्तं माश्चर्यञ्चक्रुः । 'स्वस्य देशस्य परिमित निर्माण साधनवत्वात् कथं स तानि निगूढानि सूक्ष्माणि यन्त्राणि कर्तुं प्राभवदि' त्येतस्यां गम्भीरायां चिन्तनायां ते निपेतुः ।

कलिकातास्थ प्रेसीडेन्सी कालेजस्याचार्यपदादवकाशे प्राप्ते सति श्रीजगदीशचन्द्र वसुः स्वजीवनस्यान्तिमानि विंशतिवर्षाणि 'वसु विज्ञान मन्दिर' नामक प्रख्यातानुसन्धान शाला निर्माणे विकासशीलपुण्यकर्त्थेषु च प्रायूयुजत् । अनुसन्धान शालाया निर्माणे सः स्वकीयानि सञ्चितानि पञ्चदशलक्षरूप्यकाणि समर्प्य नैजामुदारां दानशीलताञ्च देशस्य समक्षे प्रस्तुतीकृतवान् । सा संस्था, अन्ततोगत्वा, तस्य स्थायि सजीवं जागरूकञ्च स्मारक स्थलं सञ्जातास्ति । स विज्ञान जगतो महान् ऋषिः स्वकीयया-अद्वितीयया साधनया प्रकृते गुंप्ताया मञ्जूषाया निगूढं कपाटं विवृतीकृत्य चेतनाचेतनयो र्बाह्यं भेदंदूरीकृत्य तत्तद्गत सर्व रहस्यानि कृत्स्नतयोन्मीलयाम्बभूव ।

स्वानुष्ठानैः सर जगदीशचन्द्रो वसुः अस्मिन् देशे वैज्ञानिकाध्ययनानुशीलननिष्ठायाः पद्यायाः प्रतिष्ठापनां विधाय महानेव नवयुगप्रणेता विज्ञानदूतो क्रान्तदर्शी ऋषिः समभवत् । तस्य अन्तःकरणं नूनम् "अणोरणीयान्" । "महतो महीयान्" इत्येतदादिशब्दै र्यद् ब्रह्म श्रुति र्गायति तस्य सच्चिदानन्द ब्रह्मणो दर्शनमवाप्तु मुद्दामाभिलाषं विदधत् सतत मातुरमेवादृश्यत ।

भारतमातुः सः सत्पुत्रोऽष्टसप्तति वर्षवयसि रस-गुण-ग्रह-चन्द्रेशवीयाब्दे, नवम्बरे मासे त्रिंविशतितमे दिनाङ्के संसारमसार मिमं विहाय परब्रह्मणि व्यलीयत ।

विद्युत्तरङ्गचयचारुगुणा मतारां
विद्यां च भूरुहलतादिषु चेतनत्वं
व्यानञ्ज कोविदवसु र्जगदीशचन्द्रो
विज्ञानिवृन्दविदितो जगतीह धन्यः ।।



# आचार्य वासुदेवशरण अग्रवालः

परमेश्वरस्य ज्ञानभूतत्वाद् भारतीया संस्कृतिः श्रुतिं तस्य (परमेश्वरस्य) रूपं वाङ्मयं मन्यते। स तां (श्रुतिं) तस्य वाक्यत्वेन किं वोपदेशत्वेनावगच्छति। धर्मं त्रातुं यथा भगवान् विष्णुः समये कस्मिंश्चिद् रामो भूत्वा, कस्मिंश्चित्समये कृष्णो भूत्वा, कस्मिंश्चित्समयेऽन्यः कोऽपिभूत्वाऽवततार तथैव श्रुतिरपि धर्मं पालयितुं, धर्मपथे सदैव चलितुमहर्निशं निरन्तरं लोकमिमं प्रेरयन्ती मातेव तमुपदिशन्ती च भूमण्डले संशोभते। धर्मत्राणं तावत् ज्ञानमपेक्षते अतः जगति ज्ञानवतां सद्भावः सदैवाभिलष्यते। अस्माकं देशे आधुनिकेऽनेहसि ज्ञानोपासका ये दयानन्द-विवेकानन्द-लोकमान्यतिलकसातवलेकरराधाकृष्णन्प्रभृतयः सञ्जातास्तेष्वाचार्यवासुदेवशरणोऽग्रवालोऽप्यन्यतमो ज्ञानाराधकः समजायत।

भारतीयसंस्कृतिव्याख्याता वासुदेवशरणो ज्ञानप्रकाशं वितत्य यमुपकारं कृतवांस्तस्य स उपकारः शबरस्वामि-कुमारिल-प्रभाकर-मेधातिथि विज्ञानेश्वरादि विपश्चिद्वन्दनीयकृतादुपकारान्नोनतरः। अद्य इतिहासपुरातत्त्वकलामीमांसासाहित्यसमीक्षा पुराणविद्या वेदविज्ञानादि विविधज्ञानविज्ञानक्षेत्रेषु तस्याधिकारित्वमखिलेनापि विद्वद् वृन्देन मुक्तकण्ठतया स्वीक्रियते। वेदविद्यार्थं समाधानदिशायां पथप्रदर्शनकारित्वात् तस्य, देशे देशान्तरे च सर्वत्रैव सः सरस्वतीकृपापात्रप्रेक्षावान् मान्यतां गतोऽस्ति। प्रशंसनीयप्रतिभावतस्तस्य मनीषिणस्तपस्विनोऽनुसन्धानमयं गवेषणोपबृंहितं ज्ञानार्णवतलस्पर्शि साहित्यं प्राप्यास्मद्भारतस्यैव विद्वांसो जिज्ञासवश्च न, विश्वस्य विद्वदग्रेसराः ज्ञानार्चनपराश्चात्मानं नूनं धन्यं मन्यन्ते।

डॉक्टर वासुदेवशरणाग्रवालेन यद्दत्तं तदस्त्यतितरां विपुलं विस्तृतञ्च। स आचार्यो ज्ञानस्य कस्याश्चनैकस्याः शाखाया न, अपितु अनेकानेकशाखानां मार्मिकव्याख्याता विचारक आसीत्। वस्तुतोऽसौ विविधानां ज्ञानानामास्पदं भवन् विजृम्भते स्म। एकतः सः पुरातत्त्वविस्त्वेन मनोयोगपूर्वकं विंशतिवर्षाणि अनेकराज्यसंग्रहालयानां सञ्चालने स्वं योजयाम्बभूव, एकतश्च सः कलामीमांसकत्वेन अगणितान् शोधनिबन्धानुपायनीकृत्य, किञ्च भारतीयकला-मथुराकला-स्टडीज इन इण्डियन आर्टादिकान् महनीयान् समीक्षात्मकान् ग्रन्थान् सृष्ट्वा कीर्तिमतिशयामर्जितवान्। साहित्योद्याने चावतीर्य स जायसीप्रणीतस्य पद्मावतस्य, विद्यापतिविरचिताया अवहट्टभाषोपनिबद्धायाः कीर्तिलतायाः, कालिदासकृतस्य मेघदूतस्य, बाणभट्टलिखितयो

र्हर्षचरितकादम्बर्यो व्याख्यावल्लरीणा मारोपणं विधाय तदुद्यानं प्रीत्याधायकसौरभ-सुसेवित मन्वतिष्ठत् । इतिहास-पुराणालिन्दमागम्य स भारतसावित्रीं कृत्वा महाभारत-स्य सारमेव सर्वेभ्योऽपि सुधीभ्योव्यतरत् । वामनमत्स्य मार्कण्डेयादिपुराणराशिं स नूतनयैव दृष्ट्या आपादचूडं निरमिमीत । अतः परस्तात् स्यात् किमाश्चर्यं यदसौ पाणिनीयायाः अष्टाध्याय्याः सूत्रेभ्यः पुरातनमितिवृत्तं, भूगोलं, समाजव्यवस्थां, शासन-प्रणालीम्, अर्थतन्त्रं, शिक्षां, कलां, तत्त्वज्ञानादिकञ्च निःसार्य्य सर्वस्यापि शिक्षाजगतः पुरो न्यदधात् । एतावदेवन, गीतोपनिषदम्वुधिमामथ्य अध्यात्मतत्वामृतं सर्वस्या अपि वसुधायाः कृते सुलभं विदधातिस्म । ऋग्वेदस्य 'अस्यवामीय'—'नासदीयां'दि-सूक्तानां प्रहेलिकां विवृतीकृत्य वेदगुह्यभेदकपाटयुगलञ्चोन्मीलयति स्म ।

हन्त, वासुदेवशरणस्य पुस्तकानि विविधवहुवर्णशचीन्द्रशरासनसमहृद्याङ्गना-ङ्गावरणानीव विभासन्ते । नाचार्यः सः कस्यचनैकस्य वैशिष्ट्यस्य सीमायामेव निधातुं शक्यः । आसीत्तु सः कृशकायः परं तत्र महर्षीणां मेधा मोदते स्म। तस्मिन् महामनस्विनी वर्चस्विनी प्रत्नस्य नूत्नस्य च ज्योतिर्मयी सुषमा शोभतेस्म । तेज-स्विनं तं विलोक्य क ईदृग् विद्वान् यस्य न मौलि र्नतोऽभवत् । तमवाप्य भारता वनिजननी धन्याऽजायत । तमधिगम्य प्राच्यविद्यायाः समग्रमेवाजिरं गौरवान्वितं भवद् विद्योततेऽद्य ।

लखनऊ विश्वविद्यालयादितिहासे एम. ए. इत्येतमुपाधिमवाप्य वासुदेवशरणः सद्य एव मथुरास्थस्य संग्रहालयस्याध्यक्षो जातः । डॉ० फोगल कृतायाः मथुरासंग्रहा-लयीयतत्तद् वस्त्वनुक्रमणिकायाः १९११ तमेशवीयाब्दे निर्मितत्वात्, प्रत्यग्रसञ्चितानां कलाकृतीनां परिचायनेऽशक्यत्वाद् अग्रवालो नवामेवानुक्रमणिकां सर्वाङ्गीणतया पूर्तिं नीत्वा प्रस्तुतीकृतवान् । एतन्महत् कार्यं विधाय तत्रत्य मुत्तरदायित्वपूर्णंमहत्त्वमयं कार्यं सम्यग् योग्यतया, प्रायेण दशवर्षाणि कृतवान् । मथुरातोऽसौ लखनऊसंग्रहालयस्य गुरुतरं भारं वोढुं प्रेषितोऽभूत् । तत्र कठोरतरं श्रम मनुष्ठाय सः संग्रहालयं नूतन एव कलेवरे परिणतं विदधौ । या महत्त्वोपवृंहिताः सामग्र्यः पांसुलाः सत्योऽस्वस्थं जीवनं गमयितुमबाध्यन्त ताः सकला अपि तद्भगीरथप्रयत्नेनोद्घृता एव नाक्रियन्त, नवं ज़ीवनमपि अवाप्नुवन्, परिचयपत्रिकाङ्कितपीठिकासु स्थापिताश्च व्यधीयन्त । तत्र वर्षाणिषड् उत्तमोत्तमानि कार्याणि कृत्वा, मध्यमाया एशियायाः पुरातत्व सामग्रीः जुषमाणस्य नवप्रतिष्ठापितस्य संग्रहालयस्य सूत्रधरो भूत्वा स दिल्लीमागमत् । स्वतन्त्र-तायां प्राप्तायां सत्यां 'दिल्यां केन्द्रीयराष्ट्रियपुरातत्वसंग्रहालयः संस्थापितोऽभवत् । तस्य प्रथमो निदेशकश्च स एवाभून्मनोनीतः । तस्य संग्रहालयस्य गठनाय स यद् योगदानं व्यदधात् तत् तं (संग्रहालयम्) परमोपादेयजीवनवन्त मकार्षीत् ।

राजकीयसेवानेहसि अग्रवालः श्रीवासुदेव शरणः सफलप्रशासकत्वेनानिन्द्यं यशोमानं तु स्थापितवानेव, सः पुरातत्वविषयकस्यानुसन्धानस्य कलामीमासांयाश्च वेद्यामपि नैजज्ञानसाधनारूपां दीपमालामपि समयूयुजत् ।

आचार्य वासुदेव शरण इव कठोरतमपरिश्रमकारी जगति विशेषतः सर्वकारस्य जगति नितरां दुर्लभः । सः शासनस्य कार्यप्रासादेषु कौम्भकर्ण्या निष्क्रियतायाः, ताम्र-सूत्रोपगूढपञ्जीप्रसुप्तकृत्यकलापस्य प्रशासनस्य शनैश्चरीयाया गतेः पुरोऽन्ततोगत्वा प्रणतभालो वभूव । पुरातत्वविभागं सेवमानः स यदा तदीयोच्चतमशृङ्गप्रत्यासन्नताम-स्पृशत् तदैव राजकीय वन्धनादात्मान मुन्मोचयितु माकुलोऽभवत् । सः स्वजीवनस्या-न्तिमे चरणे काशी हिन्दू विश्वविद्यालये शिक्षकतां संशिश्राय ।

प्रशासनीयभृतित उन्मुक्ति लव्ध्वाग्रवालो रात्रिदिवं भगवत्याः सरस्वत्याः सेवायामेवाविरामगत्या रतोऽभवत् । स विश्वविद्यालयस्य कलास्थापत्यविभागे व्यासा-सनमधिष्ठाय एकतस्तु अजस्रं वाग्धाराभिः शिष्यान् स्नापयन्नवालोक्यत, एकतश्च स्वकीय गरिम श्रीशुभ्रां लेखनीमपि न स्तोकमपि विरमयन् पुरातत्वस्य कलायाश्च समृद्धि समुद्दीपयन् जीवनव्याप्यनुष्ठानमतितरां निशितमनुतिष्ठन् प्रेक्षितोऽभवत् । महर्घैः कृतिरत्नैः सरस्वत्याः कोशं विवर्धयन् स इतिहासागम्यं कालमारभ्य वर्तमान मनेहसं यावत् भारतीयायाः कलाया वृहदितिहासं विरचयितुं कृतशुभसङ्कल्पोऽभवत् । प्रथमखण्डश्च तदीयस्तज्जीवनसमये प्रकाशनम्प्यासदत् ।

डॉ० वासुदेव शरणो महांस्तपस्वी मनस्वी मनीषी आसीत् । एतस्य महादेशस्य कलाया आधारभूततत्वानां यथार्थतयाभिज्ञाता प्रथमस्त्वासीत् डॉ० आनन्दकुमार स्वामी । द्वितीयश्चाग्रवालोऽयम् । सः सत्यं शिवं सुन्दरं समीचीनतया हृदयङ्गमं विधाय सर्वस्या अपि शिक्षासंसृत्याः समक्षे तदीयं सौन्दर्यं प्रातिष्ठिपत् ।

डॉ० अग्रवालस्य प्रतिभा विद्वत्ता च केन विधिना स्तूयेत; तस्य प्रकाशिताः अप्रकाशिताश्च ग्रन्थाः सन्ति परः शताः । लेखानां निवन्धानाञ्च संख्यास्ति त्रिसहस्र-संख्याप्रत्यासन्ना । प्राक्कथनानां भूमिकानाञ्च वार्तैव का ! वहुलासु परिषत्सु. सम्मेल-नेषु, साहित्यिकमण्डलेषु अन्येषु च शिक्षासमारोहेषु अध्यक्षत्वेन प्रमुखवक्तृत्वेन च विद्वत्तापूर्णानि यानि भाषणानि कृतवांस्तेषां गणना तु जातैव न । तत्तद्विदुषां सेवायां समर्पितान् अभिनन्दनग्रन्थान् प्रति सः स्वकीयमुपश्लोकनीयं यद् योगदान मन्वतिष्ठत् तस्यापि दिशि केन कदा दृक्पातः कृतोऽस्ति । न मः कदापि कस्यापि गुरुतरस्याङ्ग्ल ग्रन्थस्याथ च संस्कृतग्रन्थस्यानूदिततताया मपि सङ्कोचं वालस्यमदर्शयत् ।

आचार्य वासुदेवशरणो निश्चप्रचतया प्राक्तने जनुषि महान्ति सत्कर्माणि तपांसि च कठोराण्याचरति स्म । तस्मादेव कारणात्तु स ऋषीणाँ मेधां, साधूनाञ्च

विमलं हृदयं प्राप । वेदविद्या-पुराणविद्या-काव्य-कला-लोक-संस्कृतीश्च स उपपादयितुं, व्याख्यातु मभिव्यक्तीकर्तु ञ्च चेत् प्राक्तनेभ्यः पावनेभ्यः, संस्कारेभ्यः शक्तिमासदत्, तदा सः स्वजीवनयात्रायाः पृष्ठभूमे रपि प्रेरणां वलवतीमलब्ध ।

अग्रवालस्य जन्म चतुरधिकैकोनविंशतिशततमेशवीयवर्षे, तिरोधानञ्च षट्षष्ठ्यधिकैकोनविंशतिशततमेशवीयाब्दे सञ्जातम् । डॉ० अग्रवाले दिवङ्गते सति डॉ० हजारीप्रसाद द्विवेदिनोक्तम्—'तत्स्वर्गवासात् भारतीयानां विद्यानामध्ययनस्य शोध-कार्यस्य च जाताऽपारक्षतिः । आसीत् स महान् साधकः ।

तिरोहिते सति वासुदेवशरणे तत्पावनस्मृतौ प्रकाशितस्य साप्ताहिकहिन्दुस्तानीय विशेपाङ्कस्य तत्कालवर्ती सम्पादकः स्वश्रद्धाञ्जलिं तम्प्रति सप्रश्रयं सर्मपितवानित्थम्—

सः परम्पराया मरज्यत्; सत्यतायां परं तदाराधनधीः सुदृढतयावातिष्ठत, स आजीवनं मर्यादायामेवावर्तत । ·········सः संग्रहालयाध्यक्षः सन्नपि संग्रहालयीयतृणेभ्यः स्ववाहनाश्वान् 'तत्पचनं नासम्भवम्' इति अभिधाय न्यवारयत् । तस्य स्वान्तं गङ्गा-सलिलमिव पवित्र मासीत् । 'विश्रमो दुरित' मस्तिइत्येतमुद्घोषं न कदापि सोऽकरोत् परमादर्शमिमं जीवनेऽन्वर्थं विधाय भारतीयकलाः, संस्कृतिस्थितानि तत्वानि भावांश्च भव्यान् व्याचक्षाणो मातुः सरस्वत्याः सेवायां नैजं जीवनमुदसृजत् ।

अग्रवालो वासुदेवशरश आसीद् गुणग्राही । तस्य स्वभावः सदा परेषां गुणानेव ददर्श । 'परगुणपरमाणून् पर्वतीकृत्य नित्यं, निजहृदि विकसन्तः सन्ति सन्तः कियन्तः' इत्येतदुदीरणं तस्मिंश्चरितार्थतामढौकत ।

मेधावी भवति स्म भूमिभुवनेऽसौ वर्तमाने युगे ।
ज्ञानाब्धिः ऋषिवत्, पवित्रहृदयस्तुल्यो हि सः साधुना ।
व्याख्याता निजसंस्कृतेः सुचरितः साहित्यविद्याकला-
वेदादे रिह वासुदेवशरणो जातोऽद्वितीयः प्रधीः ॥



# गोपीनाथ कविराजः

भारतीयर्षिपरम्परायाः प्रतिनिधि रध्यात्मधारायाः प्रतिमा महामहोपाध्यायो गोपीनाथ कविराज स्तेषु महामनीषिष्वासीत् यो भारतीय संस्कृतेः संस्कृतसाहित्य-स्याध्यात्मज्ञानस्य च परम्परां न केवल मक्षुण्णतयागोपीदपितु तामखण्डप्रवाहां सम्पोषयन्नग्रेसरीञ्चान्वतिष्ठत् । यावदसौ गम्भीरं व्यापकञ्च वैदुष्यं न्यदधात् तावत्येव तदीयोत्कटात्मसाधनाप्यवर्तत । बौद्धिकताया आध्यात्मिकतायाश्चेदृङ् मणिकाञ्चन संयोगो भवति वस्तुतस्त्वति दुर्लभः ।

कविराजस्य सान्निध्ये संसार-प्रपञ्चनिपतितोऽपि प्राणी दिव्यानुभूतिं कर्तु-मारभत । पुरातनेऽनेहसि ऋषि-मुनीनामाश्रमं प्रयाय जना यथा शान्ति सुखञ्चालौकिक मनुबभूवुस्तथैव तच्चरणयोः सविधे स्थिता मानवा आनन्दं शमञ्चालभन्त ।

आध्यात्मिकताया मभिरुचिः कविराजे बाल्यादेव व्यराजत । स आत्म साक्षात्कारमेव जीवनस्योच्चतमं लक्ष्य ममंस्त । 'आत्मास्ति ब्रह्मस्वरूपम्; आत्मैव परमेश्वरः; आत्मैवास्ति ज्ञातव्यः; अतः आत्मस्वरूप एव प्रतिष्ठानं कर्त्तव्यम्; मूल-मस्त्यखण्डोमहाप्रकाशः; स्वरूपतः शोभते स महाप्रकाशोऽनवच्छिन्नोऽपरिमितपूर्ण-स्वातन्त्र्यमयश्च । स द्रष्टृत्वेन दृश्यत्वेन च दर्शनीय' इति तत्कथनमासीत् ।

स्वकीयगहनाध्यात्मसाधनाया गूढानि रहस्यान्यपि सः परेषा मात्मविकासार्थं मुदारेण नैसर्गिकेण च भावेन प्रकटीकृतवानित्येतत् तस्य वैशिष्ट्य मविद्यत । एतेन तस्य लोकमंगलभावनावत्वं सिद्धयति ।

स्वकीयां जीवनकथां सोऽचिन्त्याया महाशक्ते र्लीलामेवैकाममन्यत । तस्यानेहसो गतस्य वर्षाणां दशकमतीतं यदा कश्चिद् विपश्चित् तज्जीवनकथां लिखितुं तं प्रार्थयत । निशम्य तत् तदीयां मुखमुद्रां कापि गम्भीरता व्याप्नुते स्म । सोऽशंसत् 'मम जीवनकथाया अर्थोऽस्ति मम चित्रस्य दैव्याः शक्तेः शयेऽवस्थितिः । मया स्वयमेव स्वजीवनमध्येतुं प्रयत्नः कृतः परं न तत्र पूर्णां सफलतां गतोऽहम् । जीवनस्य न कापि घटना भवति व्यर्था । अल्पाल्पतरायामपि घटनायां किमपि अवश्यमेव गम्भीरं रहस्यं निगूढं भवत् सन्तिष्ठते । द्रष्टुर्लक्ष्यं जीवनं स्यादित्येतदस्ति ज्येष्ठं महनीयत्वम्; परं न सामान्य भावेन सम्भवमिदम् । अन्तरङ्गजीवनस्यानुसन्धान मपेक्ष्यते न च वहिरङ्गस्य । जीवनमदृष्टस्य हस्तः केन प्रकारेण प्रणयतीत्यत्र ध्यानं निधातव्यम्' ।

आत्मविद्यायां साधनायाञ्च कविराजोऽनेकेभ्यः साधकेभ्यः पन्थानं द्रष्टु मशकत् । तेषु प्रमुखा एते—श्रीशिवरामकिङ्करः (योगत्रयानन्दः), स्वामी विशुद्धानन्दः, राम ठाकुरः, पागल बाबा, सिद्धिमाता, सतीशचन्द्र मुखर्जी, आनन्दमयी माता च ।

आर्यशास्त्रप्रदीपो ग्रन्थः सर्वप्रथमं तस्य जीवनधारां दिशान्तरोन्मुखीञ्चकार । ग्रन्थोऽस्त्ययं विशालदार्शनिक ग्रन्थ स्यैकस्य प्रस्तावनाभूतः । अध्यात्म विद्यायास्तु स विश्वकोशइव । परं तत्र लेखकस्य नाम क्वापि न लिखित मासीत् । कविराजस्तद् ज्ञातुं भृशं प्रायतत परं न तत्र सफलता मगच्छत् । न तस्मिन् कार्ये स निराशो जातः; अन्ततोगत्वा आर्यशास्त्र प्रदीपस्य प्रणेतास्ति श्रीशिवराम किङ्करो महात्मशिवरामानन्दस्य शिष्य इत्येतदसौ स्वाध्ययनकाले जयपुरमधिवसन् विवेद ।

द्वादशाधिकैकोनविंशतिशततमेशवीयेऽब्दे यदा कविराजः क्वीन्स कालेजे 'एम. ए.' श्रेण्याश्छात्र आसीत् तदा सः शिवराम किङ्करमहाराजस्य तदानीन्तने समये काशीस्थत्व मज्ञासीत् अतः सोनारपुरावर्तितदावास मयासीत् तद्दर्शनाय । लम्वजटावन्तं रुद्राक्षशोभितगलं प्रसन्नाननं शिव मिवतेजोमय गौरवर्ण मृद्धं पुस्तक राशिमध्यगं महापुरुषं तं सोऽद्राक्षीत् ।

तं प्रणम्य कविराजः 'वेदाविभिन्नाः स्मृतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम् । धर्मस्य तत्वं निहितं गुहायां महाजनो येन गतः स पन्थाः' इत्येतं श्लोक मुद्धरन् 'तत्वज्ञानिनोमुनयस्तु पूर्णसत्यस्य साक्षात्स्वरूपमेव भवन्ति; अपिकिं तेष्वपि मतभेदः सम्भवः इत्येतां जिज्ञासां निहितवान् । महात्मा शिवरामकिङ्करस्तस्य बुद्धिमत्तां प्रशंसन्नवोचत्ः धर्मस्य तत्वमस्त्यतिगम्भीर रहस्यम्; अस्ति तन् मनोऽगोचरम् । मनोनिरोधमन्तरेण गुहायामेतस्यां प्रवेशो न सम्भवः । मुनयो मनसि शास्त्रं व्याख्यान्ति अतस्तन्मतेषु विभिन्नता स्वाभाविकी । तत्त्वस्य साक्षात्कारो मनोऽतिक्रम्य सञ्जायते । परं, तस्यां स्थित्यां जातेऽपि साक्षात्कारे वर्णनं नैवशक्यम् । यत्र न मन स्तत्र तत्व-साक्षात्कारोभवति । अस्ति सा निर्विकल्पस्थितिः । वाक्यै स्तत्त्वोपदेशः सम्पद्यते तत्र मनोऽपेक्ष्यते । श्रुति-स्मृतयः सन्ति शब्दात्मिकाः । सत्योऽपिताः प्रामाणिक्यो भाव-विकल्परहिता न । मुनीना मपि मननशीलत्वात् तेषां न विकल्परहितत्वम्; अतो-धर्मतत्त्वावगाहनाय मनोगह्वर-प्रवेशोऽभिलष्यते । जन साधारणास्तु महापुरुष निर्दिष्ट-पथमनुसरेयुः । तदर्थं स एव एक उपायः ।

१९११ तमेशवीयाब्दात् १९१७ तमेशवीयब्दं यावत् कविराजः स्वामि शिवरामकिङ्करस्य सन्निधि मभजत् । स्वामी शिवराम किङ्करः सिद्धमहात्माऽऽसीत् । न सः प्रायेण जनेष्वमिलत्; एकदा सः दर्शनार्थं मागतं कश्मीराधिपं हरिसिंह मपि निराशमेव न्यवर्तयत् परं गोपीनाथो यदाप्यागच्छेत् मम सकाशे प्रेषणीय इत्येष आदेश

स्तेनानुचरेषु कृत आसीत् । एतेन कविराजस्य पात्रता गुरुकृपाभाजनत्वञ्च ज्ञायेते । भगवदाश्रयस्य महिमा, तदीया साक्षादनुभूतिश्च तेनैतस्मादेव महात्मनः समुपालभ्येताम् ।

स्वकीयदीक्षागुरोः स्वामिनो विशुद्धानन्दस्य प्रथमं दर्शनं कविराजो जनवर्या वसुशशिग्रहभूमितेऽब्दे प्राप्नोत् । स तस्मात् तस्मिन्नेव मासे हनुमत्तटे मन्त्रोपदेशं जग्राह । दीक्षाया मवाप्तेन तेनाल्पीयसा मन्त्रेण जीवने परिवर्तनं कथं स्यादित्येतत् सोऽवगन्तुं न शशाक । परं गुरो र्निर्देशेण सप्तदिनानि अनुष्ठानपूर्वकं स मन्त्रराज-मजपत् । अन्तिमेऽहनि सः समग्र मपि पूजाभवन विद्युत्प्रवाहेणालोकितं शक्तिमयञ्च ददर्श । स आश्चर्ये न्यपप्तत् । आगामिनि अहनि तामनुभूतिं गुरुदेवं स निवेदयाम्बभूव; तदा गुरुदेव आमनत् "अल्पीयसि मन्त्रे या शक्ति र्विराजते सा निखिलेऽपि जगति उपलब्धाया विद्युच्छक्तेः पुञ्जीभूतरूपेऽपि न विद्यते" ।

स्वामी विशुद्धानन्दः शिष्यस्य प्रतिभावत्त्वं सुपात्रत्वञ्च विज्ञाय योगविद्यापरक रहस्यानि सैद्धान्तिकतयैव न व्यावहारिकतया चोपदिदेश । काश्यां गङ्गातटे भ्रमन् ज्ञानदानं स तस्मै व्यदधात् । 'योगस्य मुख्यं तत्त्वं न प्राकृतनेत्रगम्यम् । विज्ञान प्रयोगफलन्तु प्रत्यक्षमेव भवति । पुराभारते योगविद्याया भूयान् आसीत् प्रचारः । तस्मादेव कारणात् देशोऽयमाध्यात्मिकाभ्युत्थानेन सह भौतिकाभ्युदयस्यापि परां काष्ठां गत आसीत् । अद्यतनं या माकर्षणशक्तिमाद्रियते विज्ञानं तस्या मूलं मिहिरः । रहस्येऽव-गते सत्यस्मिन् चन्द्र-नक्षत्र-नभस्वत्पृथिव्यादिविषयकं विज्ञानमपि करतलगतं जायते' ।

इत्थं कविराजस्य अन्तर्मुखी योगसाधना सततमुन्मेष मसेधत् । ११।७।१९३७ तमेशवीयतिथौ परमहंसो विशुद्धानन्दो ब्रह्मणि व्यलीयत, परं तन्निर्दिष्ट पथाधिरूढः सन् कविराजोऽनिशमध्यात्म साधनाया मुपसरन्नेव व्यालोक्यत । कस्यामपि शङ्का या मुदितायां सत्यां तत्समाधानं गुरूदेवस्य व्यापकात्मनोभूदिति तस्य कथनमासीत् ।

कविराजः ७।९।१८८७ तमेशवीय दिनाङ्के वर्तमाने वँगप्रदेशे 'धामराई' ग्रामे जन्म जग्राह । तत्पिता श्रीवैकुण्ठनाथस्तज्जन्मनः प्रागेव (पञ्चमासाः) पञ्चत्वं गतः । माता सुखदासुन्दरी परमधार्मिकाध्यात्मिक वातावरणे शिशुमपालयत् । शिक्षायाः प्रारम्भः ग्रामेजात स्ततः कविराजः कलिकाताया मुषित्वा मैट्रिक परीक्षा मुदतरत् । कलिकातायां कविराजस्य निशितप्रतिभावत्वात् तत्पितु र्मित्राणि अनेकानि सहपाठिनश्च तत्सहायतां भृशं विदधुः । स तत्स्थानं हित्वा राजस्थाने जयपुरमाययौ । तत्र स महाराजा कालेजे भूत्वान्वित इण्टर परीक्षां बी. ए. परीक्षञ्चोदतरत् । कविराजः १९११ तमेशवीयवर्षे काशीमाजगाम । तत्र च क्वीन्स कालेजस्य छात्रो भूत्वा एम. ए. परीक्षां प्रथमश्रेण्यां प्रथमे च स्थाने समुदतरत् । संस्कृते, प्राकृते ।

दर्शनशास्त्रे, पुरातत्वे न्यायशास्त्रे च परामेप प्रवीणता मधिजगाम एतावदेव न, रहस्यवादिशास्त्रे च स्वकीयां प्रगाढामभिरुचिं निधाय प्राच्य-प्रतीच्यगुह्यविद्याया गम्भीर मनुशीलनञ्चकार। डॉ० भगवानदास रचित 'सायंस ऑफपीस' 'प्रणववाद' ग्रन्थयोः प्रभाव स्तदुपरि भृशं क्षिप्तोऽभवत्।

वेदशशिग्रहविध्वब्दे काश्यां सरस्वतीभवनस्थापनाऽभवत्। डॉ० वेनिसः कालेजस्य प्राचार्यस्तत्काल एव कविराजं तत्र न्ययूयुजत्। तत्र सः सरस्वती भवन-ग्रन्थमालायाः सूत्रपातं विदधौ तदुद्योगेन सरस्वतीभवनं परामेव प्रगतिमगमत्। १९२४ तमेशवीयाब्दे सः संस्कृतकालेजस्य प्राचार्योऽभवत्। अस्वस्थत्वात् आध्यात्मिक साधनारतत्वाच्च सः कार्यकालसमाप्तेः प्रागेवावकाशं गृहीतवान् ब्रिटिशशासनं तदीयप्रकाण्ड पाण्डित्य-संस्कृतासाधारणसेवाऽऽवर्जितं भवत् ४।६।१९६४ तमेशवीयाब्दे तम्प्रति 'महाभट्टोपाध्याय' पदवीं प्रदायात्मानं कृतकृत्यीचकार। स्वतन्त्रभारतस्य प्रथमोराष्ट्रपतिः श्रीराजेन्द्रप्रसादस्तदीयविशिष्ट वैदुष्याभ्यर्चां विदधत् तस्मै प्रशस्ति पत्रमददात्। वेदरसग्रहचन्द्राब्दे 'पद्म विभूषण मित्येतेन च सम्मानेन सोऽपूज्यत। १९६५ तमेशवीये साहित्य अकादमी 'तान्त्रिकवाङ्मये शाक्तदृष्टिः' इत्येतं तद्ग्रन्थ-मुद्दिश्य पञ्च सहस्ररूप्यकपुरस्कारं तदर्थं प्रदत्तवती। हिन्दीसमितिश्चोत्तर-प्रदेशीया तस्य महनीयां कृतिं 'तान्त्रिकसाहित्यम्' प्रकाशितवती। श्रीमान् उत्तरप्रदेश-राज्यपालः श्रीचेन्नारेड्डी तस्य निवासस्थानमानन्द मयाश्रमं गत्वा राज्यशासन प्रदत्त दशसहस्र रूप्यकपुरस्कारेण तमादृतवान्। 'डॉक्टर' इत्येतेनोपाधिना तं विभूषयितुं देशस्य सर्वेऽपि विश्वविद्यालयाः स्वकीयं परं गौरव ममंसत।

अयं महान् आत्मा २२।६।१९७६ तमेशवीय दिनाङ्के भौतिकं शरीरं विहाय परब्रह्मणि परमात्मनि न्यलीयत।

स्व० गोपीनाथ कविराजेन साहित्य-संस्कृति-योग-तन्त्र-पुरातत्त्वेतिहासादि-क्षेत्रेषु नैजेन मौलिकेन चिन्तनेनानुसन्धानेन च या हि विशिष्टा सारस्वतसेवा कृता पाण्डित्यस्यात्मविद्यायाश्च यः समन्वयः प्रस्तुतीकृतस्तदर्थं भारतं चिरकालं तं सप्रश्रयं स्मरिष्यति।

अस्मिन् यः 'कविराज' विश्रुति मिमां प्रापेतिलोकेऽखिले
गोपीनाथ सुधीशिरोमणि रभूदध्यात्मविद्याप्रधीः
तन्त्रश्रेष्ठ विचक्षणोह्यनुपमः सर्वत्र सोऽभ्यर्चितः
रेजे तत्र समन्वयः शुचितरो ज्ञानस्य योगस्य च॥

—x—

# आचार्य हजारीप्रसाद द्विवेदी

संस्कृति जीवनं कला च यस्योपरिसान्द्रं गम्भीरं प्रकर्षपूर्णं च प्रभावं क्षिपन्त्योऽवालोक्यन्ते; यश्च स्वकीये साहित्ये तत्प्रतिपादनं पूर्णास्थापुरस्सरं विदधत् प्रतिलक्ष्यते; स्वनिर्मितमौलिकसाहित्ये समीक्षात्मके च साहित्ये उभयत्र यदीयायाः संवेदनशीलताया आभ्यन्तरे भागे विहरन्त्या दृष्टेश्च आभा समानभावेन पाठकांश्चमत्कारे मज्जयन्ती सम्प्रेक्ष्यते; हिन्दी साहित्य-हिन्दी साहित्य की भूमिका-कबीर-बाणभट्ट की आत्मकथा—अशोक के फूल प्रभृतिकृतयो यस्य सन्त्युल्लेखनीयाः कृतयः; प्रतिभायां, विद्वत्तायां, गम्भीरतायाम्, अध्ययशीलतायां, विषय प्रतिपादनप्रवीणतायां, हास्य व्यङ्ग्य चतुरतायाञ्च यो रामचन्द्र शुक्लान्नोनतां गतो दृश्यते; अस्ति स आचार्य हजारीप्रसाद द्विवेदी ।

डॉ० हजारीप्रसाद द्विवेदी सप्तोत्तरैकोनविंशति शततमेशवीयेऽब्दे बलिया-मण्डलान्तर्गते 'ओझवलिया'भिधाने ग्रामे सरयूपारीण ब्राह्मणान्ववाये समभवत् । तत्पिता पण्डितः अनमोल द्विवेदीतिनाम्ना मातुश्च ज्योतिःकला देवीति नाम्ना प्रथते । आकाशगुणग्रहसोमाब्देशवीये सः काशी हिन्दू विश्वविद्यालयात् 'ज्योतिषाचार्य' परीक्षा मुदतरत् । आंग्लशिक्षां च स इण्टरमीडियेट परीक्षां यावदवाप्तवान् ।

आचार्य हजारीप्रसाद द्विवेदी चत्वारिंशदधिकैकोनविंशतिशतममेशवीयाब्दात् पञ्चाशदधिकैकोनविंशतिशततमेशवीयाब्दपर्यन्तं शान्तिनिकेतने हिन्दीं-संस्कृतञ्चाध्यापयति स्म । १९५० तमेशवीयवर्षे सः काशी हिन्दू विश्वविद्यालये, हिन्दी-विभागेऽध्यक्षासनमध्यास्ते स्म तत्र स दशवर्षाण्यध्यापनं व्यदधात्; ततश्च सः पञ्जाब विश्व विद्यालये ( चण्डीगढे ) हिन्दी-विभागेऽध्यक्षो भूत्वाध्यजीगपत् । तत्श्चान्येष्वप्युच्चोच्चतरपदेषु स्थित्वा कार्याणि अन्वतिष्ठत् ।

नवचत्वारिंशदधिकैकोनविंशतिशततमेशवीयसम्वत्सरे आचार्य हजारीप्रसाद द्विवेदिनो महनीयां प्रभावस्थापनक्षमां विद्वत्तां तदीया मभिवन्दनीयां हिन्दी-सेवाञ्चार्चितुं 'डी. लिट्' इत्येतं सम्मान्यमुपाधिं लखनऊ विश्वविद्यालयः सादरं समर्पयति स्म । सप्तपञ्चाशदधिकैकोनविंशतिशततमेशवीयवर्षे भारतशासनञ्च 'पद्मभूषण' मित्येतेनोपाधिना तमभ्यार्चीत् । कञ्चन समयं यावत् आचार्यो 'विश्वभारत्याः नागरी प्रचारिणी पत्रिकायाश्च सम्पादनमपि कृतवान् । अद्‌भुतव्युत्पत्तिसम्पन्नत्वात् उत्कृष्टवैदुष्यवत्वाच्च

स राजकीयाराजकीयसाहित्यिकसंस्थासम्बद्धश्चिरादवलोक्यते; लघुगुरुपुरस्कारा णाञ्च स निर्णेतृत्वमपि विभृच्चिरादीक्ष्यते। रूसयात्रापि तेनानुष्ठितास्ति। अस्ति स उदारः, प्रसन्नमुखः, प्रकृत्या च शान्तिप्रियः।

वङ्गवासिनां सन्निधौ हजारीप्रसाद द्विवेदिनः समयः पर्याप्तो व्यत्यगात् अत स्तत्प्रभाव स्तदीये व्यक्तित्वे साहित्ये च स्पष्टतया संलक्ष्यते। तस्मिन् प्राच्यताया अप्राच्यतायाश्च हृद्यः समन्वयः परिवीक्ष्यते। अस्ति स तयो र्वैशिष्ट्ययो र्मनोज्ञं निदर्शनम्। सः संस्कृत पण्डिताना मपि गरिमाणं स्वस्थित्या वर्धयति, आधुनिकानाञ्च शिक्षितानां महिमानमेधयति। संस्कृतसाहित्येन पाण्डित्यं, हिन्दीप्रभावेण आधुनिकत्वं, शान्तिनिकेतनेन च शीलं तस्मै प्रदत्त मस्ति। संस्कृतकाननस्याचार्यः शान्तिनिकेतन-सरोवरेऽवगाह्य हिन्दीमन्दाकिन्यास्तटे उटजं कृत्वोपविष्ट इत्येतद् द्विवेदिनं वीक्ष्य प्रतीयते।

आचार्य द्विवेदिनः कासाञ्चन मुख्यानां रचनानां नामानि सन्ति इमानि—

१. हिन्दी साहित्य की भूमिका, २. हिन्दी साहित्य, ३. सूरसाहित्य, ४. प्राचीन भारत के कलात्मक विनोद, ८. मेघदूत : एक पुरानी कहानी, ९. मृत्युञ्जयी रवीन्द्रनाथ, १०. अशोक के फूल। ११. साहित्य का साथी, १२. मध्यकालीन धर्मसाधना।

कविषु कबीरो हजारीप्रसाद द्विवेदिनि भृशं प्रभावं न्यपातयत्। 'शान्ति निकेतनस्य' प्रवासानेहसि तस्यास्ति सा (कबीर) द्वितीया महत्त्वमयी कृतिः। सिद्धानां नाथपन्थिनाञ्च वाण्यैव सह न तस्य (कबीरस्य) साक्षात् सम्बन्धोऽपितु तस्य प्रकृत्यां विगतरसत्वमेकाकित्वञ्च यद् दृश्यते स तत्परम्परात एव लब्धत्वानित्येतत्साधना-मार्ग-विकास-विवरणं प्रस्तुतीकुर्वताऽऽचार्य द्विवेदिना प्रमाणीकृतमस्ति। कबीरकाव्यदुरूहतां जेतुं तेन हठयोगस्य क्रियारूपकविपर्यस्तोक्तीनां व्याख्या नितान्तस्पष्टतया कृतास्ति। ग्रन्थे कवेः साधक-समाजसुधारक मर्म्मावगाहिनां त्रयाणामपि रूपाणां निरूपणं पटीयस्कतया सहृदयतया च विहित मस्ति। अस्ति कबीरो द्विवेदिनः प्रियतरः कविः। तमधिकृत्य विश्वासोऽयं तदीयः—

हिन्दी साहित्यस्य सहस्रवर्षव्यापिनीतिहासे कबीरनिभव्यक्तित्वमादाय कोऽपि लेखको नावतीर्णः। महिमनि तदीयं व्यक्तित्वं केवलमेकं प्रतिद्वन्द्विन मवगच्छति—तुलसीदासम्। भाषायां कबीरो बलवत्तर मधिकारं निदधाति। आसीत् स वाण्याः एकशास्ता।

काव्यशास्त्रे येषां विषयाणां गम्भीरः प्रभावो निपतितोऽस्ति तेषु कामशास्त्रमपि वर्तते, अत एव 'प्राचीन भारत के कलात्मक विनोद' इत्येतदाख्ये स्वग्रन्थे प्राचीनग्रन्थेषु वर्णितानां चतुष्षष्ठिकलानां विवरणं निदधता विद्वद्धौरेयेणाचार्यद्विवेदिना कलापरक सामाजिक दार्शनिक पृष्ठभूमि स्फुटीकुर्वता भारतीयकलाया मङ्गलकारिणीं दृष्टिं प्रति सङ्केतः कृतोऽस्ति ।

साहित्यस्य जनुरारभ्य तस्य (साहित्यस्य) परिभाषां, तद्विशिष्टताः, तन्मान्यताः, तल्लक्ष्यं, संस्कृतेः साहित्येन सार्धं सम्बन्धं, साहित्यकाराणां दायित्वमन्यांश्च बहुविधान् विषयानाधिकृत्य गम्भीरतया विचारो यस्मिन् स्वकीये ग्रन्थे विद्वन्मान्येनाचार्येण कृतोऽस्ति सोऽस्ति—'साहित्य का साथी' । कवितोपन्यासनाटक निबन्धकथादिकानाञ्च विवेचनं निर्दिष्टे ग्रन्थे सुबोध भाषायां नितान्त सरलतया सुधिया द्विवेदिना विहितमस्ति ।

आचार्यस्य विवेचनात्मकानां निबन्धानां मुख्यविषयोऽस्ति— 'साहित्यम्' 'साहित्य का मर्म' इत्येतस्मिन् स्वकीये ग्रन्थे द्विवेदिना प्राचीनकाव्याद्यतनसाहित्ययोर्भेदोनिरूपितोऽस्ति । तत्र सामाजिकीं चेतनामुद्वोधयितुं लेखकेन नैजं ध्यान मावर्जितम् । अस्मद्देशस्य महान्तः कवयो मानवस्य महिम्नः प्रकाशका बभूवु स्तदीयेन च मानवस्य विराडैक्यमपारजिजीविषा परममैश्वर्यञ्च प्रदर्शितम् । तदीयं काव्यं स्थूलवस्तु विवरणमुपेक्षमाणं प्रयोजनातीतसत्यदिशि इङ्गितं विदधद् विराजते ।

साहित्य क्षेत्रे तदीया विद्वत्तापूर्णा लेखास्तु तस्य प्रतिष्ठाया हेतुत्वेन तु राजन्त एव परं तदीयं व्यक्तित्वं तद्रचितेषु निबन्धेष्वतितरां प्रस्फुटितं भवत् संलक्ष्यते । तत्र तदीया कल्पना अप्रतिहतगत्या विचरन्ती प्राप्यते । स तेषु विषयेषु सीमा मुल्लङ्घ्य स्वच्छन्दतयाप्लवमानो लभ्यते । तेषु निबन्धेषु कतिपये इमे—१. नाखून क्यों बढ़ते हैं, २. वसन्त आ गया है, ३. शिरीष के फूल, ४. अशोक के फूल, ५. मेरी जन्मभूमि ।

ईदृशानां निवन्धानां विषया अशास्त्रीयाः । सन्ति ते साधारणाः । एतेषु निवन्धेषु लेखकस्य प्रकृत्यां लग्नतायाः पशुपक्षिषु च तस्य ममतायाः परिचयः प्राप्तो भवति । अत्र लेखकः स्वसुखदुःखयोः, हर्षविषादयोः, रुचि-संस्कारयो रपिचर्चां विदधद् वीक्ष्यते ।

'वाणभट्टस्या 'त्मकथा हजारीप्रसाद द्विवेदिनः सुविदित ऐतिहासिक उपन्यासोऽस्ति । उपन्यासस्य मुख्यकथा हर्षवर्द्धनस्य महीवल्लभस्य राजकवि वाणभट्टस्य च जीवन-

सम्बन्धिनी वर्तते। यस्मिन् काले बाणभट्टोऽजीवत् सः कालोवैदिक-बौद्धधर्मयोः संघर्षस्य काल आसीत्। तत्र राजनीतिकं धार्मिकञ्च वातावरणं सान्द्रतरं भवद् विराजते। परं तदीया मूलवृत्तिर्वर्तते हृत्प्रेमनिष्ठा। लेखकेन द्विवेदिना स्वकीये ऽस्मिनुपन्यासे वाराङ्गना-कलाकार-धार्मिक-राजनीतिविदा मन्येषाञ्च वर्गाणां स्वाभाविकी विशिष्टता सम्यगालिखितास्ति।

आत्मकथात्मिकायां पद्धत्यां लिखिता रचनेयं वर्ततेऽद्वितीयैव रचना। हिन्द्याः महत्त्वपूर्णेषूपन्यासेष्वेतस्योपन्यासस्यगणना सर्वदैव स्यात्।

आचार्य द्विवेदिनोऽस्ति द्वितीय उपन्यासश् 'चारु चन्द्रलेखः'। अस्मिन्नुपन्यासे इतिहास-कल्पनयोः समन्वयोऽद्भुत एव परिलक्ष्यते। कथैतदीयोज्जयिनीनरेशं सात-वाहनं तन्महिषीं चन्द्रलेखाञ्च केन्द्रीकृत्योन्मेषं गतास्ति। मुहम्मद गौरी महीन्द्र-तत्सेनापति-कुतुबुद्दीन-ऐवक-इख्तियार-उद्दीन-मुहम्मद बिन-वख्तियारकृत - भारत-विजये सति मूलकथायाः प्रारम्भो भवति। उपन्यासस्यास्य कथावस्तु न वरम्। अस्ति तत् प्रभावरहितम्। सांसारिकस्य जीवनस्य सफलता सिद्धिनिघ्ना न, अपितु कर्मायत्तास्तीति उपन्यासस्यास्य कथावस्तु अभिव्यनक्ति। उपन्यासो यस्य कालस्य कथावस्तु संश्रयति तस्मिन् काले प्रचलिता साधना देशमपकुरुतेस्म, सा देशपतने कारणं जाता। न तत्समयवर्तिनः सिद्धा आक्रमणकारिभ्यो देशं रक्षितुं शेकुः। जागरूकतैव जनसाधारणस्य संगठितस्य देशं, जातिं, संस्कृतिं च पातुं प्रभवति—इत्येष ध्वनि रूपन्यासे दुर्बलः। नोपन्यासस्य प्रधानः स्वरस्तत्परकः।

'हिन्दी साहित्य की भूमिका' हिन्दी साहित्यस्येतिहासो न, पर मस्ति तदीयः पूरको ग्रन्थः। इतिहासाध्ययनकाले यत्र तत्र येषां तथ्यानां ज्ञानमपेक्ष्यते तेषामस्ति स ग्रन्थोनिधिः। संस्कृत-बौद्ध-जैनसाहित्यान्तराले हिन्द्याः दृष्टत्वात् तदीया पृष्ठभूमि रितिहासानन्यान् अतिशेते। साहित्यस्य प्रेरणास्रोतसां व्याख्या तत्रातिवैशद्ये नकृतास्ति। धर्म-दर्शन-कामशास्त्रेभ्यो याः प्रेरणाः प्रत्यक्षतयाऽप्रत्यक्षतया च प्राप्ताः सन्ति तासु पूर्णतया प्रकाशः क्षिप्तोऽस्ति। साहित्यिकक्षेत्रे प्रयुज्यमानानि बहूनि पारिभाषिकाणि पदानि स्पष्टीकर्तुं तत्र प्रयत्नः कृत्स्नतया कृतो वर्तते। ग्रन्थे साहित्यकारैः सह पत्रकार सम्पादक-भाषाविज्ञानविदाञ्च चर्चा चकास्ति। ग्रन्थोऽयं नून मुत्पत्स्यमानेष्वितिहासेषु नैजं प्रभावं न्यून मन्यूनं वावश्यं क्षिपेत्।

'हिन्दी साहित्य' वस्तुततो हिन्दी साहित्यस्येतिहासोऽस्ति। ईदृग् ग्रन्थो यावन्तं कालमपेक्षते तावति काले न प्रणीतो जातस्तस्मात् तत्र केचन दोषाः समागताः सन्ति।

वस्तुतस्तु हिन्दीसाहित्येतिहासस्य साम्प्रतिके काले यदि कोऽपि यौग्यतमोऽधिकारी वर्तते तदा स आचार्य हजारीप्रसाद द्विवेदी एव ।

नात्र संशयो मनागपि अतीतसाहित्याध्ययनं गम्भीरदृष्टया अभ्यन्तरगामिन्या च दृष्टया पूर्णसहानुभूतिपूर्वकं येन कृत मस्ति किञ्च यस्य विवेचनमालोचनं भावप्रकाशनं विषयनिवन्धनं नैजमेव भवत् हृदयामावर्जयति सोऽस्त्याचार्य डॉ० हजारीप्रसाद द्विवेदी ।

आचार्यो देववाण्याः सुजनवरहजारीप्रसादोद्विवेदी
हिन्दी साहित्यकार प्रथित वुध शिरोभूषणं शुद्धचित्तः
वित्तानां धाम पुण्यं मुदितवदनधृग् विज्ञवंद्यः शुभंयुः
मान्यो ह्यालोचकानां जयति शुचिमतिश्चाग्रणी लेखकेषु



# डॉ० चिन्तामणि द्वारकानाथ देशमुखः

अस्मद्देशस्य कोऽपीदृग् असामान्यः सामान्यो वा मानवो न यस्य मानसं संस्कृतभाषाऽऽदरकर्तृ न भवेत् । यो बाल्यादेव देशान्तरम्-इंगलेण्डफ्रान्सजर्मनरूसामेरिकादिदेशान्—प्रयाय तत्रत्यां तां तां भाषां, तत्तत्साहित्यमधीतवान् प्राप्तवांश्च तत्र तत्रागाधमुदग्रतमं वैदुष्यं; किं वा योऽस्ति महान् वैज्ञानिको यद्वा अभियन्ता वा भिषक् अथवा न्यायपति राहोस्विन् मन्त्री वा उद्योगपतिर्वा व्यवसायिश्रेष्ठो वा शिल्पकारो वा कलाकारोऽथवा यान्त्रिको वा कोऽप्यन्यः, सः संस्कृतभाषायामनुरज्यति निदधाति च तत्र दृढीयसीं श्रद्धाम् । यो जनोऽहर्निश माङ्गलभाषां प्रयुङ्क्ते, तस्यामेव भाषायां सर्वाणि च वाह्यान्याभ्यन्तराणि च कार्याण्यनुतिष्ठति. यः सर्वदा आंग्लभाषाया एव ग्रन्थाना मध्ययने नैजं समयं गमयति वा तदधीत्य स्वकीयं मनोरञ्जयति, धियो वलमुद्दीप्यति, प्रतीच्यानेव प्रधीप्रवरान् प्रशंसति, देशान्तरमेवाधिवसति सोऽपि संस्कृतभाषायां न द्वेष्टि, तस्या अभ्युत्थानं कामयते, तदीयस्य साहित्यस्य गरिमाणाञ्च स्वीकरोति । तेषान्तु प्रतीच्यभाषासाहित्यप्रधीश्वराणां वार्तैव का ये सन्ति भारतीयसंस्कारसंस्कृताः, येषां कुलं भारतीयाचारविचारानुरक्तं, येषां पालनं पोषणं भारतीयाभी रीतिभिः पद्धतिभिश्च सञ्जातं, ये संस्कृतवातावरणे श्वसन्ति स्म, सन्ति येऽभिजाताः,पितृपितामहप्रपितामहादिकाश्च येषां संस्कृतस्य प्रकाण्डं पाण्डित्यमजुषन्त । अत्र तेष्वयं भारतीसुपुत्रं स्तवीतु मुपक्रमामहे सोऽपि देशान्तरे उषित्वोच्चतमशिक्षा मार्जत्; विज्ञाने च परामेव प्रवीणतां गाहमानोऽध्यगमदुच्चतममुपाधिम् । अस्ति स माननीयो डाक्टर चिन्तामणि द्वारिकानाथो देशमुखमहाभागः । सः प्रतीच्यविद्याविदां वरेण्यः सन्नपि संस्कृतविद्व न् अस्ति संस्कृतभाषोत्थापकः ।

संस्कृतसंसारस्य प्रकाशस्तम्भः श्रीदेशमुखो भारतस्य लोकोत्तरं धनं सप्तनवत्यधिकाष्टादशशततमेशवीयवर्षे जूनमासे, चतुर्दशेऽहनि स्वकीयेन जनुषा भारतमहीं महनीयतामनयत् । तस्य शिक्षा बम्बईस्थिते एलफिनिस्टन कालेजे ततश्च केम्ब्रिजस्थ जेससकालेजे समपद्यत । सः कैम्ब्रिजे प्रकृतिविज्ञानं, वनस्पतिशास्त्रं, जीवशास्त्रं, रसायनशास्त्रञ्चाध्यगीष्ट । वनस्पतिविज्ञाने प्रदर्शितविशिष्टवैदग्ध्यात् सः पुरस्कारञ्चावाप्तवान् । अधिगतोच्चतमशिक्षो भूत्वा स भारतीयप्रशासनसेवामुद्दिश्य तद्विषयिण्यां परीक्षायामात्मानं प्रावीवृतत् तत्र च प्रशंसास्पदं साफल्यमध्यगच्छत् । सर्वत्र भारते तस्याद्भुताया व्युत्पत्तेः, निशितायाः प्रतिभायाः, उत्कृष्टतमस्य वैदुष्यस्य, उद्दीप्य-

मानस्य तदीयस्य ज्ञानस्य, श्लाघनीयस्यौदार्यस्य प्रशंसनीयस्य च सौजन्यस्य हार्दिकमभ्यर्चनं भवितु मारभत ।

विद्यासु यस्य बुधता नितरां वलक्षा
यस्मिन् गुणाश्च निवसन्ति मनोऽभिरामाः
मेधास्ति यत्र सुरसेवितपादपद्मा
सः स्यात् कथन्न जगतीह समर्चितो ना ॥

"गीर्वाणवाणी भारतस्यास्ति महान् निधिः । स्वकीयेभ्यः पूर्वजेभ्यः सम्प्राप्ता काप्यनिर्वचनीयैव सम्पत् सा । अस्माकं कृते सा ऋषिमहर्षिभिस्तपस्विभि विद्वद्भिश्च न्यासो, यस्य मूल्यं न भवितु मर्हति, प्रदत्तास्ति । अस्ति सा भारतीयायाः संस्कृतेः शिष्टतायाश्च मूलस्रोतः । तदध्ययनेन भारतीयेतिहासस्य युक्ततरज्ञानार्जने महती सहायता समुपलभ्यते । अस्ति संस्कृतज्ञानस्य महानेव कश्चिदनुपमः शेवधिः, तत्र यद् दर्शनं शोभते यच्च तत्र साहित्यं विराजते अस्ति तत् सर्वथैवागाधमसीममनन्तञ्च । चेज्जगतीच्छति नैजं जीवनं शान्तिशुभ्रं सहिष्णुताभिरामं विधातु तदा सा संस्कृतं शरणं गच्छेत् । संस्कृतभाषायामेव भारतीयस्यात्मनः समुद्भवः सञ्जातस्तच्चिन्तनञ्च तत्रैवोन्मीलितमभूत् । यदि कोऽपि देशस्यास्य बौद्धिकीं प्रगतिं दिदृक्षति तदा सः संस्कृतभाषां तदीयञ्चेतिहासमधीयीत । न कस्यापीदमविदितं यत् संस्कृतभाषा भारतीयानां बह्वीनां भाषाणां जननीत्वस्य स्वसृत्वस्य धात्रीत्वस्य च सौभाग्यमश्नुते । देशस्यास्य जीवने सा व्याप्तास्ति तथा, यथा पुष्पे सौरभं, कौमुद्यामाह्लादकत्वमग्नावुष्णत्व ञ्चात्मानमभिव्याप्त विधाय प्रदीव्यन्ति । न सा कदापि भारतीयाज्जीवनात् पृथग् भवितु शक्नोति । अस्मदीयं सामाजिकं सांस्कृतिकमाध्यात्मिकञ्च जीवनं सा दृढीयसि ज्ञानाधारग्रावणि संस्थापितवती । समये समये बहूनि परिवर्तनानि घटितान्यभूवन् परं सा योजिका भाषा भवन्ती स्वकीयं प्रभावं निदधत्येव समुदलसत् । साम्प्रतमपि राष्ट्रस्यास्य सांस्कृतिके जीवने तस्याः स्थानमस्ति । इदानीमपि भारतीया भाषास्तत्साहित्यात् समृद्धि लभमाना दृश्यन्ते । न पुरातनं ज्ञानं विज्ञानाञ्च तामन्तरेणोन्मीलितं जायते। उदीचीतोऽवाचीं यावत्, प्रतीचीतः प्राचीं यावदत एव तस्या जनानामादरधीः सद्भावना च विभाति । एतस्मादेव निमित्तात् सा न भाषैवापितु सांस्कृतिकजीवनधारा च भूत्वा भुवि विभासते । दवीयस्यतीतानेहसि सहस्रशो वर्षाणि संस्कृतसुधियः सुखसाधनान्युपेक्ष्य संस्कृतमगोपिषु स्तस्या विकासनाय सर्वस्वमपि सांसारिक मुत्सृज्य प्रयत्नमनुतस्थुरित्येतद् वयं साधु विद्मः । अद्यापि कतिपये एतद्विधा विद्वांसोऽस्मद्राष्ट्रे विराजन्ते इत्येतदस्त्यस्माकीनस्य राष्ट्रस्य सौभाग्यं भृशम् । अस्ति भारतीयमात्रस्य कर्त्तव्यमिदं स तामुन्नेतुं यथाशक्ति यथासाधनं यथासमयञ्च प्रयतेत । तस्याः सेवा देशस्य सेवा-

स्ति; तस्या उत्थानं नैज मुत्थानमस्ती" त्येतद्विधान् विचारान् ये श्रद्धेया मतिमन्तो विद्यावन्तः सुजनोत्तमा निदधति परिपुष्णन्ति च; विचारानुरूपाणि च येषां कर्माणि वा आचरणानि सन्ति तेष्वयं माननीयो मनीषिणां देशमुखोऽस्ति प्राग्रहरः ।

पुष्णाति संस्कृतगिरं मनसा च वाचा
सत्कर्मभिश्च सुतरामनिशं सुधीन्द्रो
धन्योऽस्ति देशमुखकोविदमौलिरत्न
मुत्थापितो भरतभूगरिमा हि तेन ॥

विपश्चित्प्रवरः श्रीदेशमुखस्त्रिचत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्दे भारतीयरिजर्व बैङ्कस्य प्रथमाध्यक्षो भवन् नैजामनुपमामभिज्ञतां प्रादीदृशत् । वस्तुतो गुणाः समये प्रकटीभूय स्वप्रकाशं विकिरन्ति ।

विद्वद्धौरेयस्य देशमुखस्य प्रतिभायाः, पाण्डित्यस्य, व्युत्पन्नत्वस्य च प्रकाशः केन्द्रीयं शासनमावर्जयत् तस्मात् सः षट्पञ्चाशदधिकैकोनविंशतिशततमे सम्वत्सरे वित्तमन्त्रिपदमलङ्कर्तुं सादरमामन्त्रितोऽभूत् । देशम्प्रति स्पृहणीयाः सेवास्तस्याजायन्त ।

नूनं मनोज्ञ शुभभावविभावितानां
साधुस्वभावगुणगौरवगुम्फितानां
प्रज्ञाजुषां परमपावनमानसानां
कार्याणि राष्ट्रहितमेव सदाऽऽचरन्ति ॥

आदरणीयः श्रीदेशमुखो द्विपञ्चाशदधिकैकोनविंशतिशततमेऽब्दे विधान-सभायाः सदस्यः सञ्जातः । सः प्रधानमन्त्रिणः प्रतिनिभिर्भूत्वा द्विपञ्चाशदधिकैकोन-विंशतिशततमवत्सरे लन्दनं प्रयाय कामनवेल्थपरिषदञ्च व्यभूषयत् ।

द्विषष्ठ्यधिकैकोनविंशतिशततमेशवीयवर्षे विद्वत्तल्लजः श्री देशमुखो दिल्ली विश्वविद्यालयस्योपकुलपतिपदं स्वीकृत्य तस्य गौरवश्रियमतितरां प्रकर्षमनैषीत् ।

विद्वत्प्रियः सुजनदेशमुखप्रधीन्द्रः
शिक्षाविदां धुरि भृशं भुवि कीर्तितोऽस्ति
विद्यावतां जगदिदं गुरुतां गतोऽस्ति
छात्रा मुदं भृश मगु स्तमवाप्य तत्र ॥

श्रीदेशमुखो विश्वविद्यालयानुदानायोगस्याध्यक्षत्वमपि कृतवान् यदा सः तत्राध्यक्ष आसीद् विश्व-संस्कृत-शताब्दग्रन्थयोजनासमितेः सदस्यत्वमपि स्वीकृत्य तां समिति मन्वगृह्णात् । यदा च स दिल्लीविश्वविद्यालयस्योपकुलपत्यासनमध्यास्त

तदा अखिलभारतीयसंस्कृत विद्यापीटस्य (दिल्ली) यो हि तदा शासननिकायोऽभवद् गठितस्तस्य निकायस्य सदस्योऽपि सोऽवर्तत। त्रिभाषासिद्धान्ते संस्कृतमनिवार्यतया सन्निवेशयितुं कृते प्रयासे श्री देशमुखस्य नामोल्लेखनीयमस्ति। स एव तत्प्रयोजनेन प्रस्तावं प्रास्तावीत्। दिल्ल्यां संस्कृतविद्यापीठस्य स्थापनायां यो महानुद्योगो गृहीतोऽभवत् तत्रापि श्री देशमुखमहाभागस्य स्तुत्योयोगो दृष्टोऽभूत्। अखिलभारतीयसंस्कृत सम्मेलनस्य सः सभापतिपदमपि अलमकार्षीत्। सभापतित्वेन च संस्कृत-हितायौपश्लोकनीयानि कार्याणि कृतवान्। संस्कृतहिताय यान्यपि वर्तमानयुगे आन्दोलनानि आयोजनानि वा व्यधीयन्त तेषु सर्वेषु तस्य योगदानं संस्कृतसंसारः सादरमुपवीणयन् केन न श्रवणगोचरी क्रियते ?

अथ संस्कृतसुधीशस्य केचन श्लोका इह प्रस्तूयन्ते। तेषु भावना तु महात्मनो गान्धिनो भाति संस्कृतानुवादश्च तेषां श्रीमतोऽस्य देशमुखमहाभागस्य संशोभते— (एतेश्लोका स्तत्क्र गान्धिसूक्तिमुक्तावलीत उद्धृताः सन्ति)

ईशं सत्यमिवैव केवल महं ह्यर्चामि नाद्याप्यसौ
लब्धो मे परमस्य मार्गणपरो मृग्यानुसारोत्सुकः
सन्नद्धोऽस्मि विहातुमात्मकलितं प्रीत्यास्पदं कृत्स्नम-
प्यायुस्त्यागपदं भवेदपि तदा दित्सुस्तदाशा मम ॥१

वेत्तुं नार्हति मानवो हि सकलं सत्यं परन्त्वस्ति तत्
कर्त्तव्यं निजजीवनेऽनुसरणं सत्यस्य यद्दृष्टवान्
एवं वृत्तिरुपाश्रयेत्स पुरुषस्तं मार्ग मेकं जने
यो मार्गेष्वखिलेषु पावनतमोऽर्हिसाभिधानो मतः ॥२

प्रभुं दिदृक्षे हि निजाभिमुख्ये
जानामि सत्यं प्रभुरस्ति चैति
ईशाववोधस्य ममैक मार्गो-
ऽमोघो ननु प्रीतिरसावहिंसा ॥३

साराणां सार एवास्मि
विशुद्धः परमेश्वरः
येषां श्रद्धास्ति तेषां च
वर्तते केवलं हि सः ॥४

पृथिव्यां सर्वभर्तृणां
कठोरतम ईश्वरः

नान्यं जानामि तावद् यो
ऽत्यन्तं युष्मान् परीक्षते ।।५

या प्रार्थनाहोस्विदुपासना वा, सा वाग्मितौघो न पुनः प्रशंसा ।
न वर्तते केवलमोष्ठसंस्था, हृदिद्वयं तल्लभते निसर्गम् ।।
प्रेमेतरोद्रेचितनिर्मलं हृत्-तन्त्रीश्च संवादसहा यदा स्युः ।
तत्कम्परागः परनेत्रगः स्यात्, न प्रार्थनावश्यकवाक्प्रयुक्तिः ।।६

अस्ति श्रीदेशमुखमहोदयो लेखन्यां दक्षः । तत्कृताः कृतयो विविधेषु विषयेषु सन्ति । ताः सन्ति च तत्तत्साहित्यानां बहुमूल्या निधयः । संस्कृतपत्रिकायां प्रतिभायाञ्च तदीया रचनाः प्रकाशमायान्ति ।

जातो मन्त्रिवरः प्रभुः कुलपतिश्चिन्तामणिद्वारिका-
नाथो देशमुखो वदान्यहृदयो विद्यानवद्यद्युतिः
यः शास्त्रेष्वधिकारपूर्णममितं प्राच्यप्रतीच्येषु च
श्रद्धेयो निदधाति तं सविनयं वन्दे प्रकाशश्रितम् ।।



# रामचन्द्र नारायणदाण्डेकरः

अद्य संस्कृत भाषा भारते क्वापि जनभाषेव न वर्तते । न सा कस्यापि प्रदेशस्य जनै र्व्यवह्रियते परं सत्यपि सा साम्प्रत मजनभाषा नैजं महनीयत्वं, महत्त्व मुपादेयत्वञ्च कृत्स्नतया समीचीनतया च निदधाति । यं यं विषयमधिकृत्य तस्याः साहित्य मिदानीमुपलभ्यते तत् साहित्यं सर्वंथैव सर्वाङ्गीणतया परिपूर्णं भवद् विभासते । तद् यद् गम्भीरत्वं, यच्छ्रेष्ठत्वं, यन्मधुरत्वं, यदवदातविचारणावन्धुरत्वं, यद् विवेकप्रसूत सौन्दर्यशालित्वं, यच्च तत्तद्गुण गौरवं बिभर्ति न तदीयं तत् तद् वैशिष्ट्यं वर्तमान स्थितसंसारस्य तत् तद् राष्ट्राणा मेकमपि साहित्यं जेतुं शक्नोति । तदीयानां वेदान्त-सांख्य-योगायुर्वेदज्योतिषादीनां शास्त्राणां गरिमा तु दूर एवास्तां, तस्य व्याकरण-शास्त्रमपि जगतः कस्यापि देशस्य व्याकरणं नैवातिशयितुं प्रभवति । कालप्रहाराद् दुष्टमनोवृत्तिजुषां मानवपामराणां दौर्जन्याच्च, प्रकृतेः प्रकोपाद् अस्मद्देशस्यैव मानवानां प्रमादाच्च यदपि वाङ्मय मधुनोपलभ्यते तदनुशीलनादुत्खननादधिगतायास्तस्यास्त-स्याश्च सामग्र्याः सकाशात् पुरातनतरानेहस्यस्मदीयायाः संस्कृतभाषायाः सविधे विज्ञानविषयकं भौतिकशास्त्रपरकञ्च विपुलं महनीयञ्च साहित्य मशोभिष्ट इत्येतत्स्फुटतया विदिततां याति । विद्यमाने समयेऽस्मत्प्रियभारतस्य संस्कृताराधकाः सन्ति कतिपये ते विपश्चित्सत्तमा ये अनुपमस्य संस्कृतशेवधे रुत्थापनाय संवर्धनाय पोषणाय चाजस्रं संलग्नाः सन्त्यविरामगत्या यतमाना भवन्तः । एतादृशेषु संस्कृतसेविषु मनीषिषु श्रीमन्तः पद्मभूषण रामचन्द्र नारायण दाण्डेकर महाभागाः सन्त्यनवराध्र्याः ।

श्रीमाननीयो वुधवरो दाण्डेकरो निधिव्योमनन्दध्रुवेशवीयाब्दे जनिमगृह्णात् । यदा हि स विद्यार्जनावस्थायामासीत् तदैव यः कोऽपि तमपश्यदवश्यमेव स (दाण्डेकरः) भाविनि महान् विद्वान् भूत्वा स्वयशसा सर्वामपि शिक्षासंसृतिं सकलामपि विद्वज्जगतीं धवलीकरिष्यतीति धारणां निबध्नातिस्म । तस्य प्रतिभा विज्ञवराणामपि मनांस्याश्चर्येऽमज्जयत्, तदीयासौम्यप्रकृति स्तदीया शील-सुषमा तदीयोज्ज्वला च गुणावली सर्वेषामपि हृदि स्नेहं प्रीतिञ्चाजीजनन् । विद्याध्ययने क्रियमाणस्तदीयोऽविरतः श्रमः सर्वेषामपि छात्राणा मनुकार्य्योऽभवत्, स्वकीयेषु गुरुजनेषु व्यवह्रियमाणां तदीयां दृढीयसीं महीयसीं बलीयसीं च भक्तिं विलोक्य परमगुरुभक्तानामपि मौलिः श्रद्धया प्रणतोऽभवत् ।

जयत्वयं सद्गुणवान् कुमारो
विद्यार्जनासक्तमनास्तपस्वी

प्रियो गुरूणामनुशासनस्थो
दाण्डेकरो लोकविभूतिरेव ।।

प्रावृट्काल इव प्रशमितरजः प्रसरः, रविरथ इव दृढनियमिताक्षचक्रः करिकलभ इव विकचकुमुददलशकलसितदशनो रघुवंश इव रामगुणानन्दितो हि नवतरुणो दाण्डेकरः सर्वप्रियोऽभवत् ।

दाण्डेकरः पूनास्थिते डेकनकालेजे, मुम्बईविश्वविद्यालये, हीडलबर्ग विश्वविद्यालये (जर्मन्याम्) च शिक्षां प्राप्य एकत्रिंशदधिकैकोनविंशतिशततमेशवीयवर्षे प्रथमं स्थानमधिगच्छन् संस्कृते एम. ए. इत्येतमुपाधिमविन्दत् । स त्रित्रिंशदधिकैकोनविंशतिशततमेशवीयाब्दे प्रत्नभारतीय संस्कृत्याञ्च प्रथममेवपदमधिकुर्वाण एम. ए इत्येतेन चोपाधिना पुनः उपस्कृतोऽभवत् । अष्टत्रिंशदधिकैकोनविंशतिशततमेशवीयवत्सरे च हीडलवर्ग विश्वविद्यालयात् (जर्मनी) पी-एच. डीः इत्येतया च पदव्या सः समभ्यर्च्यत । शिक्षोपार्जनानेहसि सः वहुलानुपहारान् वह्वीश्च छात्रवृत्तीरलभत । तदीयं विद्याध्ययनसमय शोभि जीवनमतितरां भास्वद् वलक्षं देदीप्यमानञ्च भवदचकात् । स वस्तुतः स्वसमयवर्तिषु स्नातकेषु निष्णातो मूर्धन्यश्च सन् व्यद्युतत् ।

व्युत्पन्नत्वात् प्रतिभावत्वात् सुसंस्कारशालीनत्वाच्च दाण्डेकरो यथा छात्राणां जगति दिव्यामेव ज्योतिः प्रभा मादायव्यद्योतिष्ट तथैव सोऽध्यापनानेहसि अनवद्यविद्याविद्योतितान्तः करणः स्वकीयेन लोकोत्तरेण ज्ञानालोकेन-अवदातयाऽऽचार्यताचन्द्रिकया-सर्वेषामपिच्छात्राणां विदुषाञ्च निकुरम्बं भृशमेवाह्लादयन् प्रीणयंश्च चकास्ति स्म ।

कुचगुणग्रहचन्द्रेशवीयाब्दतोऽभ्रसायकनन्दधरेशवीयाब्दपर्यन्तं पूना नगरस्य फर्ग्यूसनकालेजे प्राचीनभारतीयसंस्कृतेः संस्कृतस्यचाध्यापनं, स आचार्य (प्रोफेसर) पदमलङ्कुर्वाणोऽन्वतिष्ठत् । क्षितिरसरत्नध्रुवेशवीयाब्दे हि पूना विश्वविद्यालये संस्कृत-प्राकृतभाषा-विभागाध्यक्षासनं विभूषयन् संस्कृतस्याचार्यो (प्रोफेसरः) भूत्वा सः कार्यमकार्षीत् । पूनास्थडेकन शिक्षा समाजस्य ( डेकन एजुकेशनसोसायट्याः ) आजीवन सदस्यतां परिगृह्य सचिवो भूत्वा च तदीयः, प्रायेण दशवर्षाणि तत्रत्य कार्यकलापं निरवहदसौ मतिमान् विद्वान् । पूना विश्वविद्यालय एव संस्कृतोच्चाध्ययन केन्द्रस्य (सेण्टर ऑफ एडवांस्ड स्टडी इन संस्कृत) निदेशकपदञ्च सः (१९६४ तः १९७४ प.) अध्यास्तेस्म । १९७२ तः १९७५ प. चतुर्वर्षाणि यावत् सः पूना विश्व विद्यालये अधिशासिपरिषत् सदस्यतामन्वगृह्णात् । तदेवं तदीयं व्यावसायिकं चरितमपि परमोदात्तं सद् विभ्राजते स्म । स्वकीयाभि रुल्लेखनीयाभिः सेवाभिः सः सुधीशिरोमणि र्बलभद्र इव कादम्बरीरसविशेषवर्णनव्यापृतमति र्नारायणोरः स्थलमिव श्रीरत्नप्रभाप्रतिभाभासितदिक्ततिः शुक्लपक्षप्रदोष इव विततहिमांशुरश्मिराशि-

धवलयशोऽम्बरवितानः श्रीदाण्डेकरः सम्प्रति संस्कृतकोविदसंसारे कामपि हृदयहारिणीं छविं परिपुष्णन् नितरां वन्दनीयतां गतोऽस्ति ।

श्री दाण्डेकरस्य देशे देशान्तरे च सञ्जातानां सम्मेलनानां. शिक्षासमारोहाणामनेकविधानां तेषां तेषां महतां महतां महानां, विशालविशालतराणामायोजनानां, परिषदादीनाञ्च दर्शन-साहित्य-संस्कृति-प्राच्यविद्यादिपरकाणां सदवसरेषु यद् विशिष्टं सभाजनं जातं, तत्र तत्र च यत् तेनाध्यक्ष्यं कृतं, तस्य तस्य संघस्य, तस्यास्तस्याश्च शिक्षणविषयिण्याः संस्थायाः सम्माननीय सदस्यत्वेन तस्यावस्थितिः, सचिवत्वेनाध्यक्षत्वेनोपाध्यक्षत्वेन तासु तासु विविधासु शास्त्रीयासु सभासु तस्योत्तरदायित्वगुरुतावहकार्यकलापानां सम्पादनं, बहुविधानाञ्च गठनानां घटकत्वं तस्य लब्धवर्णललामस्य स्पष्टतयैव व्यापकगम्भीराभिनन्द्यज्ञानाञ्चितत्वं, लोकप्रियत्व मुद्भटोद्भटविचक्षणप्रवर वर्जनकेन्द्रत्वम् अनुभवगहनत्वं, नानाशास्त्रपारदृश्वत्वं. विलक्षणशेमुषीशालित्वं, कार्यविधिज्ञत्व गुणगणालङ्कृत्वञ्चोद्घोषयन्ति । यस्य विद्वद्धौरेयस्य यत्र यत्र आनन्दनमाप्रच्छन्नञ्च संवृत्तं तेषां कतिपयानामधः समुल्लेखनमुचित मेव भवेत्—

भारत-पेरिस-केम्ब्रिज-मास्को—मेक्सिको-टोकियो-जापान-आस्ट्रेलिया—ब्रेजिलादिकम् ।

सा पुण्यभूमि र्बहूवन्दनीया सभाजनीया ह्यभिनन्दनीया ।
विद्योतते पण्डितवृन्दवंद्यो दाण्डेकरो यत्र सुधीवरेण्यः ॥

ज्ञान-बिज्ञानकलानां सन्त्यस्मद्राष्ट्रे संस्थाः महनीयाः । एतासु च तस्य मतिमतां वरिष्ठस्य सदस्यत्वं दृश्यते—

राष्ट्रियसंस्कृतसंस्थानम्, केन्द्रीयसंस्कृतपरिषत्, शिक्षामन्त्रालयः, साहित्य अकादमी, संस्कृतिसम्बद्धभारतीयमण्डलम् (इण्डियन कौन्सिल फॉर कल्चरल रिलेशन्स), यूनेस्को सहयोगनिमित्तकभारतराष्ट्रायोगः । (इण्डियननेशनल कमीशन फॉर कोऑपरेशन विदयूनेस्को, केन्द्रीयोपदेष्ट्रपरिषत् पुरातत्त्वविद्योद्देश्या (सेण्ट्रल एडवायजरी वोर्ड फॉर आरचिऔलॉजी) उच्चस्वाध्यायस्य भारतीयसंस्था, शिमला (इण्डियन इन्स्टीटयूट ऑफ एडवांस्डस्टडी, शिमला); वाराणसेय संस्कृत विश्वविद्यालयीय शिष्टपरिषत्, भाषापरामर्शदातृपरिषत् महाराष्ट्रराज्यम् (लेंगवेज एडवायिजरी वोर्ड); कार्यकर्तृमण्डलं, बनारस हिन्दू विश्वविद्यालयः; भण्डारकर प्राच्यान्वेषणालय; अन्ये चानेके । अस्ति वस्तुतस्तस्य व्यक्तित्वं वैदुष्यञ्च सार्वभौमम् ।

सुजनमण्डलमण्डनमञ्जुलो
विविधशास्त्रविचारणविश्रुतो
बहुलसंघसमाज सभास्तुतो
बुधवरो भुवि देवगुरु र्ध्रुवम् ॥

विपश्चित्प्रवरस्य दाण्डेकरस्य कतिपयानां कृतीनाञ्चात्रोल्लेखः क्रियते—

देर वेदिष्कः (१९३८), ज्ञानदीपिका (आदि पर्व) १९४१, ए हिस्ट्री ऑफ गुप्ताज् (१९४१), प्रोग्रेस ऑफ इण्डिक स्टडीज (१९४२), रस रत्न प्रदीपिका (१९-४५), वैदिक बिबलिओग्राफी प्र. खं. (१९४६), द्वितीयः (१९६१), तृतीयः (१९७३) न्यु लाइट ऑन वैदिक माइथॉलॉजी (१९५१), श्रौतकोष इंगलिश सेक्शन खं. प्र. प्र. (१९५८), खं. प्र. द्वि. (१९६२), खं. द्वि. प्र. (१९७३), क्रिटिकल एडीशन ऑफ दी महाभारतः शल्य पर्व (१९६१), अनुशासनपर्वं (१९६६ , सुभाषितावली (१९६२), सम ऑस्पेक्ट्स ऑफ दी हिस्ट्री ऑफ हिन्दूईज्म (१९६७);

संसारस्य सुविदितासु पत्रिकासु विख्यातेषु च वहुषु पत्रेषु वहव उपादेयाः विद्वत्प्रशंसिता लेखा निबन्धाश्च समये समये धीमत्प्रवरस्य दाण्डेकरस्य प्रकाशं गमिताः सन्तिः ।

अस्ति साम्प्रतमेष भारतगौरवं मनीषी पूनाविश्वविद्यालयस्य संस्कृतप्रवाचक प्रोफेसरः (एमरीटस प्रो.), १९३९ तमेशवीयाब्दतः पूना भण्डारकर ओरण्टियल रिसर्च इन्स्टीट्यूटस्य सम्मान्योऽवैतनिकः सचिवः, १९४३ तमेशवीयवर्षतः अखिलभार-तीयप्राच्य सम्मेलनस्य (ऑल इण्डिया ओरियण्टल कान्फ्रेंन्स) सचिवसामान्यः; १९७३ तमेशवीयवत्सरतः प्राच्यस्य एशियाख्यमहाद्वीपस्य च स्वाध्यायप्रयोजनक राष्ट्रान्तर-संघस्याध्यक्षः (प्रेसीडेण्टः, इण्टर नेशनल यूनियन फॉर औरयण्टल एण्ड एशियन स्टडीज) मानव प्रकृत्यध्ययन-दर्शन निमित्तकराष्ट्रान्तरीयमण्डलस्य वि. सभायाः सदस्यः (मेम्बर, जनरल असेम्बली ऑफ दी इण्टरनेशनल कौंसिल फॉर फिलॉसॉफी एण्ड ह्यूमेनिस्टिक स्टडीज, यूनेस्को)

अस्यां जरावस्थायामपि श्रीदाण्डेकरः स्वकीयस्य देशस्य भारतस्य, भारती-यायाः संस्कृतेः, संस्कृतवाङ्मयस्य च सेवायामनिशं संलग्न एव प्राप्यते । प्राच्य विद्यायाः, पुरातत्वविद्यायाः, दर्शनस्य, कलायाः श्रुतीनाञ्च क्षेत्रेषु तत्कृतानि कार्याणि सन्त्येतादृशानि यत्र भारतीयेषु संस्कृतसंख्यावत्स्वत्यल्पा एव विद्वांसौ नैजं कार्यं कृतवन्तः । धन्योऽयं विद्वान् यः संसारे सर्वत्र भारतयशो वितन्वानो भाति ।

ज्ञानोज्ज्वलो भारतपुण्यसम्पत्
यः शारदायाइवचास्ति वीणा
विद्योत्सुकानां भुवि कल्पवृक्षो
दाण्डेकरः सादर मीड्यते सः ॥

———

# श्रीमहामहोपाध्याय गिरिधर शर्मा चतुर्वेदः

अष्टत्रिंशदधिकैकोनविंशतिशततमे वैक्रमेऽब्दे पौषमासे शुक्लपक्षे दशम्यां तिथौ जयपुरे श्री गोकुलचन्द्रस्यात्मजतां गृह्णन्नेको महान् प्रतिभावान् प्रकृष्टं गरिमाणं बिभ्राणः पृथुकः समुत्पेदे योहि प्राप्ते वयसि संस्कृतवाङ्मयं संस्कृतशिक्षाञ्च भृशं समुन्निनाय। स आसीन् महामहोपाध्यायः पण्डितगिरिधरशर्मा चतुर्वेदः।

गिरिधरशर्मा चतुर्वेदः स्वकीयविद्यार्थिजीवनानेहसि एव तेजोमयं नक्षत्र मिव नितरां दीप्यमानो व्यालोक्यत। शास्त्रेषु तदीयामाश्चर्य विधायिनीं गतिं श्लाघनीयां व्युत्पत्तिं किञ्च तत् तत्तत्त्वानां शास्त्रीयाणामधिगमने तस्य बलवतीं क्षमतां विलोक्य तदीया गुरव स्तस्मिन् अतितरां प्रीतिमन्तः प्राप्यन्त। विद्वन्मण्डलाग्रेसराः श्रीदामोदर-शास्त्रिणः सर्वतन्त्रस्वतन्त्रा भारतमान्याः श्रीमहामहोपाध्याय शिवकुमार शास्त्रिणो विद्वदर्षभ श्रीलक्ष्मीनाथशास्त्रिणश्च तदीयं शास्त्रेषु कृतं प्रशंसनीयं परिश्रमं, समुज्ज्वलं शास्त्रज्ञान मुत्कृष्टं शास्त्रेषु वैचक्षण्यं मुहुर्मुहु रश्लाघन्त। सर्वास्वपि परीक्षासु स व्युत्पन्नश्छात्रश्चतुर्वेदः प्रतिशतं शतमङ्कानेव लब्धवान्। महान् मेधावी स्वकीयया विशिष्टया योग्यतया परीक्षकान् विस्मापयामास। तत्र तत्र प्राथम्यं विन्दमानोऽसौ संस्कृतच्छात्रः संसारे शास्त्रकौशलतेजसाऽतितरां विदिद्युते। स वेदव्याकरणपुराण-दर्शनधर्मशास्त्रा द्यनेक विषयेषु तु महान् विद्वानासीदेव परं वैदिक विज्ञाने विशेषतस तलस्पर्शि वैदुष्यं निदधौ।

अधीत्य शास्त्राणि भूत्वा च महान् मनीषी विपश्चित्प्रवरः सः कानिचन वर्षाणि अध्यापनं विधाय, यापयामास। विशिखव्योमग्रहसोमखैष्टाब्दे सः सहारन-पुरस्थ जैनमहाविद्यालये प्रधानाध्यापकपदं विभूषयामास। जैनदर्शनस्य दुरूहान् ग्रंथानपि अध्यापयामास; तेन शिष्य समुदाये तदीयः प्रभावः प्रससार। हरिद्वारस्थितर्षिकुल-ब्रह्मचर्याश्रमस्य सञ्चालकानाम् आनन्दनारायण-दुर्गादत्तपन्तप्रभृतीना मनुरोधेन उपरि-निर्दिष्टाज्जैन महाविद्यालयात् हरिद्वारमागम्य ब्रह्मचर्याश्रमस्य प्रधानाचार्यत्वमङ्गीच-कार। यथा सः सुयोग्य उत्तम शिक्षक आसीत् तथैव स महान् प्रकृष्टो वाग्मी चासीत्। स्वकीयै र्भाषणैश्च यत्र तत्र सर्वत्र जनतायां भारतीय संस्कृतेः राष्ट्रियाया अवदाताया भावनायाः संस्कृतवाङ्मयश्रियश्च महनीयतां संवर्धयामास। द्विसप्तत्यधिकैकौन विंशतिशततमेऽब्दे वैक्रमे संस्थापनं नीतस्य संस्कृतसाहित्यसम्मेलनस्य महामन्त्रिपदमपि द्वादशवर्षाणि निरवाक्षीत् सः। स मन्त्रित्वकाले देशस्य विभिन्नेषु दवीयस्वपि प्रदेशेषु

सम्मेलनाधिवेशनानि समायूयुजत् । दक्षिणे कोडियालमनगरे समायोजित सम्मेलना-धिवेनावसरे तस्य अनेके दाक्षिणात्याः संस्कृतप्रधीप्रवराः सुहृदः सञ्जाताः । तेषु सुहृत्सु म. म. टी. गणपतिशास्त्रि महाभागोऽत्युलेखनीयस्तत्सुहृत् । आसीत् स वस्तुतः संस्कृतस्य महान् उन्नायकः प्रसारकश्चोत्तमः । सः स्वमन्त्रित्वकाले महतां महतामधि-वेशनाना मायोजनं परमसफलतापूर्वकं व्यदधात् । हरिद्वारे, मथुरायां, प्रयागे, कलि-कातायां, लाहौरे अमृतसरनगरे च सञ्जातान्यधिवेशनानि नितरा मुल्लेखनीयान्यभूवन् । तै र्न केवलं संस्कृतगौरवपताकोच्छ्रिततरतामगात् यशश्च तस्य वृद्धिं प्रययौ ।

गिरिधर शर्मा चतुर्वेदो न तेषु संस्कृतविद्वत्सु कदापि गणयितुं शक्योऽस्ति येषां कार्यं केवलमध्यापनं वर्तते । तस्य देश-सेवा तु बहुविधा दृष्टाभवत् । सर्वेष्वपि दानेषु विद्या दानं विशिष्यते' इत्येतद्धेतोः स विद्यादानेऽपि स्वकीयं पर्याप्तं समयं निनाय । परमेतावता न सः सन्तोष मवाप्तुमशकत् । न चोपदेशात्मकं कार्यमपि तस्य कार्यान्तराचरणौत्सुक्यं शमयितु मार्हत् । तस्य कार्यस्यरचनात्मकत्वात् न स तत्र तृप्तिमवाप्नोत् । तस्मात् स आत्मानं पत्र-सम्पादनकर्मण्यपि व्यापृतं चकार । सः चिरं 'संस्कृतरत्नाकर' इत्येतदाख्यस्य किञ्च 'ब्रह्मचारी' इत्येतत्संज्ञकस्य पत्रस्य सम्पादनं विधाय जनान् अज्ञानान्धकारात् ज्ञान-प्रकाशं प्रति नेतुं सफलं प्रयासं व्यदधात् । तत्पत्र द्वारेण सः संस्कृतविदुषां संस्कृतज्ञानां संस्कृतच्छात्राणां संस्कृतानुरागिणाञ्च मनांसि, देशस्य संस्कृतिं, देशस्यादर्शाचारपरम्परां च प्रति पूर्णतया आवर्जयितु मुत्साहेन परि-श्रमेण महता चोल्लासेन अमोघं प्रयासमकार्षीत् संस्कृत रत्नाकर पत्र मद्यापि संस्कृत-संसार-सेवायां संलग्नमस्तीति ज्ञात्वा को न भारतप्रियः को न संस्कृतसेवी हर्षमसीम मनुभवेत् । ब्रह्मचारीत्येतदाख्यस्य पत्रस्य तत्सम्पादनकाले नितरामुन्नतिः सञ्जाता । अल्पेनैव कालेन तस्य ग्राहक संख्या सहस्रद्वयपरिमिता समजायत । एतत्सर्वमपि तस्य सम्पादन-कुशलतां ख्यापयितु मलम् ।

विद्वद्वंद्य पुण्यश्लोक चतुर्वेदः शिक्षायां महतीं रुचि मास्थाञ्च बिभर्ति स्म । अत एव सः यावदजीवत् तावत् शतशः शिक्षा-संस्थाः सेवमान एव प्राप्यत । तस्याध्य-क्षत्वे, तस्य संयोजकत्वे, तस्य सञ्चालकत्वे तस्य निरीक्षकत्वे तास्ताः शिक्षासंस्थाः परामुन्नतिमगमन् । एकोनविंशत्यधिकैकोनविंशतिशततमेशवीयेऽब्दे लाहौर नगरे सनातनधर्म नेतृभिः सनातनधर्मकालेजस्याध्यक्षतार्थं सः आमन्त्रितः । स्वल्पेनैवानेहसा तस्याध्यक्षतायां कालेजस्य महती समुन्नतिः सञ्जाता । कालेजध्यापनकार्यस्य ख्यातिः सर्वत्र प्रसृता तेनच्छात्राणां महती संख्या तत्र शिक्षार्जनार्थं मागता । तस्य पुरत 'ओरण्टियल कालेज' इत्येतदाख्यया ख्यातायाः संस्थाया अपि तेजो मलिनं बभूव । वस्तुतः सन्तो यदपि स्वकरेण संस्पृशन्ति तद्दिव्यतां याति ।

श्री पं० गिरिधर शर्मा चतुर्वेदः शास्त्रार्थेष्वपि अभिरुचिं न्यदधात्। तत्रापि तदीया ख्याति रासीत्। एकदा लाहौर नगरेऽपि शास्त्रार्थे सः स्वकीयागाधनाना-शास्त्रावगाहिवैदुष्यस्य प्रकृष्टं प्रभावं प्रतिष्ठापयामास। शास्त्रार्थेण तेन समग्रेऽपि पञ्चनदप्रदेशे तत्पाण्डित्यपताकोद्धुन्वाना संलक्षिताभवत्।

श्री विद्वद्वरश्चतुर्वेदो हिन्दीभाषाया उत्थानेऽपि स्वकीयं शुभं योगं प्राददात्। द्विविंशत्यधिकैकोनविंशतिशततमेशवीयेब्दे यदा लाहौर नगरे अखिल भारतीय हिन्दी-साहित्यसम्मेलनस्याब्दिकमधिवेशनं सञ्जातं तदा तस्य स्वागतमन्त्री स एव बभूव।

श्री चतुर्वेदस्य विद्वत्त्वं भारतव्यापि दृष्टं बभूव। सः विश्वविद्यालयीय पाठ्य-क्रम संशोधनाय प्रायेणाऽऽहूतो बभूव। एकदा पञ्जाब विश्वविद्यालयामन्त्रणे सति प्राप्ते सः तत्रत्यं पाठ्यक्रमसंशोधनमन्वतिष्ठत्। पाठ्योपयोगिकाव्यांशान् संगृह्य स तत्र छात्रहितकारिणीं व्याख्यामपि लिलेख। सन्ति शतशः पुस्तकानीदृशानि येषु तदीयाः सम्मतयः सन्ति मुद्रिताः। तत्सम्मति ग्रहणाय तत्सविधे हिन्दीसस्कृतभाषा-निवद्धा ग्रन्थाः प्रहिता अभूवन्। तेषां ग्रन्थानामपि संख्यास्ति न न्यूना येषु तेन महत्त्व-पूर्णा भूमिकाश्चालेखिषत। आसीदसौ सहृदयशिरोमणिः। सः स्वकीयाभिः संस्कृत-हिन्दीनिवद्धाभिः कविताभिः प्रायेण सचेतसां चेतांसि चाचूचुरत्।

श्री चतुर्वेदो जयपुर संस्कृत कालेजस्याध्यक्षपद मध्यास्य कालेजस्य सर्वाङ्गीणा-मुन्नतिं विधातुं स्तुत्यं प्रयत्नं विहितवान्। स तस्मिन् पदे चिरं कार्यं चकार। तदीया कालेजोन्नत्यर्थं कृता सेवा जनताया हृदये परं प्रभावं संस्थापितवती। अतः स जनतया परमप्रीत्याभिनन्दितः। संस्कृतरत्नाकरस्य दर्शनाङ्कस्तदभिनन्दनग्रंथरूपेण तस्मै उपा-यनीकृतोऽभूत्। हिन्दी विश्वविद्यालयो वाचस्पति रित्येतेन सम्मानितेनोपाधिना तं सम्मानितवान्। संस्कृत विश्वविद्यालये वैदिकविज्ञानान्वेषणाय एको विभागस्तेषामेव परामर्शेन समुद्घाटितोऽभवत्। तत्र स निर्देशनञ्च चकार। ग्रहविशिखनन्दहिमांशु-सम्वत्सरेशवीये राष्ट्रपती राजेन्द्रप्रसादो राजधान्यां सम्मानसमारोहे सम्मानपत्रेण वार्षिकं च पञ्चशताधिकैकसहस्ररूप्यकराशिं प्रदाय तं सत्कृतवान्। चिन्तामणि-द्वारकानाथदेशमुख महोदयस्याध्यक्षतायां सञ्जातेऽखिलभारतीय संस्कृतसाहित्यसम्मेल-नाधिवेशने दिल्ल्यां तस्य हीरकजयन्तीमहोत्सवस्यायोजनं कृतमभूत्। तदानीं सार्धसप्त-सहस्ररूप्यकाणि तस्मै प्रदत्तानि ससम्मानम्। द्विषष्ट्यधिकैकोनविंशततमेशवीयवर्षे 'वैदिक विज्ञान और भारतीय संस्कृति' संज्ञकस्याद्वितीयस्य प्रणेतृत्वात् केन्द्रीय-साहित्य अकादमी संस्था पञ्चसहस्ररूप्यकात्मकं पारितोषिकं च तस्मै समर्पितवती। एष उपहारो राष्ट्रपतिना डॉ० राधाकृष्ण महामहिम महनीयेन स्वकरकमलाभ्यां प्रदत्तः।

श्रीचतुर्वेदप्रेरणया राजधान्यां संस्कृतविद्यापीठाभिधं संस्कृतान्तरराष्ट्रिय संस्थानं १९६२ तमेशवीयेब्दे प्रतिष्ठापितमभूत् । संस्थान-समायोजितशारदाज्ञानमहोत्सवे वैदिकविज्ञानवादमधिकृत्य दिनानि सप्त श्रीचतुर्वेदमनीषिणो व्याख्यानानि जातानि । सा व्याख्यानामाला विद्यापीठेन वैदिकविज्ञान नामकग्रंथरूपेण प्रकाशिता च ।

श्री विद्वदग्रेसरश्चतुर्वेदो वस्तुतः स्वकीयै स्तैस्तैः स्तुत्यैः कार्यजातै भारतस्य तत्रापि विशेषतः संस्कृतजगतो विदुषां गौरवमतितरा मुन्नमयाञ्चकार । भारतविभूतिः स रसरसग्रहसोमाब्देशवीये जूनमासे एकादशे दिनाङ्के ब्रह्मणि व्यलीयत ।

कार्यं तस्य बभूव लोचनगतं नानाविधश्रीयुतं
　　विद्यादान मसौ विधाय मनसा ग्रन्थान् लिखित्वोत्तमान्
वैदुष्यान्वितभाषणानि नितरां कृत्वाथ संस्थाप्य च
　　संस्थाः संस्कृतपाठने च निपुणा देशे प्रधीवल्लभः ॥१॥
सर्वत्रैव सुधीः प्रसार ममितं गीर्वाणवाण्या भृशं
　　कृत्वाऽऽयोज्य च भारतोपकृतिकृत्सम्मेलनान्यन्वहं
शास्त्रार्थैं र्बहुभिश्च संस्कृतिपरैः सम्पादनेनापि च
　　विश्वोत्थानकरैश्चकृत्यरुचिरैं राष्ट्रं सिषेवेऽनिशम् ॥२॥
वाग्गमी सूरिसमूहभूषण मसा वासीत् प्रमाणे पदे
　　वाक्ये चोत्तमकोविदः श्रुतिविदामग्र्यश्च शब्दार्थवित्
स्वान्ते कर्मणि वाचि चापि सुजनः श्रेष्ठोऽभवद् यो भुवि
　　धन्यं नूनमभूज्जगद् गिरिधरं शर्माण मासाद्य तम् ॥३॥



# आचार्य विश्वेश्वरः

आचार्यं विश्वेश्वर सिद्धान्तशिरोमणिः उत्तरप्रदेशस्थ पीलीभीतमण्डलान्तर्गत-'मकतुला' भिधपत्तनस्यासीदधिवासी । तदीयः पिता श्रीशिवलाल बख्सी महाभागः स्वकीयभारतस्य दर्शनेषु महती मादरधियं निबध्नातिस्म । गौतम-कणादमहर्षिचरणेषु तस्य श्रद्धा परमाधिकाऽऽसीत् । स तद्ध्येयानुप्राणितो वस्तुत एक आदर्शचरितः पिताऽवर्तत । तस्य स्वान्ते कार्तस्वराभामपि मन्दीकुर्वन्त्यो महत्त्वाकाङ्क्षाः देदीप्य-मानाः अदृश्यन्त । भारतस्य तरुणा भारतीयदर्शनानुरागाः स्युस्ते दर्शनेषु गम्भीरतरं प्रौढतरञ्च पाण्डित्य मवाप्नुयुरिति सन्तत माचकाङ्क्ष । अतएव सः स्वीयं सूनुं विश्वेश्वरं वृन्दावनस्थं गुरुकुल विश्वविद्यालय, मधिगन्तुं शिक्षा, मन्वगमयत् । स विश्वेश्वरस्य मनसि, तदैव न्यायदर्शनस्य भाषानुवाद मुपहारत्वेन प्रदाय, बीज मवपत् यदा सः पञ्चम्याः श्रेण्याश्छात्र आसीत् । विश्वेश्वरस्य सुमृदुलहृदयधरित्र्यामुप्तं बीजं गच्छतानेहसा पुष्पितं फलितञ्च भूत्वा स्वीयेन सौरभेण देशस्य दिग्दिगन्तभागान् अप्रीणयत् । भारतीयसंस्कृतिपर्युपासकस्तत्पिता विश्वेश्वरस्य मातरं तदुप्तं बीजं स्नेहामृतेन सेक्तुं नियुज्य दिव मव्रजत् मातृवात्सल्यावाप्तपरिपोषः स विश्वेश्वर-बालतरुवरो गुरुकुलस्यानुकूलामुचिताञ्च धरणीमासाद्योन्नतिमवाप्तुं सदवसरमलभत ।

विश्वेश्वरो गुरुकुलेऽधीयानः क्षिप्रमेव यथासमयं प्रतिष्ठितः स्नातकः सञ्जातो भूत्वा च सः सिद्धान्त शिरोमणिः एम. ए. इत्युपाधिभाक् च, अध्ययन विशेषं विधातुं काशीमियाय । तत्र सः काश्याः सुविदितेभ्यो 'विद्वद्भ्यो भारतीयं दर्शनं साहित्यशास्त्रञ्च विधिपूर्वक मधिजगे । नैजं विशिष्टमध्ययनं विधाय ततो निवृत्य वृन्दावने श्रीरामदास दर्शन पीठस्याध्यक्षतां गुरुकुले चाचार्यता मन्वतिष्ठत् ।

आचार्य विश्वेश्वरः स्वकीयाध्येतृजीवनादेब लेखनकर्मणि नितान्तमभिरुचि पर्यपुष्णात् । स भारतीयानि दर्शनानि राष्ट्रभाषायां हिन्द्यां प्रस्तुतीकर्तुं विशालां योजनामचीक्लृपत् । सोऽचीकमत यद्भारतीयं दर्शनामृतं समेषामपिकृते सुलभं भवेत् । तदमृतं निपीय भारतीय जनता स्वजीवनस्य महत्तां लक्ष्यञ्चाभिजानीयात् । जानीयाच्च मानवो यत् तज्जीवनं किमर्थंम् ? किमर्थं तन्मानवशरीरमवाप्तम् ? प्राप्तेनानेन मानव शरीरेण केके महान्तो लाभा भवितुमर्हन्ति ? क ईश्वरः ? का च प्रकृतिः ? इन्द्रियेभ्यो मनसो मनीषायाश्च परो हि य आत्मा तस्य के गुणाः; किं तदीयं स्वरूपं; कश्च तस्य धर्मः ? आत्मनः परमात्मनो मध्ये को भेदः. ? अपिकिम् 'ईश्वर' इत्येतत् तत्त्वं किमपि वस्तुतो वर्तते न वा ?

आचार्य विश्वेश्वर उदयनाचार्यकृतेश्वरसिद्धिसम्बन्धिविश्रुतग्रन्थकुसुमाञ्जले र्हरिदासीय विवृतौ विस्तृतां व्याख्यां हिन्दीभाषायाकार्षीत् । स न्यायकुसुमाञ्जलि-परिशिष्टञ्च संस्कृतभाषायामन्ववादीत् । तस्य परिशिष्टस्य विरचनाय या भावना तमचूचुदत् सा तद्भावनाऽत्र स्वभाषायामिह समासेन निधीयते ।

आत्मना सह परमात्म तत्त्वस्य विवेचनं दर्शनकारैः प्रधानत्वेन करणीयमासीत् परं प्रमाण-निरूपणप्रपञ्चे निलीनै र्दर्शनकृद्‌भिः प्रमुखप्रमेयभूतपरमात्मनो हि प्रति-पादनेऽवलम्बित मौदासीन्यम् । तत्वदृष्ट्या विचिन्तने कृते सति प्रमाणानां तावत् सविस्तरं वर्णनं नापेक्षित मासीत् । तद्विवेचनस्यातितरामुपयोगित्वादुपकारित्वाच्च मुख्य प्रमेयेश्वरस्य विस्तार सहित विमर्शणं नितरां वाञ्छनीयमासीत् । परं हन्त, तत्तद्दर्शन प्रणेतृभिः साधनभूत प्रमाणान्येव सर्वस्वत्वेन मत्वा तानि प्रधाना-सनासीनानि व्यधीयन्त । तैः साध्यस्य कृते यन्महत्त्वं दातव्यमासीत् तत्प्रमागानां कृते प्रदत्तम् । मुख्यो हि प्रमेय-ईश्वरो-भृशमुपेक्ष्यत । तेषां कार्यं मेतद् दर्शनशास्त्रस्य परिमाणं क्षिणोति ।

आचार्य विश्वेश्वर आसीत् परमेश्वरस्य भक्तः । सः स्वरचितन्यायकुसुमाञ्जलि परिशिष्टे ईश्वरविषयिणीं चर्चामनेन प्रकारेण विदधाति—

प्रमाणविषयीभूतं यावज्ज्ञानस्य गोचरम् ।
प्रमेयं तद्धि विज्ञेयं, संविभक्तं द्विधा स्थितम् ॥
दृश्यं तत्र प्रकृत्याख्यं, जगदेतज्जडात्मकं ।
चेतनं सर्व मात्माख्यं, द्विधा जीवेशरूपतः ॥
तदेतत् त्रितयं नित्यं, मिथो भिन्नं स्वरूपतः ।
तत्वं सौपर्ण दृष्टान्ते वेदे विस्पष्टमीरितम् ॥
परमात्मा जगत्स्रष्टा सर्वज्ञः सर्वशक्तिमान् ।
सच्चिदानन्दरूपश्च, ह्येकोनित्योविभुस्तथा ॥
निमित्तमात्रं सर्गेऽसौ, जीवाच्चप्रकृतेः पृथक् ।
प्रणवादिपदैर्वाच्यस्तथा वेदप्रकाशकः ॥
तदस्तित्वे च तद्रूपे विवादो बहु दृश्यते ।
दर्शनानाञ्च धर्माणां भेदस्तन्मूलको मतः ॥

× × ×

ईश्वरोऽयं निराकारः सर्वज्ञः सर्वशक्तिमान् ।
अनादि रविकारी चानन्तः सर्वगतो विभुः ॥
सच्चिदानन्दरूपोऽपि दयालु र्न्यायतत्परः ।
सर्गेस्थितौ लये हेतु र्नित्यतृप्तो निराश्रयः ॥

आचार्यं विश्वश्वर ईश्वरवर्णन सन्दर्भेऽवतारवादं निराकृतवान्—

परिणामोऽनयोरेवावतारश्चाप्यवैदिकः ।
अवतारं विना कार्ये सर्वशक्तिर्न किं क्षमः ॥
नरा रामादयोऽप्यासन् लौकिकाश्च गुणोत्तराः ।
नावतीर्ण स्तत स्त्वत्र, देहधारी परमेश्वरः ॥

न्यायकुसुमाञ्जलिव्याख्यायाम् आचार्य विश्वेश्वर सहस्रैकरूप्यकमितं दर्शनपुरस्कारं, यं दिल्लीस्थहरजीमल डालमिया पुरस्कार समितिः प्रदत्तवती, प्राप्तवान् ।

आचार्य विश्वेश्वरस्य दर्शनमीमांसास्ति महीयसी कृतिः । सा नवीनामेवर्द्धिं माश्रित्य प्राणीयत लेखकेन । धारावाहिकज्ञान मधिकृत्य तत्तत्सम्प्रदायस्य विदुषां सन्ति विभिन्नानि मतानि । न्यायदर्शनस्यायं विषयो नानातर्कप्रतानौद्ग्रथितो दृश्यते । आचार्य विश्वेश्वरेणैष विषयः स्वकीय दर्शन मीमांसायां सङ्कलित इत्थम्—

धारावाहिकज्ञानां गृहीत ग्राहिणामपि ।
यथार्थत्वे मतं तेषां प्रामाण्यं गौतमे नये ॥
सूक्ष्मकालकलायोगादर्थभेदं प्रकल्प्य च ।
तस्यागृहीतग्राहित्वात् प्रामाण्यं भट्टसम्मतम् ॥

क्षणभेदेऽर्थभेदस्य कल्पनास्मिन् मते तु या ।
बौद्धानां क्षणवादस्य छायां किन्नावलम्बते ॥
सूक्ष्मकालकलाभानं विना प्राभाकरै स्तथा ।
अनुभूतिमात्रादेव प्रामाण्यं तस्य सम्मतम् ॥

प्रमाणं योगिना मेवाप्रमाण मन्यदेव च ।
हेतु विन्दोस्तु टीकाया मर्चटो बौद्ध उवाच च ॥
धर्मोत्तरश्च टीकायां न्याय विन्दोस्तथैव च ।
अप्रामाण्यपरो बौद्धो लिलेखाधिगते तथा ॥

क्षणभेदादिवैशिष्ट्याद् योगजे च दिगम्बराः ।
प्रामाण्यमन्यथात्व स्याप्रामाण्यं सम्प्रचक्षते ॥
श्वेताम्बरास्तु सर्वेऽपि तत्र प्रामाण्यवादिनः ।
तेनाधिगतं नैव लक्षणे तै र्निवेशितम् ॥

बौद्धाः स्मृते र्विकल्पस्य स्मृते र्मीमांसकास्तथा ।
व्यावृत्तये प्रमाणस्यागृहीतग्राहितां जगुः ॥

फिलॉसफ्या (दर्शनस्य) प्रकाशं संश्रित्य एथिक्से (नीतिशास्त्रे) साइकॉलोज्यां ( मनोविज्ञाने ) च संस्कृतगद्ये ग्रन्थद्वयम् आचार्ये विश्वेश्वरेण व्यरच्यत । एतौ द्वावपिग्रन्थौ विद्वद्भिरधिकारिभि र्भृशमभिनन्दितौ स्तः ।

संस्कृतभाषायां कारिकापद्धत्याम् आचार्यः प्रौढान् ग्रन्थानजग्रन्थदेतान्—

(अ) साहित्य मीमांसा ।

(आ) वैदिकसाहित्य कौमुदी ।

(इ) पाश्चात्यं तर्कशास्त्रम् ।

साहित्यमीमांसायां प्रत्नाया अप्रत्नायाश्चालोचनायाः, रसध्वनिवक्रोक्तिप्रभृति-सकलसाहित्यिक सम्प्रदायानां परिचयः प्रदत्तोऽस्ति । वैदिकसाहित्य कौमुद्यां वेद-ब्राह्मणारण्यकोपनिषत्कल्पसूत्रादिकानाञ्च विवेचनं कृतं वर्तते । पाश्चात्यतर्कशास्त्रे प्रतीच्यानां तत्तन्मतानि निरूपयन् स तत्तर्कशास्त्रीयान् सिद्धान्तान् प्रादीदृशत् ।

हिन्द्याः राष्ट्रभाषापदाधिष्ठितत्वादाचार्य विश्वेश्वरस्तां ( राष्ट्रभाषाम् ) विश्व-स्यान्याः समृद्ध भाषाः इव विश्वजनीनां विधातुं तस्याः कोषञ्च सर्वाङ्गसम्पन्न-मनुष्ठातुं प्रायतत । सः तदुद्देश्यपूरणाय विविधेषु विषयेषु एकतोग्रन्थान् विरचितवाने-कतश्च स दर्शनस्य साहित्यस्य च कतिपयान् प्रथम श्रेणीयान् ग्रन्थान् राष्ट्रभाषाया-मनूदितवान् । ग्रन्थानां मौलिकता श्रीः सर्वथैव स्यात् सुरक्षितेति विमृश्य लेखकेनानु-वादो व्याख्योल्लसित आचरितः । तर्कभाषायाहिन्द्यामनुवादं प्रक्रममाणः स भूमिकायामाह—

केशवमिश्रेण यत्र तत्र दर्शनान्तराणां सिद्धान्ता दिङ्मात्रेण निर्दिष्टाः सन्ति, युक्तिलेशोक्तिपूर्वकं ते प्रत्याख्याताश्च सन्ति परमसुन्दररीत्यां; वस्तुतो ग्रन्थकारस्य केशवमिश्रस्य लेखनरीति रस्ति हृद्या । तदीया च तत्र समुपस्थापिता तुलनात्मिका-ऽऽलोचनात्मिका च विवेचनाप्रणाली तस्य लेखन कलामतितरां हृदयहारिणीं विदधती संशोभते ।

आचार्य विश्वेश्वरेण स्वयोजनानुसारेण संस्कृतसाहित्यशास्त्रस्यैतेषां ग्रन्थानाञ्च महनीया श्लाघनीया च व्याख्या विहितास्ति—

१. ध्वन्यालोकः (आनन्दवर्धनाचार्यकृतः)

२. काव्य प्रकाशः (मम्मट कृतः)

३. वक्रोक्तिजीवितम् (कुन्तक रचितम्)

४. काव्यालङ्कारसूत्रवृत्तिः (वामन बिरचिता)

हिन्दी ध्वन्यलोके स उत्तरप्रदेशीय राज्यशिक्षाविभागेन रूप्यकाणा मष्टशतीं पुरस्कारत्वेन प्रदाय सम्मानितः ।

अन्याश्च स एताः कृती ररचत्—

(अ) महात्मा ईसा ।

(आ) प्रपञ्च परिचयः ।

(इ) बौद्ध दर्शन का उदय और अस्त ।

दुःखमिदं महत् कथयन्तो वयमनुभवामो यत् स आचार्य यिश्वेश्वरो हि स्वल्प एव वयसि नाकं प्रातिष्ठत । चेत् सोऽजीविष्यत् तदावश्यमेव स भारतीयदर्शने साहित्यशास्त्रे चानेकान् ग्रन्थान् अन्यानपि व्यरचिष्यत ।

विधाय ग्रन्थान् सः शुचितरमना स्तीक्ष्णधिषणो
बहून् भाषाहिन्द्यां सुरवचसि नैकांश्च सुजनः
सरस्वत्याः कोशं प्रकृतिमधुरो वृद्धिमनयत्
धरा धन्या यत्राजनि सुकृति विश्वेश्वर सुधीः ॥



# श्रीधर भास्कर वर्णेकरः

आधुनिकेषु संस्कृतविद्वद्वरेषु सन्ति ते न्यूना एव ये लेखने कुशलतां, काव्य-कवनेकोविदतां, पत्रसम्पादने विदग्धतां, समालोचनायां प्रवीणताम्, अध्यापने चतुरतां, नानानिगमागमेषु पारावारीणतां, सम्भाषणे चतुरता मधिकुर्वन्ति। अस्त्ययं महान् हर्षो यदेतादृशाः सद्गुणाः समवेता भूत्वा यान् कतिपयानध्यासते, गीर्वाणवाङ्मयार-विन्दमिलिन्दोऽनेकविधवन्धुरगुणगुञ्जनललितो वर्णेकरान्ववायावतंसभास्करात्मजश्री-धरस्तेषां धुरि कीर्तनीयः।

विद्वत्तिलक श्रीश्रीधरभास्करो वर्णेकरश्चिराद् गीर्वाणवाणीगरिम्णः समुत्था-पने संलग्नः सकलेनापि संसारेण पर्यवलोक्यते। सुधीशिरोमणेः श्रीवर्णेकरस्यसुरगव्यर्थं समर्प्यमाणाः स्पृहणीयाः सेवाः सन्ति बहुमुख्यः। सोऽध्याप्यान्तेवासिनः, सम्पाद्य भवित-व्यादिपत्राणि, विरचय्य कमनीयतराणि काव्यानि, संसृज्य रूपकाद्युत्तमकृतीः पुराणोप-निषदादिषु विद्यमानासु काश्चन याः परमोपयोगिन्यः कथाः संशोभन्ते ता अतिसमासेन सुवोधायां भाषायां लिखित्वा संस्कृतच्छात्राणां समक्षे निधाय, प्रणीय मधुरमधुरतरानवद्य-गद्यनिकुरम्बं, प्रगीय च मनः प्रीतिप्रदानि गीतानि संस्कृतसाहित्यस्य वरिवस्यायामत्युत्साह पूर्वकं नितान्तनिष्ठापुरस्सरं निलीनोवर्तते। तद्विधीयमानकार्याणि तस्य धीमद्धौरेयस्य स्वान्ते संस्कृतभारत्या आराधनायै कियान् महानध्यवसायोऽनुरागश्चाप्लवेते इत्येतत्स-मीचीनतया वेदयन्ति।

कोऽपि विद्वान् कीदृशं कियच्च वैदुष्यं निद्धाति, शास्त्रेषु कस्यचन मनीषिणः कीदृशी कियद्दूरगामिनी गतिः, प्रतिभायाः कस्मिंश्चित् पण्डिते कियती कृपा, कल्पना-याः कियन्तं प्रसादं कश्चन प्रेक्षावानुपभुनक्ति-इत्येतदादिविशिष्टतानां दर्शनं विदुषो रचनानामनुशीलनादेव सञ्जायते–इत्येतस्मात्कारणादिह प्रधीप्रवरस्य श्रीवरेण्यस्य प्रथमं वीरवन्दनाभिधाया एकस्याः कवितायाः केचनश्लोका निधीयन्ते। तेभ्यस्त्रिचतुर्भ्यः श्लोकेभ्य एव तदीयायां लेखन्यां कियती प्रकर्षवती नवनवभावोद्भावनप्रभविष्णुता विलसति, कियती तत्रौजस्विनी प्रवाहमयी गतिः सञ्चरते, कियती तत्र वस्तुनि सजीवत्वापादनपटुता परिस्फुरति, शब्दार्थयो श्चोपरि कियांश्च दृढीयानधिकारश्चका-स्ति इत्येतत्सर्वं विशदतयावगतिसरणिमध्यारोहेत्। वीक्ष्यताम्—

येषां भ्रुवौ दशमुखान्तकचापलेखा
ते लोचने त्रिपुरदाहकवाणवह्निः
सोत्तर्जनी क्षिति भृदन्तकुठारधारा
तेऽमी जयन्ति निजराष्ट्रविमुक्तिवीराः ।१।

वित्तंस्वराष्ट्रहितचिन्तनमग्नचित्त-
सेना स्वदेशपरिमोचनतीव्रकाङ्क्षा
शस्त्रस्वराज्यरिपुमर्मभिदुग्रबुद्धिः
येषां जयन्ति त इमेऽद्भुतमुक्तिधीराः ।२।

धैर्यं समस्तकुलपर्वतनिश्चलत्वं
वीर्येऽखिलग्रहगणोल्लसदुग्रतेजः
कार्ये त्रिविक्रमविचित्रचरित्रशीलं
येषां जयन्ति त इमेऽद्भुतमुक्तिधीराः ।३।

आंग्लाधिराज्यविषये क्वचनानवाप्य
ह्यस्ताचलोच्चशिखरं सविता प्रखिन्नः
विध्वंस्य यै रखिलमाङ्ग्लमहाधिपत्य
मस्ताचलस्थिति सुखं पुनरेष नीतः ।४।

सप्तपञ्चाशदधिकाष्टादशशततमेशवीयवर्षप्रवृत्तस्वातन्त्र्यायोधनशताब्दी मुद्दिश्य प्रणीताया मस्यां कवितायां श्री वर्णेकरस्य कवित्व शक्तेः सम्यग् दर्शनं विदधति विदग्धाः। तत्कालवर्ति स्वातन्त्र्याहवाजिरविहारिभटोद्भटानां मानसानि तदीयानि शौर्यधराणि कर्माणि च यां प्रगाढां मविचलां भक्तिं स्वमातृमेदिनीम्प्रति निदधुस्तस्या भृशं स्फुटतयाऽऽकलने कविः परां सफलतामधियाति। कवितायां वीरभावोचितानां यादृशानां पदाना मर्थानाञ्च सन्निवेशोऽपेक्ष्यते तादृशानामेव तेषां तेषां तत्र समावेशः सम्प्राप्यते। कवितायां तदीयायां सा शक्ति रोजोमय्युत्तरलीभवन्ती संलक्ष्यते या श्रोतॄणां पठकानाञ्च हृदयेषु भव्यवीरभावोद्भावने क्षमा भवति।

श्रीवर्णेकरविरचिता रचनाः सन्ति इमाः काश्चन—

१. मन्दोर्मिमाला, २. जवाहरतरङ्गिणी,
३. महाभारतकथा, ४. रामकृष्णपरमहंसीयम्,
५. संस्कृतनाट्यप्रवेशः, ६. मातृभूलहरी,
७. प्रश्नावली विमर्शः, ८. वात्सल्यरसायनम्,

९. विनायकवैजयन्ती, १०. कालिदासरहस्यम्,
११. शास्त्रकोशः, १२. शिवराज्योदयम्,
१३. तर्ककारिका, १४. नव्यसंस्कृतसाहित्यसमीक्षा।

पुरा यदास्मदीयं प्रियं भारतं सुखसमृद्धिसम्पन्नमासीत् तदास्माकं संस्कृत-सुधियो लेखकाः पौराणिकी रैतिहासिकीश्च कथोपकथाः परिगृह्य स्वरचनां विरचयाम्बभूवुः परं यदाहि सम्प्रति देशवासिनां कृते राष्ट्रभक्तिभावभाविता वीरतोद्भव विधायिनो विचाराः सन्त्यपेक्षिता स्तदा ते ( संस्कृतविल्लेखकाः कवयश्च ) तथाविध-भावप्लावितानां रचनानां विरचने प्रवृत्ता उपलभ्यन्ते। आधुनिकेषु देशभक्तिभावना-लङ्कृतकृतिकारेषु श्री वरेण्योऽधिकुरुते महत्त्वपूर्णमुत्तुङ्गतरं स्थानम्। तद्देशाधिवासि-बन्धवो राष्ट्रोत्कर्षाय एकीभूय प्रयतेरन्नित्यस्ति तदीयो बलीयान् हेवाकः। स वाञ्छति भारतौकसां समानमनस्कत्वम्—

"ऐकमत्येन सर्वेषां विनाशाय च दुष्कृतां।
राष्ट्रोत्कर्षाय सम्भूयाद् भारतं वलवद् भुवि॥
समानं नो मनः साधु समाना राष्ट्रजागृतिः।
समता बन्धुवर्गे च जायतां गणतन्त्रके"॥

'गणतन्त्र दिवसः' इत्येतच्छीर्षकस्वकीय सम्पादकीय लेखे स एकदाऽलिखद् 'भवितव्य' पत्रे—"........शासनेन एतदर्थं समाजकण्टका देशद्रौहिणो निजपरविवेक-मकृत्वा तथा दण्ड्याः यथा न कोऽपि तन्मार्गपाती जायेत। जनतन्त्रात्मके देशे एता-दृशशासनस्य सर्वे जनाः साहाय्य माचरन्ति। जनताजनार्दनश्च तेन परितुष्यति। तस्मै दिवसाय नमः यत्र गणतंत्रं सुफलं सर्वसुखदं दुःखहरं विराजते। संस्कृतिर्नः धनं, सा च संस्कृताद् ऋते न शक्या। अतः संस्कृतादरमतयः संस्कृता भवन्तु भाषाप्रश्ने नेतारो जनाश्चेति वलवदाशास्महे। गणतन्त्रदिवसस्तथाभूतः समुदेतु नः सुखायेति शम्।"

अस्मद्भारतीयसंस्कृत्यां जगदीश्वराद् गुरु र्गरीयान्। "गुरु र्ब्रह्मा गुरु र्विष्णुः गुरुः साक्षात् महेश्वरः........" किञ्च "अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया......" इत्येतानि वाक्यानि गुरोः स्थानं जगत्पतेः स्थानादपि उच्चतर मित्येतत् सत्यं प्रस्तुतीकुर्वन्ति। श्री वर्णेकरस्तमेव गुरुं नितान्तचारुताञ्चितविधिना प्रणमन्नीक्षितो भवति—

वाणी मौनं भजति हि मनश्चञ्चलं पंगुभावं
बुद्धि र्यस्मिन् भवति हतधीः प्रातिभं चक्षुरन्धं

सप्रामाण्यं दधत इतराण्याप्तवाक्यानि यत्र
तत्साकारं गुरुचरणयो र्ब्रह्म सञ्चिन्तयामि ।।

स्वीये रामकृष्णपरमहंसीयकाव्ये महात्मनो रामकृष्णस्यावतारत्वप्रतिपादनाय कविर्वर्णेकरो यदुत्प्रेक्षते तद् वीक्ष्यताम्—

धर्मः क्षात्रो भृशमनुसृतो येन रामावतारे
गोरक्ष्याद्यस्तदनु च विशां गोपकृष्णावतारे
ब्राह्मं धर्मं स हि दृढतरस्तीव्रमास्थातुकामः
प्राप्तो देवः स्वय मिव नवं रामकृष्णावतारम् ।।

महाकवे र्वर्णेकरस्य सविधे नूतननूतनतराणां कल्पनाना मुत्करो महान् भाति—

(अ) तन्निर्भूषं शुचिरुचिवपु र्वीतरागस्य विष्णोः
दृष्ट्वा वक्षः स्थलवसतिना कौस्तुभेनात्मकान्तिः
गोपीभावात् सरसमधुरं भक्तियोगं प्रपन्ने
यद्हृत्प्रान्तेऽरुणिमसुभगे सत्प्रकीर्णेव नूनम् ।।

(आ) भुक्तोन्मत्तै रहमिति चिरं व्याकुलाः पुण्यहेतोः
सा वाल्मीकेः शिरसि धवले प्राप्य वल्मीकभावम्
शश्वद्वाचा हृदि च जपतो नाम रामस्य पुण्यं
लग्ना पृथ्वी तव पदतले धूलिभावेन नूनम् ।।

मतिमतां वरेण्यस्य वर्णेकरस्य भारती असामान्यमेव कमपि परिस्फुरत्प्रतिभा-विशेषं परिपुष्णन्ती प्रेक्षिता भवति । तदीयायां कवितायां राजमाना अलङ्कारा स्वयमेव तत्र समागताः सन्ति; न ते प्रसभं तत्र समावेशिताः सन्ति । निसर्गतश्च तेषां प्रविष्टत्वात् कविता काम्प्यद्भुता मेवाभां गमितास्ति । स्वाभाविकतया समुपस्थितयोः शब्दार्थालङ्कारयोः रमणीयतां प्रेक्षन्तां प्रेक्षावन्तः—

विद्युद्दाम्नि प्रततदिनकृद्रश्मिसूच्यग्रविद्धैः
स्वर्गङ्गाम्बुच्छलदतिलसद् विन्दुकल्पप्रसूनैः
सान्द्रानन्दस्फुरितविहरच्चन्द्रिका प्रीतहारैः
सायं प्रात र्ननु वितनुते सृष्टिदेवी त्वदर्चाम् ।।

शब्दार्थयो रुपरि घृताधिकारत्वात् कविरयं यदपि प्रस्तवीति तन्मूर्तं भूत्वा समेषामपि विदुषां पुरः स्थितं सञ्जायते—

सायं प्रातः शरदि सहसा नीरजस्के प्रसन्ने ।
स्वच्छन्दं तं नभसि सरसि स्वच्छभासि प्रशान्ते ।।

कवेः कविता प्रसादमयी । तत्र सुबोधभाषायां रमणीयार्थप्रतिपादनपरमृदुल पंक्तिः प्राप्यते—

(अ) त्वं मे माता त्वमसि भगिनी त्वं पिता त्वञ्च बन्धुः
त्वं मे भर्ता, त्वमसि च गुरुर्ज्ञानपीयूषदाता
त्वं मे गीता, त्वमसि कविता, नृत्यगीतं त्वमेव
वेदाः शास्त्राण्यपि च बहुना किं, न किं मे त्वमम्ब ।।

(आ) मात र्वीचि त्वमसि विषयो भाषणस्यैक एव
शान्ते स्वान्ते त्वदितर तरन् न स्फुरत्येव किञ्चित् ।
नेत्र ज्योति र्मम वितनुते नित्य नीराजनां ते
त्वत्प्राणस्त्वच्चरणशरणस्त्वन्मयोऽहं भवेयम् ।।

राष्ट्रसम्बन्धिनीं नैजेष्टदेवता सम्बन्धिनीं चावदाततरां मञ्जुलां भक्तिभावनां कवितायां कवे र्लोक ईक्षते । अत एकतो जगती तत्सकाशात् काव्यामृतपानस्य सदवसर मश्नुते, एकतश्च सा ततः स्वाघौघविध्वंसनकरमनेहस मधियाति—

नैव स्वर्गं न पुनरमृत स्थानभूतं पदं तत्
याचे मात र्भरतभुवि हि स्वं पुनर्जन्म नित्यम्
यस्मिन् भूयाद् युवतिविषये नव्यवैधव्यदाहो
दारिद्र्यञ्च त्वदनुसरणं येन मे स्यात् सदार्तम् ।।

येन ध्वनिना कविता कवितात्वं याति; यद्धि तत्त्वं सचेतसं कस्मिंश्चिदनिर्वचनीये निर्गलितसर्वसंवेद्ये आनन्दे निमग्नीकरोति; या च प्रकृतिपेशलता सर्वानप्यसुमतस्तोषयतितरां स ध्वनिस्तत् तत्त्वं, सा च प्रकृतिपेशलता वर्णकरस्य कवितायां जगता सम्यग् लोचनगोचरीक्रियते—

ज्योत्स्ना गौरी निशि घनतमः काललग्नार्धरूपा
व्योमोत्केशस्फुटति शिशिरो भूषया कान्तकान्तिः

मन्दस्पन्दश्वसनपवना तारकारत्नहारा
कालीरूप स्थगितनयन त्वां कथञ्चिद् ददर्श ॥

पूर्णोत्फुल्ले कमलकुसुमे श्रीहरे र्वक्त्रशोभां
नेत्रभ्रान्ते दरविदलिते लील नीलोत्पले च
कुन्दे मन्दस्मितपरिलसद् दन्तकान्ति विभाव्य
क्रीडोद्यानेऽप्यलभत सदा सद्विकल्पं समाधिम् ॥

जयत्ययं रससिद्धो मनीषी वर्णेकरो यस्य सदुद्योगेनास्मिन्नपि सङ्कटाकुले काले निर्बाधं पुरः पदं निदधती गन्तव्याध्वप्रदर्शनपरा दरीदृश्यते संस्कृतगीः ।

वर्णेकरस्य कविता निदधाति भावान्
राष्ट्रोपकारनिरतानवदात सान्द्रान्
भाषानुरागपर संस्कृतिसेवनस्था
तस्मान्नमो भरतभूकवये हि तस्मै ॥

———

# मैथिलीशरणगुप्तः

वर्तमानानेहसः कलकलध्वनिना दिग्दिगन्तरं पूरयन्त्यां हिन्दी साहित्यतरङ्गिण्यां विकसितं कमलमिव शोभमानं स्वकवितासौरभं सर्वत्र विकिरति स राष्ट्रकवि मैथिली-शरण गुप्तोऽस्ति सर्वविदितः। स महान् कविकुल कमल दिवाकरः स्वकीयया समर्थया समृद्धया लेखन्या मातुः सरस्वत्याः कोषेऽक्षयेऽनेकानि ग्रन्थरत्नानि समर्प्य तत्कोष वृद्धि नीतवानित्येतच्च क ईदृक् साहित्यसेवी यो न वेत्ति।

आधुनिकस्य युगस्य कविषु तस्य स्थान मस्ति सर्वोच्चम्। सः स्व जीवनं साधनाया स्तादात्म्यसम्बन्धेन काव्यमयञ्चकार। तदीयानां महतां राष्ट्रियाणां काव्या-नां प्रभावो भारतस्य जने जने न्यपप्तत्, अतः सः 'राष्ट्र कविः' इत्येतेनोपाधिनाऽलङ्कृ-तोऽभवत्। तस्य रचनासु अद्यतन्यः सर्वा अपि मान्यताः समस्याश्च मूर्तिमत्यो भूत्वा भासन्ते।

मैथिलीशरण गुप्तो झाँसी मण्डलान्तर्गत 'चिरगाँव' नामधेये ग्रामे रसवसुवसु सोमेशवीयाब्दे जनुर्जग्राह, उपारमच्च स वेदरसग्रहशशधरेशवीयाब्दे। तस्य पिता श्रेष्ठी रामचरणगुप्तो रामस्य परमभक्तो बभूव, 'कनकलता' इत्येतेनोपनाम्ना सोऽपि भक्तिभावनामयकवितानां विरचनेऽभिरुचिं निदधौ। गुप्त महाभागः काव्य-रचनायाः प्रेरणां स्व पितृपादेभ्यः प्राप्तवान्। आचार्यः पण्डित महावीर प्रसाद द्विवेदी च श्री गुप्तं काव्यं कर्तु मुत्साहितञ्चकार। श्री गुप्तः कविः श्री सम्प्रदायानुयायी रामोपासको वैष्णव आसीत्। सः प्रकृत्या सरलो विनीत उदारो निरभिमान आसीत्। राष्ट्रपति डॉ० राजेन्द्रप्रसाद स्तस्य राष्ट्र कवित्वात् राज्यसभायाः सदस्यं तं मनोनीतं व्यदधात्। संसदसदस्यत्वेन सोऽतितरां लोकप्रियोऽभवत्। तत्र कारण मासीत् राज्य-सभायां स्वविचाराणां प्रश्नोत्तराणाञ्च कवितायां तस्य प्रस्तुतीकरणम्।

आचार्य पं० महावीरप्रसादस्य निशिता दृष्टिः श्रीगुप्तस्य प्रतिभां पर्यवैक्षिष्ट; श्री द्विवेदिनः पावनेन स्पर्शेण तस्य कविता परिमृष्टतरतां गता। आदौ तत्कविताः कलिकातातः प्रकाशिते जातीयपत्रे दृष्टा अभूवन्, परं द्विवेदी महानुभावस्तत्कविताः संस्कृताः कृत्वा सरस्वत्यां ताः प्रकाशिताः कृतवान्। आचार्य श्रीद्विवेदिन उदारहृदय-तायाः सुजनतायाश्च प्रशंसायां श्रीगुप्तः स्वयमलिखदिदम्—

करते तुलसीदास भी कैसे मानसनाद।
महावीर का यदि उन्हें मिलता नहीं प्रसाद॥

श्री मैथिलीशरणगुप्तः स्वजीवनस्य प्रभातसमयादेव काव्यरचनायां प्रावीवृतदात्मानम् । राष्ट्रप्रेमपरकान्, समाज प्रेमसम्बद्धान्, पौराणिकाख्यान विषयकान् विभिन्न सांस्कृतिकैतिहासिकसम्बन्धिनश्च चत्वारिंशद्ग्रन्थान् सोऽररचत् । मौलिकान् ग्रन्थान् व्यतिरिच्य वंगलाभाषोपनिबद्धा उत्तमाः कृतीः सोऽनूदिता अपि विधत्तेस्म । 'मधुप' इत्येतेनोपनामधेयेन सोऽनूदिताः कृतीः प्राणयत् । उमर खैय्यामकृतानां रुबायणानाञ्च सः काव्यात्मक मनुवादं कृतवान् कृतिषु मुख्यानां कृतीनां नामानीमानि—

(१) भारत भारती, (२) जयद्रथवध, (३) रङ्ग में भङ्ग, (४) शकुन्तला, (५) वैतालिका, (६) पद्मावती, (७) किसान, (८) पञ्चवटी, (९) स्वदेश संगीत, (१०) हिन्दू शक्ति, (११) सैरन्ध्री, (१२) वन वैभव, (१३) वक संहार, (१४) झङ्कार (१५) अनघ, (१६) चन्द्रहास, (१७) तिलोत्तमा, (१८) विकट भट, (१९) मङ्गल घट, (२०) हिडिम्बा, (२१) अञ्जलि, (२२) अर्घ्य, (२३) प्रदक्षिणा, (२४) साकेत, (२५) यशोधरा, (२६) जय भारत ।

'साकेत' महाकाव्यं हिन्दी साहित्य सम्मेलनेन मङ्गलाप्रसाद पारितोषिकं सादरं प्रदाय सभाजितम् । मेघनाथवध-वीराङ्गना-स्वप्नवासवदत्तादिका स्तदनूदिताः सन्ति रचनाः ।

श्रीमैथिलीशरण गुप्तेन स्वकीयेषु काव्येषु बहूनां नवीनानां विचाराणां समावेशः कृतोऽस्ति । तुलसीदास इव सोऽपि रामस्याननन्यभक्तोऽभवत् । तद्दृष्ट्यां सर्वेषामपि धर्माणामाराध्य एक एव; कामं स रामोभवेत् वा कृष्णोवा अन्यः कश्चित् । परन्तूपास्यत्वेन राम एव तस्य विशेषप्रियोऽभूत् । तदीयायां भक्तिभावनायां दैन्यविनययो रुत्तमः समन्वयो वर्तते । तस्य भक्तिर्दास्यभक्त्यन्तर्गतास्ति । दीनता प्रदर्श्यते—

आया यह दीन आज चरण शरण आया ।
हाय सौ उपायकिए, फल एक न पाया ॥

अनन्यतायां सत्यामपि, न तस्मै मनागपि साम्प्रदायिकताऽरोचत । तस्य तु सर्वे पूजनीया वन्दनीयाश्च आसन् । यस्मिन् काले स उद्बभूव तदा पुरातन्य आधुनिक्यश्च काव्यधाराः प्रवहन्ति स्म अतः सः द्वयोरपि प्राचीननवीनयोः कवितयौः प्रतिनिधित्वं विदधत् प्रत्यलक्ष्यत । तदीयेषु काव्येषु सामाजिक जीवनस्य लक्ष्याणि परमाभिरामरीत्या निरूपितानि सन्ति । तस्य काव्यानि राष्ट्रियविचारोल्लसितानि विद्यन्ते । पद दलितता-परतन्त्रताशृङ्खलाऽऽवद्धस्य भारतस्य जागरणघोषणा तत्र सर्वत्र श्रूयते । तत्कृतकाव्यानां चरमलक्ष्यमासीद् भुवन-सेवा । स आह—

न तन सेवा न मन सेवा, न जीवन और धन सेवा ।
मुझे है इष्ट जनसेवा, सदा सच्ची भुवन सेवा ॥

तस्य रामोऽपि एतस्यैवोद्देश्यस्य पूर्त्यर्थं धराया मवततार। तदीयो रामः स्वयं शंसति—

भव में नव वैभव प्राप्त कराने आया,
नर को ईश्वरता प्राप्त कराने आया।
सन्देश नहीं मैं यहाँ स्वर्ग का लाया,
इस भूतल को ही स्वर्ग बनाने आया।।

श्रीगुप्तो राष्ट्रियभावविभावित आसीन् महाकविः। भारत भारत्यां तेन देशस्य प्राचीनं गौरवम्प्रति सर्वेषामपि चित्त मावर्जयता विद्यमानाया दुर्दशायाश्चित्रणं कृतमस्ति—

"हम कौन थे क्या हो गए, और क्या होंगे अभी"।।

महात्म गान्धिना 'भारत भारती' कृता प्रेरणौपश्लोकितास्ति। भारत-भारती तदानीन्तने समये जनमात्रस्य कण्ठहारः समजायत। कवेः राजनीतिका विचारा गान्धि वादप्रभावाच्छन्नाः सन्ति। साकेतचित्रितस्य रामस्य बनगमनानेहसि म. गान्धिसञ्चालितसत्याग्रहस्य प्रभावोऽस्ति दर्शनीयः—

जाओ यदि जासको रौंद हमको यहाँ। यों कह पथमें लेट गये वहुजन वहाँ।।

गुप्त कवेः काव्येषु समाजोत्थान विषयकं चित्रमपि दृश्यते—

"इन्हें समाज नीच कहता है, पर हैं ये भी तो प्राणी।
इनमें भी मन और भाव हैं, किन्तु नहीं वैसी वाणी"।।

विधवा विवाह परक सामाजिक प्रश्नोऽपि तल्लेखन्याऽस्पृश्यत। तत्र तदीयोऽस्ति कटु व्यङ्ग्यः—

'तुम बूढ़े भी विषयासक्त, बनीं रहें वे किन्तु विरक्ता'

श्रीगुप्तस्य प्रबन्ध काव्येषु तदीया प्रजातन्त्रात्मिका विचारणा स्फुटतया चित्रितास्ति। 'वक संहारे' बकासुरोत्पीडनमांग्लकृतात्याचारस्यैवास्त्येकं परोक्षं रूपम्। प्रजातन्त्रदिशि तत्सङ्केतः—

राजा प्रजा का पात्र है, वह एक प्रतिनिधिमात्र है।
यदि वह प्रजा पालक नहीं तो त्याज्य है।

पृष्ठभू भवन्ती श्रीगुप्तस्य प्रकृतिश्चित्रिता वीक्ष्यते। प्रकृतेः रम्यरूपस्य वर्णनं पञ्चवट्या मित्थम्—

'चारु चन्द्र की चञ्चल किरणें खेल रही हैं जल-थल में।
स्वच्छ चाँदनी बिछी हुई है अवनि और अम्बर तल में'।।

प्रकृते र्निर्दिष्टं रूपं व्यतिरिच्य तस्याः सजीव मलङ्कृतञ्च चित्रणं मानवीकरणात्मकत्वेन दृश्यते—

सखि, नील नभस्सर में उतरा
वह हंस अहा तरता-तरता।
अब तारक मौक्तिक शेष नहीं
निकला जिनको वह चरता-चरता।।

मानव चित्रणस्यापूर्वक्षमता श्री गुप्ते वर्तते। अतस्तच्चरित्र चित्रणं नैसर्गिकं मर्म्मस्पर्शि च जातमस्ति। 'साकेते' कैकेय्या हृदयस्य पीडायाः कियत् स्वाभाविकं वर्णनमस्ति—

युग युग तक चलती रहे कठोर कहानी,
रघुकुल में भी थी एक अभागिन रानी।

गुप्तः कविः प्राचीन संस्कृते र्महानुपासक आसीत्। तस्मादसौ 'नारी विलासस्य सामग्री' इत्येतन्न मन्यते। नारीं सः श्रद्धया पश्यतिस्म। स चिराद् उपेक्षितामुर्मिलां यशोधराञ्च समुचितस्थानासीनां कृत्वा परम्परां नवीनामेव प्रणीतवान्। नार्यां तत्समवेदनास्ति चिरपरिचिता—

अबला जीवन हाय तुम्हारी यही कहानी।
आँचल में है दूध ओर आँखों में पानी।।

संवाद कौशलेऽपि सः केशवमहाकविरिव प्रसिद्धः। यदि केशवः तत्कौशले प्रथमं स्थानमधितिष्ठति तदायं गुप्तः कवि र्द्वितीयंस्थानम्। एतत्कृते संवादे वाक् चातुर्यं, व्यङ्ग्यं, तर्कश्च दृश्यन्ते। साकेते उर्मिलालक्ष्मणयोः संवादो दर्शनीयः—

"उर्मिला बोली अजी तुम जग गये,
स्वप्ननिधि से नयन कब से लग गये।
मोहिनी ने मन्त्र पढ़ जब से पूछा,
जागरण रूचिकर तब से हुआ।।

तदेवं भावपक्ष दृष्ट्या कुशल शिल्पीव सः स्वकीयेषु काव्यग्रन्थेषु पूर्णतया प्राप्त साफल्यः प्राप्यते।

श्रीगुप्तकवेः भाषाशुद्धा परिष्कृता चास्ति। अस्ति सा खड़ीबोली। सरसानि मधुराणि च काव्यानि प्रणीय खड़ी बोल्यां, नास्ति ब्रजभाषासदृशं माधुर्यं खड़ीबोल्याम् इत्येतां चिरसमयागतां धारणां च उन्मूलयतिस्म। तदीया भाषास्ति संस्कृतनिष्ठा परं सा निष्ठा प्रवाहं न निरुणद्धि।

श्रीगुप्तो महाकविरासीत् प्रतिभाधनः । प्रतिभापि तस्य वहुमुख्यासीत् । तदीया लेखनरीतिः प्रबन्धात्मिका, उपदेशात्मिका, नीत्यात्मिका भावात्मिका च तत्कृतिषु विभिन्नासु प्रतिलक्ष्यन्ते ।

. तद्रचितासु रचनासु प्राचीनानि नवीनानि च छन्दांसि प्रयुक्तानि सन्ति । सर्वेऽपि रसास्तत्र प्राप्यन्ते । विप्रलम्भे शृङ्गारे, वात्सल्ये च कवि विंशेषसफलता मधिगतवान् । अलङ्कारश्च तत्काव्येषु क्वापि सप्रसभं नाहृताः सन्ति ।

मैथिलीशरण गुप्त आधुनिकेषु तेषु कविषु प्रथमो ये जनमानसासादने सफलतां लभमाना लोकप्रियताधिगमने सफलतामवाप्नुवन् । अस्ति च स तेषु कविष्वग्रणीः ये सात्विकतां, मर्यादां, शीलं, सुन्दरताञ्च नैज काव्येषु प्रतिष्ठापितवन्तः । स जीवनपर्यन्तं स्वलेखन्या मानसिकीरनुभूतीः उन्मीलयन् भाषा-भव्यभवनमुपस्कृतं व्यदधात् । सः स्वसमयवर्तिनीषु समस्यासु सन्ततं जागरूकः प्राप्यत । स महात्म गान्धिनो रामराज्य-सम्बन्धिनीं कल्पनामपि स्वकाव्ये मार्मिकतयाऽभिव्यानक् । अन्वर्थतः स राष्ट्रकवि रासीत् । हिन्दी साहित्यं न तद्‌ऋणादुद्‌धृतं भवितुं शक्नोति ।

राष्ट्रियेष्वान्दोलनेषु श्रीगुप्तकवि निरन्तरं स्वसहानुभूतिं निदधातिस्म । सः सदाऽसहयोगान्दोलनं सत्याग्रहञ्चान्वमंस्त । स्वयं कारागृहं गत्वा स नैजमनुमोदनं क्रियायां पर्यणीनमत् । स राष्ट्रस्य प्रसुप्तेषु प्राणेषु नवं जीवनं समचीचरत् । सः स्वकाव्यैर्भारतस्य विविध जातीनां धर्माणां महापुरुषाणाञ्च सेवायां स्वां श्रद्धा-मुपायनीचकार । रामभक्तः सन्नपि सः कृष्णं, बुद्धं ईसामसीहं, मुहम्मदञ्चाभ्य-वन्दत । वस्तुतो राष्ट्रियभावनायाः प्रसारस्तद्रचनासु सर्वत्र संलक्ष्यते । यदाप्रभृत्येव श्रीगुप्तः कविवरेण्यो भारतभारतीकाव्येन प्राचीनभारतस्य गौरवगाथां श्रावयित्वा जनतां जागरयामास, वैदेशिक शासनाच्च मुक्ति मधिगन्तुं तां प्रेरयामास तदाप्रभृत्येव भारतीयं जन मानसं तं राष्ट्रप्रेमभावनोद्‌बोधकशक्तिसम्पन्नं कविं मन्यते ।

युगानुकूलानेकनवनवभावनानां स्वरचनासु समावेशनं तेन समीचीनतया विहितं तस्मात् कारणात् स आधुनिकस्य युगस्य प्रतिनिधि कविर्मतो भवति ।

श्रीगुप्तः कविमैथिलीशरणजी लोकप्रियेष्वग्रणीः
सर्वत्रैव हि भारते शुचिमति र्भावान् भृशं राष्ट्रियान्
व्यातन्वन् रभसा नृणां मनसि सः श्रीमत्सुधीपूजितः
उद्‌बुद्धं कृतवान् स्वराष्ट्रमखिलं सौजन्यशीलाञ्चितः



# प्रेमचन्द्रः

हिन्द्युपन्याससाहित्यं य ऐन्द्रजालिकता चमत्कार चारुतया चर्चितान् नानामायातन्त्रोपगूढाद् वातावरणान्निःसार्य जीवनस्य सौरभमयमञ्जुलवसुन्धरायां प्रातिष्ठिपत्; यः स्वोपन्यासेषु जीवनस्य जगतश्च यथार्थाणि दृश्याणि आदर्शावदातायामच्छायां छायाया मवातारयद्; योऽधिसमाजं शोषितस्य निपीडितस्य वर्गस्य मूकतां मुखरता मनैषीत्; अनृतसाधुत्वकञ्चुकावृता नागाङ्गनाः इव सामाजिक्यो विभीषाः यस्य लेखनीरसायनमवाप्य मन्युमयी मसहिष्णुतामनुभवितु मारभन्त; यदीया उपन्यासा ग्रामस्य नगरस्य च, उटजस्य राजप्रासादस्य च, स्वामिनः सेवकस्य च, श्रमजीविनः शिल्पजीविनश्च, शिक्षितस्याशिक्षितस्य च, धनवतो निर्धनस्य च अतितरामेव पेशलानि सप्राणानि च चित्राणि भूत्वा देशस्य पुरः समुपस्थिता अभूवन्; यो हि स्वकीयाभि र्महतीभि र्मौलिकविशिष्टताभि 'रुपन्याससम्राट्' इत्येतेन महनीयेन महिममयेन विशेषणेन विभूषितो भूत्वा विबभौ सः हिन्दी जगद्गौरवभूत आसीत् प्रेमचन्द्रः ।

श्रीमाननीयेन डॉ० हजारीप्रसादेन प्रेमचन्द्रस्य जीवनवृत्त मित्थमालिखितम्-

प्रेमचन्द्रस्य जन्म वाराणसीं निकषा एकस्मिन् ग्रामे विगतधनेकुटुम्बेऽभवत् । स आधुनिकीं शिक्षामवाप्तु ं नाशकत् तां सोऽवचित्यावचित्य संग्रहीतु ं प्राभवत् । मैट्रिक परीक्षोत्तीर्णतासमयागमनात् प्रागेव आर्थिक्याः स्थितेः शोचनीयता तं कठोरतया प्राहरत्; स्वनिर्वाहं पुस्तकानि विक्रीयापि स न कर्तु मपारयत् । सोऽध्यापनवृत्तिमालम्बतेस्म; स उपशिक्षानिरीक्षकत्वावस्थां यावदात्मानमक्रशत् । महात्मगान्धिन आह्वाने सति राजकीयवृत्तिं स औज्झत् । जीवनस्यान्तिमाः कलाः यावत् असहनीयपीडनपरः परम संघर्ष स्तज्जीवन मकदर्थयत् । स दरिद्रताया मजायत, दरिद्रताया मजीवत्, दरिद्रतायामेवोपारमत ।

प्रेमचन्द्र लिखिताज्जीवनसाराद् ज्ञायते यदसौ १९०७ तमेशवीयसम्वत्सराल्लेखनमारेभे । स रवीन्द्रनाथस्य कथामेकामधीत्य तामुर्दू भाषायामनूद्य प्रकाशयाञ्चकार । तस्याद्या कथा 'अनमोलरत्न' उक्तएववत्सरे उर्दू पत्रे' जमाना भिधाने प्रकाशिताऽभूत् । प्रारम्भे सः स्वकीयाः कथाः सप्तसरोज नवनिधिनामधेययोः संग्रहयोः प्रकाशिताः कृतवान् ।

'नवनिधि' संग्रहे याः कथाः शोभन्ते ताः सन्ति ऐतिहासिक्यः । तद्विषयनिरूपणनूतनता कलाकमनीयता च, को हि स यस्य हृदयं न विस्माययतः सप्तसरोज-

गतासु कथासु कलायाः प्रौढिमा विषयाभिव्यक्त्यामुत्कर्षपूर्णोदात्ततोन्मेषश्चः प्राप्येते। तत्राधुनिकस्य विश्वसाहित्यस्य कथाकलायाः पद्धतिस्तु परिस्पन्दत एव, अन्तस्तल-प्रवेशकारिण्या मार्मिक्या गहनताया अपि वैदग्ध्यं वैशद्येनोत्तरलीभवद् विद्योतते। एतयोरुभयो रपि संग्रहयो रनन्तरं प्रणीतासु कथासु कथाकौशल मधिकोन्नतं प्रकृष्टतरं च भवद् विभासते।

प्रेमचन्द्रः प्रायेण पञ्चाशदधिकशतत्रयसंख्याकाः कथाः व्यररचत्। सः स्वकथार्थं कथावस्तु नानाक्षेत्रेभ्यो गृहीतवान्। भारतीयस्य जीवनस्य नैकमपि अङ्गं तेनोपेक्षितम्। स जीवनं समाजञ्च व्यापकदृष्टया ददर्श विकीर्णानि च तत्रत्यानि तथ्यानि सम्यगःनङ्क। डॉ० हजारीप्रसादद्विवेदिना तदीयां व्यापिकां दृष्टिं लक्ष्यीकृत्य प्रकाशं क्षिपता सत्यमेवाभिहितम्—प्रेमचन्द्रस्याध्ययनेन सर्वमप्युत्तरभारतं ज्ञाततां प्रपद्यते। पर्णशालातः सौधं यावत्, नगरतो ग्रामं यावत्, धनिकात् कृषीवलं यावत्, पञ्चायतनात् विधानसभां यावत्, ये केऽपि सामाजिकवर्गा वर्तन्ते तेषां समेषामपि आचारा विचाराश्च, आवासाः प्रवासाश्च तेन प्रकटीकृता यथा, नान्येन केनापि तथा।

सामाजिकीषु कथासु तस्य 'मृतक भोज'-'शान्ति' प्रभृति कथाः, मनो विज्ञान-परासु कथासु 'नशा', 'बड़े भाई', कफनादिकाः, नैतिकीषु कथासु 'न्याय', 'दूध का दाम' इत्येतदादिकाः, पारिवारिकीषुकथासु 'घर जमाई', 'दो भाई' प्रभृतयः, राजनीति निष्ठासु कथासु 'इस्तीफा', 'जुलूस' इत्येतदादिकाः, प्रेमपरकासु कथासु 'कैदी', 'विद्रोही' त्यादिका भावात्मिकासु कथासु 'पूसकी रात', 'पञ्च परमेश्वर', 'बड़े घर की वेटी' 'इत्येतदादिकाः कथाः मानवीयस्य जीवनस्याभ्यन्तरे धरातले सन्निविष्टाः सन्ति। नैतादृशमेकमपि क्षेत्रं जीवनस्य यन्न ताः संस्पृशन्ति।

प्रतिनिधिभूता स्तस्य कथाः सन्त्येताः काश्चन—

'बूढ़ी काकी', 'शतरञ्ज के खिलाड़ी', 'सौत', 'सुभागी', 'दफ्तरी', 'आत्माराम, 'उद्धार', 'शङ्खनाद', 'माँ', 'माता का हृदय', 'धिक्कार', 'स्त्री और पुरुष', 'बड़े भाई साहव', रानी सारन्धा च।

प्रेमचन्द्रः कथाकार इव उपन्यासकारोऽप्यस्ति सर्वप्रियः। तेनैकादश द्वादश वा उपन्यासा रचिताः। तदीया एते उपन्यासाः सन्ति जगद्विदिताः—सेवा सदन, प्रेमाश्रम, वरदान, प्रतिज्ञा, निर्मला, कायाकल्प, कर्मभूमि, रङ्गभूमि, गोदान च।

तद्रचितेषूपन्यासेषु यथार्थस्य भारतस्यात्मेक्ष्यते। तदीयानि सर्वाण्यपि पात्राणि वैयक्तिकतया सामाजिकतया च समुल्लसितानि सन्ति। तेषु पात्रेयु बलीयसी जीवन-शक्तिः अमोघा च प्रेरणा विद्यते।

प्रेमचन्द्रस्य दृष्टि रस्ति दोषमार्जनानुरागा । अस्ति सोऽद्भुत एव लेखक— मूर्धन्यः । क्रान्त्यर्थं मुपक्रममाणोऽपि सः सन्धि विदधाति तया साकम् । यथार्थवादस्य पर्यवसानं स आदर्शवादेऽनुतिष्ठति । तदीयाया उद्धारकप्रवृत्तेः पुरस्तात् कलाकारिता स्वशिरः प्रणमने सहर्षं गौरवं नैजं मन्यते । कथावस्तु, विषयाभिव्यक्तीकरणनिपुणता, कलाकमनीयता, भाषासौष्ठवं, चरित्रचित्रणचारुत्वमित्येषुसर्वेष्वपि तत्त्वेषु कतमत् तत्त्वं श्रेष्ठं कतमन्नेत्येतद् विधनिर्णयनं कठिनं, मन्ये, अहमहमिकया एकैकं स्वकीयं श्रेष्ठत्व माकलयितुं रभसात्मानं पठक-पाठकानां पुरः समुपस्थापयति ।

प्रेमचन्द्रस्योपन्यासेषु औपन्यासिकी कला निश्चप्रचतया चरमशिखरे उत्कर्षाद्रे रधिष्ठितास्ति । तत्र जगतो जीवनस्य सर्वंविधान्यपि क्षेत्राणि गृहीतानि सन्ति ।

डॉ० हजारीप्रसाद द्विवेदी वदति—प्रेमचन्द्रः शतशताब्दैर्हि अन्यायाचरणप्रताडितानाम् अपमानितानां, निरपेक्षाणां कर्षकाणां शब्द आसीत्; अवस्तारग्रहग्रस्ततां सहमानानां प्रतिपद मारोपितलाञ्छनाना मसहायानां नारीणां महनीयतायाः प्रबलः परिव्राट् आसीत्; निर्धनानां दीनदरिद्राणां वराकाणां विवशतागतानां महत्तायाः प्रचारक आसीत्, यद्युत्तरभारतस्य समग्राया अपि जनताया आचारान्, विचारान्, भावान्, भाषाश्च, निवास-परिधानविधाम्, आशाम्, आकाङ्क्षां, दुःखानि, सुखानि, ऊहां, विवेकञ्च ज्ञातु मभिलाषो वर्तते तदा निःसंशयं वक्तुं शक्यते यत् प्रेमचन्द्रात् परः कोऽपि नोत्तम स्तत्तत्तत्त्वपरिचायकः प्राप्तुं शक्यः । पर्णशाला मारभ्य राजसौधपर्यन्तम्, खमुचमारभ्याधिकोशपर्यन्तम्, ग्रामपञ्चायत मारभ्य विधानसभाभवनपर्यन्तं न भवन्तं तं विहायेतर स्तावत्कौशलपुरस्सरप्रामाणिकभावपूर्वकं नेतुं शक्नोति । भवन्तो निर्भयभाव मादाय प्रेमचन्द्रस्य करमवलम्ब्य केदारे गायन्तं कृषीवलम्, अन्तःपुरे मानं विदधतीं मानिनीं प्रेयसीम्, चन्द्रशालायामुपविष्टां वारवनिताम्, मण्डकार्थं सोत्कण्ठं धावतो भिक्षून्, कूटपरामर्शे निलीनान् कूटजीविनः, ईर्ष्यारतान् प्राध्यापकान्, दुर्बलहृदयान् श्रेष्ठिनः, साहसकरीं चर्मजीविनीं, दम्भिनं पण्डितम्, धूर्तं लेखपालम्, नीचाशयं धनवन्तञ्चा वलोकयितुं शक्नुवन्ति; धृतनिश्चयधियो भूत्वा भवन्तो 'यत् किमपि दृष्टं न तदसत्यमिति विश्वासमपि विधातुं प्रभवन्ति । विश्वासादपि परवर्तिन्याः सत्यतायाः प्रदर्शकं परिदर्शकमपि हन्त हिन्द्युर्दूविज्जगती न जानातीमम् प्रेमचन्द्रम् ।

जनता प्रेमचन्द्र प्रकाण्डकथाकारमेव वेत्ति परं तस्मिन् न कलाकारितैवाविद्यत मनुष्यत्वमपि नितरां प्रौढमवर्तत । इदं सत्यं कदाचिदल्पीयांस एव जना जानन्ति । स्वकीयासु कृतिषु सः समेषां पीडितात्मनामुद्धाराय निर्दिशन् तान्प्रति न केवलं मौखिकीं सहानुभूति मभजत् सः स्वकीयां समवेदना मसज् जीवने व्यवहारेषु

प्रकटीकृत्य कलाकाराणां पुरः एकं महान्त मादर्शं निहितवान् । कलायाः मार्मिक्या अनुभूते र्यथार्थं मूल्यं तदाश्रित मेव सत् सन्तिष्ठते स्म । सः स्वकीये जीवने यानि कष्टान्यन्वभवत् तैः कष्टैः सः परेषां पीडितानां यथार्थं रूप मवगन्तुं साहाय्य मश्नुतेस्म । असाववगम्यैव तूष्णीं नाभूदपि तु नैजकर्कशकठोरार्थिकसङ्कटदशायामपि समये समये विपन्नायामवस्थायां निपतितान् परिचितानपरिचितान् वा जनान् प्रति स्वसामर्थ्यानुसारं सक्रियां सहायां दातु मजस्र मुद्यतः समलक्ष्यतेतीलाचन्द्र जोशी शंसति स्म ।

वस्तुतो मानवता तत्रावतीर्य सफलतामयासीत् । धन्यो हि सः प्रेमचन्द्रो यो मनसा, वाचा, कर्मणा स्वकीयं राष्ट्र मसेवत । यावत् तत्प्रणीतं राष्ट्रप्रेमपरिपूर्णं साहित्यं भुवि विराजेत, तावद् देश एवास्माकीनो न, विश्वस्य सर्वाण्यपि राष्ट्राणि तेनोपक्रियेरन् ।

प्रेमचन्द्रः पृथिव्याः स्वकीयं परिच्छदं कशिपुञ्च विहाय शून्यसागरतरङ्गेषु तरणं नाचीकमत; यथार्थंजीवनवर्तिनः कालुष्यस्य हेयानि चान्यानि प्रदर्शयितु मायोजनप्रपञ्च-गठनं नोचितममंस्त । प्रकृते र्मानवस्य, मानवीयानां भावनानां, प्रवृत्तीनां प्रतिक्रियाणाञ्च तदीयानां नितरां परितोषास्पदं वन्धुरं चित्रणं तत्साहित्य सौहित्ये चारुतया चकास्ति ।

श्रीप्रेमचन्द्रो विरचय्य भव्याः
श्रेष्ठाः कृतीः यामभिनन्दनीयां
सेवां स्वराष्ट्रस्य शुभा मकार्षीत्
सर्वे स्मरेयु र्मनुजाश्चिरं ताम् ॥



# गुरु गोविन्दसिंहः

पञ्चाम्बु प्रदेशे जातस्य तस्य महापुरुषस्य सम्बत्सराणां पञ्चशती व्यत्यगात् भारत एव न समस्तेऽप्येशियाख्यमहाद्वीपे तस्य महात्मनः धर्मप्राणता अप्रथत। आसीत् स महान् प्रभु-भक्ति-पथ-प्रदर्शकः। सः शैशवादेव मितभाषी वभूव। सकल-मष्यहस्तदीयं भगवद्भजन एव व्यतीयाय। मानवस्यास्ति किं कर्त्तव्यम् ? सांसारि-केभ्यो दुःखेभ्यः केन प्रकारेण जायेत उन्मुक्तिरित्येतदासीत् तच्चिन्तन-विषयः। आसीत् तदीया विरक्ति र्जगत्या, मनुरक्तिश्च परमात्मनि। सततं भगवच्चरणयो रासक्ततया तस्मिन् अद्भुतमेव तेज उद्बभासे। स आसीद् विश्वविश्रुतो महान् पुरुषो गुरुतेग बहादुरः।

गुरु तेगबहादुरो धर्मं रक्षितु मसूनपि स्वकीयान् जुहाव परं धर्मं न मुमोच मार्ग शीर्षमासे, शुक्लपक्षे पञ्चम्यां तिथौ द्वित्रिंशदधिकसप्तदशशतमे वैक्रमेऽब्दे तस्य शिर औरङ्गजेबस्याज्ञया करवालेनाच्छेदि। यस्मिन् दिवसे बलित्रेद्यां स आत्मान महौषीत्, तमः प्रसृतमभूत्; भूमिश्चकम्पे, अह्न्येव नक्षत्राणि अवालोकिषत इत्येतद् यवनेतिहासकारा लिखन्ति।

गुरु गोविन्दसिंहोऽस्यैव धर्मरक्षकस्य हुतात्मनस्तेगवहादुरस्य सुत आसीत्। सः पौषे, शुक्लपक्षे त्रिविंशत्यधिकसप्तदशशततमवैक्राब्दे (२२. १२. १६६६) शनौ समुत्पेदे। धर्मवेद्यां पितरि हुते सति गुरु गोविन्दसिंहो हिन्दूधर्मरक्षार्थं जीवनं सम्पदञ्च सर्वां मर्पयितुं प्रत्याश्रौषीत्। तदीया सहस्रशो जना अनुयायिनो बभूवु स्तेषु बहवश्च "कामं प्राणाः प्रयान्तु परं न धर्मं त्यक्ष्याम" इत्येतां प्रतिज्ञां कृतवन्तः। गुरुगोविन्द सिंहस्य जीवनं जनानां हृदयेषु हिन्दुत्वं प्रति दृढीयस्या आस्थायाः समुपस्थापने सोत्साहं समुदञ्च संलग्न मभूत्। सः अल्प एव वयसि संस्कृतंसम्यक् पठति स्म। धर्मग्रन्थांश्च प्रचुरान् साधु अन्वशीलयत्। सः संस्कृतमध्येतुं बहून् पञ्चाम्बुवासिनः काशीं प्राहिणोत्। जना भवेयुः संस्कृते विद्वांस इत्येषा तदीया बलीयसीच्छाऽऽसीत्। यस्य प्रयत्नेन सहस्र-शो जनाः संस्कृते विद्वांसोऽजायन्त। रामायणे रामस्य पितृभक्ति, भरतस्य भ्रातृप्रेम, लक्ष्मणस्य तपस्वि जीवन मधीत्याकर्ण्य च, महाभारते च भीष्मस्य बाल ब्रह्मचर्यं, युधिष्ठिरस्य सत्यवादिताम्, अर्जुनस्य शूरतां, कृष्णस्य च नीतिं निशम्य पठित्वा च स यदा तदा रामस्य कृष्णस्य च सन्तति रद्य कीदृशी जातास्ति ? केनविधिना जातेः अस्या उद्धारः स्यात् इत्येतस्यां चिन्तायां निममज्ज। स्वदेशस्य पराधीनता तस्य मानसं नितरामपीडयत्।

गुरु गोविन्दसिंह एकदा स्वकीयान् शिष्यान् भक्तांश्चाजुहाव। महान् उत्सव आयोजितोऽभूत्। स्थातुं च उपकार्याः रचिता अभूवन्। दिग्दिगन्तेभ्यः सहस्रशो जना समवेता अजायन्त। तस्मिन् दिने तिथिः पूर्णिमाऽऽसीत्। गुरु गोविन्दसिंहो वसानोऽनवद्यानि वासांसि, बिभ्राणश्च चन्द्रहासं, सभाभवन माससाद। स उच्चै र्जगाद, बन्धवः अयमस्ति परीक्षाकालः भगवती दुर्गा वलि मभिलषते, ब्रूत, के वीराः स्वशिरो दातुं सन्ति सन्नद्धाः ?

गुरो र्दृढां गम्भीरां च गिरां श्रुत्वा सर्वेषामपि हृदयान्येजाञ्चक्रिरे। जनाः स्वकीयानि शिरांसि आवरीतुमारेभिरे। गुरुस्त्रिः स्वशब्दान् आवर्तयामास। तत स्त्रिंशद्वर्षवया लाहौरवासी दयारामः खत्री उपससार। गुरु स्तं हस्ते धृत्वा शिविरस्यैकस्यान्तः आजहार। क्षणेनैव शिविरतः शोणितधारा प्रावहत्। गुरुरपि रुधिरदिग्धासि र्वहि राजगाम। सः पुनः प्राब्रवीत् अन्यच्चशिरोऽपेक्ष्यते। अस्ति कश्चित् मातु र्वत्स ईदृग् य आत्मानं हुत्वा जाति मवेत्? ततस्त्रिंत्रिशदब्दवर्षदेशीयो दिल्ली निवासी धर्मदास उदतिष्ठत्। सोऽपि तामेव दशां नीतः। एवमेव त्रयोऽन्ये च स्वशिरः समर्पयितु मु्रतस्थुः। तेऽपि त्रयो युवानो गुरुणा शिविरान्तराले नीता अजायन्त।

गतेषु सत्सु कतिपयेषु पलेषु जना गुरुं किञ्च तानपि पञ्च पुरुषसिंहान् जीवतः सुन्दरवस्त्रसनाथान् ददृशुः। सर्व एव नितरां विस्मयं ययुः। गुरुस्तु पूर्वमेव तस्मिन् शिविरे पञ्च अजान् आदाय न्यवध्नात्। तेषामेवाजाना मेकैकस्य शिरः सोऽच्छिनत्। अतः सर्वेऽपि जनाः अनुशिश्यिरे भृशम्। परं सोऽनुशयस्त्वासीत् तदा मुधैव।

कालान्तरेण शक्तिसाहसनिर्भीकताधर्मरक्षणसत्कर्मपरायणानां वीराणां तरुणाना मेका विशालानीकिनी गुरुगोविन्दसिंहस्याज्ञां पालयितुं तदिङ्गितं प्राप्य स्वकीयान् प्राणानपि सहर्षं परित्यक्तुकामा समुद्यता समजायत। गुरुसेवायां महान्ति महान्त्युत्तमोत्तमान्यायुधानि अश्वाः अन्याश्च विविधा सामग्र्यः साधनानि च समरोपयोगीनि देशभक्तैः समृद्धै र्भूपादिभि रूपायनीकृतानि। गुरोः पावने आश्रमे सहस्रशो जनाः सदैव ते समुपस्थिता अदृश्यन्त ये देश-सेवार्थं सर्वस्व मुत्स्रष्टु मुत्कण्ठिता आसन्। गुरुप्रयत्नेन तदानीं यूनामेका विशाला संख्या शस्त्रविद्यायां निपुणा बभूव। नाश्रमे तदा कश्चिदीदृग् युवा वींरो दृष्टोऽजायत यो न स्यात् अस्त्र-शस्त्रकुशलः।

गुरु स्तत्कालवर्तिनो राज्ञ ऐक्य सूत्रेण सुदृढेन निबवन्ध। सः "स्वार्थं विहाय पारस्परिकं कलहं द्वेषं च परित्यज्य मातृभूमिं स्वतन्त्रीकतुं प्रयतध्वं येनास्माकं देशः सर्वाङ्गीणतया पुष्पित-फलित-पल्लवितश्च जायेत" इति सर्वेष्वपि जनेषूपदिदेश। तदीयं रचनात्मकं कार्यं नितान्त मेव सुदृढं बलवच्च सञ्जातम्। सः स्वकीयेन नीति

कौशलेन लोहागढ़-फतहगढ़-फूलगढ-आनन्द गढनामकानि चत्वारि दुर्गाणि चाजीघटत्। स देशस्य भूयांसं भागं कृत्स्नतया संगठितं चकार।

वैशाख मासे, कृष्णपक्षे, द्वादश्यां तिथौ, द्विचत्वारिंशदधिकसप्तदशशततमेब्दे वैक्रमे गुरु गोविन्द सिंहः स्वकीयां सेनामादाय भिनणानी ग्रामं निकषा जमसागिरि-सरित स्तटे योद्धु मुपातिष्ठत्। मुगल सम्राजः सेना गुरोश्च सेना वीरतापूर्वकं दिनद्वयं भीषणं प्रहारं परस्परं विदधती अयुध्येताम्। मुगलसेनायाः प्रमुखप्रमुख सेनापतयः कालेखां-हयात खाँ-नयाबत खाँ प्रभृतयः गुरो वीरैं र्युवभिरधानिषत। मुगल-सेना युद्ध क्षेत्रात् पलायाञ्चक्रे। विपुलां युद्धसामग्रीं गुरु-सेना स्वहस्तसात्कृतवती।

गुरोरद्भुत प्रचण्डं वलं वीक्ष्य पर्वतीया राजानो गुरोः सुहृदो बभूवुः। परं न ते विशुद्ध हृदया आसन्। तेष्वेव दिनेषु दक्षिणस्यामाशायां वीर सिंहः शिवः (शिवाजी) राजस्थाने च राजा जयसिंहो मुगल राज्यस्य मूलं निःसारं कर्तुं प्रयतमानावास्ताम्। मुगल सम्राजा पुनः गुरोः सेनाया विध्वंसनाय स्वकीया विशाला वरूथिनी प्रहिता। गुरु रपि स्वसेनां पूर्णतया सज्जीकृत्य मुगलसेनां रोद्धुं प्रचक्रमे। गुरुः स्वसमयस्य महान् अद्भुतः कुशलो धानुष्क आसीत्। लक्ष्यवेधने सः कामप्यनिर्वचनीयामेव निष्णाततां निदधौ। तस्य एकैको नाराचो युगपदेव अनेकानि शत्रु-शिरांसि चिच्छेद। धर्मे देशे च स्वकीयान् प्राणान् उत्सृजतां शूरर्षभाणां सैनिकानां पुरः मुगल सम्राजो वलवती विशङ्कटापि सेना स्थातुं न शशाक। पलाय्य सा स्वप्राणान् पातु मशकत्। गुरोः सेना विजयदुन्दुभिघोषं कुर्वाणा आनन्दगढं नाम दुर्गं निववृते।

पराजय-प्रवृत्ति र्लाहौरस्य राज्यपालं दिलावरखाँ नामानमपीपिडत्। स गुरुं विजेतुं प्रतस्थे। भयङ्करं जन्यं प्रावर्तत। सत्यां निशायां शत्रोः गुरोश्च सेना व्यश्राम्यत्। परमेश्वरस्यास्ति लीला विचित्रा। नद्यां भयङ्करो जलप्रवाहः संववृधे। मुगल-सेनां सरित् स्वगर्भे निलीनीकर्तुं प्राक्रमत। सर्वाण्यपि समरोपकरणानि मुगलसेनाया धुनीसलिलं प्रावाहयत्। बहून् सैनिकांश्च तत् प्रवाहयाम्बभूव। भूयांसश्च जीवन-विनाशभयाद् दुद्रुवुः। गुरोः शिविराणा मुच्चतरगिरिशिखरस्थत्वात् न स्वल्पापि हानि रजायत। पुनश्च दिलावरखाँ अ।चक्राम। बहलामग्रामे तुमुलमायोधनं बभूव। समरे समराग्रणीसेनाधिनायका वीरगतिं प्रापुः। विजयश्रीः पुनः गुरुमेवावृणोत्। पुनः पुनः सञ्जातः पराजयो मुगलशासकं भृशं कदर्थयति स्म।

हन्त, गुरो र्विजयं हिन्दूनरेशा एव न सोढु मशकन्। देशद्रोहिणस्ते हिन्दू जाति-रक्षके गुरुगोविन्दसिंहे विरुद्धा अजायन्त। परांघ्रिलिहां तेषां बुद्धि र्विपरीताऽभवत्। अतस्तेधर्म-जाति-रक्षक मेव गरुं न्यक्तुं मुद्यता अभूवन्। इदं हि सदनं सदनदीपेनैव हा, अदह्यत।

पर्वतीयाः पृथिवीपतयोऽजमेरचन्द्रविलासपुराधिपते रधिनायकत्वे आनन्दगढ मारुरुधुः। सूर्यास्तं यावत् शतघ्न्योऽग्निं वर्षन्त्योऽलक्ष्यन्त। दुर्गाभ्यन्तरा दपि अग्नि रवर्षत्। रात्रौ यदा देशद्रोहिणां सेना क्लान्ता श्रान्ता च भूत्वा प्रसुप्ता ऽऽसीत् गुरोः सैनिका दुर्गान्निष्क्रम्य दम्भोलिरिव तस्या उपरि आपपात। सेनायाः शतशः सैनिकोद्-भटभटा व्यापादिताः। इत्थ मनेकक्कत्वो दुर्गान्निर्गत्य गुरुसैनिकवीराः शत्रु-सेनामक्षि-ण्वन्। एकस्मिन्नहनि तु गुरो रनीकिनी प्रबलशक्त्याऽऽक्रमणं कृतवती। शत्रुः स्वरक्षार्थं येन केनापि प्रकारेण मार्गमवाप। पलाय्य एव स जीवनं पातुं प्रबभूव।

गच्छतानेहसा शत्रुः पुनः महतीं चमू मादाय गुरुं रुरोध। पञ्चदशदिनानि निरन्तरं युद्धं घोरं भीषणं भवत् प्राचलत्। रक्तसरितः प्रावहन्। सहस्रशो भटा रुभयो रपि पक्षयोः हता अभूवन्। परं विजयं न गुरुसेना प्राप्तवती न च यवनसेनैव। पर्वतीय नृपाणां विरोध स्तेषां शत्रुम्प्रति प्रदत्तं साहाय्यं च गुरु-सेनां भृशं यदि नापा-करिष्यत् तदा नूनं किमप्यन्यदेव प्रियं फलं संलब्ध मभविष्यत्।

गुरु गोविन्दसिंहस्य अजीतसिंहः, जोरावरसिंहः, जुझारसिंहः, फतहसिंह श्च इत्येते चत्वारः पुत्राः आसन्। तेषु अजीतसिंह-जोरावरसिंहौ समराजिरे शत्रोः शतशः शूरान् व्यापाद्य वीरगति मवाप्तवन्तौ। यदा हि द्वयोः वीरपुत्रयो र्बलिदानं कृत्वा गुरु रात्मानमपि होतुं निश्चिकाय तदा सैनिकास्तं तस्मान्निश्चयात् कठोर मनुरोध मभिनिवेशं च प्रदर्श्य, निवारयामासुः। गुरो! भवदभावे देश-रक्षां कः करिष्यति? भवान् देशहिताय अस्मत्प्रार्थनां कृपया स्वीकरोतु" इत्येतां तदीयां प्रार्थनामन्ततः सः स्वीचकार।

गुरु गोविन्दसिंह आनन्दगढदुर्गतो यदा निर्जगाम तदा गहनारण्यान्यां तस्य माता द्वौ च अवशिष्टौ कनीयांसौ सुतौ क्वापि मार्गात् अभ्रंशन्त। विपदां घटा विपरीते समये आगते सति मानवं क्वापि न जहाति। तौ द्वौ पुत्रौ माता च यवन सैनिकै रगृह्यन्त। शत्रुः शत्रोः पुत्रौ विलोक्य अप्रीयत। इसलामधर्मपरिग्रहाय तौ द्वावपि बन्धू (जुझारसिंह-फतहसिंहौ) आदिष्टावभूतां परं तौ 'स्वधर्मे निधनं श्रेयः' इत्येतदभिधाय समस्तामपि यवनराजसभां विस्मितां कृतवन्तौ। दर्शिते सत्यपि महति प्रलोभने न तौ वीरसिंहसुतौ स्वधर्मं त्यक्तु मुद्यतावजायेताम्। ततो वज्रादपि कठोरतरो नवाब वजीर खाँ "तौ द्वावपि कुडयावृतौ क्रियेताम्" इत्याज्ञापयामास। चरणतः शिरः पर्यन्तं भित्ति र्वद्धितुमारभत। यदा हि सा कनिष्ठस्य बन्धोर्ग्रीवां पस्पर्श, ज्येष्ठो बन्धु रश्रुपरि-पूर्णनयनो बभूव। 'साम्प्रतमपि समयो, यदि आत्मानं रक्षितु मिच्छसि' इत्येतच्छ्रुत्वा स वीर बालकः, "नाहं मृत्यो र्बिभेमि, ज्येष्ठत्वान्मम बलिदानं प्रथमं युक्ततरं परं सौभाग्यमेतन्नाहं प्राप्तुमशकम्, मदीयोऽनुजस्तदलभत-इत्येतद्धेतो रहं दूये" इति निशम्य

तत्र स्थितानां सर्वेषामपि शिरांसि श्रद्धया प्रणतान्यभूवन् । जीविता वेव तौ द्वावपि धर्मरक्षकौ बालौ कुड्येन कवलीकृतौ । 'ओ३म्, ओ३म्' इति कथयन्तौ तौ धर्मवेद्यां हि एकषष्ठ्यधिकसप्तदशशततमवैक्रमेऽब्दे, पौषे मासे त्रयोदश्यां हुतौ बभूवतुः ।

पौत्रयोस्तद्‌विधं वलिदानमाकर्ण्य गुरुतेगवहादुरस्य वीरपत्नी गुरुगोविन्द सिंहस्य च माता दुःखं तत् सोढुं न शशाक साच्छदनान्निपत्य प्राणान् जहौ ।

प्रत्यब्दं सरहिन्दे अनयोर्द्वयोरपि हुतात्मनोः बालयोः स्मृतौ सहस्रशः जनाः श्रद्धया सादरं श्रद्धाञ्जलि मद्यापि समर्पयन्ति ।

गुरु धर्मार्थं मम कनिष्ठौ द्वावपि आत्मजौ जुझारसिंह फतहसिंहौ बलिवेद्यां स्व-जीवनं समर्पितवन्तौ—इति विचार्य प्रसन्नतया सजलनयनोऽभवत् । सः कवि रपि आसीत् । कवितायां द्वयोरपि पुत्रयो र्बलिदानं तेन हृदयस्पर्शिण्या रीत्या चारुतरं चित्रितम् । गुरुरन्यं च वहुविधं संघर्षं सहमानो 'माधवदास' संज्ञकं वीरवरं विरक्तं समया आससाद । तं च सः क्षत्रियधर्मं पालयितुं मातृभूमेश्च वन्धननिगडं छेत्तुं प्रेरया-मास गुरोः प्रेरणया स 'वन्दा वैरागी' इत्याख्ययाख्यातो यवनानां दलने प्रावर्तत । कतिपयानामेव यूनां साहाय्येन स भीषणं यवन-संहारं चकार । यवन-जगती तद्दलनेन चकम्पे । तं निग्रहीतुं दिल्ली-सम्राट् वहादुरशाहो विशालां सेनां प्राहिणोत् । सेनया सः समन्तात् न्यरोधि । अचिरादेव च सोऽपि ततः परमनिन्दनीयकठोरतया यवन शासनेन व्यापादितः ।

गुरु गोविन्दहिंहस्य अन्तिमानि दिनानि गोदावर्य्या स्तटे व्यतीतान्यभूवन् । सः जीवनान्तसमये "वन्धवः, साम्प्रतमहं यामि, तत्रैव यामि यत्र सर्वे रपि एकस्मिन् दिने गम्यते । कोऽपि क्रन्दन् गच्छति; कोऽपि च हसन्; अहं हसन् गच्छामि । भवन्त ईर्ष्यां द्वेषं च त्यक्त्वा संगठिता ऐक्यसूत्रनिबद्धा भवन्तु; तथा च यतन्तां यथा मातृभूमिः स्वतन्त्रा भवेत्...." इत्येतदभिदधत् नेत्रे च निमीलयन् भगवन्तं स्मरन् भारत भक्ता-ग्रणीः १६७५ तमवैक्रमसम्वत्सरे कार्तिके मासे नश्वरं शरीरं तत्याज ।

गोदावरीनदीतटे ( हैदराबाद मण्डले ) महाराजरणजीतसिंहनिर्मापिते गुरोः पावने स्मारक-स्थाने प्रत्यब्दं सहस्रशो यात्रिणः आयान्ति । श्रद्धया भक्त्या च ते तं महापुरुषम्प्रति स्वकीयं श्रद्धाञ्जलि मर्पयन्ति ।

यो जीवनं स्वं निजमातृभूमेः
स्वातन्त्र्यहेतोरथ धर्महेतोः
युद्धेषु नित्यं समुदं निनाय
गोविन्दसिंहः स न कस्य पूज्यः ?



# डॉ. वी. राघवन्

अद्यतने संसारे यानि यावन्ति च राष्ट्राणि प्राच्यां प्रतीच्या मवाच्या मुदीच्याञ्च दिशायां राजन्ते तेषु तावत्सु सर्वेष्वपि राष्ट्रेषु संस्कृतभाषाया अनन्यगमद्भुतत्वं, संस्कृत वाङ्मयस्य संसारश्रेयःप्रेयःसम्पादनपटीयस्कत्वं, सर्वाङ्गीणोत्थाननिष्ठप्रकृतित्वं, भौतिका भौतिकताश्रीप्रकटीकरणालङ्कर्मीणत्वमुपमानविहीनज्ञानविज्ञानकलावैभव-विशिष्टत्वञ्च यो हि विद्वत्तल्लजः स्वप्रणीतै रुत्तमोत्तमैः प्रभूतै र्भारतीकृपाकौमुदी-समुद्दीपितै र्ग्रन्थैः, विविध विषयतत्त्वसमुन्मीलननिपुणैः पुष्कलै र्भाषणैः, निखिलशास्त्र स्थनिगूढग्रन्थिसमुन्मीलनकुशलैः परः शतै र्लेखैः, भूयोभिः संस्कृतहितैकव्रतविराटा योजनप्रवीणैः कार्यकलापैः, प्रतिभादिप्रथितानेकसंस्कृतपत्रपत्रिकासम्पादनदक्षकृत्यनिवहैः मधुरिमसमेधितवाग्विलासै श्चान्यान्यैः साधनै र्वितन्वन्, मनीषिमनः सुप्रमोदततित-रङ्गं सञ्चारयन्, वैदेशिकविद्वद्धुरीणानामपि शिरांसि संस्कृतवाक्चरणयोः श्रद्धया प्रणतीकारयन्, सरस्वत्याः कोषस्य श्रियं प्रबलयन्, लोकस्य दिग्दिगन्तान् सुरभारती-स्मितसुन्दरतया समुद्योतयन्, गगनमण्डले संस्कृतगिरो महिमानं गुञ्जयन्, धीमतामपि धियं तरलयन् विद्योततीति सोऽस्ति सुधीसमाजालङ्कारो त्रिपश्चित्सत्तमो वाग्मिना मग्रेसरः साहित्यविरचयितृधुरिकीर्तनीयः कविकोकिलः कृती साहित्याब्दपूर्ति र्मद्रास विश्वविद्यालय-संस्कृत विभागाधीशप्रोफेसर श्री डॉक्टर वी. राघव (न्) महाभागः।

अनवद्यविद्यावदातचरितोऽस्मद्भारतस्य गरिम्णः परिवर्धकः श्री राघव (न्) महोदय ईशवीये वसुव्योमग्रहशशिसम्वत्सरे, मासेऽगस्ते, द्वाविंशे दिनाङ्के तमिलनाडू-प्रदेशान्तर्गततञ्जावरमण्डलस्थतिरुवारुरपत्तने तपः पूतान्ववाये जनुरग्रहीत्। काव्येषु कुशलतां बिभ्राणः, कवने कोविदतां दधानः, कलासु विदग्धतां तन्वानो बुधानां भुवं तेजसालोकयन् श्री राघव आङ्ग्लविद्याध्ययनानेहस्येव प्रत्नपण्डितधौरेयाणामानना-रविन्दात् साम्प्रदायिक्या सरण्या काव्यान्यभ्यस्य शास्त्रेष्वपि प्रवेशं विधाय विश्रुत विद्वद्वरमहामहोपाध्याय कुप्पुस्वामिशास्त्रिचरणाराधनया वैदुष्य मासाद्य, त्रिंशदधिकै-कोनविंशतिशततमेशवीयाब्दे प्रैसीडेन्सी कालेजेऽधीत्य सर्वोच्चोपाधिपरीक्षामुत्तीर्य शिक्षा जगति चञ्चत्स्फूर्जद्यशोऽधिगम्य पञ्चत्रिंशदधिकैकोनविंशतिशततमेशवीयवत्सरे पाश्चा-त्यविमर्शकधुरन्धराणां विद्यावरेण्यानामनुमोदनेन 'डॉक्टर' विरुदमुपलभ्य प्रसिद्धे मद्र-पुरी (मद्रास) विश्वविद्यालये संस्कृतविभागाध्यक्षासनं व्यभूषयत्। चिरात् तत्र संस्कृतं सेवमानो भूयिष्ठांस्तरुणान् स्नातकप्रस्नातकान् षष्ठ्यब्दवयः पर्यन्तं विदधाति स्म।

अतोऽष्टषष्ठ्यधिकैकोनविंशतिशततमेशवीयवर्षे षष्ठ्यब्दपूर्तिमहोत्सवे तमिमं विश्वविदितं राजमान्यं प्रधीप्रवर मभिनन्द्य प्राच्यप्रतीच्योभयविधशिक्षणसंस्थाः संस्कृतसमितयश्च प्रमोद पूरितान्तरङ्गा भवन्त्यः कस्मिंश्चिदनिर्वचनीय गरिम्णि अन्वगाहन्त ।

अस्ति वुधकुलतिलक श्री डॉक्टर राघवो महान् पण्डितो लेखन्याः । नूनं स येऽद्य सन्ति लेखकर्षभा स्तेष्वन्यतमः । यदा श्री राघवसाहित्यकारस्य ग्रन्थानां दिशि दृष्टि रस्मदीयाऽऽत्मानं विनिवेशयति तदा सा तत्कृतानां ग्रन्थानां रत्नाकरस्य पारं न प्राप्नुते । सा चकिततां गच्छन्ती भ्रमन्तीव नृत्यन्तीव नन्दन्तीव गायन्तीव उपवीणयन्तीव उपश्लोकयन्तीव च 'धन्येयं भारतवसुमती यत्रायं मतिमान् विद्वानवातरत्' इति उच्चै र्गृणन्ती अमन्दोल्लाससागरे निमज्जति ।

यावन्तो ग्रन्थास्तत्कृताः आंग्लभाषायां विद्यन्ते न तावन्तो वर्तन्ते संस्कृतभाषायाम् । वस्तुतः सर्वमपि तत्कार्य मांग्लभाषायामेव विभाति । अस्ति तदीयं कार्यं सहस्रशीर्षकं सहस्राक्षं सहस्रमुखं सहस्रकरं सहस्रपादञ्च परं तत्कृत्स्नमपि आंग्लभाषाप्रावरणं वस्ते । न केवलं ग्रन्थान्, सर्वाण्यपि पत्राणि, यानि तेषु तेष्वसरेषु, सम्मेलनेषु, समारोहेषु महाधिवेशनेषु, सभासु, उत्सवेषु, शिक्षासंस्थासु, वहुना किं सकलेष्वपि स्थानेषु पठितानि, तानि आंग्लभाषा निबद्धानि सन्ति । लघुतमं कार्य मारभ्य गुरुतमं कार्यं यावत् तदीयं कार्य मांग्लभाषायामेव संवर्तते । आधुनिके युगे आंग्लभाषायाः प्रमुखत्वात् तस्या एव भाषायाः देशे देशान्तरे च प्रचलनत्वाद व्यवहरणगतत्वाच्च तस्यामेव कार्यं—साहित्यं—समीचीनं मत मभवत् । तद् द्वारेणैव सर्वेऽपि इंगलेण्डादि राष्ट्राणां विद्वांसः संस्कृतवाङ्मयं ज्ञातु मर्हन्ति, तत्प्रति ते आकृष्टा भवितुं शक्यन्ते-इत्येतदादि सर्वं विमृश्यायं सुधीः संस्कृतभाषायां हितं कर्तुं मांग्लभाषायां प्रवृत्तोऽस्ति सर्वथैव । भाषते च आंग्लभाषायां तत्तदवसरेषु; संस्कृतभाषायां कदाप्येव क्वचिदेव ।

श्री डॉ० राघवकृता आंग्लभाषानिवद्धा वृहदाकारा ग्रन्था एव भूयांस इत्युपर्युक्त मेव; तेषां समेषा मप्युल्लेखोऽसम्भवत्वादिह केचन एव ग्रन्था नामग्राहमेव निर्दिश्यन्ते—

१ भोजास् श्रृङ्गार प्रकाशः
२ श्री मुत्तुस्वामिदीक्षितचरितम् (महाकाव्यम्-संस्कृतभाषायाम्)
३ दी न्यु केट्लाग्स्, केटालोगोरम, यूनीवर्सिटी ऑफ मद्रास

(ए कम्प्लीट रजिस्टर ऑफ संस्कृत एण्ड एलाइड वर्क्स एण्ड ऑथर्स विद लिस्ट्स ऑफ देयर मेनुस्क्रिप्ट्स् इन इण्डिया एण्ड एब्रॉड एण्ड एडीसन्स । पञ्चसु खण्डेषु)

४ दी इण्डियन हेरीटेजः एन एन्थॉलॉजी आफ संस्कृत लिट्रेचर इन ट्रान्सलेशन्स

५ दी नम्बर ऑफ रसाज

६ सम कन्सेप्ट्स ऑफ अलङ्कार शास्त्र

७ दी महाभारत ८ दी भागवत ९ प्रेयर्स, प्रेसेज एण्ड साम्स

१० संस्कृत एण्ड एलाइड इण्डोलॉजीकल स्टडीज इन यूरोप

११ यन्त्राज ऑर मेकेनीकल कोण्ट्रीवेन्सेज इन एन्सेण्ट इण्डिया

१२ दी सोसल प्ले इन संस्कृत

१३ लव इन दी पोयम्स एण्ड प्लेज ऑफ कालिदास

१४ मॉडर्न संस्कृत राइटिंग्स

१५ आर्यशतक व्याख्या

१६ दी प्रजेण्ट पोजीशन ऑफ वैदिक रेसीटेशन एण्ड शाखाज,

१७ कालिदास १८ रामायण त्रिवेणी

१९ दी कॉन्सेप्ट ऑफ कल्चर

२० रामायण इन ग्रेटर इण्डिया इत्येतदादिका बहवो ग्रन्थाः ।

विद्वद्वरेण यानि संस्कृत रूपकाणि रचितानि तेषु केषाञ्चन नामानि—

१ अनारकली, २ वाल्मीकि प्रतिभा,

३ विमुक्ति,: ४ प्रेक्षाणकत्रयी

तमिल भाषायाम् अपि अनेके तत्र द्वौ ग्रन्था विमौ—

१ ए कलेक्सन ऑर्ट शॉट स्टोरीज

२ भरत नाट्य

श्रीमत आदरणीयस्य डॉ० श्रीराघव महाभागस्य सेवायां बहूनि अभिनन्दनग्रन्थ पत्रादीनि ससम्मानं सर्मापितानि सन्ति । तत्र तदीयानि महान्ति कार्याणि संस्कृतसेवा निमित्तकानि परमश्रद्धयाभिवन्दितानि श्लाघितानि च सन्ति । गुणाश्च विपश्चित्सत्तम-स्य सादर मुपवीणिताः सन्ति । एकतमस्यामभिनन्दनपत्रिकायां तमधिकृत्य यद्गीतं ततः काश्चन पङ्क्तय उद्ध्रियन्ते—

.... शृङ्गारप्रकाशस्य, अलङ्कारशास्त्र सर्वस्वनिरूपणपूर्वकं विशिष्टं प्रकाशन मेक मेवालं भवतां वैदुष्यातिशयनिरूपणाय । यस्य कृते साहित्य-अकादमी-समित्या पारितोषिकप्रदानेन महीकृताः श्रीमन्तः । स्वयं विरचितानां सप्तशतानां विमर्शानां प्रकाशनञ्च विमर्शनसरणावनितरसाधारणं पाटवं व्यनक्ति । गवेषकाः सञ्जातसंशयो-

च्छेदाय भवदुक्तिमेवापेक्षन्ते। द्वीपान्तरस्थेषु ग्रन्थागारेषु स्थितानाममुद्रितसंस्कृत-ग्रन्थानां चरितस्य निरूपणं सर्वविमर्शकानां कार्यजातमतिशेते।

आङ्ग्लाणां विमर्शनपद्धति मनुसृत्य नानाविधप्रबन्धनिर्मातारोऽत्रभवन्तः, पद्मभूषणविरुदवितरणेन, पटेल-स्मारकप्रवचनकरणनियोजनेन, संस्कृतायोगावयवतया तथा विमर्शकपण्डितनियोजकसमित्यङ्गतया नियोजनेन च भारतराज्यशासकैः विशेषेण बहुमानपात्रतामापादिताः। विबुधसंलापादपि सारार्थानां ग्रहणे धारणे च महानुत्साह इयत्यपि वैदुष्ये विद्यार्थिताऽनुवर्तते इति विस्मय मादधाति। सकलहृदयाह्लादिनी सङ्गीतकला हि स्वसख्या साहित्या विहर्तुं भवतः समाश्रिता। सापि पाश्चात्य पौरस्त्यभेदभिन्ना विमर्शनपदवीं नीता विदुषां समवाये....... ।

इदानीं श्री डॉ० राघवकृताभ्यो बह्वीभ्यः संस्कृतरचनाभ्योऽत्र केवलं श्लोकत्रयं निधीयते—

(क) न कर्मणा न प्रजया धनेन, त्यागेन केऽप्यानशिरेऽमृतत्वम्।
इत्यागमार्थोद्बलनाय यत्र त्यागाभिधानेन विभु विभाति ॥
(श्री मुत्तुस्वामि दीक्षित चरित महाकाव्यात्)

(ख) आरण्यभूमिषु यथेच्छ विहारशाली, वेदान्तसिंह उरुविक्रमलङ्घिताशः।
गर्जत्विति स्वयमगर्जदभी नृसिंहो, यो ज्ञान मौपनिषदं प्रथयन् पृथिव्याम्॥

(ग) विघ्नानिवोर्मिविततीस्तरसा तरन्
स्व मध्यास्य धैर्यमिव पर्वतखण्डमब्धौ।
कन्यापदे धृतसमाधि रवाप यश्च,
दृष्टिं पुनर्भवकृते जगदात्मशक्तेः ॥

प्रचारकः संस्कृतवाङ्मयस्थस्य ज्ञानस्य, प्रचारको भारतीयसंस्कृतिसम्पोषित-समुदाचारस्य, उपासको विद्यायाः, शेवधिः शीलस्य, निधिः रार्जवस्य, प्रियंवदोऽपि सत्यप्रियः, अतिथि-साध्वाभ्यागमाभिलाषोऽपि परप्रार्थनानभिज्ञः, कल्पतरुरिव सतत-दानानुरागहृदयः, प्रभात काल इव प्रवुद्धसर्वलोकः, पुरुहूतप्रतिमेव संस्कृतसमारोहयज्ञ-शतपावकधूमपूतो राघव इवाज्ञान-दशाननसंहारकः शङ्कर इव पीतान्तेवासिजनाज्ञान-गरलः श्री वे. राघवो नूनं भारतस्यैव न सकलशिक्षाजगतो गौरवं महत्।

शास्त्राणां परिशीलनेस्थिरमनाः साहित्यकारो महान्,
विद्वान् राघववाग्मिसद्गुणनिधिः प्रज्ञावतामग्रणीः।
अस्मद्भारतगौरवं सुरुचिरः शीलश्रियासेवितः
विद्वत्संसृतिभूषणं सुरगिरासेवापरो नम्यते ॥

# पं० रामस्वरूपशास्त्री शब्दवाक्य-प्रमाणपारावारीणः

ये संस्कृतपण्डिता वेदव्याकरणन्यायदर्शनादिशास्त्राणि अधीत्याभ्यस्य कण्ठस्थीकृत्य अन्वह मावृत्तीकृत्य च तानि सर्वविधान्यापि दारिद्र्यजानि कष्टानि धैर्यपूर्वकं सहमाना रक्षन्ति, भगवतोऽनुक्रोशेण ऋषिमुनिमहात्मनां तपस्यायाः प्रभावेण ते साम्प्रतमपि अङ्गुलिपरिच्छेद्य संख्यायामितस्तत आसाद्यन्ते । एतद्विधेष्वेव शास्त्र संरक्षकेषु पण्डितेषु आचार्यः श्रीरामस्वरूपः शास्त्री अवर्तताऽन्यतमः ।

शब्दवाक्यप्रमाणपारावारीणः पं० रामस्वरूपशास्त्री उत्तरप्रदेशे बिजनौर मण्डले, 'सिवाहारा' पुटभेदने भूतवेदग्रहसोमवैक्रमसम्वत्सरे, आश्विनमासे, शुक्लपक्षे, पूर्णिमायां स्वधर्मकर्मपरे ब्राह्मणान्ववाये पण्डित न्यादरमल शर्मणः सूनुर्भू त्वा समुदपद्यत उपारमत च सः १७।१।१९७७ तमेशवीय दिनाङ्के । द्विजोचितसंस्कार संस्कृतोऽसौ बाल्य एव संस्कृत् मध्येतु ममृतसर मगमत् । तत्र स विद्वद्वराद् वैयाकरणवन्दनीयात् पण्डित हीरालाल शास्त्रिणो व्याकरण मध्यगीष्ट । गच्छतानेहसा विद्यानुरागी स व्याकरणशास्त्रस्य, यदीयमहिमा गीयतेऽनेन प्रकारेण—'शब्दशास्त्रमनधीत्य यः पुमान् वक्तुमिच्छति वचः सभान्तरे । वन्धुमिच्छति वने मदोत्कटं हस्तिनं कमलनालतन्तुना', सिद्धान्तग्रन्थेषु प्रशंसनीयां सफलतासनाथां कुशलता मध्यगच्छत् । व्याकरणशास्त्रे पटीयस्कता मासाद्य न्यायशास्त्रं पठितु हरिद्वार मयासीत् । तत्र स न्यायाचार्यात् पण्डित जगद्गौरवभूताद् रामकृष्णगुरो स्तन्न्यायदर्शनमधीते स्म यदधिकृत्येदं गृणन्ति विपश्चिदुत्तमाः—'प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता' "न्यायशास्त्रं व्याकरणशास्त्रञ्च संस्कृतवाङ्मये प्रौढं ज्ञानं जनयत स्तयोः पाण्डित्यमन्तरेण न कोऽपि विद्वान् परमार्थतो विद्वान् मतोभवति । न्यायदर्शनन्तु तद्दर्शनं यदीयाः परिष्कारा आयसचणका एव मता भवन्ति, तस्मिन् दर्शने यस्य यावानेवाधिकारः स्यात् अन्येषुशास्त्रेषु तस्य प्रवेशस्तावत्यैवजु तयाऽबाधगत्या च भवितु शक्यः । अस्ति न्यायविद्या परमतीव्र बुद्धिगम्या, तदध्ययनं विदधाति चाध्येतुर्धियं तीक्ष्णतरां तर्कनदीष्णां च । आदरणीयः शास्त्रिवरः कठोरतमं श्रमं विधाय प्रकृष्टां विदग्धतामधिगम्य विद्वद्धौरेयाणां जगति भृशमचकात् । विद्वल्ललाम शास्त्रिप्रवरो हरिद्वारतः काशीमगात् तत्र सः महामहोपाध्याय शिवकुमारशास्त्रिणोऽन्यानि च दर्शनानि अपाठीत् । व्याकरणशास्त्रनिहितज्वलदनुरागत्वात् मनीषी पुनः वैयाकरणके-

सरिणः श्रीदामोदरशास्त्रिणो नव्यव्याकरणशास्त्राध्ययने आत्मानं प्रावीवृतत् । अगाध पाण्डित्ये सर्वतन्त्रस्वतन्त्रं स्वत्वं प्राप्य सः प्रत्नपरिपाटी मनुसरन् शास्त्रार्थनिमित्तेन देशस्य चतसृणामपि दिशां पण्डितप्रकाण्डान् जेतुं प्रातिष्ठत । येषु पुरेषु तस्य शास्त्रार्थः प्रवृत्तस्तेषु प्रतापगढ़े, गवालियरे, टीकमगढे, रीवाँयां, बीकानेरे, कालाकांकरे च सञ्जाताः शास्त्रार्थाः उल्लेखनीयेषु शास्त्रार्थेषु, सन्त्युल्लेखनीयतराः । प्राप्तवैदुष्य विख्यातानपि विचक्षणान् तस्य चातुरी, तस्य बुद्धिविदग्धता, तस्य शास्त्राधिकारिता, तस्य तर्कतिग्मता, तस्य वाग्मिता चातितरां विस्माययन्तिस्म । विद्वांसस्तस्य वैदुष्य-गम्भीरं भूयोभूयः श्लाघमानास्तं सभाजयन्तिस्म । सर्वत्र स्वकीयं शास्त्रसागरतलाव-गाहिपाण्डित्यविषयकं यशो वितन्वानः सोऽलीगढं प्रापद्यत ।

पं० रामस्वरूपशास्त्रिणः पाण्डित्यम् अलीगढनगरस्य शिक्षाविदां समाजमा-वर्जयत् । विद्यानुरागिणां निवहः शिक्षातरीसञ्चालकवर्गश्च शास्त्रिमहाभागं नगरस्य सुविदिते धर्म समाज संस्कृत-महाविद्यालये प्रधानाचार्यपदे आसीनं विधाय शिक्षा संसृतिं स्वनगर मात्मानञ्च गौरववन्तं कृतवन्तौ । नगरे नगरान्तरे च तदध्यापन-दक्षतायाः ख्याति र्व्याप्ता भवितुमारभत । दूरदूरतरस्थस्थानेभ्यो जिज्ञासवश्छात्राः शास्त्राण्यध्येतुं तत्सेवायामुपातिष्ठन् । ते तदध्यापनविधिना तदीयेन महनीयेन वैचक्षण्येन च असीमां परितृप्तिं गच्छन्तोनैजं भाग्यं पुनः पुनः प्राशंसन् । दिग्दिगन्तरेभ्य स्तत् सविधे स्वकीया शास्त्रीयां ग्रन्थि मुन्मोचयितु मन्याश्च व्याकरणस्य फक्किकाः अवगन्तुं न्यायस्य च विषमाः पंक्तीः स्पष्टीकर्तुं व्युत्पत्तिमन्तो विद्यार्थिनः प्रध्यश्चागच्छन्तो व्यालोक्यन्त । विद्वत्पञ्चाननस्याध्यापनगर्जनेन नगरगगनमगुञ्जत् । द्रागेव नगरस्य वातावरणं संस्कृतमयं सञ्जातम् । विद्यालयोदिवमानुदिवसमुन्नतिं कर्तुं मारभत । विद्यालयस्याश्चर्यकरीं मनः प्रमोदकरीञ्च प्रगतिं वीक्ष्य वहवोऽभिभावकाः हर्षं विन्दमानाः स्वस्ववत्सान् संस्कृत मध्येतु मनूनुदन् । विद्यालये छात्राणां संख्यातितरां वृद्धिमगमत् । विद्यालये कदापि व्याकरणशास्त्र विषयकाणि, कदापि न्यायशास्त्र सम्बन्धीनि, कदापि वेदान्त सांख्यादिदर्शनपराणि, कदापि च साहित्यशास्त्र निष्ठानि भाषणानि तदध्यापनानेहसि समजायन्त । एतावदेब न, तदध्यापनसमये शास्त्रार्थपद्धतौ च विद्यार्थिनः कुशला अक्रियन्त । अल्पेनैव कालेन आचार्यप्रवरो बहून् यूनः शास्त्रिणो बहूंश्चाचार्यांश्चकार । तद्विद्वत्तया तत्रत्योविश्वविद्यालयोऽपि आकृष्टोऽभवत् । सः स्वकीयसंस्कृत विभागस्याध्यक्षपद मलङ्कर्तुं तं सादर मामन्त्रितवान् ।

विंशत्यधिकैकोनविंशतिशततमेशवीयाब्दे पं० रामस्वरूपशास्त्री धर्मसमाज संस्कृतमहाविद्यालयं हित्वा अलीगढ मुस्लिम विश्वविद्यालये, संस्कृतविभागस्याध्यक्ष-पदं व्यभूषयत् । अत्रागम्य सः संस्कृतविभागं सर्वाङ्गीणतया सम्पन्न मकार्षीत् । विभागस्य पुस्तकालये पुस्तकानां संख्या तोषावहां स्थितिमगच्छत् । येषां तरुणानां

मनः संस्कृताध्ययने रुचिं न न्यदधात् तानपि यूनः प्रो० रामस्वरूपशास्त्रिणो हृदयहारिणी पाठनपद्धतिः पाण्डित्यगरिमा चावर्जयामासतुः । शास्त्रिमहाभागस्य वैदुष्यजनिता कीर्तिर्देशस्यान्येष्वपि विश्वविद्यालयेषु व्याप्ताभवत् । किं बहुना, उच्चतमायाः शिक्षाया जगती शास्त्रिसुधीन्द्रं प्राप्य नितरामप्रीयत । विश्वविद्यालयीय संस्कृतविभागे प्रायेण विश्वविद्यालयान्तरस्य विद्वांसो यदा तदा आगता अदृश्यन्त । संस्कृतविभागः परामेव प्रसिद्धिमगमत् । विश्वविद्यालयः शास्त्रिमहाभागस्य चतुर्मुखीं प्रतिभां प्रेक्ष्य संस्कृत-विभागं नवेन प्रतिष्ठापितेन हिन्दीविभागेनापिचान्वितं व्यदधात् । स हिन्दीविभागस्यो-प्यध्यक्षतां समीचीनतया प्रशंसनीयतया च निरवीहत् । द्वात्रिंशद्वर्षाणि तत्राध्याप्य विश्रामाय ततोऽवकाशं पर्यग्रहीत् ।

पण्डित रामस्वरूपशास्त्री शास्त्रव्यसनित्वात् पठितुमागतान् जनान् न कदापि निवारयति स्म । सः सस्नेहं तानध्यापयति स्म । एतस्यामपि स्थविरावस्थायां यदा सः कस्मिन्नपिशास्त्रीये विषये संभाषितुं प्रार्थ्यते स्म तदा तद्विषये तदीयं संभाषणं विराममेव न याति स्म । यथा मेघादासार वृष्टि र्धारासहस्रवती भूत्वानारतमनेकघटी रभिव्याप्य भवति तथैव तदाननात् तद्विषयमधिकृत्य शब्दसहस्राणि उपयुञ्जानानां विचाराणां वर्षा जायते स्म । स तद्विषयस्य सर्वेष्वप्यङ्गेषूपाङ्गेषु साधु प्रकाश मुद्गिरन् विदुषां मनांसि रञ्जयति स्म । आश्चर्यं महत्, वार्धक्येऽपि तस्य स्मरणशक्ति र्नितरां निशिता नानाभावोद्भाविनी भवन्ती विभाति स्म । अस्त्येतादृश मेकमपि शास्त्रं, मन्ये, न यत् तस्यान्तःकरणे समुपस्थितमजायत । यदाहिकोऽपि तत् सविधे शास्त्र चर्चां प्रवर्तयति स्म तदा तस्य रोमरोम भृशं हृष्यति स्म, प्रीयते स्म च । सः परामेव मुदं विन्दन् निविडे प्रमोदे गाहमानः प्रवर्तितायां शास्त्रचर्चायां सर्वमपि विस्मृत्यान्तरोन्मुखीभूयात्मानं तत्र न्यमज्जयत् । चेच्छारीरं कष्टं वर्तते किमपि तदा, तदप्युपेक्ष्य विस्मृत्य च तस्यामलीयत येषुवर्षेषु सः संस्कृतपरिषदोऽध्यक्षासनं व्यभूषयत् तदापितदीयैषाविशिष्टता मुख्यत्वेन दृष्टाभवत् ।

आचार्यो रामस्वरूप शास्त्री यथा महान् वाग्मी तथा स महान् लेखकोऽपि अवर्तत । स बहून् ग्रन्थान् विरचय्य सरस्वत्याः वरिवस्यां विदधत् तस्याः कोश-मवर्धयत् । तदीयाः सन्ति कृतय इमाः—

१. स्वप्न विज्ञानम्
२. त्रिपुर दाहः
३. वैशेषिकदर्शन भाष्यम्
४. योगदर्शन सारः कथामूलकः
५. वैदिक काव्यत्वम् एवं लौकिक काव्यकलाया उद्भवः
६. इस्लाम एवं गीता
७. करुणरसे आनन्दानुभूतिः
८. शब्द दर्शनम्
९. कादम्वरी कथामुख व्याख्या
१०। किरातार्जुनीयकाव्ये चतुर्दशसर्गस्य व्याख्या

एतेषां ग्रन्थानां विलोकनेन तस्य भाषायां सुदृढोऽधिकारस्तत्तच्छास्त्रीय विषयाचार्यत्वं, भावाभिव्यञ्जनचातुर्यं, वस्तूपस्थापनवैशारद्यं, लेखनकला कोविदत्वञ्च ज्ञाततां यान्ति । यथा सः संस्कृतेग्रन्थान् रचयति स्म तथैव राष्ट्रभाषायां हिन्द्यामपि । साहित्यिकेषु ग्रन्थेषु तु साहित्यिकी सुषमाशोभत एव परं दार्शनिकेषु व्याकरणपरेषु च ग्रन्थेषु सा राजमाना प्राप्यते स्म । वस्तुतस्तद्रचितासु रचनासु—

अगाधसौन्दर्य मसीम मार्दव
मनन्तशान्तिप्रदभद्रदर्शनम्
सचेतसांवृन्द मवाप्य मानसे-
धियाति नूनं रसमाधुरीश्रियम् ॥

निश्चप्रचतया तस्य पाण्डित्यं स्पृहणीयं वर्तते, तस्य वाग्वैचक्षण्यं ग्राह्यं विद्यते, तस्य लेखन–ललितत्व मुपासनीय मस्ति, तस्य शास्त्रव्याख्यापद्धति र्वन्दनीयास्ति, तस्य विद्याव्यसनं पूजनीयं वर्तते, तस्य शास्त्रेषुकृतः श्रमो नमस्करणीयो विद्यते ।

अत्र तद्रचिताः काश्चन गद्यपङ्क्तः स्वप्नविज्ञानान्निधीयन्ते—

"अथरवल्वपरोक्षं हि विदुषां शेमुषीजुषां विदितवेदितव्यानां समुचितसुकृताना-न्निखिलवस्तुतत्त्वालोचिनां सदसद्विवेकिनां यद्विधातुर्विविधवैदग्धीं सुविधिरचनारचिते सप्रपञ्चेऽस्मिन् प्रपञ्चे न ह्यकारणकं किञ्चिदप्युद्भवितुं शक्नोतीति हेतो र्निखिल मपि जगत् सकारणकं विद्यते, तदन्तर्गतं वस्तु जातं जडं सचेतनं चेत्युभयप्रकारं साकारन्निराकारं सप्रसारन्निष्प्रसारं स्तोकप्रचारमस्तोकप्रचारञ्च सन्निमित्तकारण जन्यमवश्य मेवाङ्गीकर्तव्यं नियमत स्तदपेक्षितत्वात् ।"

'गद्यं कवीनां निकषं वदन्ति' इत्येतां सूक्तिमनुस्मृत्य गद्यस्यैव काश्चन पङ्क्तय इह निहिताः सन्ति । गद्ये साहित्यिकी श्रीः दार्शनिकलेखनविभा च द्वेऽपि युगपच्छोभेते स्म तत्र ।

पं० रामस्वरूपशास्त्री प्राचीनकालस्य संस्कृत पण्डितान् पूर्णतयान्वहरत् । सः स्वभावे, आचारे, विचारे, वेशे, वाण्याम्, सर्वेष्वपि बाह्येषु प्रकारेषु प्राच्यप्रत्न इवादीप्यत । यथा स बाह्यतः पुरातनान् पण्डितान् समवदत् तथैव सः आभ्यन्तरे च विधानेताननुकरोति स्म । यथास्मदीया भारतीयाः प्राचीनाः पण्डिता गम्भीरं वैदुष्यं, प्रकृष्टं ज्ञानं, तीक्ष्णां धिषणां, महीयसीं स्मरणशक्ति, सरलं, स्वान्तं, दम्भरहितं जीवनं व्यवहारञ्च निदधते स्म तथैव सोऽपि तत्तद् निर्दिष्टवैशिष्टचराशि पर्यपुष्णात् । साम्प्रतं प्राचीन पण्डितानुहारिणः पण्डिता न्यूना एव दृश्यन्ते, तेषां संख्यानुदिनं क्षीणतां गच्छन्ती पर्यवलोक्यते । चेदेतादृशानां पण्डिताना मभावोऽभविष्यत् तदा

संस्कृतपाण्डित्यं, शास्त्रपाटवं, सर्वसंशयोच्छेदि ज्ञानञ्चावश्यमेव लोपमगमिष्यन् । इदानीं सः प्रयत्नोऽवश्यं सत्वरमेव करणीयोऽस्ति येनास्मद् देशस्येदं चिरन्तनात्कालादागच्छत् संस्कृत वाङ्मयपरकमुज्ज्वलतमं वैदुष्यं, यत् पुरातनानां जीवनमासीत्, यत् तेषां संस्कृतविदुषां सर्वस्वमासीत्, यत् तेषां धर्मार्थ काममोक्षत्वेन गृह्यमाण मासीत्, यत् तेषां विनोदाय अकल्पत, सुरक्षितं सदिमं देशं भारत मधितिष्ठेत् ।

मीमांसापरिशीलने पटुमतिः सांख्योदधि मंञ्जुलो
न्यायानर्गलवाक्प्रपञ्च चतुरो वेदान्तसिद्धःन्तधीः
काव्यव्याकृति वृत्तकोष कुशलोऽलंकार सर्वस्ववित्
श्रीशास्त्री वुधवन्दितोऽभवदसौ रामस्वरूपोऽभिधः ॥



# पं. यादवनाथ-शुक्लः

इह तुरगशतैः प्रयान्तु मूढा धनरहितास्तु बुधाः प्रयान्तु पद्भ्याम् ।
गिरिशिखरगतापि काकपङ्क्तिः पुलिनगतै र्न समत्वमेति हंसैः ।।

सन्त्यद्यास्मद्देशे शतशो विश्वविद्यालयाः, सहस्रशश्च महाविद्यालयाः, लक्षशश्च विद्यालया स्तेषु तेषु चाध्यापयतां विपश्चितामपि संख्या द्राघीयसी पर मिह विद्यमानान् विश्वविद्यालयादीनधिकृत्य न किमपि निगदनीयमस्ति न च तत्र तत्र पाठयतः शिक्षकानेव शरव्यीकृत्य किमपि वक्तव्यं वर्तते, अत्र तु तस्य विप्रवंशावतंसस्य तपोनिधानस्य विद्यातीर्थस्योपश्लोकनमभिमतमस्ति योऽस्मदीयपुरातनभारतस्यर्षि रिव विद्यैकधनविद्वानिव भवन् स्वकीयया लोकोत्तरया सत्तयाद्यतनानां पण्डितानां, पौराणिकानां, कर्मकाण्डकुशलानां, शिक्षकाणां, भगवद्भक्तानाञ्च पुरः समुपासनीयं निदर्शनं न्यदधात् । सः प्रत्यहं सुकृतामृतवर्षिणी स्त्रितापनिवारणकुशलव्रतग्राहिणीः सर्वजनमनोहारिणीः कल्मषनाशिनीः कथाः कथयन्, श्रीवल्लभसम्प्रदायाभिमतया वरिवस्यया श्री गोवर्धननाथमभ्यर्चन्, 'केन प्रकारेणानिष्टवारणं स्यात्, कथञ्च श्रेयः प्रेयश्चोपनतं भवेदि' त्येतदादिकं जिज्ञासमानान् जनान् मङ्गलोपायान् प्रदर्शयन्, नानाविधेषु यज्ञेषु समाजं प्रवर्तयन्, भारतीयां संस्कृतिमाचरणञ्च भारतीयं प्रबोधयन्, तेन तेन च संस्कारेण जनान् संस्कुर्वन्, देवप्रतिष्ठा-सर्वजनीनसंस्था संस्थापनान्यन्यान्यशुभकर्माणि कारयन्, श्रुतिशास्त्राणि च पाठयन् स्वशुभसद्मनि प्रेक्षितोऽभवदतस्तदीयं वेश्म नूनमाश्रमपदमिव समलक्ष्यत । तं विलोक्य मनः सप्रसभं श्रद्धानतमभवद्; वस्तुतः—

सन्तोषामृततृप्तविज्ञविनयी विद्यानवद्यास्पदं
शास्त्रक्षालितदोषपङ्कनिविडो ज्ञानप्रकाशश्रितः
शान्तस्वान्तपवित्रकर्मनिरतः सत्यक्षमाशस्त्रभृत्
श्रद्धां संलभते न कस्य सुजनो वाणीप्रियः संयमी

निदधानोऽपि स गम्भीरवैदग्ध्यं प्रकृत्या विनोदी चासीत् । सन्नप्याधारः कूपोदकानां सः सन्ततं न्यायेऽप्रीयत । बिभ्राणोऽपि प्रकाण्डपाण्डित्यं सः परमप्रह्वोऽभवत् । सन्नपि शेवधि रसावार्जवस्य कुटिलानामभूद् दुरासदः । दर्शकः सन्मार्गाणाम्, आदर्शः सज्जनतायाः, क्षेत्रं मार्दवस्य, अगम्यो मत्सरस्य, आवासस्थल मुपशमस्य सः पण्डितमण्डलस्य जीवन मासीत् । यस्मिन्नगरे स वसतिं व्यदधात् तन्नगर मात्मानं धन्यममंस्त, सोऽगमद् यां परिषदं सभां वा सा गौरववती भवति स्म । यत्र यत्र तस्य कथाः अभू-

वंस्तत्तत्स्थलं तीर्थमजायत । यस्मिन् निकेतने स तांस्तान् संस्कारानचीकरत् तन्निकेतनं पावनमात्मानं मत्वा भृशं प्रासीदत् । यस्याः सरितस्तटे, यस्य मन्दिरस्यालिन्द-भागे, यस्यसंस्थानस्याजिरप्रदेशे, यस्मिंश्च सः सौधे यज्ञमकारयत् सा सरित्. तन्मन्दिरं, तत्संस्थानं, स च सौधः प्रकर्षेण प्रादीप्यन्त । नात्र संशयः––

संसर्गेण सतां सत्यं भक्तानां जगतीपतेः ।
प्रसादं यान्ति सर्वाणि प्राप्नुवन्ति च गौरवम् ।।

यस्य विपश्चित्सत्तमस्य चरित मुद्गातुमिहौपक्रमणं क्रतमस्ति सोऽस्ति पुराण-निगमागमविदां वरेण्यः पण्डितो यादवनाथ शुक्लः ।

पण्डित यादवनाथ शुक्लः प्राचीनपरिपाटीपरिपुष्टेषु पण्डितेष्वन्यतमो भवंश्चिरन्तनादनेहसः प्रवहमानां पठन-पाठनधारामेव न पर्य्यपुष्णादपितु सः पुरातनानां पण्डितानां प्रकृतिं तदीयाचारविचाराशन-वसनादिसमृद्धिमपि समीचीनतया पर्यपूपुषदवीवृधच्च । प्राञ्चः पण्डिता यथा गम्भीरतरप्रकृष्टतरवैदुष्यमेकस्मिन्नेव न बहुषु शास्त्रेषु निदधते स्म तथैव सोऽपि नानाशास्त्रापारदृश्वाभवत् । प्राचीनाः पण्डिता यद्यपि नेदानीन्तनाः पण्डिता इव लब्धानेकानेकप्रमाणपत्रोपाधिपत्रा अवाप्यन्त; तेषां पुरानन पण्डितानामध्ययनस्य लक्ष्यं परीक्षोत्तीर्णत्वं किं वोपाधिपत्राधिगमनं नाभवदतस्ते तावन्न परितोषमगु र्यावत् तेषु शास्त्रेषु तासु कलासु च तलगामि मर्म्मप्रवेशि नागाधमुत्तरलद् वैचक्षण्यमलप्सत । ते गुरोश्चरणयोः सकाशे निषीदन्तो मनोयोगपुरस्सरं कठोरतरेण परिश्रमेणाहर्निशमध्येतव्यानां वेदान्तन्यायसांख्ययोगमीमांसायुर्वेदार्थशास्त्रनीतिशास्त्र साहित्यसंगीतादि विद्यानामध्ययनञ्चक्रुः । गुरोरधीतं शास्त्रं पुनः पुनः स्वसुहृद्भिः सार्धं विचारयाम्बभूवुः । ते सर्वामपि अधीतां विद्यामधीतामेव विधाय न मुमुचुस्तास्ते प्रीत्यातितरां बोधमाचरणं प्रचारणञ्चाकार्षुः । एतद्धेतोस्तेषां तच्छास्त्रज्ञानं समृद्धं समुन्नतं प्रौढं समुत्कृष्टञ्च भवदचकात् । शलाकापरीक्षाशास्त्रार्थादिपद्धतयः पुरा भृशं व्यवाह्रियन्त तस्मात् तेऽधीतानि शास्त्राणि प्रत्यहं नियमपूर्वकमावर्तयामासुः । आवृत्तेः स्वाध्यायाच्च सदैवाधीता विषयाः प्रत्यग्रा एव भवन्त स्तेषामधिकण्ठमवातिष्ठन्त । अस्मदीयस्य श्रद्धेयस्य शुक्लमहाभागस्य शास्त्राध्ययनमुपर्यु क्तेनैव प्रकारेण समपद्यत । तस्मात् कारणात् तदीयं वैदुष्यमालोकितदिग्दिगन्तं भवद् व्यभासत । निश्चप्रचतया तदीया वन्दनीया विद्वत्ता तेषां भूयसां विदुषां वैदुषीमत्यशयिष्ट ये सन्त्यासादितप्रभूतप्रमाणपत्राः किञ्च तत्तद्विश्वविद्यालयीयोपाधिविभूषिताः । सन्नपि स व्याकरणे, पुराणे, ज्योतिषि, कर्मकाण्डे, मन्त्र-तन्त्र-यन्त्रादिसम्बन्धिनीषु विद्यासु निष्णातो विद्याविनोदिशीलत्वात् तरुणहृदयत्वाच्च द्राधीयो वयो भजमानोऽपि कलिकातां प्रयायाधुनिकविध्यनुसारं गृह्यमाणायां तीर्थपरीक्षायामन्वेतिस्म; अध्यगमच्च

तत्र श्लाघ्यं साफल्यम् । तदेवं सः प्राचीनपद्धतिगं नवीनपद्धतिगञ्च वैशारद्यं बिभ्राणः संस्कृतपण्डितानां समाजे व्यद्योतत । पुराणज्योतिःकर्मकाण्ड-मन्त्र-यन्त्रादिविदः प्रायेण प्राप्यन्ते विरसमनस्काः परं सत्वासीन्न तादृक् । स निसर्गतो भावुकोऽभवदतः सः साहित्येऽपि प्रगल्भामभिरुचिं दधानोऽभूदवलोकितः । सततं सः पुराणार्णवमवगाहमानः साहित्य श्रियं सेवमानश्छात्रेभ्यो विद्याधनं ददमानश्च स्वकीय समयमयापयत् तस्मा- द्धेतोः सः संस्कृतं सन्तत मातृभाषामिव प्रायुनक् । तस्य संस्कृतसम्भाषणं संस्कृतसंसारे तद्यशः सुतरां व्यातनोत् । मुक्तकण्ठतया विद्वत्तल्लजा अपि तत्संस्कृताभिभाषणमश्ला- घन्त । वस्तुतः स आसीत् तस्यां भारत्यां वाग्मी । तत्र प्रत्नत्वमप्रत्नत्वञ्चाद्भुतमेव सौहृदं व्यवहरददीप्यत ।

पण्डित यादवनाथ शुक्लः कुलपतिरिव चावेक्षितोऽभवत् । शतशो विद्यार्थि- नोऽध्येतुं तदीयं सदनमध्यवात्सुः । अन्न-वसनपुस्तकाद्यपेक्षितानि वस्तून्यपि प्रददद् विद्यार्थिभ्यः; सः सस्नेहमपीपठत् । तद्विद्याधनदानात्मकं पावनं कर्म यावत् सोऽजीव- दन्वतिष्ठत् समुदं सोत्साहञ्च । न तत्र सः कदाप्यालस्यमन्वभूत् । तदीया सा स्वार्थ रहिता निःशुल्कासेवा पुरातनभारतस्य शिक्षादर्शं निहितवती । तदीया सा विद्यादाना- नुरागिता समाजे स्वकीयं स्तुत्यं प्रभावं व्यकिरत् । शिक्षकाः शिक्षाविदश्च तत्पुरतो न- तनिटिला अजायन्त । उपचिकीर्षा यस्मिन् बलीयसी भूत्वाव्यराजत स तथा प्रायतत यथा तदाश्रिता विद्यार्थिनो भृति मपि प्राप्नुयुः । न तस्य कश्चिदपि च्छात्रः प्रत्यूषे सुप्त्यां संलब्धोऽभवत् । सः प्रतिप्रभातमध्ययनाय तान् सवात्सल्यमशशासत् । इदञ्चा- भिदधदसावश्रूयत—

नाधीतं पुत्र यत्नेन मृगनेत्रासु रात्रिषु ।
तेन त्वं विदुषां मध्ये पङ्के गौरिव सीदसि ॥

सः श्रुतिं सस्वर मध्यजीगपदतस्तस्य मङ्गलमयं धाम वेदमन्त्रध्वनिना सर्वा अपि ककुभो नभश्चापीपवत् । तस्य साध्यापनप्रियता, सरलो मृदुल ऋजु र्निर्मलश्च स्वभावो, यः शिशुष्वेव प्राप्यते, सर्वानपि नगरस्थान् भृशमावर्जयत् । स वस्तुत आसीद नुकरणीयचरितोऽध्यापयिता ।

भगवतः श्रीगोवर्द्धननाथस्य सेवा मनुतिष्ठन् कदा न भक्त्युद्रेकादश्रुनयनः सः सञ्जातः । स नियमपूर्वकमनवच्छिन्नतया पञ्चापि ब्रह्मयज्ञादीन् व्यदधाद् गायत्रीजपं विधाय प्रीत्या श्रीमद्भागवतं भगवद्गीताञ्चाशिश्रवत् ।

स धृतकुटुम्बभारोऽपि न कदाप्येकामपि वराटिकामनीत्या अन्यायेन वा पर्य गृह्णात् । न तस्मिन् मनागपि लोभोऽवर्तत न चा परितोष एव । यदपि लब्धमभूत्

तत्र समतुष्यत् । वस्तुतो ये भगवन्तमनन्यभावेन भजन्ति तेषां योगक्षेमं भगवान् स्वय मेव वहति । तत्कृत भगवदालम्बनस्यैव मुख्यतः सत्फल मिदं दृष्टमभवद् यत् कुटुम्बस्य गुरुतरं भारं स वोढुं प्राभवत् । अद्य गृहीतोच्चतमशिक्षांस्तस्यात्मजान् दुहितृश्चावाप्त-सद्गार्हस्थ्याः सम्प्रेक्ष्य को न प्रीयते ।

श्रीमान्यः शुक्लः सप्तत्रिंशदधिकैकोनविंशतिशततमे वैक्रमे सम्वत्सरे, मार्गशीर्ष-मासे शुक्लपक्षे चतुर्थ्यां तिथौ रविवासरे अलीगढनगरे समुदपद्यत । ग्रहाकाशाकाशा-श्विनीकुमाराब्दे विक्रमीये, भाद्रमासे सिते पक्षे सप्तम्यां तिथौ स दिवं गतोऽभवत् । आसीदसौ मूलतो मालवाप्रदेशान्तर्गतोज्जयिनीनिवासी । सहस्रौदीच्यविप्रवंशं सः स्वजनुषोदनीनमत् । औदीच्यविप्रान्ववायोऽयं स यमधिकृत्याभिरव्येयम्—

औदीच्याः ऋषयः सर्वे श्रोत्रिया वेद पारगाः ।
इति लब्धप्रतिष्ठा ये वयं तेषां कुलोद्भवाः ॥

पं० यादवनाथशुक्लस्य पूर्वजा जगद्गीतवैदुष्या अभूवन्—

शुक्लस्य प्रपितामहः सुविदितोऽभून्मन्त्रशास्त्रप्रधीः
निष्णातः श्रुतिषु द्विजर्षभमखानन्दाभिधः पण्डितः
शास्त्रिश्रेष्ठपितामहोऽपि च जगन्नाथो भिषग् विश्रुतो
मीमांसानिपुणो बभूव च महान् दैवज्ञवन्द्यः क्षितौ ।
विश्वाराध्यगुणाकरः शुचिमति वैंकुण्ठनाथः पिता
पाण्डित्यप्रथितो मनींषितिलकं तीर्थञ्च विद्यावताम्
आसीदाप्तसरस्वतीवर इलाया गौरवं मङ्गलं
भूपानामभिवन्दितः सदसि सोऽभून्माधवे भक्तिमान् ॥

पं० यादवनाथ शुक्लो विद्वत्प्रियो विद्वानासीत् । प्रदेशस्य विख्यातः कवि सम्राट् यज्ञदत्तः पुरोहितस्तमेकदेत्थं प्राशंसत्—

लसद्दुकूलं परिलम्बचोलां दण्डद्वयाभं तिलकं दधानम् ।
अमुं महोष्णीषधरं सयष्टिं नमाम्यहं यादवनाथशुक्लम् ॥
क्षान्त्या क्ष्मां वारिगिरा स्वगत्या सदागतिं तैलक तेजसाग्निम् ।
विजित्य कीर्त्या गगनं नितान्तं जयत्यसौ यादवनाथ शुक्लः ॥
सत्कर्म प्रज्ञाविभवे गणेशः क्रतुक्रियासंकलने व्रजेशः ।
प्रजासु सम्पद्भरणे रमेशः, सदैव दारानुरतो महेशः ॥
श्रीमन्मखानन्द इह प्रतापात् श्रीमज्जगन्नाथ उदारभावात् ।
वैंकुण्ठनाथोऽपि सुकोविदत्वात् त्रयोवतारैकतया लसन्ति ॥

जनस्य कस्यापि नतिक्रियान्ते भ्रातश्चिरं जीव सुखी भवेति ।
वदन्नसौ सन्नमितांगयष्टिः सुकुब्जभावं सरलोऽपि धत्ते ॥
प्रत्यक्षभिन्ने मनसैकदेहे दाम्पत्यभावानुभवानुरक्तः ।
सदैव देहार्धजुषोरलज्जां गौरीशयोः प्रीतिमधः करोति ॥
श्रीमज्जगन्नाथ धृतं निचोलं पीताभमीषद् वरयान्त्रिकासु ।
सन्धारयन् पैतृकसम्पदासन् निधानभावं प्रकटीकरोति ॥
पठन्नसौ भागवतं पुराणं तद्भावविज्ञः शुकतामुपैति ।
संव्यासयन् व्यासवचांसि नूनं व्यासः कथायां वहुधा स आस ॥

पं० यादवनाथ शुक्लः पाण्डित्ये, कर्मकाण्डे, भागवतादिपुराणकथासु अनन्यगां कीर्ति मवाप्तवान् । यस्य पत्नी दुर्गादेवी पतिपरायणासु नारीष्वग्रगण्याऽऽसीत् । सा सर्वमपि स्वकीयं जीवनं पतिसेवायां नयन्ती समीचीनतया सहचरीत्वमन्वर्थं व्यदधात्। पण्डितशुक्लः स्व जीवने यत् कीर्तनीयांसफलतामध्यगच्छत् तस्य मूलकारणं सैव वन्दनीयचरणा महिलाऽभवत् ।

एकतस्तु पं० यादवनाथ शुक्लः पूर्व जनुषि कृतानां सुक्रतानां सत्फलान्यादाया वातरदेकतश्च स नैजं जीवनं भगवच्चरणार्चने, भगवत्कथाया आलपने, भगवन्नाम्नो जपने, भगवतो गुणानां लीलानाञ्च कीर्तने, भगवतः स्मरणे, भगवतो ध्याने, वेद-शास्त्रादिपाठने, सदैव परोपकरणादिशुभकर्मसु चागमयत्; तस्य सदुदर्कमेवेदं मन्ये यत् तस्य तनूजा अपि सर्वे विद्वांसः सदाचारवन्तो गुणवन्तश्च सन्तः परामेव प्रतिष्ठां शिक्षा जगत्यश्नुवानाः स्वपितृपितामहादिक्षुण्णाद् वर्त्मनो नेषदपि स्खन्लन्तः, स्वकीयाभिः सेवाभि र्वृन्दारकाणां वाणीं सम्पोषयन्तो वर्धयन्तश्च स्वकीयस्य राष्ट्रस्य गौरववैजयन्ती-मुद् धूनयन्तः प्रतिलक्ष्यन्ते । यस्य पितुः पुत्रा अपि स इव सदाचारमार्गारूढा विद्वद-ग्रण्यो भगवद्भक्ता यशस्विनः प्रतिष्ठाशालिनश्च स्युः सः पिता धन्यः ।

प्राचीनभारतसमादृतदेववाणीं
शिक्षाविधिञ्च समयस्य पुरातनस्य
यः सत्पथं सुरुचिरं नितरा मगौप्सीत्
वंद्यो हिं नः स वुध-यादवनाथशुक्लः ॥



# हनुमानप्रसाद पोद्दारः

एतादृक् को मानवो यो हि स्वल्पामप्यभिरुचिं चेद् धर्मे, आध्यात्मिक्याञ्च भावनायां निदधाति भगवद्भक्तभूषणं न जानाति श्रीमन्तं हनुमानप्रसादपोद्दारम् । मन्ये, श्री पोद्दारस्य रूप माधाय सात्विकताऽऽस्तिकता च संयुताभूत्वाऽवातरत् । गोरखपुरस्थ गीतामुद्रणालयात् प्रकाशंलब्धमानस्य 'कल्याण' मासिकपत्रस्य सुयोग्यः सम्पादको भूत्वा सः स्वजीवनस्यान्तिमं श्वासं यावत् तत्पत्रेण मानव समाजस्य जीवनं धर्ममार्गारूढं भगवच्चरणप्रेमपरायणं सुलभमुक्त्युचितसाधनं कर्तुं पूर्णतया प्रायतिष्ट । सः समये समये पत्रे लेखान् लिखित्वा प्रवचनानि च कृत्वा जनतां सन्मार्गं प्रदर्शयितुं स्तुत्यं प्रयासं कृतवान् । स न विद्मः कियतो मानवान् कुपथात् सुपथमनैषीत्; स न जानीमः कियतो मानवान् पापकर्मभ्यो निवार्य्यं सत्कर्मसुन्ययूयुजत्; स न बुध्यामहे कियतांमानवानां स्वान्तेभ्यः कुवासनाः उन्मूल्य तत्र सद्भावना मुदपीपदत् । स न वय मवगच्छामः कियतोनास्तिकानास्तिकतायां पर्यवर्तयत्, स नावयामो कियतां मानवानां मनः सु भगवद्भक्तिभागीरथीं प्रावीवहत् । वस्तुतः स युगस्यास्य महान् साधुपुरुषो, महानुपकर्ता, असहायानां सहायको,ऽशरणानां शरणं, दीनानां बन्धुः, सुहृत्सतां, राष्ट्रस्य भारतस्य गौरवपताकाया उन्नमयिता, धर्मत्राता पुरुषपुंगवोऽभवत् । तस्मिन् किमप्यनिर्वचनीयं पावनमुदात्तमौदार्यमुत्तरलीभवद् व्यालोक्यत । अतः स 'भाई जी' इत्येतयाभिरव्यया सर्वत्राकारितोऽभवत् ।

श्री हनुमानप्रसाद पोद्दारः सुविदिते राजस्थान प्रदेशान्तर्गत 'रतनगढ़' नामधेये नगरे सुप्रतिष्ठिते समृद्धिसमृद्धे कुले जनुरग्रहीत् । सः स्वकीयं जीवनं भगवतः परमात्मनः सेवाया मर्पयदजीवत् । 'अयं निजः परोवेत्येतद्विधः क्षुद्रतरो भावो नावतिष्ठते स्म । तदीयोऽहं समष्ट्यात्मकेऽहमि व्यलीयत । तस्य स्वकीय मस्तित्वं, मन्ये अवाशिष्यत एव न । यत् किमपि गुरु गुरुतरं कार्यं, महनीयां महनीयतराञ्च सेवां सोऽकरोत्. तत् कार्यं सा सेवा तेन न कृता, भगवतः कृपामयेननुग्रहेण तत् कार्यं जातं, सा च सेवा सम्पन्नाभवदित्येतदेव सदैव मेने । स भगवति अजीवत्, भगवति अवसत्, भगवत्येवान्ततो व्यलीयत । 'कल्याणं' करणीकृत्य सश्चतुश्चत्वारिंशद्वर्षाणि चराचरात्मकस्य विश्वस्य याः सेवाः अकार्षीत्; ताः सन्त्यतिद्वय्यः । एतस्यां दीर्घाया मवध्यां लक्षशो देशवासिन स्तस्योपदेशामृतं निपीय भगवन्तम्प्रति आकृष्टा अभूवन् । जीवनस्य लक्ष्यमस्ति भगवत्प्राप्तिः । तल्लक्ष्यस्यदिशाम्प्रति केन प्रकारेण सुगमतापूर्वकमुपसरणं सम्भव

मित्येतत् सः समीचीनतया सुबोधायां भाषायां प्रभावशालिन्या रीत्या असकृत् सर्वेषा मपिपुरः समुपस्थापयामास । तत्प्रवचनेभ्यस्तल्लेखेभ्यश्च सहस्रशो मानवाः स्फूर्तिं, साहसमुत्साहञ्च प्राप्तवन्तः । निराशाणां स आशा आसीत्, अनाथानां स नाथ आसीत्, निखलम्वानां सोऽवलम्वश्चासीत् । जनास्तस्मान्नवीनां चेतना मवाप्नुवन् । तेषा मपि जनानां संख्या नास्ति न्यूना ये तदुपदेशमाकर्ण्य स्वजीवनसत्ताविनाशनकुचेष्टातो व्यरंसत । पारस्परिकं मनोमालिन्यं कियन्तः स्वजनास्तत्सन्निधिं प्राप्य, त्यक्तवन्तः; तस्यश्रेयस्करीं सङ्गतिमासाद्य कियन्तः परिवाराः पुनः प्रेमपूर्वकं सम्वन्धं वोढुं सदवसरं लब्धवन्तः; कियन्तश्च सुहृदस्तदभ्याशे उषित्वा भूयः न्यक्कृतसौहृदेषु सुहृत्सु सुहृद्-भावमयं व्यवहारं कर्तुं शुभमवसरं प्राप्तवन्त इत्येतत्र जानीमहे । तदीयां पवित्रां प्रेरणां प्राप्य मानवीयदुर्वलताक्रान्तत्वात् सन्मार्गात् स्रंसन्तः कियन्तः साधकाः, गृहस्थाः, विरक्ताः, नवयुवकाश्च भगवतः सौहृदमयीं पावनतामधिगम्य, कलुषकर्दमान्निःसृत्य, सत्त्वगुणोन्मुखा भवन्त उन्नति शिखामारोहन्ति स्म इत्येतदपि न वयं विद्मः । जीवन स्येदृशी का ग्रन्थिः, का समस्या, का प्रहेलिका, का चोद्ग्रथितता, यस्याः समाधानं श्री पोद्दारस्य लेखनी किं वा वाणी कर्तुं न प्राभवत् । तस्य सर्वस्वं भगवान् आसीत्, स मनसा, वाचा, कर्मणापि सर्वेषामपि हितचिन्तकोऽभवदतस्तदीयायां लेखन्यां वाचा-याञ्चामोघः प्रभावः सन्निविशते स्म ।

देशस्य नैतिकं चारित्रिकञ्च वल मुत्थापयितुं स्वजीवनस्यान्तिमं क्षणं यावत् कृतोद्यमस्य हनुमानप्रसादपोद्दारस्य सन्निकृष्टता राष्ट्रस्य वलिवेद्यां स्वानसून् सस्मित मुत्सृजतो नवयून आरभ्य प्रालेयाद्रे गह्वरेषु साधनायांरतान् तापसान्, जाह्नव्या विविक्तेषु पुनीत पुलिनप्रान्तेषु भगवन्तं भजतः साधुसंन्यासिनो, धर्मनिष्ठान् गृहस्थान्, गोसेवाव्रतिनश्च मेधाविनो यावद् वितता पर्यवेक्ष्यत ।

श्री पोद्दार आसीत् स्थितप्रज्ञः । स धार्मिकतायाः आध्यात्मिकतायाः, श्रद्धायाः, कर्मण्यतायाः, श्री राधामाधवशरणप्रपन्नताया यथार्थतया भव्याहि काचिच्छान्तिवर्षिणी प्रतिभाऽऽसीत् । सनित्य मेव धर्मप्रवचनं व्यदधात्, नित्यमेव च राधामाधवकथा मगायत् । इदं तदीयं दैनिकं कृत्य मासीत् । तत्र स भावुको भावविह्वलः कदा न समजायत ?

'आचारः परमो धर्मः' इत्यत्र निहिताभिनिवेशो हनुमानप्रसाद पोद्दार आर्जव स्वभावः संन्यासिनः परिधान मवसानोऽपि संन्यासदीक्षामनाददानोऽपि संन्यासीवासीत् । तस्य जीवन मृषे जीवनमासीत् । विनयविभूषितः सः सतां विपश्चितां च सेवायां निलीनो निष्कामकर्मयोगी भवन् स्व जीवन मनु दिवसं संस्कुर्वाणः पर्यलक्ष्यत । सोऽद्यतनरयानेहसो विदेह इव प्रातीयत । तस्य जीवनं सर्वेषामपि धनिकानां श्रेष्ठिनां

कृतेऽनुकरणीयतामगच्छत् । स ऋषिकेशे स्वर्गाश्रमं प्रातिष्ठिपत् यत्रोषित्वा श्रेयोऽभिलाषी मानवो जीवनं गमयितुं शक्नुयात् ।

श्री पोद्दारः सरलव्ययक्तित्वेन सौम्यया च प्रकृत्यालङ्कृत आसीत् । स धार्मिकाणा मनुष्ठानानाञ्च संस्थानां प्रेरक आसीत् । तस्य संरक्षकत्वे निदेशकत्वे च बहुलस्तद्विधाः संस्थाः परिपोषं वर्द्धनञ्च प्राप्नुवन् । सश्चूरूस्थितस्य ऋषिकुलब्रह्मचर्याश्रमस्य सञ्चालकः, लक्ष्मणगढस्थविद्यापीठस्य च सम्माननीयो न्यासी आसीत्; आसीच्चान्यासां बह्वीनां धार्मिकसांस्कृतिक संस्थानां जीवनम् ।

हनुमानप्रसाद पोद्दारोक्तान्यमृत वचांसि स्वर्गारोहणार्थं सोपानानि सन्ति । इह केषाञ्चन सारं समासवत्यां रीत्यां संस्कृतभाषायामनूद्य निदध्मः ।

अस्माभि र्मनसा बुद्ध्या वपुषा च यापि क्रिया क्रियेत ताभि र्भगवत्प्रीत्यर्थं भाव्यम् । आरम्भे काचित् क्रिया भगवत्प्रीत्यर्थं चेन्न, तदा संवरणे ताभिस्तथाविधाभि र्भवितव्यम् । श्रीमद्भागवते—

कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वानुसृतस्वभावात्
करोति यद् यत् सकलं परस्मै
नारायणायेति समर्पयेत् तत् ॥

यदा भगवत्प्रीतिरेव जीवनस्य परमसुखत्वेन घटते तदा स्वभावतो वपुषः सकलान्यपि बाह्यान्याभ्यन्तराणि चाङ्गानि भगवतः सेवायामेव संलग्नानि सञ्जायन्ते । सा सेवा तां रतिं वा सुखमुत्पादयति यामनुभूय भक्तस्तत्सेवां विहाय भगवद्दीयमानायां मुक्त्यामपि न स्पृहयते । भगवतो भक्तस्य च सम्बन्धोऽसौ नैक मेव जन्म व्यतिषजति स जन्मान्तरभागपि भवितु मर्हति । परं समस्तेष्वपि जन्मसु सः सम्बन्धो भगवत्प्रीति सम्पादन रूप सेवात्वेन सन्तिष्ठते । भगवन्तं प्रह्लादः प्रार्थयते स्म—

नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहं
तेषु तेष्वचला भक्ति रच्युतास्तु सदा त्वयि ।
या प्रीति रविवेकानां विषयेष्वनपायिनी
त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु (विष्णु पुरागम्)

जीवनं, मरणं, संयोगो, वियोगः, लाभो हानिः, सुखं दुःखञ्च-इत्येतदादीनि सर्वाणि प्रभुप्रीत्यर्थमेवस्युः । तस्मिन् सति सुखिनि, सुखस्य परमानुभूतिः स्यात् । तत्सुखमात्मसुखं मन्येत । भगवन्तं ये स्मरन्ति, येषां भगवच्चरणेषु प्रेम, ते जगद्दृष्ट्या

कामं भाग्यहीना मताः स्युः परं परमार्थतस्त एव सौभाग्यवन्तो पुण्यवन्तश्च यथार्थतः । यूयं भगवन्तमजस्रं चिन्तयत; यूयं तच्चरणेषु जुहुत । ततः सर्वमपि स्वत एव सिद्ध्येत्, यावद् वयं न भगवतो भोगानां स्मस्तावदेव सर्वं सदोषम्—

तावद् रागादयः स्तेना स्तावत् कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगडो यावत् कृष्ण न ते जनाः ।। (श्रीमद्भागवतम्)

यत्र मनुष्यस्य मनस्तत्रैव सः । मनश्चेद् भगवति तदा सः (मनुष्यः) भगवत्येव । मनः सन्ततं भगवच्चरणेष्वेव संलग्नं कर्त्तव्यम् । भवतु नाम शरीरं क्वापि । नित्य मानन्दो नित्यञ्च शान्ति मनुभूयेत । मनस्तु समीपेऽस्ति परं मनो न नः सकाशे; तद्विषयेषु सञ्चरते यदि; न सामीप्यं तदावगमनीयम् । भगवता सार्धं सर्वथा चित्तस्य संयोग इष्यते । विषय चिन्तनमेव विषम् । तस्मा त्सदात्मानं गोपायेत् ।

सदैव प्रसन्नमनास्त्वं निषीद; अन्वर्थतो यद् भाग्यं तस्य मर्म्म अवेहि । भगवतो दासत्वे प्राप्ते सति, न कोऽपि वालिशो, न कल्मषी न च पुरोभागी एव भवितु मर्हति । सकलं भाग्यं, समग्राविद्या, अखिलानि च पुण्यानि तस्य चरणवन्दनं, चरणदास्यं विदधति ।

को विषयी कश्चसाधकः—इत्येतत् न प्रेक्षणीयम् । परदोषदर्शनादात्मनि गुणाभिमानो भवति जागृत् । वृत्तिं भगवतो दूरीकृत्य तस्या दोषाणां वीक्षणे प्रवर्तनं नवां ज्वालां नवा मशान्तिञ्च जनयति । सर्वेऽपि सन्ति भगवत—एतदेवावगच्छ । भगवतोऽनुग्रहं संश्रय । तत्कृपया सर्वेऽपि विघ्नाः स्यु र्निरस्ताः । भगवतः प्रसादो महामहाप्रत्यूहाणां शिरांसि सञ्चूर्ण्य पुरस्त्वामुपसारयेत् ।

प्रसादः सर्वदुःखानि हिनस्ति; परं प्रसादं स आप्नुते यस्य मनः इन्द्रियाणि भगवतः सेवायां लग्नानिस्युः, स्युश्च तानि रागद्वेषकामनावासनाविमुक्तानि । तत्प्रसादेनाखिलानि नश्यन्ति दुःखानि—

रागद्वेष वियुक्तैस्तु विषयानिन्द्रियैश्चरन्
आत्मवश्यै र्विधेयात्मा प्रसादमधिगच्छति
प्रसादे सर्वदुःखानां हानिरस्योपजायते ।। (गीता)

इत्येतदाद्युपदेशैः सः (श्री पोद्दारः) सर्वजनशुभचिन्तकः, सर्वेषा मप्यहैतुकः सखा जनता माजीवनं वाधाभ्यो विपद्भ्यश्च रक्षंस्तामुद्धर्तुं मुत्थापयितुञ्च प्रायस्यत् ।

श्री हनुमानप्रसाद पोद्दारस्तदेवोपादिशत् यत् सः स्वकीये आचारे व्यवहारे च पर्यणीनमत् । सः ये गुणा ये च भावा मानवस्य नैतिकस्य वलस्योन्मीलने सहायका

भवन्ति तान् गुणान् तांश्च भावान् उपार्जयितुं स्वचरित्रे निधातुञ्च पूर्णतया प्रायतिष्ट। स तदेव साहित्यं निरन्तर मध्यगीष्ट यद् रागद्वेषेर्ष्या मात्सर्य मोहलोभादि दोषान् क्षिणोति। स स्वाध्यायार्थमचिनोत् तानि पुस्तकानि मनसि यानिभगवत्प्रेम समुत्पादयितुं क्षमाणि जायन्तेः स तान् ग्रन्थानेव पठितुं स्वपुस्तकालये निहितवान् येषां ग्रन्थानां पारायणेन चित्तं भौतिकेभ्यौ विषयेभ्यः पराङ्मुखीभूय आध्यात्मिकेषु तत्त्वेष्वात्मानं प्रवर्तयितुममोघां शक्तिं गृह्णाति।

सः स्वकीगं समयं सतां, महात्मनां, साधूनां विद्वद्वराणां, भगवद्भक्तानां, वीतरागाणां सच्चरित्राणां पूरुषाणां समीप एव निनाय। आह्निक कर्मणां सम्पादनाय यावान् समयोऽपेक्ष्यते तावानेव समय स्तस्य सत्सङ्गे न व्यत्येतु मशकत्। एकाकितायां तस्य स एव कालोऽतिक्रान्तो जातः, यस्मिन् काले स भगवतः प्रार्थनायां, भगवतः पूजायां, भगवत आराधनायाञ्च रतोऽभवत्। 'कल्याण' पत्रं धर्मप्रिय जनतायाः पुरः उत्तमोत्तमसामग्र्याः समुपस्थापने, नानानिगमागमानां, शास्त्राणां, दर्शनानां, पुराणानाम् उपनिषदां, वेदानां प्रतिष्ठापने, सतां महात्मनां योगिनां भागवतानाञ्च प्रवचनान्येकत्रीकृत्य तेषां प्रस्तुतीकरणे सामर्थ्य मधिगन्तु मशक्नोत् सम्प्रति च शक्नुते। किञ्च बहुमूल्यमपि प्रदाय महता परिश्रमेणापि च यस्य शास्त्रामृतस्योपलब्धि र्नसम्भवा तच्छास्त्रामृतमत्यल्पमूल्य मेव दत्त्वा अनायासेनैव सामान्या अपि जना अद्य प्राप्तुं प्रभवन्ति तत्र कारणं वर्तते तस्य तपस्विनः प्रकृष्ट उद्योगस्तस्य सर्वश्रेयोऽभिलाषिणी बलीयसी पुनीता सद्भावना। विश्वस्य सर्वेषामपि मानवानां भगवत्प्रेमोन्मुखीकरणे कृतस्तदीयः स महान् अभिनन्दनीय प्रयत्नो वस्तुत स्तस्य कठोरातपस्याऽऽसीत्, प्रकृष्टतरं भगवद्भजनमासीत्, आसीच्च विश्व जनीन सेवा। सर्वेऽपि जना अस्मिन् संसारे स्वार्थं माकाङ्क्षन्ति, परं सः सदैव परेषामभ्युदयं, परेषां शुभं मङ्गलञ्च अचकमत। जगति सर्वे जनाः परस्परं प्रीत्या प्रेम्णा व्यवहरन्तु; सर्वेऽपि जनाः सुखसमृद्धिमन्तो भवन्तु, भवन्तु च परं ते भगवच्चरणानुरागिणः, भगवतः कृपा तेषु स्यात् येन ते सद् बुद्धिं लब्धुं शक्नुयुः, सत्पथारूढा भवितु मर्हेयुः; सर्वेऽपि जनाः स्वकीयं जीवनं निरामयं निदधतः समुन्नतं विधातुं क्षमा भवेयुः; सर्वत्र सौहृदं भवेद् वर्धितं, दुर्हृद्भावो नश्येत्, कोऽपि कस्मिन्नपि न द्वेष्टु; सदैव सर्वे भद्राणि पश्यन्तु; सद्ग्रन्थाध्ययने सर्वे रमन्तां, सर्वे भगवदुपासनायां प्रीयन्ताम्। देशे या प्रवञ्चना दृश्यते येच भारते जगति च शाठ्यकापट्यच्छलच्छद्मादिका दोषा विचरन्ति ते सर्वेऽपि लीयन्तां, संसारे ये ये देशाः सन्तिष्ठन्ते ते सर्वेऽपि तां वृत्ति मवलम्बन्तां या भवति सर्वकल्याणकारिणी, या भवति सर्वनिषेवणविधायिनी, या च भवति सर्वाभ्युदयार्थं पुनीतप्रयत्नकारिणी। राष्ट्राणां सर्वेषामपि भौतिक सुखाकाङ्क्षा स्यादाध्यात्मिकाचरणाभिरामेत्येषाऽऽसीत् तस्योदात्त-

भावना । इमां भावनां सः सदैव व्यावहारिकतायां विलोकयितुं माचकाङ्क्ष अतस्तदर्थ मेव तदीया साधनाऽभवत् । 'कल्याण' पत्रं तदीयाया निर्दिष्टाया भावनाया वर्तते मूर्तं रूपम् । अहो धन्यं तस्य जीवनं यत् आत्मन उत्थापने, भगवत आराधने, समग्रायाः अपि जनतायाः कल्याणार्थं तस्याः पुर ज्ञानदीपालोकप्रसारणार्थं मनारत मविरामं श्रमं प्रयत्नञ्च चकार ।

स महान् पूरुषः २२।३।१९७१ तमेशवीयदिनाङ्के नित्यलीलाया मलीयत ।

एतद्‌विधानेव सच्चरित्रतासुषमा सुन्दरान् मानवाँल्लक्ष्यीकृत्य य इद मुक्तवान् शब्दैस्तदीयैरेव अपकारिष्वप्युपकारिणं गुणरहितेष्वपि करूणावन्तं वन्दामहे—

दानाय लक्ष्मीः सुकृताय विद्या
चिन्ता परब्रह्मविनिश्चयाय
परोपकाराय वपुर्हि यस्य
वन्द्य स्त्रिलोकीतिलकः स एकः ।।



# राजा महेन्द्रप्रतापः

दासताबन्धनात् मानवता त्यागबलिदानाभ्यामुन्मुक्ति मवाप्नोतीति विश्वस्येतिहास उच्चैरभिदधच्छ्रूयते । काले काले ते महापुरुषा अस्मिन् संसारे समुत्पद्यन्ते ये भौतिकान्यखिलान्यपि सुखान्युत्सृज्य कठोरकण्टकाकीर्णं त्यागमार्गं संश्रयन्ति । तेऽवदातै रुदात्तैश्च गुणैः परतन्त्रतायां निपतितानां जातीनां निष्क्रियेषु स्नायुसमुदायेषु नव जीवनप्रदं शोणितं सञ्चारयन्ति । ताः पराधीना जातयस्तेभ्यः स्वतन्त्रतोपासकेभ्यस्त्यागवीरेभ्यः किं तासां कर्त्तव्यं, के च तासा मधिकारा इत्येतद्विज्ञाय, विज्ञाय च तदर्थं प्रबल मुत्साहं, सात्विकं साहसं प्रौढं क्रियाविधिज्ञत्वं, पावनमोजो, दृढं शौर्य्यञ्च स्वां पराधीनता मुच्छेत्तुं समुदं समुद्यताः सञ्जायन्ते । भारतं येषां तपस्त्यागपरायणानां धीरवीराणां स्वातन्त्र्यानुरागिणां मनस्विनां परुषैः पावनैः प्रयासै रात्मानं दासताया उन्मोचयितुं क्षममजायत तेषु देशभक्तिभावविभावितेषु राजा महेन्द्रप्रतापोऽप्यन्यतमः ।

राजा महेन्द्रप्रतापः अलीगढमण्डलान्तर्गतेमुरसाने राजपरिवारे १।१२।१८८६ तमेशवीय दिनाङ्के जनुरग्रहीत् । भारतस्यायं सः समय आसीद् यदा भारतौकसो भूभुजोब्रिटिशशासनच्छत्रच्छायायां भौतिकेषु सुखेषुनिलीना आसन् । देशं पारतन्त्र्यस्य कठोरतमां श्रृङ्खलां छेत्तुं प्रयतमानेभ्यः पुरुषप्रवरेभ्यो न केवलं ते पराङ्मुखा अवाप्यन्त; अपितु ते तानवजानन्तो न्यक्कुर्वन्तश्चावालोक्यन्त । तदानीन्तनेऽनेहसि भारते एकतो राजप्रासादानामन्तः पुरेषु वारुणीं पिबन्तो रमणीषु रममाणा देशान्तरेषु च विलासमयं जीवन मुपभुञ्जाना राजानोऽध्यगम्यन्त; एकतश्च वैदेशिकशासनजनितपीडोत्पीडिताः सन्तो देशार्थं सर्वस्वमपि विहाय यतय इव भवन्तः कारागारेषु नानाविधान्यसहनीयानि कष्टानि विन्दन्तोऽण्डमानद्वीपावासदण्डकदर्थना मनुभवन्तोऽत्याचारप्रियशासनप्रदत्तप्राणदण्डेन जीवन मुज्झन्तः शतघ्नीधरशतघ्न्युद्गीर्णगोलिकाशरव्यतां गच्छन्तो मृत्युं सहर्ष मुपगूहन्तः शूलदण्डं सोत्साहं स्वीकुर्वन्तः समलक्ष्यन्त । तदेवमेकतो देशद्रोहरतानां विलासपूर्णं जीवनयापनं निहितोत्कटाभिलाषाणां भूपालानां कुत्सितै र्निन्दनीयैश्च, एकतश्च त्यागोत्सर्गपथगामिनां देशसेवानुरागिणां स्वतन्त्रतावरिवस्यायामर्पितसर्वस्वानां पुरुषसिंहानाञ्चादरणीयैः प्रशंसनीयैश्च चित्रै र्भारतभूभित्तिरालिखितावालोक्यत । राष्ट्रस्यास्य विषमायां परिस्थिति भीषणायां राजा महेन्द्रप्रतापो राजान्ववाये उत्पन्नो भूत्वापि मातृभुवः स्वातन्त्र्याय सर्वा अपि सम्पदः सर्वाणि च राज्यसुखानि सहेलं पर्यत्यजत् । स्वतन्त्रतेतिहासे, मन्ये, स एव प्रथमो महीपो विद्योतमानः संलक्ष्यते ।

सप्तदशाधिकाष्टादशशततमेशवीयाब्दे आंग्लान् विरुन्धानादैतिहासिकं संघर्षं कुर्वाणाद् हाथरसाधिपाच्छ्रीदयारामसिंहाद् देशप्रेम-रिक्थं राजा महेन्द्रप्रतापो ऽधिगच्छति स्म ! सः ऋषिभूतवसुसोमेशवीमवर्षे स्वतन्त्रतामधिगन्तुं प्रयस्यतां देशभक्तिभृतां परिपन्थित्वं विदधत आंग्लानाञ्च साहाय्य माचरतः स्वपितामहस्य भूपस्य श्रीगोविन्दसिंहस्य देशद्रोहपूर्णनिन्द्यकुकृत्यजनितकल्मषमार्जनार्थं तदा श्लाघनीय मभिवन्दनीयञ्च कार्यं कृतवान् यदा स्वकीयां भूयसीं भुवं सम्पदञ्च गरीयसीं नवाधि-कैकोनविंशतिशततमेशवीयवर्षे स्वनिर्मितराष्ट्रियसंस्थामहाविद्यालयाय समर्प्य महनीयस्य महिमवत्त्यागस्य परिचयं प्रदत्तवान् । देशान्तरीयं साहाय्य मधिगम्यावनीशः स्वभारतमातुः स्वतन्त्रतामुद्दिश्य २०।१२।१९१४ तमेशवीय तिथौ यां यूरोपयात्रां व्यदधात् सा देशभक्तिभाविता यात्रा चिरं भारतीयानां स्मृतिसृत्यधिरूढा भवेत् । आदौ सः १०।२।१९१५ तमेशवीयवर्षे जर्मनीदेशस्य राजधानीं बर्लिन माससाद । तदानीं प्रथमस्य विश्वाहवस्य दारुणाभिर्ज्वालाभि र्यूरोप महाद्वीपस्थदेशाः कवलीकृता आसन् । जर्मनींगलेण्डं विरोद्धु मतितरां भयावहे सङ्घर्षे संलग्न आसीत् । राजा जर्मनीशविलियमकैसरे सममिलत् । आंग्लशासनाद् भारतमुन्मोचयितुं सः प्रायतिष्ट । एतस्मिन्नेव सन्दर्भे सोऽफगानिस्तानसम्राजः सौहृद मवाप्तु मचेष्टत । भारतस्वातन्त्र्याय च तत्र स योजनां प्रास्तावीत् । गान्धारे (काबुले) वागवावराभिधाने हिन्दनामधेयां शासन सत्तां सोऽतिष्ठिपत् । ऋषिव्योमग्रहचन्द्रेशवीय सम्वत्सरे तत्स्थापितायाः द्वादशसहस्र संख्याका गान्धारीयाः सैनिका भारतपरतन्त्रतान्दुकं छेत्तुं सुदृढतया संगठिता भूत्वा आंग्लगुल्मेषु स्कन्धावारेषु चांग्लीयेषु आक्रमणमारब्धवन्तः । कतिपयेषु स्थानेष्वाङ्गलीयसैन्यैः सह तुमुलं जन्यं प्रावर्तत, परं न तत्र सफतावाप्ताभवत् । राज्ञो महेन्द्रप्रतापस्य स्वतन्त्रतावाहिन्याः अन्यच्च यन्महत्त्वमयं कार्यमासीत् तदासीदैतिहासिकं कार्य मेकोनविंशत्यधिकैकोनविंशतिशतमेशवीयाब्दे ब्रिटिशसाम्राज्यपरिपन्थि अफगान-स्तानायोधनम् । तस्मिन् समये पञ्चाम्बुप्रदेशे सैनिकशासनात्मिका जलियानवाला वागहत्याकाण्डविषयिका च घटना आंग्लेषु परमरोषपूर्णाक्रोशं वितन्वन्ती सर्वतो व्याप्तासीत् । अतः राजा भारतेऽप्यांग्लान् विरोद्धुमाभ्यन्तरो विप्लव उपप्लवश्च सम्भव इत्यतर्कयत् । भारतस्य तस्मिनातङ्काकुलेवातावरणेयुद्धाक्रमणपरकां योजनां क्रियान्वितामनुष्ठातुं चतुर्षु व्यूहेषु तच्चालितं समरं चतुर्मुखं भवत् प्रारब्धमभूत् । परमनेकहेतुभिः सः प्रयासोऽपि न सफलताश्रियं प्राप्तु मशक्नोत् । निराशमानसः सन्नपि राजा देशान्तरेषु तदर्थं स्वयत्नं नाजहात् । यदा हि सः स्वोद्योगे संलग्न आसीत्तदा रूसदेशस्याधुनिकस्य घटके लेनिने सोऽमिलत् । अन्ततः स जापान (यवद्वीपम्) मगमत् ।

स्वनिर्वासनानेहसि राजा महेन्द्रप्रतापो यवद्वीपं स्वावासस्थलत्वेन व्यदधात् । सुविदितं क्रान्तिकारिणं वसूपाह्वं रासविहारिणं सुभाषचन्द्रञ्च प्रति मातृमहीस्वतन्त्रीकरणात्मकप्रयासेषु नैजं निःशेषं योगं प्राददात् । द्वितीयस्मिन् विश्वजन्ये अमरीका जापानं पराजित मकार्षीदतः सः समरवन्दी समजायत । षट्चत्वारिंशदधिकैकोनविंशतिशततमेशवीयवर्षे, चतुर्दशे दिनाङ्के, फेब्रवर्यां सोऽमेरिकाकारागारान्मुक्तिमलभत । तत्र सः पञ्चमासान् वन्दिजीवन मनैषीत् । महात्मगान्धि-सरदारपटेल-जवाहरलाल नेहरूप्रभृतिमूर्धन्य नेतृणां प्रयत्नैः स एकत्रिंशद्वर्षाणि, सप्तमासांश्च निर्वासजीवनं गमयित्वा ९।८।१९४६ तमेशवीयाब्दे स्वदेशागमनसम्बन्धिनीं सौभाग्यश्रियमविन्दत् । देशः सहर्षं ससम्मानञ्च तम्प्रति स्वागतं व्याहरत् ।

१५।८।१९४७ तमेशवीयवर्षे स्वतन्त्रतानिष्ठस्तदीयश्चिरकालव्यापी स्वप्नः सार्थकतामयासीत् । यदर्थं द्वित्रिंशद्वर्षाणि देशनिर्वासनजनितानि दारुणान्यसहनीयानि च कष्टानि सोऽसहत । सप्तपञ्चाशदधिकैकोनविंशति शततमेशवीयवर्षे ब्रजमण्डलं तं लोकसभायै स्वकीयप्रतिनिधित्वेन प्रहिण्वत् तदीयावदातराष्ट्रोत्कृष्टतरञ्च त्यागम्प्रति नितरा मादर मदीदृशत् ।

साम्प्रतं राजा महेन्द्रप्रतापः स्वजीवन संध्यायां प्रेमधर्मप्रचारणे संलीनो वर्तते । समये समये च सः स्वकीये 'संसारसंघ' पत्रे 'वर्ल्ड फेडरेशन' पत्रे च नैजान् विचारांश्चाभिव्यनक्ति । कदापि कानिचन दिनानि देहरादूने कदापि च कानिचन अहानि वृन्दावनमधिष्ठाय स्वजीवनदिवसान् गमयति । सोऽस्मिन् वार्धक्येऽपि स्वजीवनस्यैकमपि क्षणं विश्रामे न यापयति । सततं श्रम एव संलीनो भवन् सः प्राप्यते । तेन राष्ट्रोत्थान कारिणोऽनेके ग्रन्था रचिताः सन्ति । एतेषु ग्रन्थेषु तदीयानां सिद्धान्तानाञ्च पुनीतं दर्शनं प्राप्तं भवति । सः स्वविचाराधार एव रामराज्य-स्थापनाया माशावान् दृश्यते ।

राज्ञो महेन्द्रप्रतापस्य व्यक्तित्वं महन्महीयः । तस्मिन् शोभमानं सौजन्यम्, स्पृहणीयं विनीतत्वम्, अच्छञ्चौदार्यं तदीयाय व्यक्तित्वाय आराध्यस्य मानवस्य स्वरूपं प्रयच्छन्ति । त्यागतपःपूतं तज्जीवनं प्रति भारतीयस्य स्वान्ते श्रद्धाभक्तिकलित वीतरागभावाननायासेनैव समवतारयति । मानवताप्रतीकभूतस्य तस्य समग्रमपि जीवनं नूनं स्वराष्ट्रस्य सेवायामेवार्पितं भवद् विभ्राजते । देशस्य स्वातन्त्र्येतिहासे तदीयानि कार्याणि, तदीयं कृतित्वं, तदीयं व्यक्तित्वं, तदीयाः सेवाश्च भाविभारत सन्तानम्प्रति निश्चप्रचतया प्रेरणास्रोतः सिद्ध्येयुः ।

राज्ञो महेन्द्रप्रतापस्य राष्ट्रियसंस्था—प्रेममहाविद्यालयः—सम्प्रति द्विविधाभूत्वा भारतीयां स्तरुणान् विनयति । तयो द्विविधतां गतयोः संस्थयो रेकतरा

वृन्दावने केशिकूले राजते । तदितरा च मथुरावृन्दावनमार्गे सुशोभते । आद्या यूनः प्रति साम्प्रतिकीं शिक्षापद्धति माधृत्योच्चतरमाध्यमिक शिक्षांप्रयच्छति । अन्त्या औद्योगिक्यां शिक्षायां बह्वीषु च शिल्पकलासु यूनां चयं शिक्षितं विदधाति । स्वातन्त्र्य-सम्परायानेहसि संस्थैषा राष्ट्रस्य महीयसीं स्मरणीयां सेवां व्यदधात् । असकृच्च सा शासनदत्तं दण्ड मसहत । नूनं संस्थेयं राज्ञोऽपरं राष्ट्रसेवापरायणं रूपं विभृद् भारतभुवि विभाति । इयं संस्था तस्य यशः पताकेव धूनुते । शतं वर्षाणि जीव्याद स्मदीयोऽयं प्रिय देशभक्तवरेण्यो राजा भहेन्द्रप्रतापः ।

क्रूराणि भारतमहीप्रियभक्तराजः
कष्टानि चापि विपदो विविधा असह्याः
वर्षाणि योऽसहत धीरवरो वहूनि
देशान्तरे शुचिमतिः सुकृती तपस्वी ॥

प्रेमैव धर्म इति सम्प्रत्ति योविमृश्य
तस्य प्रचारणरतोऽस्ति मनस्विवृद्धः
अस्मिन्नपि स्थविरतावयसि प्रतापी
राजा महेन्द्र इव वर्ष शतं हि जीव्यात् ॥



# लोकमान्यबालगंगाधरतिलकः

शतकद्वादशव्यापिपारतन्त्र्यजनितासहनीय विपदोऽनुभूयाद्यास्मद्देशो येषां महतां मनस्विनां मनीषिणामविरामोद्योगेन स्वातन्त्र्यमुपलभ्य विद्यमानेषु स्वाधीनेषु राष्ट्रेषु समुन्नतमौलिर्भवन् सगौरवं स्वकीयायाः सत्तायाः श्रियं विकिरन् दृग्गोचरीभवति तेष्वस्ति लोकमान्यबालगङ्गाधरतिलकोऽन्यतमो देशभक्तोत्तमः ।

लोकमान्यतिलको भारते राष्ट्रियभावनाः समुत्थापनाय स्वस्या मातृभुवः स्वाधीनतार्थं तस्या विकासनार्थं च तदा स्तुत्यं प्रयासं व्यदधाद् यदा तद्विधस्य कार्यस्याचरणं नितरामेव दुष्कर मवर्तत । तदा देशं माष्टुं विधीयमानं कार्यं महामहाघोर विपदाह्वानकृद् बभूव । परं लोकमान्यस्तस्मिन्नपि भीषणानेहसि निर्भयतापूर्वकं सोत्साह मात्मनो देशं निषेवितुं स्वं सहर्षं योजयामास ।

लोकमान्यो रसभूतवसुशशाङ्कशवीयाब्दे, अगस्त मासे, प्रथमायां तारिकायां कोङ्कणप्रदेशीय रत्नागिरिमण्डले चित्पावन ब्राह्मणवंशे जनुः परिजग्राह । सः रसर्षिवसुशशीशवीयवर्षे प्रथमश्रेण्यां बी. ए. परीक्षामुत्तीर्य नवसप्तत्यधिकाष्टादशशततमेशवीयवत्सरे वाक्कीलतापरीक्षायामपि साफल्यमवाप । परं नात्मानं वाक्कीलतायां प्रवर्त्य स फर्गुसन कालेजे शिक्षकत्वं कर्तुमारेभे । तस्यां संस्थायां सः स्तोककालमेव कार्यं चकार । पारतन्त्र्यात् परं न किमपिदुर्भाग्यं भवति । तदस्ति नानाविधानां दुःखानामास्पदम् । तद्व्यक्तेः समाजस्य राष्ट्रस्य च महाभयानकारातिः । तत् तेषां चतुरस्रतया पतनं विधाय तदीयं जीवन मतितरां शोचनीयं करोति । यो देशो वा मानवो दासो भूत्वा स्वजीवनं नयति, तस्यदेशस्य मानवस्य वा तस्मान् निन्दनीयाज्जीवनात् मरणं वरमित्येतत् सर्वं परिभाव्य सः सुधीन्द्रो जनतायां राष्ट्रियभावनां सञ्चारयितुं स्वतन्त्रताया लाभान् महत्तां च प्रति भारतीयानां हृदयान्यावर्जयितुं स्वं सकलमपि जीवनं समर्पयितुं शिवसङ्कल्पमना बभूव ।

लोकमान्यः स्वाभीप्सितावाप्त्यै मराठीभाषायां 'केशरी', आंग्लभाषायां च 'मराठा' इत्येतन्नामधेययो द्वयोः समाचारपत्रयोः सम्पादकत्वं कर्तुमारभत । ताभ्यां पत्राभ्यां भारतीयो लोकश्चेतनां लेभे, स्फूर्तिं प्राप, कर्त्तव्यपथं ददर्श; स्वं च देशम्प्रति क्रियमाणात् प्रमादाद् दूरीकृतवान् । समाजस्य भावना दिनानुदिनं संस्कृततरा विशद-

तरा च भवितुं प्रारभत। सः (तिलकः) भारतमातुः प्रियः सुतः औजस्विन्या अकुतोभयया वैदुष्यबन्धुरविचारधारया भारतं नवीनयैवाभया ऽऽप्लावयामास।

यदाप्रभृत्येव देशेऽस्मदीये विद्रोहानलः पुस्फोट तदाप्रभृत्येव आग्लशासनं भारतीयेषु शङ्कितहृदयमभूत्। न तेषु तद् विशश्वास। राज्ये न तद् भारतीयान् उच्चाधिकारवतिस्थाने प्रातिष्ठिपत्। क्षोदीयसी भृत्यतापि तदानीं भारतौकसां दुरवापाभवत्। अधिगतोच्चवैदुष्याणां धनसमृद्धिसम्पन्नानां नृणा मुद्योगेन राजकीयोच्चपदलाभाय तत्तत्पथे समुपस्थितानां काठिन्यानामपनयनाय जनतायाः सामान्य जीवनस्यापि पुरतः शासनोक्षान्यायवीजानामुन्मूलनाय च पञ्चाशीत्यधिकाष्टादशशततमेशवीयवर्षे राष्ट्रियमहासभायाः प्रतिष्ठापना सञ्जाता। परं सा राजभक्तिपरभाषणेष्वेवात्मानं कृतकृत्यां मन्वाना समलक्ष्यत किञ्चोपेक्षितजनसाधारणहितैव प्राप्यत सा। लोकमान्याय नैतदरोचत। स तां देशमङ्गलविधायिकां जतसामान्यहितजागरूकां विलोकयितुमियेष। आंग्लेषु चाटुकारितामनुनयं विनयञ्च विधाय त्रिचतुर्जनद्वारेण कस्यचनोच्चपदस्य समासादनं न स देशसेवायै अकल्पत। स राष्ट्रियमहासभायां प्रवेशं कृत्वा मुम्बई प्रदेशस्य विधानसभायाः सभ्योभूत्वा सामाजिककार्यभारञ्च गृहीत्वा देश-हितायैव प्रायतिष्ट। लोकप्रिययोः स्वकीययोः समाचारपत्रयोश्च देशोदयसहायकान् राष्ट्रभक्तिभावसमुत्पादकान् देशसेवाप्रेरणाप्रदान् उत्कृष्टोत्कृष्टतराँल्लेखान् लिलेख। शासनं तदीयै र्लेखैः कार्यैश्च भृशं चकम्पे। तत् तस्मिन् राजद्रोहाभियोगमारोप्य सार्धैकवर्षभोग्येन कारावासदण्डेन तमदण्डयत्। कारागारमध्यास्य स आंग्लभाषायाम् 'ऑरायन' इत्येतत्संज्ञकं विश्वविदितं ग्रन्थमजग्रन्थत्। मेक्समूलरस्तस्य ग्रन्थस्यप्रभावात् लोकमान्ये महतीं श्रद्धां बवन्ध। तत्प्रार्थनया सः समयात्प्रागेव कारागारान्मुक्तिं लब्धवान्।

१९०५ तमेशवीयवर्षे वङ्गभङ्गं विरोद्धुं लोकमान्यो लक्षशो रूप्यकाणि संजग्राह; तस्माद् विभाजनाद् देशं त्रातुमकार्षीच्च महान्तं प्रयत्नम्। १९०७ तमेवर्षे सुरतनगरे राष्ट्रियमहासभाधिवेशने मतभेदः सम्प्रवृत्तस्तस्मादसौ आमुष्मिकाः सहगामिनः सुहृदश्च राष्ट्रिय महासभां तत्यजुः। न ते चिरं तदधिवेशनानि सम्भावयाञ्चक्रुः। राष्ट्रिय महासभा मृदुलविचारवतामेव सहयोगं लब्धु मशकत्। तिलको महान् कर्मठ उग्रोनेताऽऽसीत्। तदीया ससारा दृढीयसी देशसेवा पुनः तं वन्दीकर्तुं माग्लशासनमनूनुदत्। वस्तुतस्तु वैदेशिकं शासनं तं स्वतन्त्रं विलोकयितुं कदापि नैच्छत्। सः पुनः षड्वर्षभोग्यकारावासदण्डेन बभूव दण्डितः। देशान्निर्वास्य सः ब्रह्म (वर्मा) देशीय माडला नगरस्थदुर्गे निबद्धदृक्त्वेन प्राक्षिप्यत। अभियोगावसरे न्यायाधिकरणस्याधिकारिणां पुरः निर्भयभावेन सत्यमवलम्ब्य यत् स व्याजहार तत् तत्रस्थितेषु

सर्वेष्वपि न्यायाधिकारिषु हृदयस्पर्शकारिणं प्रभावं स्थापयामास। भणितं तेनाहमस्मि निर्दोषः सर्वथा; कामं ममाधिकरणिका अपराधिनं घोषयेयुः; जगत्यामेतस्या मेका सर्वनियन्त्रणकृच्छक्तिरपि सततं जागर्ति; मन्ये, तदभितममेतदतः कष्टानि सहित्वैवाहं नैजाभीष्टलक्ष्यमधिगन्तुं प्रभवेयमिति तर्कयामि। कारागरे स मनस्विमनीषी तीव्रा असह्या वेदनाः सहमानोऽपि संसाराहृतं गीतारहस्यं नाम विद्वन्मूर्धन्यानामपि परमप्रियं ग्रन्थमररचत्।

लोकमान्यं तदेवाप्रीणात् यद् भारतश्रेयसे कल्पते। सः कर्मणि श्रद्धत्तेस्म। पुण्यपत्तने (पूना) १६१६ तमेशवीयेऽब्दे भारतीयस्वायत्तशासनसमितिस्थापनानन्तरं सः सर्वमपि मतमेदं विस्मृत्य लखनऊ नगरे समायोजिते राष्ट्रियमहासभाधिवेशने पुनः स्वकीयं सहयोगं प्रदत्तवान्। त्यागतपः प्रभावेण स तत्र मृदुलविचारवतां शक्तिं मन्दी चकार। महासभायां तस्यैव प्रभुत्वं स्थापितमभूत्। तत्साहाय्येन तत्र स्वराज्याधिगमनाय विशिष्टः कार्यक्रमो विनिरधार्यत। साम्प्रदायिकस्यैक्यस्य प्रयोजनेन कृतस्तदीयः स महानुपक्रमो भाविनि काले परमसहायकः सिद्धोऽभूत्।

लोकमान्यः परपीडाया अपनयनाय स्वसेवामनिशं समर्पयामास। तस्य हृदय मत्युदारमासीत्। न स जनतायामेकस्यापिजनस्य दुःखं सोढुमशकत्। स महान् प्रियजनाराधनः प्रधीप्रवरश्चेत्क्वापि संहारकारीरोगः प्रसृतोऽस्ति तदातद्रोगाज्जनान् मोचयितु मधावत्। एकदा पुण्यपत्तने महामारी पुस्फोट। तस्याः प्राणग्राहिण्या रुजायाः प्रकोपात् सर्वत्र नगरे हाहाकारोऽभवद् व्याप्तः। वैदेशिकं शासनं तत्प्रतीकाराय मनागपि नाचेष्टत। तत्त्वतितरा मुपेक्षामेव दर्शयामास। तादृशे दारुणे काले सः तिलक एवासीद्यः स्वान् असून् करतलस्थान् विधाय तस्माद् भयानकाद् रोगाज्जनतां मोचयितुं भृशं प्रायतत। वस्तुत स्तिलकनीकाशान् महानुभावांस्तपस्विन एव लक्ष्यीकृत्य केनापि कविनासत्यमुक्तमिदम्—

ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीमदो
व्याग्रा ये च परोपकारकरणे हृष्यन्ति ये याचिताः
स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भै रिव सुस्थिरैः कलिभरक्लान्ता धरा धार्यते ॥

श्रूयते यत् तदानीं केनापि जनेनाज्ञातेन रैण्ड नाम्नः कस्यचनाधिकारिणो वधः कृतः। तस्मिन् दुष्कार्ये लोकमान्यस्यापि योग इति प्रतर्क्य तद्देशसेवायां रुष्टं शासनं तस्मिन्नप्यशङ्कत। तमप्यष्टादशमासभोग्येन कारावासदण्डेन दण्डयाम्बभूव। दण्डस्य तस्य विरोधाय स्थाने स्थाने विरोधसभाः बभूवुः। सम्मान्यैः पुरुषैः शासन मन्वरुध्यत तं कारागारादुन्मोचयितुम्। परं न तन्नोद्योगे सफलता लब्धाभूत्।

यदा आंग्ल शासनकृतेन कठोरेण दमनेन पञ्चाम्बुवासिनोऽन्यपीड्यन्त अहन्यन्त च तदा स एव प्रदेशो न समग्रोऽपि देशो घोरं क्षोमं प्रकटीचकार। जनकदर्थनाद् दुःखितो भूत्वा सः करुणासागरोऽमृतसरमाजगाम। तत्र च पीडितानां सहायताञ्चकार शासनञ्च भृशमभर्त्सयत्। खिलाफताख्यान्दोलने साहाय्यं प्रदातुं यवनान् सर्वथैवा-श्वासयामास। परं, महात्मा गान्धी यदैव तदर्थं प्रचक्रमे तदैव हा, तं महान्तं मेधाविनं विद्वद्वन्दितं प्रकाण्डपाडित्यवन्तं देशभक्तं जननायकं ३१. ७. १६२० तमदिनाङ्के दुर्दैवविधानं स्वर्लोकमगमयत्।

स लोकमान्य तिलक आसीद् यः स्वराज्यमस्माकं जन्मसिद्धोऽधिकार इत्येत-त्स्वातन्त्र्य मूलमन्त्रं सर्वमपि भारत मपीपठत्। सः तिलक एवासीद् यः कर्मयोग परकं गीतारहस्यं प्रणीय लोकं कर्माचरणोन्मुखं कृतवान्। तिलकस्य सेवा श्चतुर्मुख्य आसन्। सामाजिके धार्मिके राजनीतिके शैक्षणे च क्षेत्रे सः स्वकीया अनुपमाः सेवाः समर्पयन् सदैव दृष्टोऽभूत्। स देशस्याधिभौतिक माधि मानसिक माध्यात्मिकञ्च बलं वर्धयामास। तत्र यादृशोगुणसमवायोदृष्टोऽभूत् तादृशोनान्यत्र समवाप्तोऽजायत। सः सुयोग्यो विद्वद्वरोऽद्भुत राजनीति विचक्षणो भारतीयसंस्कृतिसमुन्नायकः प्राच्यप्रतीच्य-शास्त्रपारदृश्वा गणिते दर्शने च प्रकाण्डपाण्डित्य मभजत्। आश्चर्यजनकं च स त्रिवेकं पर्यपुष्णात्। जनता तस्मिन् लोकोत्तरं तेजोददर्श। सा तं 'भगवान्' इत्येतेन सम्बोधनेन सम्बोधयामास। तस्य मनस्विनस्तपस एवेदं पुण्यं फलं यत् साम्प्रतं भारतं स्वतन्त्रे समीरे सानन्दं श्वसिति। तिलकस्य जीवनं स्मारयतीदं तथ्यम्—

चलन्ति गिरयः कामं युगान्तपवनाहताः।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः॥

अधः स्थितैः श्लोकैः पुण्यश्लोकस्य तस्य श्रीचरणेषु सादरमभिवादनं समर्प-यामः—

पुण्यं प्रशस्यं दोषघ्नं दुःखशोक विनाशकम्।
चरित्रं लोकमान्यस्य सर्वथाशुभकारकम् ॥१

सौजन्यशालिनि समुज्ज्वलचारुवृत्ते
यस्मिन् मनीषिणि गुणा वहवः प्रकृष्टाः
वासं विधाय नितरां मुद माप्तवन्तः
तं नौम्यहं भरतभूप्रियसूनुरत्नम् ॥२

भीतो वभूव सुमति र्न हि सङ्कटेभ्यः
कुर्वन् स्वकीयभरतावनिमातृसेवां

न्याय्यात् पथो नयविदामभिवन्दनीयो
विद्वांश्चचाल न मनागपि धीरधुर्यः ॥३

रीतिश्च का शुचितमोऽथ च कोहि मार्गः
कर्त्तव्यमस्ति विमलं भुवि कश्च धर्मः
इत्यत्र सः सुचरितोऽतितरां विवेद
आसीत् स हंस इव भूभुवने विवेकी ॥४

भक्तो भवन् भुवि बभौ जगदीश्वरस्य
ज्ञानेऽनिशं स रमते स्म च कर्मयोगी
लोकाभिरामतिलकं तिलकं बुधानां
श्लाघामहै हि विधिना कतमेन वंद्यम् ॥५



# महामनाः पण्डित मदनमोहन मालवीयः

भारतीयताभित्ति यैंश्चेतोहरैश्चित्रै रलङ्क्रियमाणास्ति तेष्वेकतमं चित्रमीदृशं शोभते यस्योपमानं तदेव वर्तते। तस्मिंश्चित्रे यो महान् पूरुषश्चित्रितोऽस्ति सः शुक्लेनांशुकेन, समुज्ज्वलोष्णीशेन, ग्रीवायां सव्यापसव्यभागयो र्लम्बमानेन शुभ्रेण प्रावरणेन, तेजस्विन्याननमुद्रया, उन्नतेन ललाटेन. उदारयादृष्टचा, अनवद्येन हृदयेन, विद्वज्जगद्बन्दितया च प्रतिभया सर्वदैव विश्वस्य मानसं जहार। सोऽस्ति न सम्प्रति, परं नैजाध्यात्मिक्या सत्तया स भारतस्य कणे कणे कौति। सः प्रतीच्याँग्लविद्यायां सन् अपि महान् विद्वान् संस्कृतसाहित्येतिहासदर्शनशिक्षासंस्कृतिधर्मशास्त्रादौ च परामेव विद्वत्तां न्यदधात्। क्रान्तेः शान्तेश्च स्थितिस्थलत्वात्, स विचित्र एव भूत्वा भुवि विबभौ। व्यक्तिः समाजश्चोभावपि ततः कल्याण मविन्देताम्। तस्मिन् यथा जनतारज्यत् तथैद नृपतिरपि। आसीत् स भारतीयतायाः सर्वस्वम्। भारतस्यात्मा वस्तुतस्तद्रूपं गृहीत्वा भूभुवनेऽवातरत्। अतिद्वयो हि सः पुण्यश्लोको महामनाः पण्डितमदनमोहन मालवीय इत्येतयाभिख्यया विख्यातोऽभवत्।

श्रीपण्डितमदनमोहनमालवीय एकषष्ठ्यधिकाष्टादशशततमेशवीयवर्षे तीर्थराजप्रयागे समुदपद्यत। सः प्रयाग मधिवसन्नेव शिक्षा मानर्ज। 'म्योर सेण्ट्रल कालेजात् बी. ए. इत्येतमुपाधिं प्राप्य वसु वसु वसु सुधांशु रन्वैस्तवत्सरे राजकीय विद्यालये शिक्षकपदस्य गरिमाणं वर्धयन्नवालोक्यत। तत एकनवत्युत्तराष्टादशततमेशवीयाब्दे प्राड्विवाग् भूत्वा त्रिनवत्यधिकाष्टादशशतमेशवीयाब्दात् प्रयागस्य प्रमुखन्यायाधिकरणे प्राड्विवाक्त्वं कर्तुमारभत।

मालवीयस्तु परं भारते भारतीयतां त्रातुं वर्धयितुं च किञ्च वैदेशिकशासनसमुत्पादिताभ्यो विपद्भ्य उद्धतुं स्वदेशं, भगवता प्रहित आसीत्। तस्मादचिरादेव सः प्राङ्विवाक्तां परित्यज्य देश-सेवायामात्मानं न्ययुङ्क्त। लोकप्रियत्वात् सः १९०२ तमेऽब्दे संयुक्तप्रान्तीय (उत्तर प्रदेश) परिषदः सदस्यत्वेन गृहीतोऽभवत्। द्वादशाधिकैकोनविंशतिशततमेशवीयाब्दं यावत् सः सततं स्थानं तद् विभूषयाम्बभूव। ततश्च सः शासनप्रतिनिधिभूतसाम्राज्य परिषदः सदस्यो बभूव। एकोनविंशत्यधिकैकोन विंशतिशततमेशवीयाब्दं यावदसौ, तत्पदमलञ्चकार। देशस्य परतन्त्रत्वान्न सा सुवर्णोच्चासन्दिकासीनता तस्मा अरोचत। भारतम्प्रति आंग्लशासनाङ्गीकृतनीत्यानुदिनं भारतीयाः सर्वविधतया दरिद्रतां गच्छन्तोऽदृश्यन्त; अतः श्री मालवीय माङ्ग्लानां सा

कुत्सिता नीति निंतरा मदुनोत् । रौलटाधिनियमात् सः परिषदः सदस्यतां हित्वा आंग्ल शासनं निन्दंस्तत्कठोरतापूर्वक मालौचयामास ।

षड्विंशत्यधिके कोनविंशतिशततमेशवीयाब्द एव सः पुनः विधानसभायाः सदस्यो बभूव; तदानीमेव पण्डित मोतीलाल नेहरू स्वराज्यसंघं प्रतिष्ठाप्य तद्द्वारेण तत्र प्रविवेश । तेष्वेव दिवसेषु राष्ट्रियपक्षस्य च जन्माभवत् । आसीन्मालवीयस्तत्प्राण-भूतः । पश्चाम्बुसिंहः श्री लाजपतरायो मालदीयस्य पक्षं पर्यपुष्णात् । अखिलभारतीय राष्ट्रियमहासभाया स्त्रिविंशे दिल्लीमहाधिवेशने मालवीयोऽध्क्षयपदेऽभवदासीनः । देशस्य जनता येनोच्चतमेन सम्मानेन तं महर्षिकल्पं पूजयितु मशकत् सा तेन सम्मानेन सादरं तमानर्च ।

मालवीयमहाभागः सनातनधर्मं सर्वदैव समरक्षत् । इंगलेण्डेऽपि सः स्वदेशस्य, स्वकीयाया भारतीयतायाः, स्वपुरातनपरम्परायाश्च मर्यादां साधुतया कठोरतया च अगौप्सीत् । वर्णव्यवस्थायां, मूर्तिपूजायां, शुचितायां, श्रुति स्मृतिशास्त्राभिहितेषु विधि निषेधेषु च तस्य दृढीयसी निष्ठासीत् । स तथाऽऽचरद् यथा भारतीयानामृषिमुनीनां गौरवं परिपुष्टता मुपेयात् । सत्ये सः सदारज्यत् दम्भे चाजुगुप्सत । स वस्तुतस्त ज्जीवन मुवाह येन भारतस्याचारविचाराः, भारतस्य धर्मः, तस्य संस्कृतिसभ्यते च रक्षां परिपोषणं च प्राप्नुयुः ।

मालवीयो देशस्य परतन्त्रताशृङ्खलां छेत्तुं कारागारनिवासकष्टमपि सेहे । स तेषु भारतभक्तेष्वासीद् ये न केवलं परराजनीतिकुटिलतामभैत्सुः परं समाजे सन्निविष्टाः कुरीतीरपि अच्छैत्सुः ।

मालवीयस्य देशसेवाः आसन् बहुमुख्यः । स हिन्दू विश्वविद्यालयं प्रतिष्ठाप्य देशे जीवनोपादेयानां कलाविज्ञानायुर्वेदादिकानां विविधानां भूयसीनां च विद्यानां प्रसारं कृतवान्; संस्कृतविद्यालयान् प्रतिष्ठाप्य प्राच्यविद्यांपुनरप्यजीवयत् । गोशालानां स्थापनां कृत्वा सः पयस्विनीनां रक्षां सम्यग् विदधाति स्म । देशवासिनः स्वदेशभाषा-भक्ता भवेयुस्ते स्वकीये जीवने दैनिकेषु व्यवहारेषु स्वां भाषामेव व्यवहरेयु स्ते स्वदेश-भाषाया मुच्चतमञ्च साहित्यं सर्वथा रक्षेयु रित्येतदर्थं स महान्तं प्रयास मकरोत् । तत्कृतस्य प्रयत्नस्यैव फलमिदं यदद्य हिन्दी राष्ट्रभाषा भूत्वा विभाति । स देशस्य चतुरस्रं विकासं द्रष्टु माचकाङ्क्ष । सः स्वकीयान् देशवासिनः शरीरेण स्वस्थान्, मनसोदारान् आत्मना च बलवतो विलोकयितुं बलवती मुत्कण्ठां निदधौ । तदर्थमतः स क्रियात्मकमुद्योगं विदधौ । दुःखेभ्यो दुःखितानुन्मोचयितु मशिक्षितान् अशिक्षाध्वा-न्तादुद्धर्तुं दासतातो देशं निःसारयितुं च द्वारे द्वारे ज्ञानालोकसंवर्षणनिर्मित्तेन भिक्षामपि चरितुं नात्रपत । सः परपीडां स्वपीडा ममन्यत । आश्चर्यं मसौ स भिक्षु

रपि दाता, अतरलोऽपि महानायकः स भिक्षया यदवाप्नोत् तत्सर्वमेव देश सेवायामेव सर्मपितवान् तमधिकृत्य केनापि सत्यमेवोक्तम्—

त्यक्त्वा सुरवैश्वर्यं विलासचिन्तां
राष्ट्रस्य सेवाव्रतमादधार
सनातनं धर्मं मथ स्वजातिं
सिषेव एतौ पितरा विवैव ॥

वार्द्धक्य योगेऽपि युवेव योगी
कुर्वन् स्वधर्मव्रतजातिसेवां
निनाय कालं कलकीर्तिकान्तो
महामनाः पण्डित मालवीयः ॥

हिन्दू विश्वविद्यालयस्तु मालवीय महाभागस्य सर्वस्वमेव । तदर्थं सोऽजन्य जीवच्च । अस्ति तदीयोऽयं विश्वविद्यालय एशिया महाद्वीपस्य लोकोत्तर आलोकः । तस्य विद्याप्रेम विश्वविद्यालयस्याकारं निधाय जगति सजीवं सद् विभ्राजते ।

मालवीयो महान् विपश्चिदासीत् । भाषमाणोऽसौ कमपि सद्ग्रन्थं श्रावयन्निव प्रातीयत । तद्वक्तृतायां श्रोतारो मन्त्रमुग्धा इव अजायन्त । संस्कृत हिन्द्यंग्रेज्यादि साहित्ये तदीयः समानोऽधिकार आसीत् । विश्वविदितेषु व्याख्यानकर्तृषु सोऽन्यतमो वक्ता मतो ऽभवत् । तस्य वाचायां माधुर्य भोजः प्रसादश्च त्रयोऽपि गुणा विलसन्तिस्म । तत्र अगाधं वैदुष्यं भवदुत्तरलं चकास्ति स्म । सभा-विद्यालयन्यायालय-राज्यपरिषत्सार्वजनिकमञ्चादिषु यदा सः समभाषत तदा तत्र तत्र नवीनैव चेतनावीचि रुदप्लवत । तत्र सरस्वती स्मेरानना भवन्ती व्यराजत । तद्भाषणं न्यायाधीशानां लेखनीं प्रतिहतगतिकां चकार । राज्यपरिषद स्तन्निशम्य 'जयतु जयतु भारतीयता' इत्येतदुच्चैर्न्ध्वन्त्योऽश्रूयन्त ।

मालवीयश्छात्रेषु विद्वत्सु च महाननुक्रोशवान् आसीत् । सश्छात्रवृत्ति दापयित्वा छात्राणां सहायकोऽभवत्; निर्धनांश्छात्राञ्छिक्षा शुल्कान्निर्मुक्तान् कारितवान् । तत्सविधे समागतो विद्वान् पूर्णतयाऽऽदृतोऽभवदभवच्च पूर्णकामः । स इव परोपकर्त्तैव नादृश्यत । कदोपकारस्य शुभावसर उपनतः स्यादित्येतत्सः प्रतीक्षमाणोऽवातिष्ठत । नक्तं स्याद् वा दिवा; निदाघः स्याद् वा प्रावृट्, हिमपातः स्याद् वा करकाणांपातः सः सन्ध्यावन्दनस्वाध्यायाद्याध्यात्मिकेषु कृत्येषु न प्रमादमदर्शयत् । न सः स्वजीवनं धर्मपथात् कदापि क्षणमात्र मप्यस्रंसयत् । न कदापि कर्त्तव्येभ्यो मुखं व्यावर्तयत् । निधायापि नितरां संलग्नं जीवनं, भूत्वापि गुरुगुरुतरेषु कार्येषु निलीनोऽसौ साधारण-

तमस्यापि मानवस्यार्तिं क्रन्दनं वा न कदाप्युपेक्षाञ्चक्रे । ग्राहग्रस्तं गजं हरिरिव सः तमुद्धर्तुं मचेष्टत । मालवीयो मम प्रार्थनां प्रत्याख्यातवानिति न कस्याप्युद्गारः श्रुतोऽभूत् । वस्तुतस्तादृङ् मृदुलमनास्तादृगुदारस्वान्तस् तादृक् कर्त्तव्यपरः पूरुषो नाधुनिके युगे कदाचिदेवान्यः कोऽपि समुद्बभूवेति मन्ये ।

न नृपत्वं दुर्लभं, न नेतृत्वं वा विद्वत्त्वं वा स्वस्थत्वमपि दुरवापं यदि किमप्यस्ति दुरासदं तदा तदस्ति मानवत्वम् । यस्मिन् मानवे मानवत्वं वसति स एव मानवः श्रेष्ठस्तत्तुल्यो न कोऽप्यन्यो भवितु मर्हति । मालवीयं सर्वाङ्गीणतया मानवत्वमध्यवसत् । सः सर्वत आदौ मानव आसीत्, ततश्च पण्डितो नेता समाजोत्थापको देशभक्तो वक्ता वा प्राड्विवाको, मानवेषु मानवोभूत्वा स व्यवाहरत् । 'आत्मवत् सर्वभूतेषु' इत्येष भावस्तत्र चरितार्थीभवन् व्यालोक्यत । स आधुनिकीं जनताम्प्रति तुलसीदासप्रणीतं रामायणमित्रा सिद्ध्यत् । शतशस्तत्सान्निध्यात् स्वजीवनमत्युदग्रं कर्तुमपारयन्; भूयांसोऽसत्पथात् सत्पथमयासिषुः । प्रचुरास्तदुपदेशात् तमसः प्रकाश मागमन्; पुष्कलास्तन्निर्देशवलेन जगति दारिद्र्यकष्टान्मुक्ता भूत्वा धनवन्त ऐश्वर्यवन्तश्च सञ्जाताः । अनेके तदाशिषमवाप्य भुवि यशस्विनोऽभूवन् । वस्तुतः सः कल्पतरु रासीत् । यो यं मनोरथ मादाय तदभ्याशे जगाम, तस्य स मनोरथः पूर्ण एवाभवत् । अद्य सनातन धर्मस्य यः स्वरः श्रूयते तत्र कारणं तदीयं तपः । तासु प्रचण्डासु वात्यासु सनातनधर्म पोतं नैमग्न्याद् या शक्तिः पातुं प्राभवत् सासीत् सनातनधर्मस्यात्मा किं वा महामनसो मालवीयस्य सेवा-कूपदण्डः ।

प्रत्यासन्नायां सत्यां स्वतन्त्रतायां पाकिस्तानदेशो भारतीयेषु परमनिन्दनीयान् दारुणान् नृशंसानत्याचारान् व्यदधात् । स भारतीया बालाः अपाहरत्, स्तनंधयान् निर्दयतया जीवत एवादहत्, सहस्रशो हिन्दु कुलोद्भवान् वलाद् यवनधर्ममग्राहयत्; भूयसश्च कर्कशतयावधीत् । नोआखाल्यादिस्थानेषु तत्कृता दुराचारा मालवीयस्य मृदुलं मानसमभैत्सुः । मानवानामुपरि सञ्जातात् राक्षसीयात् तस्मादत्याचारात् 'हा हा' इति कृत्वा यन्मौनं सोऽशिश्रियत् तत् पुनः स नाजहात् । मन्ये, त्वयि सति प्रभो, किमिदं घटत इत्येतद् वक्तुं स भगवन्तं शरणं प्रापद्यत । सः सम्प्रत्यस्मासु न, परं स एतावतीः साकाराः स्मृतीः विमुच्य प्रयातोऽस्ति यत् कदापि न निराकारो भवितु मर्हति । स्वर्लोकस्थितेऽपि तस्मिंस्तत्प्रतिष्ठापितो विश्वविद्यालयः स्वेन लोकोत्तरेण प्रकाशेन संसारं सत्पथारूढं कर्तुं मनारतं प्रयतिष्यत एव ।

प्रावर्धयद् भारतवर्षमानं
संसारमध्ये च सनातनं यः
सम्पोषयन् धर्ममहो मनीषी
तं नौम्यहं पण्डितमालवीयम् ॥१

निर्व्यामोहो निर्मदो निष्प्रपञ्चो
निर्दम्भोऽसौ निर्भयो निश्चलश्च
विद्यातीर्थं नीतिविन् मानवानां
केषां नासीद् देशभक्त्येकहेतुः ॥२

ज्ञानाम्भोधिः सज्जनोऽसौ तपस्वी
क्षोण्यां श्रेष्ठो ब्राह्मणो ब्रह्मवेत्ता
सानुक्रोशः सन्ततं निःस्ववृन्दे
त्यागोद्दीप्त स्तेजसामर्णवोऽभूत् ॥३

दुःखेऽदुःखे काञ्चने मृत्तिकायां
मित्रेऽमित्रे कानने वा पुरे वा
विद्वान् दृष्टिं निर्विशेषां दधानो
ऽभूल्लोकेऽस्मिन् योगवित्सन्निकाशः ॥४

न्याये निष्ठा तस्य विज्ञस्य रेजे
शम्भौ भक्ति र्दिद्युते तत्र नित्यं
नूनं मान्यो मालवीयो मनस्वी
जातोऽत्रासौ साम्यदर्शी मनीषी ॥५



# गोपालकृष्ण गोखले

अस्त्येकोनविंशतमं शतकं भारतीयेतिहासस्य परमाभिरामगौरवश्रीसुन्दरशतकम् । अस्मत् प्रियभारतवर्षे तस्मिञ्छतके अरविन्द-रवीन्द्रनाथ-विवेकानन्दादिका अनेके महान्तः पुरुषाः स्वभारतमातुः सेवायै अवतेरूः । तेषु महापुरुषेषु एको हि एतादृङ् महान् मेधावी मानवः सञ्जातो यः स्वामभिरुचिं श्रीमद्भगवद्गीतायाः—

[क] 'तस्मादसक्तः सततं कार्यं कर्म समाचर'

[ख] 'भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात्'

[ग] 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः'

इत्येतदादिवाक्येषु नितान्तमेव प्रगाढां निदधौ । अतएव सः कर्मण्येव व्यापृतोऽदृश्यत । तत् कर्म मां मानं प्रतिष्ठां कीर्तिं धनमतुलमैश्वर्यञ्च नयेदित्येतत् सः कदापि न व्यचिन्तयत् । तं प्रशंसन् तत्कालवर्तिश्वेताङ्गशासनप्रतिनिधिः कर्जन एकदा व्याजहार—

'सः सुयोग्योमेधावी भारतीयो मया स्वकीयेऽत्रत्ये जीवने प्राप्तः, न तादृगलोभः-कर्मण्यः साधुः कश्चिदन्योविलोकितः' ।

महाभागः कर्जनस्तं कस्मिंश्चिदुच्चतरे पदे प्रतिष्ठापयितुमचीकमत परं सः स्वजीवनोद्देश्यम्प्रति तत्पदमुचितंनामंस्त, तस्य मनस्विन स्तु तत्पदमवाप्तुं परमौत्सुक्यं समिद्ध मासीद् यत्र मानवजीवनं याथार्थ्येनान्वर्थतां याति । तत्र वैदुष्य मद्भुत मवर्तत; प्रतिभा अलौकिकी अशोभत; कार्यशक्तिर्बलीयसी भूत्वा समतिष्ठत; स्फूर्ति रसीमा प्रास्फुरत्; व्युत्पत्ति रनवद्या व्यद्योतत; उत्साहश्च प्रबलो व्यराजत । न कदापि सः कस्मिन्नपि व्यसने आसक्तोऽवाप्यत । क्रियाविधिज्ञता मदीर्घसूत्रतां च सोऽजस्रं पर्यपुष्णात् । एतेषाँ गुणानामेव सद्भावात् सोऽष्टादशेऽब्दे स्नातको, विंशे प्राध्यापयिता, एकविंशे पत्र-सम्पादकः, पञ्चविंशे प्रादेशिकसम्मेलनस्य मन्त्री, एकोनत्रिंशे राष्ट्रियमहासभाया मन्त्री, चतुस्त्रिंशे प्रादेशिकविधानसभायाः सदस्य, श्चत्वारिंशे केन्द्रीयशासनस्य ( साम्राज्यात्मकस्य ) कूटमन्त्री च बभूव । स आसीद् भारतभू-विभूति र्गोपालकृष्ण गोखले ।

गोपालकृष्ण गोखले षट्षष्ठ्युत्तराष्टादशततमेशवीयेऽब्दे कोल्हापुरे प्रादुर्बभूव । आस्तां तस्य मातापितरौ न धनवन्तौ । तस्य शिक्षा प्रथमं कोल्हापुरे ततश्च मुम्बय्या-मभवत् । द्वादशवर्षवयस्क एव यदा स आसीत्; तस्य पिता पञ्चत्वं यतः । पितु

दिवङ्गतत। तं वरांकं वराकतरतां निनाय । तस्य मातुः पुरः समस्येयं समुपातिष्ठत् यत् केन प्रकारेण सा तं विद्यावन्तं विदध्यात् । तस्मिन् सङ्कटकाले तस्या ज्येष्ठो भ्राता सहायको बभूव । तत्साहाय्यबलेन गोखले उच्चतमां शिक्षामर्जितुं शशाक । यस्मिन् वयसि प्रायेण युवानः सामान्यधियःकिञ्चादर्शिताभ्युदयिकविषयाभिरुचय एव दृश्यन्ते तस्मिन्नेव वयसि सोऽल्पीयसि किमप्यद्भुतमेव व्युत्पन्नत्व मदीदृशत् । पुस्तकानि तस्य मित्राण्यभूवन् । सः सदैव स्वाध्यायरत एवावलोकि । शिक्षार्जनानेहसि यत् पुष्कलं साहित्यं सोऽधिजगे तत् तस्य छात्रजीवने सति व्यतीते परमोपकारक मसिद्ध्यत् ।

गोखले गोपालकृष्ण इतिहासेऽनुरागविशेषं दर्शयामास । न तस्य कण्ठस्थीकरणं तस्मै रुरुचे । अतस्तत्तद्घटनानां काले न सः स्वकीयं ध्यान माचकर्ष । स्वस्य व्यक्तित्वस्य, समाजस्य, देशस्य, विश्वस्य च कृते यादृशमितिहासविषयकमध्ययन-मपेक्ष्यते स तादृश एवाध्ययने मतिं निबबन्ध । यूरोपीयेतिहासे न महतीं प्रीतिं व्याततान । मानवाः स्वस्वदेशस्वातन्त्र्याय कीदृशं महान्त मभिनन्दनीयं प्रयासं त्यागं चानुतिष्ठन्तीति स तत्रत्येतिहासेभ्योऽवबोद्धुं प्राभवत् । अर्थशास्त्रमपि तं भृशम-प्रीणयत् । तत् तमिदमवेदयद् यत् केनप्रकारेण जनाः स्वकीयं देश मर्थसम्पन्नं कर्तुं तस्यार्थिकीं स्थितिं समुत्थापयितुञ्च समर्था भवन्ति । तस्य मनस्याकाङ्क्षेयं बलीयसी भूत्वा जजागार यत् तस्य भारतमपि देशान्तराणीव अर्थसम्पन्नं सर्वविधसमृद्धिसमुल्लसितं च स्यात् ।

गोखले श्लाघनीयां स्मरणशक्तिं निदधौ । स आयासमन्तरेण विदुषां बिचारवतां लेखकपुङ्गवानां च भाषणानि लेखांश्च हृदयस्थीकर्तुं क्षमोऽभवत् । एतद्-गुणप्रभावादसौ सद्भाषणानि कर्तुं लेखान् विरचयितु मांग्लभाषां वश्यामिव विधातुञ्च क्षमते स्म । तदीयाविशिष्टतैषा तं जननायकञ्चकार । बी. ए. परीक्षामुत्तीर्य सोऽष्टादशवर्षवया गोखले कां वृत्तिं श्रेष्ठामवलम्बेत' इत्येतया चिन्तया गृह्यमाणोऽभूत् । प्रथमं सः प्राड्विवाक्ता माश्रयितु मभिलषते स्म परं तद्विधं विचारं तत्याज ततः सोऽभियन्ता (इञ्जीनियरः ) बुभूषतिस्म परं तत्रापि तद्धी र्न स्थातुं शशाक । ततः स भारतीयशासन-सेवा (आई. सी. एस.) परीक्षामुत्तरीतु मिङ्गलेण्ड मजिगमिषत् परं तत्रापि न धियं न्यवीविशत् । शिक्षकतायां स्वां प्रीतिं निधाय दक्षिणशिक्षासमिते राजीवनसदस्यो भूत्वा तत्सञ्चालितासु शिक्षासंस्थासु एकतमायां संस्थायां सः शिक्षको बभूव । विद्यादानात् परं नान्यत् किमप्युत्तमं कर्म । तद्धि देशस्य गुरुतमं सेवाकार्यं मिति मत्वा सोऽल्पामेव भृतिं परिगृह्य द्वाविंशतिवर्षाणि आचार्यत्वं कृतवान् । वेतनस्याल्पत्वान्न कदापि सञ्चिखेद । तदिष्टमासीत् देशस्य युवसु विद्याज्योतिः प्रज्वा-लनम् । अर्थार्जनन्तु तदभिमतमेव न जातम् । प्रभूतधनराशिप्रदां तु वृत्तिं सः स्वेच्छयैव अजहात् । फर्ग्यूसन कालेजस्यच्छात्रास्तादृशं स्वगुरु मवाप्य स्वभाग्यं धन्यममंसत ।

सर्वेऽपिते तस्मिन्नगाधभक्तिं गुरुतमं च सम्मानं निदधुः । गुरुर्गोखलेऽपि स्वपाठनीय-विषयेषु छात्राणां हृदयान्यत्यर्थं प्रावर्तयत् । तेषु हि सः अध्येतव्यान् विषयान् प्रति सान्द्रामभिरुचिं जनयामास । एतावदेव न, अध्यापयन् स तेषु सेवायास्त्यागस्य देशभक्तेश्च परमोज्ज्वलां भावना मुद्भावयन् समुत्कृष्टतरां नैतिकतां समुत्थापयामास ।

गोपालकृष्ण गोखले मुम्बई विश्वविद्यालयस्य सहयायी (फेलो) भूत्वा तन्निर्माणेऽभिनन्दनीयाः सेवाः समर्पयामास । अद्य तस्य महासंस्थात्वेन दर्शनं यद् भवति, कारणं तत्र तदीयोप्यन्यतमो योगः । सः सम्पादनकार्यमपि विदधौ । तत्पत्रद्वारेण स विवेक-वन्धुरया युक्तियुक्तया च रीत्या तात्कालिकजनताया आर्थिक-राजनीतिक-सामाजिक-समस्याः समाधातुं प्रायतिष्ट । तेष्वहःसु स महादेव गोविन्दरानाडे महाभागस्य सन्निकर्ष मपि प्राप्नोत् । रानाडे, तदानीं महाराष्ट्रेषु ख्यातो नेताऽऽसीत् । स तस्मान्महापुरुषाज्जनतायाः सेवार्थं बलवतीं प्रेरणां प्राप किञ्च कर्त्तव्यपालनाय निर्देशं, सदुद्देश्यलाभाय अजेयमुत्साहञ्च प्राप्तवान् ।

यदा गोखले एकत्रिंशवर्षदेशीय आसीत्, स राजकीयायोगस्य पुरतो भारतव्यय-मधिकृत्य प्रामाण्यं प्रदातु मिङ्गलेण्डं जगाम; स्वकीये वक्तव्यविषये निष्णातत्वात् तस्य, तत्प्रदत्तं प्रामाण्यं परममूल्यवदसिद्धचत् स तदेंगलेण्डवासिनामग्रे भारतीयानि कानिचन कष्टानि च न्यदधात्; केनविधिना तानि विनिवारितानि भवितु मर्हन्ति तञ्चोपाय मदीदृशत् । इङ्गलेण्डतो निवृत्त्य स मुम्बई' विधानसभायाः सदस्यत्वेन वृतो वभूव । तत्र सः समुचिततया वल्गुतया च अनारतं जनाधिकाररक्षायै प्रयततेस्म । महतीं च ख्यातिं पक्षरक्षणीयतायां वक्तृतायां च लेभे ।

गोखले द्वाविंशतिवर्षाणि फर्ग्युसन कालेजे शिक्षकतायाः कार्यं विधाय सर्वविधतया पूर्णतया च स्वदेशस्यकृते सेवामर्पयितुं शिक्षकतात उन्मुक्तिं जग्राह । कालेजादुन्मुक्ति-परिग्रहानेहसि छात्र-प्रदत्तं भक्तिभावित मभिनन्दनपत्रमुत्तरन्नचकथत्—'मदीयान्तःकरणवाणी स्वदेशं सर्वाङ्गीणतयाऽऽराधयितुं मां निर्दिशति । अहमतस्तां सम्मानयन् तत् पुनीततमकर्मण्यात्मानं प्रवर्तयितुकामोऽस्मि । भवतु नाम देशसेवामार्गो निशित-कण्टकप्रत्यवाय समाकीर्णः परमस्माभिः श्रद्धया आशया च महत्या स्वमातृभुव उत्थापनाय प्रयतितव्यम्' ।

सेवाक्षेत्रेऽवतीर्य गोखले देशवासिनां स्वत्वं रक्षितुं प्रायस्यदुच्चतमसभायाम् तदानीं तत्प्रदत्तेषु भाषणेषु तस्याद्भुतं व्युत्पन्नत्वं, कर्त्तव्यम्प्रति जागरूकत्वं, वस्तु प्रतिपादने पटीयस्कत्वञ्च स्फुटतयाभिव्यक्तं भवति । अद्यापि तदीयानि लेखनिबद्धानि-तानि संभाषणानि, तेषामुपयोगित्वात्, अनेके जना उत्सुकतयाधीयते ।

गोखले-प्रतिष्ठापिता भारत सेवक समाजाख्या संस्था साम्प्रतमपि देशहेतोः कार्यकर्तृन्, सृजन्ती दृश्यते । एतस्याः संस्थायाः कार्यकर्तारः स्वसेवाकार्यारम्भात् प्राक् अध्ययने विचारणे च नैजं समयनुपयुञ्जन्ति; कार्यकालेऽत्यल्पवेतनं परिगृह्णन्ति; सात्विकं जीवनं व्रीणन्ति, धृतप्रतिज्ञाः सन्तो भारतहिताय कार्य माचरन्ति ।

१६१२ तमेशवीयवर्षे भारतीयहितसम्पादनाय दक्षिणाफ्रीका मगमद् । गोखले तत्प्रयासेन तत्रत्यानां भारतीयानां स्थितिः सन्तोषावहाभूत् । तस्य सेवा आसन् बहुमुख्योऽतः स ससम्मानं राष्ट्रियमहासभाया अध्यक्षत्वेन च ससम्मानं वृतोऽभूत् । आसीद् देशभक्तो महान् सः । भारतीयाः कुशलतया सफलतया च उच्चोच्चाधिकार-पदेषु कार्यं कर्तुं पारयन्त्यत स्तेषां कृते सदवसरः प्रदेय इति तदीयो दृढविश्वास आसीत् तस्मात् स तदर्थमचेष्टत । सः स्वदेशमपि इङ्गलेण्डादिदेशानिव सुशिक्षितमुन्नतं चादिदृक्षत् । एतदर्थं मसावुच्चतमविधानसभायां प्रस्तावमप्यरिणात् । स ऐच्छत्— तदीयोदेशो विवियोद्योगागारयन्त्रशालाप्रयोगशालादिसमन्वितः सञ्जायेत; येन सोऽपि समृद्धः स्यात् ।

भृशकठोरश्रमकार्यकारित्वाद् गोखले महानुभावस्य मनीषिशिरोमणेर्देश गौरवस्य स्वास्थ्यं द्रागेव क्षीणतां तनुताञ्च प्राप । पञ्चदशाधिकैकोनविंशतिशतत-मेशवीयवर्षे सः स्वं भौतिकं विग्रहं पर्यत्यजत् । तनिधनेन समग्रोऽपिभारतदेशः परमशोकाकुलो भूत्वा रुरोद । तस्य पुनीता स्मृति र्भारतीयानां हृदयाच्चिरं न स्रस्ता भवितु मर्हेत् ।

श्रीगोखले लोकशुभंयुबन्धु
गोपालकृष्णोविदितो मनीषी
संसेव्य राष्ट्रं निजभारतं सः
कालेऽपि वक्रे गुरुतामनैषीत् ।।१

आसीदसावुज्ज्वलचारुवृत्तः
अन्वर्थताश्रीलसितं गुरुत्वं
सः सन्ततं ज्ञाननिधि र्बभाज
देशानुरागोत्तमभावभव्यः ।।२

अर्थेषु चोच्चेषु पदेषु तस्य
नो जातु चित्तं रमते स्म साधोः
मानेच नैश्वर्यवति प्रकृष्टे
नो भौतिके वैभववद्विलासे ।।३

ज्ञानस्य सर्वत्र सुधीः प्रसारं
शुद्धेन भावेन सदेच्छति स्म
तस्मान् मनस्वी शुचिधी-विलासो
आचार्यतां स्वीकृतवान् सहर्षम् ॥४

त्यागस्तदीयो धिषणा तदीया
तीक्ष्णा स्पृहाहीन मनस्तदीयं
विद्यानवद्या शुचितार्जुतापि
आंग्लप्रभूणा महरन्मनांसि ॥५

लोकप्रियत्वं नितरा मगाधं
संलब्धवान् यादृश मत्रदेशे
सः शेमुषीशोभित शीलसेवी
नो तादृशं कोऽपि कदाचिदन्यः ॥६

जातास्मदीया मुदिता तदानीं तं प्राप्य चारित्र्यपवित्रताब्धिम् ।
सूनुं स्वकीयं गुणराजिरम्यं पूज्या जगत्यामिह भारताम्बा ॥७



# राष्ट्रपती राजेन्द्रप्रसादः

महतामात्मनां जीवनं लोकमङ्गलाय कल्पते। ते स्वकीयं निर्मलं जीवनं जनतायाः पुरो निधाय तद्द्वारेण जीवन मादर्शभूतं विधातुं जनतां प्रेरयन्ति। ते यदाचरन्ति तदेवोपदिशन्ति। उच्चतमपदप्रतिष्ठावन्तोऽपि भवन्तस्ते न भवन्युत्सिक्ताः; श्रीमदस्तानुन्मदयितुञ्च कदापि क्षमो न जायते, सन्तोऽपि ते विद्वच्चक्रचूडामणयः सदैव विनयाञ्चिता एव दृश्यन्ते। राष्ट्रपती राजेन्द्रप्रसाद ईदृगेव महान् मानव आसीत्।

राजेन्द्रप्रसादः ३. १२. १८८४ तमेदिनाङ्के विहारप्रदेशान्तर्गतसारनग्रामेऽजायत। तत्र महापुरुषत्वलक्षणं तदीयाद् वाल्यादेव दृग्गोचरं भवितु मारभत। शैशवावस्थाया मेव तस्य स्वावलम्बनप्रियतां किञ्च तीक्ष्णां प्रतिभां विलोक्य गेहे स्वजनाः पाठशालायां च गुरवो नितरा प्रसेदुः। यदा स नववर्षदेशीय आसीत्, हाइस्कूले पठनार्थं प्रविवेश। १९०२ तमेशवीयाब्दे हाईस्कूलपरीक्षायां सः प्रथमश्रेण्यामुत्तीर्णोऽभवत्। उच्चतमां शिक्षां सः कलिकातायां प्राप्तवान्। १९०७ तमेशवीयेऽब्दे स एम. ए. इत्येत मुपाधि लब्धवान्।

शिक्षामधिगम्य राजेन्द्रप्रसाद: १९०८ तमेशवीयाब्दे मुजफ्फरकालेजे आंग्लसाहित्यस्य शिक्षकोऽभवत्। परं तत्र सोऽल्पान्येव दिनानि कार्यं कृतवान्; स तत्स्थानं विहाय कलिकातासिटी कालेजेऽर्थशास्त्रस्य प्राध्यापकतां स्वीचकार। १९१५ तमेशवीयेऽब्दे स विधिशास्त्रविषयिणीम् एल. एल. एम. परीक्षा मुच्चतमायामेव श्रेण्यामुदररत्। ततश्च कलिकातान्यायाधिकरणे प्राड्विवाक्तां कर्तु मारभत। परं न तत्र तन्मनस्तोषमलभत। विधि विद्याया अध्यापनं च ततः सः कृतवान्। छात्रेषु तस्य श्लाघनीयाया स्तत्तच्छास्त्रावगाहिन्याः सुदीप्ताया योग्यताया स्तीक्ष्णायाः प्रतिभायाश्चातितरां प्रभावोन्यपप्तत्। ते तस्मिन् दृढीयसीं भक्तिधियं निवबन्धुः। यतोऽपि सोऽध्यापनं तत्याज तत्रत्याश्छात्रा नैजं दुर्भाग्यमेव परममंसत।

देशस्तस्याविलम्वेनैवसेवामभ्यलषत। सोऽपि देशसेवातः परं किमपि न मेने। प्राड्विवाक्तायां पुष्कलार्थलाभं विदधानोऽपि स तं महान्तमायं तृणाय अवागमत्। वस्तुतो लक्ष्मीरपि राजेन्द्रप्रसादसदृशान् महापुरुषानावर्जयितुं कदापि न समर्था भवति।

श्री गोखले राजेन्द्रप्रसादं भारतसेवकसमाजं–सर्वेण्ट्स ऑफ इण्डिया सोसायटीं–सम्भावयितु माजुहाव। परमाकाङ्क्षन्नपि तन्निमन्त्रणं स्वीकर्तुं न प्रबभूव। चम्पारन-यात्रायां प्रवृत्तं महात्मानं गान्धिनं सोऽनुवव्राज। १९२० तमेशवीयवर्षे म० गान्धी स्वकीयस्य देशस्य विपदोऽपहर्तुं तस्य पारतन्त्र्यनिगडमुच्छेत्तुं, वैदेशिकशासननिपातितेभ्योहि सर्वविधेभ्यो दारिद्र्येभ्यो राष्ट्रं स्व मुद्धर्तुञ्चान्दोलनं प्रवर्तयाम्बभूव। राजेन्द्रप्रसादो देशाराधनोद्देश्येन तस्मिन्नान्दोलने आत्मानं न्ययूयुजत्।

राजेन्द्रप्रसाद-कृता देश-सेवा क्षिप्रमेव जनतामाचकर्ष। स लोकप्रियतां गतः। जनतायास्तस्मिन् श्रद्धाधीः समुदपद्यत। सः शीघ्रमेव विहारप्रदेशीयमहासभायाः सभापतिपदे प्रत्यष्ठाप्यत। राष्ट्रिय महासभायाः कार्यकारिणी च तं सदस्येषु स्वकीयेषु समावीविशत्। १९२२ तमेशवीयेऽब्देऽखिल भारतीय महासभायाः स मन्त्रित्वेन वृतोऽभवत्। त्रिविंशत्यधिकैकोनविंशतिशततमख्रैस्तवर्षे देशगौरवभूतं नैजदेशभाषोत्थापनपरं तं हिन्दी साहित्यसम्मेलनस्य सभापतिं देशवासिनः कृतवन्तः। १९२८ तमेशवीयवर्षे कृषीवलानां सेवार्थं ब्रह्मा (वर्मा) रव्यं देशं जगाम। १९३० तमेशवीयवर्षे अभियोगविशेष मुद्दिश्य हरिवर्षम् (इङ्गलेण्डम्) इयाय। तत्र च तदानीं प्रतिनिधिर्भूत्वा अनेकराष्ट्रसंयोजिते युद्ध परिपन्थिनि सम्मेलने समाविष्टो बभूव। तदा तत्कृत-भाषणमाकर्ण्य निखिलाप्युपस्थिता जनतातितरामप्रीयत। दुर्हृदो हि क्व न। आस्ट्रियायां फासिस्टवादी कश्चिदुद्धतस्तं हन्तुं प्रचक्रमे परं भगवत्कृपया जीवनरक्षाभवत्। विश्वनवयुवकसम्मेलने भागं परिगृह्य स ततः स्वदेशं निववृते।

तदानीं देशे सविनयावज्ञान्दोलनं वेगेन प्रवर्तमान मासीत्। आङ्ग्लशासन मान्दोलनं विफलीकर्तुं जनताया धर्षणाय दलनाय निपीडनाय निग्रहणाय च कठोरतया व्यापृत मासीत्। देशभक्तो राजेन्द्रप्रसादो निर्भीकभावेनोत्कटसाहसेनोद्भटोत्साहेन च अमानुषानत्याचारान् विरोद्धुं सहर्षमात्मानमान्दोलने प्रावीवृतत्। तस्य सा महती सेवा तत्प्रदेशवासिनो नितरां प्रेरयामास। विहारप्रदेशवासिनां तदीया देशसेवा देश-प्रेम गङ्गां समचारयत्। वैदेशिकं शासनं तदीयनि देशसेवापराणि कार्याणि भृशमघूनयत्। सः १९३० तमेशवीयवर्षे षण्मासभोग्येन कारावासदण्डेन दण्डितोऽभवत्। देशसेवापराधे सः सकृदेव न, असकृददण्ड्यत।

राजेद्रप्रसादस्य नेतृत्वे विहारप्रदेशोऽपि प्रदेशान्तरमिव पथप्रदर्शकोऽसिद्ध्यत्। १९३४ तमेशवीयवर्षे विहारप्रदेशे भीषणभूकम्पोऽघटत। सहस्रशो मानवान् कालः कवलीचकार। जनाः सहस्रश्चासहायाः अभूवन्। तेषां सविधे भोजनार्थमन्नं, शरीरावरणार्थंवसनं, निवासार्थं चावासो नासन्। तस्मिन् महासङ्कटकाले राजेन्द्रप्रसादो दीनदुःखितानाथादीनामतितरामेवाभिनन्दनीयां सेवां चकार। पञ्चविंशतिलक्षरूप्य-

काणि संगृह्य तानि जनजनार्दनसेवायां सादरं प्रायूयुजत् । न भारतं तदीयामिमा मप्यविस्मरणीयां सेवां कदापि विस्मर्तुं शक्नुयात् । अस्मिन्नेव चतुर्स्त्रिषदुत्तरैकोनविंशति-शततमेशेवीयवर्षेऽखिलभारतीयराष्ट्रियमहासभाधिवेशने सः सभापति पदे प्रतिष्ठापितो-ऽभवत् । तस्याधिनायकत्वेऽधिवेशनं तत् सर्वथैव सफलतामगात् । कुशल कैवर्तक इव राष्ट्रपोतं प्रचण्डवात्यायां प्रवृत्तायामपि तमसाक्रान्तायामपि कुवेलायां स तटं यावन्नेतुं लोकवन्दनीयं प्रयासमन्वतिष्ठत् ।

१९३९ तमेशवीयवर्षे राष्ट्रिय महासभाया नेतृषु परस्परं विरोधः समुदतिष्ठत् । सुभाषचन्द्रः स्वतन्त्रविचारस्योग्रनेताऽऽसीत् । स महात्मगान्धिप्रभृतिनेतृनपि भृशमुपेक्ष्य डॉ० पट्टाभिसीतारमैयां राष्ट्रपतिनिर्वाचनानेहसिव्यरौत्सीत् । फलमिद मजायत सुभाष-चन्द्रो राष्ट्रपतित्वाप्तौ सफलोऽभवत् । परमचिरादेव स तत्पदपरित्यागाय अबाध्यत । तस्यां विषमायां स्थित्यां राजेन्द्रप्रसाद एव राष्ट्रपतित्वं स्वीचकार । वस्तुतः सा गम्भीरा परिस्थितिस्तादृशमेव सुयोग्यं विवेकवन्तं श्रमप्रियं कर्मठं नेतारमपेक्षाञ्चक्रे । न तं विहाय कोऽप्यन्यः कदाचिद् घोरकलहावर्तनिमग्नां संस्थातरीमुद्धर्तुं क्षम आसीत् । सः श्रमेण धैर्येण सत्साहसेन चापतितां दुःस्थितिं विनिवार्य पुनः ऐक्यं प्रतिष्ठापयितु प्रायतिष्ट ।

द्वितीयस्मिन् विश्वमहासमरे सति प्रवृत्ते आंग्लशासनं राष्ट्रिय महासभाया विरोधित्वात् तस्याः सर्वानपि प्राग्रहरान् नेतृन् कारागृहे प्राक्षिपत् । सति सम्पराये समाप्ते, ह्यांग्लाधिकारिणो नेतृभिः सार्धं सन्धि वार्ता मकार्षुः । अनेककाठिन्यानन्तरं केन्द्रे राष्ट्रिय शासनं स्वकीयां स्थिति लब्धु मशकत् । राजेन्द्रप्रसादो जवाहरलालनेतृत्वे समापन्नस्य स्थायिशासनस्य मन्त्रिमण्डले गृहीतोऽभवत् । अस्मिन्नवसरे देशनेतारो विधानसम्मेलनस्य सभापतित्वेन तं वरीत्वा सादरम् आद्रियन्ते स्म सभाजयन्ति स्म च ।

वस्तुतो देशनेतृषु राजेन्द्रप्रसादोऽनन्यगमेव गौरवमगाहत । तत्र देश-प्रेम, दया च–इत्येतौ द्वौ गुणौ प्रधानत्वेन रेजाते । सोऽहिंसाया आराधकः, सरलतायाः परि-पोषकः सुजनताया उपासकोऽकृत्रिमताया अर्चकोऽगृध्नुतायां धृतरुचि विहारस्याधुनि-कस्य निर्मातासीत् । स देशस्य समाजस्य च शरीर मधारयत् । न कदाप्यसावधिकारे-ष्वगृध्यत् । हन्त, तादृक् कः सरलः स्यात् यदीयं सारल्यं केचनायुक्ततयापि प्रयुयुजुः ।

उत्तरप्रदेशस्य श्रमिणां कृते यद् राजेन्द्रप्रसादः कृतवान् तदस्ति सर्वेषामनुकर-णीयम् । वङ्गवासिनस्तत्र सुदृढं विश्वासं निहितवन्तः । ते तदीयां न्यायप्रियतां सत्य-निष्ठां चोन्मुक्तमनसा सदा प्राशंसन् । वपुषा नासीत् स्वस्थः, परं स देशस्य यां सेवां चकार तां तु सुस्वस्थाः सुपुष्टा अपि कर्तुं न प्राभवन् । परमार्थभावेन कार्याचरणं

तदीयं व्यसनमेवाभूत् । मानवाः क्षुद्रक्षुद्रतरामप्यात्मकथामादाय तस्य सकाशे समुपातिष्ठन्, सरलस्वभावत्वात् सः साधारणानामपि जनानां सुलभ आसीत् । सहानुभूतेः समवेदनायाश्च सः सागर एवासीत् । अहो तादृग् दीनार्तिहारी न भुवि तदा कोऽप्यदृश्यत । म० गान्धी तु तं स्वदक्षिणभुजमेव मेने । मन्ये, आत्मानं धन्यं कर्तुं सद्गुणसमुच्चयस्तं स्ववसतिस्थलीं विहितवान् । आसीत् स महान् वक्ता, लेखको विचारवान् नीतिनिपुग ऋजुस्वभावोमानवः । २६. १. १९५० दिनाङ्के यदा भारतं सम्पूर्णप्रभुत्वसम्पन्नलोकतन्त्रात्मकगणराज्यराजमानमभवत् तदा स एव देशरत्न राजेन्द्रप्रसादः स्वतन्त्रस्य भारतस्य प्रथमो राष्ट्रपतिर्भूत्वा भारतमातृविजयपताकामुदधूधुवत् ।

राजेन्द्रप्रसादस्य जीवनगतिसरित्समरसा समतला चाभवद्; अतिवृष्टि रनावृष्टिश्च, आरोहोऽवरोहश्च तत्र स्वं प्रभावमारोपयितुं नाक्षमन्त ।

को वेत्ति अद्यतनो बालःश्वो राष्ट्रपति र्भवितुं शक्नुयात् । को वक्तुं क्षमो यद् ग्रामस्य सरलस्वान्तः कर्षकः श्वः सर्वस्यापि भारतस्य हृदय-सम्राट् राष्ट्रपतिश्च भवितुं प्रभविष्णु र्भवेत् । वस्तुतः किन्न सम्भवम् । कोऽपिजनश्चेत् कामयेत तदा सोऽपि महान् पुरुषो महान् नेता च भवितुं समर्थः । परं तदर्थं तपोऽपेक्ष्यते । जीवनं तपोऽग्नि र्यावन्न पुनाति न तावत् तादृशं पदं यशो वैदुष्यं प्रतिभांवलं चासादयितुं शक्यं भवति । भारतीयानामस्माकं कर्त्तव्यं देशोत्थानाय, तद्गौरववर्धनाय च राजेन्द्रप्रसाद इव तपोंवन्तो भवेम । यथा स विघ्नेभ्यो न भीतो भूत्वानिशं कर्त्तव्यमार्गे दिनानुदिनं शुद्धं पदं निधाय पुरः प्रचचाल, तथास्माभिरपि कर्त्तव्यपालनाय देशाभ्युदयाय विश्वकल्याणाय च पुरो नैजांघ्रिः समुपस्थापनीयः ।

राजेन्द्रप्रसादः २८. २. १९५३ दिनाङ्के नश्वरं भौतिकं शरीर मुत्सृज्य ब्रह्मणि व्यलीयत । न सः, परं तदादर्शचिह्नानि सन्त्यस्मत्पुरतः; तच्चिह्नान्यवलम्ब्य मानवोऽनायासेन नैजं जीवनं स्वदेशञ्चोन्नमयितुं शक्नोति ।

विद्याम्बुधी राष्ट्रपतिर्गुणाढ्यः
साधुः स राजेन्द्रप्रसाद आसीद्
यातं तदीयं निजदेश-सेवा–
सक्तं भवज्जीवनसर्वमेव ।



# राजगोपालाचार्यः

"देशे न्यूनतमा एव सन्तीदृशा जनाः ये क्लिष्टासु समस्यासु वार्तायोग्याः तेषु राजगोपालाचार्यस्य स्थान मस्ति प्रथमम्" इत्येतत् तमधिकृत्यैकदा पण्डित जवाहरलाल नेहरूणाभिहितम्। महात्मना गान्धिनापि स एकदेत्थं प्रशंसितः—"द्विचत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्देऽसौ केन प्रकारेण मयि व्यरौत्सीदिति वेद्म्यहम्। तमहं प्रशंसामि। सः स्वकीयेषु विश्वासेषु अविचलः प्राप्यते। तस्य न्यायवत्तायां मनीषायाञ्च कोऽपि कमपि सन्देहं नैव कर्तुं शक्नोति"। सोऽयमासीत् श्रद्धेयः श्री राजगोपालाचार्यः।

वार्धक्येऽपि राजगोपालाचार्यस्य प्रतिभा अनीकाशैव भूत्वा विभाति स्म; न तस्यां स्थविरतां गताया मवस्थायामपि तदीयौजस्विता मनागपि कृशता मगमत्। यथा यथा स वृद्धोऽभवत् तथा तथा तस्य धीरध्यवसायश्च प्रकृष्टतरतामगमताम्। तद्विधो नेता देशे नान्यः कोऽपि कदाचिदवर्तत। सोऽजस्रं स्वाभिमतान् सिद्धान्तान् परमकठोरतया अपालयत्। न च सः कदापि स्वविरोधकर्तृभ्य एव अभैषीत्। परमदृढतयैव सः विरोधिनां साम्मुख्यं कुर्वाणोऽदृश्यत। देशस्य सेवा मपि स महतीमकरोत्। तदीयाः सेवाश्चिर मादर पूर्वकं स्मृताः स्युः।

राजा राजगोपालाचार्योऽखिलभारतीयराष्ट्रियमहासभायाः (कांग्रेसस्य) सभापतिः कदापि न सञ्जात इत्येतदाश्चर्यम्। कार्यकारिण्याः सदस्या स्तेन सह चलितुं न क्षमाः स्यु रित्येतत् कदाचिद् गान्धिनो मतमासीत्। सः सर्वदा चातुरीं संश्रित्यैव कार्यं करोतीत्येषा हि तत्र जनानां धारणाऽऽसीत्। तदभिहिते, सरलसरलतरेऽपि कथने 'अवश्य मेवकिमपि चातुर्य्यं प्रयुक्तमस्तीति प्रायेण अशङ्कन्त जनाः। स महान् चतुरः कूटनीतिज्ञश्च मानव आसीदित्यत्रापि न मनागपि सन्देहः। तच्चातुर्यान् महात्मा गान्ध्यपि अविभेः। सः सदैव तस्मिन् सम्मानधियं निबबन्ध। आसीत् स नितान्तविदग्धः, स नियमानां पालने कदापि श्लथतां नादीदृशत्। कृत्वापि महान्तमभिनिवेशं न कोऽपि बलपूर्वकं तं कस्मिन्नपि कार्याचरणे योजयितुं प्राभवत्। स आसीद् वस्तुतोहि मस्तिष्कवान् मानवो न च हृदयवान्। किं बा तत्र मस्तिष्कस्य-बुद्धेः-प्राधान्य मासीन्न च हृदयस्य इति चेत् तमधिकृत्याभिहितं स्यात् तदा युक्त मेवोक्तं भवेत् तत्। तेन सह न कोऽप्यात्मानं विवादे प्रवर्तयितुं समर्थोऽभवत्। सदैव महांस्तर्ककुशलो धीमानपि तस्मादत्रस्यत्। स विपक्षस्य बुद्धि भ्रमे निपातयितुं कुशल आसीद् सूक्ष्मचिन्तनं तस्य वैशिष्ट्य मासीदतः नितान्तमेव गाम्भीर्ये गाहमानो विचारणीयस्य

विषयस्य अन्त्यमपि तलं प्रवेष्टु मद्भुतमेव वैचक्षण्यं परिपुष्णातिस्म । "कामं भवान् राजगोपालचार्यम् अभ्यवहरणार्थं मामन्त्रयतु आहोस्विद् उपाहारं ग्रहीतुं सः दीर्घतरं तर्कमन्तरेण न कामपि वार्तां स्वीकुरुते स्म" इत्येतदस्ति तमधिकृत्य डॉक्टर पट्टाभेर्मतम् । आसीन्नूनं स महांस्तर्कनिष्णातः ।

श्री पी. डी. टण्डनः स्वपुस्तक एकस्मिन् लिखति यत् तत्समासेनात्रङ्क्यते

एकचत्वारिंशोत्तरैकोनविंशतिशततमेशवीयवर्षे स इलाहाबादमार्गेण गच्छन्नासीत् । रेलयानस्थिते तस्मिन्नहममिलम् । तद्भाषणै र्वक्तव्यैश्च जना भृशं क्षोभं नीताः सन्तीति मयाभिहितम् । श्रुत्वा तत् सोऽब्रवीत् "नास्यार्थोऽयं यत् ते सन्ति सत्यदर्शिनोऽहञ्चासत्यदर्शी । एतेन तु तेषां क्रुद्धत्वमेव प्रकटीभवति, नाहमस्मि क्रोधभाक् । मन्युमतां निर्णयो न तावान् युक्तो भवति यावान् भवतिन स तेषां, ये न सन्ति क्रोधवन्तः" । नाहं तर्कं वर्धयितुं क्षमोऽभूवं, तद्दिशि ध्यानेनावलोकयितु मारेभे । सः पूर्णतया प्रसन्नो विश्वस्तश्च दृष्टोऽभवत् ।

श्री राजगोपालाचार्यो हि तर्कभुवमधिष्ठितः प्राप्तोऽभूत् । सः स्वकीयैरभेद्यै स्तर्कै विपक्षिणमधरीकर्तुं प्राभवदथ च तर्कैरेव तेषु विश्वासमपि जनयितुं क्षमोऽभवत् । परं न स जनान् कार्येषु समुद्यतान् किञ्चानुप्राणितान् विधातुं समर्थ आसीत् । तस्य रसनापथे सदैवानेककथाः सञ्चरन्त्योऽदृश्यन्त । त्रिपुर्यां कांग्रेसाधिवेशनानेहसि 'सच्छिद्रानौ' इत्येतां यां कथामशिश्रवत् साद्यापि स्मृतिसरणिमधिरूढास्ति श्रोतृणाम् । आसीद् वस्तुतः स ब्राह्मणकुलभूषणं तर्केषु महान् पण्डितर्षभः । तस्य सुजन वृन्दवंद्यस्य बौद्धिकी सूक्ष्मता नितरामद्वितीयाऽऽसीत् । कठिनकठिनतराः समस्याः समाधातुं स आश्चर्यकरीं शेमुषीं बिभर्ति स्म । तं श्लाघमानः पण्डित नेहरूः स्वजीवनकथायां लिखति, "तस्य तीव्रा मेधा, स्वार्थरहितं चरित्र मथ च विश्लेषणनिपुणशक्ति रस्माक मुद्देश्यार्थं परमहितमादधते स्म" ।

द्विचत्वारिंशदधिकैकोनविंशतिशततमेशवीयवत्सरे 'अप्रेल' मासे 'कांग्रेस' कार्य कारिणी समिति रानन्द भवने प्रयागेऽजायत । परंमगम्भीरेषु गरीयःषुविषयेषु विवादः प्रवर्तमान आसीत् । राजगोपालाचार्यो वहुषु न व्यतिषङ्गेषु कार्यकर्तृसमितेः सदस्यानां पक्षे आसीत् । तत्कृतेषु केषुचन वक्तव्येषु अध्यक्षो विप्रत्यपद्यत । सः कार्यकारिण्यां स्वकीयं त्यागपत्रं प्रास्तावीत् । न सः स्वकथनादभिमतादभ्रंशत । तत्-त्यागपत्रं कार्यकारिण्याः सदस्यानदुनोत् । अन्यतमस्य सदस्यस्य कथनं तदेदमश्रूयत. "तदभिहिते न वयं सहमताः परं कार्यकारिणी-परित्याग स्तस्य, अस्मान् व्यथयति" । परं सः प्रदाय त्यागपत्र माश्वस्त एव अवालोक्यत । स ततः स्वकीयान् विचारान् पूर्वतोऽप्यधिकं बलं प्रगृह्य अभिव्यक्तान् अकुरुत ।

एकदा राजगोपालाचार्यो वृषशकट्या स्वस्थानं गच्छन्नासीत् । स मार्गः कुम्भीलकापदापन्न आसीत् । सः शकटिकायां गम्भीरायां निद्रायां सुप्त आसीत् । अकस्मात् कश्चिज्जनो 'लालटैन' पदवाच्यदीप माददानः सविधे तस्य आगम्याभणत्, "पणाः दीयन्ताम्" । स तं दस्युं मत्वा पिष्टवलं प्रायुनक् । स जनस्तत्क्षण एव भूमावपतत् । रुधिरार्द्रश्च जातः । क्षणानन्तरं 'स तु जनः शुल्कशालाया आसीदिति' स ज्ञात्वा भृशं दुःखमविन्दत् । तस्मिन्नहनि 'नाहं पिष्टवल मादाय क्वापि प्रस्थास्ये इत्येतच्च प्रत्याश्रौषीत् । अभियोगश्च तस्मिन् प्राचलत्, पर मुन्मुक्त एवाभवत् ।

राजगोपालाचार्यः सुखं दुःखञ्चोभयमपि सहते स्म । सुखसमये न स उदमाद्यत । दुःखे न स व्यषीदन्नच धैर्यमत्यजत् । समग्रोऽपि देश स्तं सादर मार्चीत् । स उच्चोच्चतरेषु पदेषु आसीनो भूत्वा तद्गौरवं तद्दायित्वं तत्प्रकर्षञ्च सम्यगरक्षदवर्धयच्च । सत्स्वापि बहुषु विरोधिषु तत्तत्पदासीनतायां कारण मासीत् तस्य देशभक्तत्वं मतिमत्वञ्च । आध्यात्मिकशक्तिमत्त्वात्, सः सर्वत्र स्वकीयं प्रभावं प्रातिष्ठितत् । तस्या एव शक्तेः सामर्थ्यात् सः कठिनतराणां समस्यानां समाधानं विश्लेषणञ्च क्षिप्रमेव समीचीनतया कर्तुं प्राभवत् । तस्यदेशानुरागो बुद्धिमद्भावश्च सर्वथैवोभावप्यप्रतिमावास्ताम् । सः श्रेष्ठ शासकः श्रेष्ठ एव च राजनीतिज्ञ आसीत् । प्राच्यां प्रतीच्यां च विद्यायां स महान् विद्वान् आसीत् । मौर्ख्यादसाबुदविजत । स तदैव कस्यापि मतमभ्युपागमद् यदा तर्कैः सः पराभूतोऽभूत् । न भावकुता तस्मिन् सफलता मधिगन्तुं क्षमा जाता । स मितभाषितायां प्रियतां तु यद्यपि न्यदधात् परं यदपि सोऽभाषत तत्र परिमितानि समुचिततराणि युक्तियुक्तानि पदान्येव पर्यस्पन्दन्त । स्वाभिमतां वार्तां सोऽतिस्पष्टतया आचष्ट । उपनते सति स्वातन्त्र्ये सोऽस्मद् देशस्य प्रथमो देशपालः (गवर्नर जनरलः) अजायत । देशस्य स्वातन्त्र्यार्थं महात्मगान्धिसञ्चालितेष्वान्दोलनेषु सोत्साहं सहर्षञ्च भागमगृह्णात् कारागारजनितानि च कष्टानि सः असकृदसहत । वस्तुतस्तत्र यद्देश-प्रेम ज्योति रज्वलत् तद् देशस्य जनतायां देशभक्तेः सञ्चारणं, देशार्थं पवित्रं कर्त्तव्यं, श्रेयस्करञ्च जीवनपथमदीदृशत् । देशस्य सार्वजनिके जीवने स यदुल्लेखनीयं स्थानमासदत् तद् देशस्य विरला एव नेतारो लब्धुमशकन् ।

श्री चक्रवर्ती राजगोपालाचार्यः संस्कृतभाषायां संस्कृतवाङ्मये च परामेव प्रशंसनीयां प्रवीणतां न्यदधात् । तस्य वेदान्ते, उपनिषत्सु, श्रीमद्भगवद्गीतायां पुराणेषु, महाभारते रामायणे च स्पृहणीया गति रिष्टाऽभवन् । स तेषां तेषां भारतीयवाङ्मयस्य ग्रन्थानां स्वाध्यायी एव नासीन्; दर्शनेषु वेदान्तोपनिषद्गीतादिषु च ग्रन्थानपि पाण्डित्यपेशलान् अजग्रन्थत् ।

वेदान्तदर्शन मथ च तदुद्भूतं संस्कृति-सौरभं नीतिशास्त्र सौन्दर्यं च संयोजितायाजीवनव्यवस्थाया आध्यात्मिक आधारो भवितुं शक्नुवन्ति-इत्येषआसीत्तदीयो दृढीयान्

अविचलश्च विश्वासः । व्यक्तिगतां प्रतिद्वन्द्वितां न्याय्यां विधाय तत्र प्रतिष्ठापितां विद्यमानामराजकतायुक्तां जीवन-व्यवस्था मुपेक्ष्य संयोजिताया व्यवस्थाया सम्मानन्नप्रतिष्ठापनञ्च साम्प्रत मपेक्षिततरं वरीवर्तीत्येतदासीत् तदीयं साधिकारं कथनम् । वेदान्तमधिकृत्याभिव्यक्तीकृता विचाराश्चेद् ध्यानपूर्वक मनुशीलिताः स्यु रथ च सामान्यहित मुद्दिश्य व्यक्तिश्रित नियम नियमनपरकाः समस्याः गम्भीरतया विचारिता भवेयु स्तदा उपरिनिर्दिष्टं मतं वस्तुतः सत्यमेव प्रतिभाति । प्राचीनसंस्कृतवाङ् मयस्य दर्शनान्यवगाह्यचिरं "यावदाध्यात्मिकानि शास्त्राणि आभ्यन्तरनियमनकार्यं सम्पादयित्री संस्कृतिश्चास्माभिर्नाङ्गीक्रियते तावद् भौतिकस्य संयोजनस्य बाह्यविधानस्य च फलं भ्रष्टाचारं प्रवञ्चनामेव च प्रसुवीत" इत्येषस्तस्य विचारो नूनं परमादरणीयो वर्तते ।

राजगोपालाचार्येण ऋषीणां ज्ञानं स्वकीयबहुमूल्यानुभवपरिपक्वनिष्कर्ष समन्वितं विधाय सुबोधभाषायां प्रस्तुतीकृत मस्ति । उपनिषदां गीतायाश्च शङ्कराचार्यरामानुजाचार्यकृतभाष्याणां यैरध्ययनं कृत मस्ति तेषां कथनमेतत्—"श्री राजगोपालाचार्यविहिता वेदान्तदर्शनस्य व्याख्या मूलग्रन्थानुवर्तिनी तु वर्तत एव परं तस्या वैशिष्ट्य मिदमपि दृश्यते यत् सा मूलग्रन्थ इव प्रामाणिकी ज्ञानवर्द्धिका चास्ति । दुर्बोधविषयस्यावगमने किञ्च तत्र प्रतिपादितस्य ज्ञानस्य संग्रहणे आचार्य राजगोपालव्यवहृतः सरलः स्वाभाविको वर्णन-विधिः परामेव सहायतां प्रयच्छति" । अस्मिन् युगे, यदा हि विपद्ग्रस्ता जगती स्वकीयायाः प्रायेण विनाशं प्रपन्नाया सामाजिक्या व्यवस्थाया भग्नावशेषेषु उद्ग्रथिता भूत्वा ध्रुवसदृशशश्वत्स्थित जीवनोपकारपरायणस्य पारमार्थिकस्य मानचित्रस्य सद्भावमौत्सुक्येनापेक्षते, तदा तु अवश्यमेव वेदान्तस्य मूलभूतानां सिद्धान्ताना मेतद्विद्वद्धौरेयकृता व्याख्या ध्यातव्या अध्येतव्या अनुसन्धाव्या च वर्तते ।

आचार्यराजगोपालाचार्यस्य "विचारशीलो मानवो द्रागेव सभ्यतायाः श्रेष्ठान् आधारान् किञ्च अन्ताराष्ट्रियाचरणानां दृढतरान् सिद्धान्तान् मार्गयितुं प्रयतेत" इत्येषासीत् महीयसी महनीयाकाङ्क्षा । सामाजिकविकासपरम्परायां राष्ट्राणां विद्यमानतास्त्यैतिहासिकसंयौग एव । तस्य हि विकासक्रमस्यापघनो मनुष्य एवानादिकालाद् वीक्षितो भवति । सभ्यता समाजव्यवस्था च कल्पते तदीयनियामकत्वाय । चेदेतस्य नियामकत्वस्य चिरस्थायित्वमिष्टं तदा तदीयोद्भेदेन सनातनसत्याधारशिलाया उपर्येव भवितव्यम् । असत्यं न कदापि स्थायिनो वस्तुनो निर्माणं विधातु मर्हतीत्यामनन्त्युपनिषदः । योहि जनोऽसत्यं संश्रयति स आध्यात्मिकं मृत्यु लभते । स्त्रीणां पुरुषाणाञ्च मनो धिषणा च प्रगतेः प्रमुखोपकरणत्वेन मते स्तः । परमधुनाजस्रं जनानां चेतोवुद्धिश्च व्यापाद्येते । समग्राया मानवजाते राहोस्विद् व्यक्तेः कल्याण मित्थं

भवितुं शक्नोतीत्येतदभिदधदाचार्यप्रवरः प्राह, "वेदान्तस्यात्मशक्तिप्रदत्वात् तन्निर्दिष्टमार्गाश्रयणेन अस्माकं स्वार्थपरता, अहंभावः, सुखम्प्रति आसक्तिः, दुःखम्प्रति भयं निवर्तन्ते, जीवनं च स्वकीयं वयं कुशलतापूर्वककर्त्तव्याऽऽचरणे योजयितुं शक्नुमः। वेदान्त मवलम्ब्य सत्यमयजीवनयापनप्रयासेऽवश्यमेव निश्चयस्य निर्भयतायाश्च वयं विकासं कर्तुं मर्हाम" इति ।। तदीयो वेदान्तनिहितरहस्यवादः सज्जीवनस्य सम्बन्धं सत्येन विज्ञानेन सह निवध्नाति । तद् दर्शनं संघर्षं समाप्य सुसंगतं समन्वितं च विचारं प्रतिष्ठापयतीत्येषा मान्यता ।

सत्यं किम्? हितं क्व?—इत्येतदादिकं स्वकल्याणार्थं ज्ञातुमना अस्ति मानव स्तदा स राजगोपालाचार्यकृतानां भारतीयदर्शनानां तत्रापि वेदान्तस्य (तस्य सर्वं दर्शनेषूत्कृष्टतमत्वात्) व्याख्या मधीयीत । तामधीत्य सरलतया, विना आयासमेव तत्र सर्वमेव सम्यक् ज्ञातुं शक्नुते मानवः । पराञ्चप्रीतिं प्रकृष्टञ्च सन्तोषं लब्धुमर्हति सः तद्द्वारेण ।

अस्ति वस्तुतो भारतीयसमाजो धन्यः सुकृती च यत्र स महान् राजनीति पण्डितः शास्त्रेषु च महान् निष्णातो मनीषी प्रादुर्भूतोऽभूत् । स्वकीयै र्महीयोभिर्यशस्विभिः कार्यैः सम्प्रत्यसन्नपि सोऽस्त्येव ।

राजा स नूनं भुवि चक्रवर्ती, ह्याश्चर्य मासीत् जगतोऽन्यदेव ।
मेधा तदीया भवति स्म पूज्या श्रेष्ठेह सर्वत्र भृशं समेषाम् ।।



# आचार्य नरेन्द्रदेवः

आचार्य नरेन्द्रदेवस्य महाविद्वत्त्वादेव जनास्तं न स्मरन्ति परं तस्य सुजनसत्त-मत्वादपि नितरामेव ते तस्मिन् श्रद्धां निदधते स्म। वस्तुतः शिष्टतायां न तत्समः कोऽप्यवर्तत। योग्यतायाञ्च कदाचित् कस्मादपि न न्यूनतर आसीत्। विद्वांसः सदा तत् साहचर्यं चिकीर्षन्ति स्म। ते तत्संगतौ परामेव प्रसन्नता मनुभवन्ति स्म। नम्रतायाः परमसान्द्रसन्निवेशस्तत्र समशोभत। सः सर्वानपि जनान् स्वमित्राणीवाव-गच्छत्। न कदापि स्वमहत्तायाः आरोपणे उद्विग्नतां न्यदधात्। योग्यतया नम्रतया च स जनान् स्वदिश्यावर्जयन् प्राप्तोऽभवत्। राजनीत्यां जीवने समावेशिते सति, शत्र-वोऽपि सम्भवाः। ते सन्ति सौभाग्यवन्तो येषां नास्ति कोऽपि शत्रुः। परमेतद्विध स्तु कोऽपि विरल एव। आचार्य नरेन्द्रदेव आसीदीदृगेव। स मनीषी सुयोग्यो राजनीतिवित् न तेषा मेव जनानां सम्मानभाजनमभूत् येषां तदीयायां राजनीत्यां नासीद् वैमत्यमपि तु तं तेऽपि आद्रियन्त येषां राजनीतिकविचारा न तत्संवादिन आसन्। विचारविपर्या-सभाजोऽपि तत्र सम्मानबुद्धिमपुष्णन्। न स राजनीत्यां व्यक्तिगतसम्बन्धोपरि हस्तक्षेपं समुचित ममन्यत। राष्ट्रिय महासभायामपि तेषां सुहृदां संख्या नासीदल्पा ये कदापि न तस्मिन् कटुवचनोच्चारणमकार्षुः। तस्मिन् पं० जवाहरलाल नेहरू रपि परमादरं न्यदधात्। यदापि स दिल्लीमागत स्तं पण्डित नेहरू स्वकीयभवने स्थातु मामन्त्रयत्। एतादृग् जनो यदा कदापि जातोऽपेक्षितः, यो राजनीत्या माहोस्वित् शिक्षायां निष्प-क्षतापूर्वकं सत्यतया च सह कार्यं कर्तुं शक्नुयात् तदा प्रायेण आचार्य नरेन्द्रदेवस्य नाम गृहीतमभूत्।

नरेन्द्रदेवो लोकप्रियेषु नेतृष्वन्यतम आसीत्। राष्ट्रिय महासभया सह राज-नीतिकमतभेदे सत्यपि अनेके ख्याता राष्ट्रियमहासभायाः पदाधिकारिणो लखनऊविश्व-विद्यालयस्योपकुलपतिर्भवितु तं भृशमन्वरौत्सुः किञ्च बनारसहिन्दूविश्वविद्यालयस्य चोपकुलपति र्भवितुं कियान् महान् अभिनिवेशो महतां महतां जनानां समजायत-इत्येतत् कस्य नामाविदितं वर्तते। सः कदापि अनुचितं सम्मानविरुद्धं च कार्यं न विधास्यतीत्येतत् तद्विपक्षिणोऽपि अज्ञासिषुः। सर्वेषामपि नृणां तस्मिन् दृढीयान् विश्वास आसीत्। कस्मिन्नप्युच्चतरपदे आसीनो भूत्वापि तदीयं मनोन व्यक्तिगतो लाभो वशीकर्तुं प्रभवति; तस्मात् न स उपकुलपतिपदाधिष्ठितोऽपि राष्ट्रियमहासभां वा शासनम्प्रति छात्रान् विपर्यस्ततां नेष्यतीति विचार्यैव नेतार स्तस्योपकुलपतित्वम

चीकमन्त। वस्तुतो हि आचार्य नरेन्द्रदेवस्योपकुलपतित्वे लखनऊ विश्वविद्यालयस्य विद्यार्थिनोऽतितरां शिष्टं संयतञ्च व्यवहारं कृतवन्तः। आचार्यस्य भावनाः आदृताः स्यु रित्येतस्मिन् विषये सदैव ते (छात्राः) सावधाना एव समलक्ष्यत। तदीयं सम्मानं छात्राः शिक्षकाश्च उभयेऽपि विहितवन्तः।

आचार्य नरेन्द्रदेवस्य राजनीतिक्षेत्राङ्गीकृतत्वं विदुषां संसारमक्षिणोत्। आसीदाचार्यो विचारवान् मानवः। अध्ययनमध्यापनं च तं भृश मतूतुषताम्। अध्यापनं ये धनार्जनस्य साधन मन्यतममवगच्छन्ति ते प्रायेण भवन्ति दम्भिनः। आचार्यस्य तु पदरजोऽपि तेषां दम्भिनां स्पर्शं प्राप्य नितरां दूयते स्म। अभिमानस्तस्मिन् स्थितिमेवलब्धुं नाशक्नोत्। अहं विद्वान् अस्मि इत्येष भावस्तु कदापि तन्मनसि उत्थित एव नाजायत। तस्मिन् ज्ञानार्जनेच्छातिबलवती भूत्वासमतिष्ठत। स आत्मानं न कदापि प्रमादस्यायत्ततया मुन्मादस्याधीनतायाञ्च पातयति स्म। तस्य नयनयोश्चञ्चदाभा आकृत्यां मन्दस्मितश्रीश्चाभीक्ष्णं व्यद्योतत। यदा हि कोऽपि गम्भीरतापूर्वकं विचारणीयां वार्ता प्रावर्तयत् तदा स ध्यानेन तामश्रृणोत्। सः संलापमधुर आसीदश्रौषीच्चान्येषां विचारानतिधैर्यपूर्वकम्। यदि सोऽजीविष्यत् तदावश्यमेवास्मद्देशे राष्ट्रपति रभविष्यत्।

यदा स राष्ट्रिय महासभां हित्वा समाजवादिनां नेतृत्वं स्वीचकार; तदानीम् उत्तरप्रदेशस्य राष्ट्रिय सभाया मन्त्री 'सः स्वकीयं निर्णयं पुनः कृपयाऽऽवर्तये दित्येतत् पत्रद्वारेण तं प्रार्थयत। प्रायेण भूयांसो राष्ट्रिय महासभाया अधिकारिणः सदस्याश्च तत्कृतराष्ट्रियसभात्यागेऽदूयन्त। परम् आचार्यस्म तत्पत्रोत्तर मपि तत्तेजोमयगौरवानुरूप मेवासीत्। 'अस्मदीया विचारा न सन्ति शुद्धाः, वयं राष्ट्रियमहासभायां द्वैधीभाव मुत्पादयितुं कामयामहे; वयं तामुत्सादयिष्याम इत्येषाऽस्मासु धारणा कृतास्ति। चेद् राष्ट्रियमहासभाया उच्चतमाः कार्यकर्तारोऽस्मदीय भावनास्ता अवगच्छन्ति या आदाय पर्दामिदमुत्थापितमस्ति, तदा प्रसन्नास्ति महती'—इति सः स्वविचारं तत्र प्रकाशयति स्म।

"अहमेताः सद्भावनाः हृदयेन आद्रिये; प्रान्तीय समितया अस्मासु या सद्भावना प्रदर्शिता तदर्थं वयं धन्यवादान् प्रकटीकुर्मः। तदाह्वानेस्माकं पुनरपि राष्ट्रिय महासभाया अङ्गीकरणं चेत् सम्भवमभविष्यत् तदा तन्नूनमस्मानतितरामप्रीणयिष्यत्।"

"सविनय मेतत् कथनमिहापेक्षितं जातमस्ति यदिदानीं या परिस्थितिः संवर्तते तत्रावयोर्द्वयोरपि कृते इदमेव वरं मतं भवेद् यद् यत्किमपि घटितं तदावाभ्या मङ्गीकरणीयम्। स्वसुहृदां पुनः निवर्तनविषयकः कृतो निर्बन्धो नैव साम्प्रतं स्वीकृतो भवितु मर्हतीत्येतद्धेतो रहं नितरां दूये, पुन रपि प्रार्थयेऽहम्। भवदीयं मयि यत् प्रेम

विद्यते तदस्मदीयाभिमतं दुर्वलीकर्तुं न प्रयोक्तव्यं; यो मार्गोऽस्माभिरनुसृतोऽस्ति तस्मिन् मार्गे समीचीनतया वयं चलितु मर्हेम इत्येतद्विधप्रभाववता तेन प्रेम्णा भवितव्यम् ।"

"अस्यामन्यायवन्यां दयारहिताया मुच्चावचायां जगत्या मस्माकं पुरातनाः सुहृद ईदृशः सन्ति राष्ट्रिमहासभावर्तिनो येऽस्मन्निर्णयं युक्तं न मन्यन्ते परं ते ऽस्मानुदारतया अवगन्तुं प्रयतन्ते किञ्चास्माकीनाः भूतपूर्वाः सेवाः अभ्युपगच्छन्ति ।"

आचार्य नरेन्द्रदेवो देशस्यास्य वक्तृषु सर्वश्रेष्ठो वक्ताऽऽसीत् । स हिन्द्याम् उर्दू-भाषायाम्, अंग्रेज्याञ्च भाषणे परामेव कुशलतां निधत्ते स्म । तदीयायां वक्तृतायां विचारतरङ्गाणां प्रवाहः परमाभिराम एव सदैव अवालोक्यत । तद्भाषणं गुरुतरं गम्भीरमनुष्ठातुं न केवलं भावनाः प्रायुज्यन्त, अपि तु सान्द्रसान्द्रतरा विद्वत्ता च स्वयोगं प्रददती समलक्ष्यत ।

आचार्य नरेन्द्रदेवस्य जन्म नवाशीत्यधिकाष्टादशशततमेशवीयवर्षे, अक्टूवरे मासे एकत्रिंशद् दिनाङ्के सीतापुरे खत्रीकुलेऽभवत् । वाल्ये गीतामरकोषौ द्वावपि तेन कण्ठस्थीकृतावास्ताम् । आसीत् स लोकमान्य बालगंगाधर तिलकस्य प्रशंसकः । यदाहि स दशवर्षवयस्क आसीत् राष्ट्रियमहासभाया अधिवेशनं द्रष्टुमगात् । तस्मिन् काले तत्र भाषणान्यांग्लभाषायामेवाक्रियन्त तदा तानि न धीगम्यानि भवितु मार्हन् परं तच्छ्रवणे स आत्मानं प्रावर्तयदेव । स म्योर सेण्ट्रल कालेजे विद्याध्ययनं व्यदधात् । शिक्षाधिगमनानन्तरं स फैजाबादे वाक्कीलताया मात्मानं न्ययूयुजत् । स्वकीये युववयसि सोऽपि इङ्गलेण्डं प्रयाय इण्डियन सिविल सर्विस परीक्षायां स्वमन्वेतुं विचारयामास परं न तस्य माता तद्विदेशगमनमन्वमंस्त । वर्षाणि पञ्च वाक्कीलतां विधाय सोऽसहयोगान्दोलने भागं जग्राह । तदा प्रभृत्येव सोऽसकृत् कारागार-यात्रा मकार्षीत् । द्विचत्वारिंशदधिकैकोनविंशतिशततमेशवीयवर्षे सः राष्ट्रियमहासभायाः कार्यकारिण्याः सदस्यैः सार्धमहमदनगर दुर्गे वन्दी आसीत्; तत्र स विद्वत्तायुक्तान् ग्रन्थान् अररचत् ।

एकविंशत्यधिकैकोनविंशतिशततमेशवीयवर्षे मित्राणां तत्रापि पण्डित जवाहरलालस्य अनुरोधेन सः काशीविद्यापीठं प्रविवेश । देशभक्तिपरम्परासञ्चालितराष्ट्रियसंस्थायां 'काशी विद्यापीठ' इत्येतदाख्यायां सेवां विदधतस्तस्य यदा पञ्चवर्षाणि व्यतीतान्यभूवन्, सः प्रधानाचार्यपदासीनः कृतोऽभूत् । 'आचार्य' इत्येतच्च पदं सः तत्रैव प्राप ।

आचार्य नरेन्द्रदेवस्य पिता श्रीवलदेवप्रसादः सफलः प्राड्विवाक् आसीत् । तस्य सुतोऽपि कुर्यात् वाक्कीलतामित्येषस्तदीयः प्रवलोऽभिलाष आसीत् । परम्,

आचार्यो नरेन्द्रदेवो भारतीयराजनीत्यर्णवे गम्भीरेऽकूर्दत् तस्मात् सः तद्वृत्तिनिमित्तेन समयमेव प्राप्तु मसमर्थोजातः। सः शिल्पकला-विज्ञाने विशिष्टं प्रावीण्यं निधित्सुरासीत्, परं त्रयोदशाधिकैकोनविंशतिशततमेशवीयवर्षे 'एम. ए.' परीक्षायामुत्तीर्णतां प्राप्य न स तमभिलाषं पूरयितुं शक्नोतीत्यज्ञासीत्। पञ्चदशाधिकैकोनविंशतितमेशवीयवर्षे सः फैजाबादवर्तिन्या 'होम रूल लीग' शाखाया मन्त्रित्वं स्वीचकार। रसव्योमनन्दसोमेशवीयवर्षे स दर्शकत्वेन कलिकाताधिवेशनं सम्भावयितु मियाय। तत्र सोऽरविन्दघोषस्य विपिनचन्द्रपालस्य च भाषणानि शुश्राव। अरविन्दो नव संगठन विधान मधिकृत्य तत्र स्वकीयं भाषणं चकार। दशाधिकैकोनविंशततमेशवीयवर्षे यदा राष्ट्रियमहासभाया अधिवेशनं हि इलाहाबादेऽभवत्, तदा स न तत्र ययौ, यद्यपि तेष्वहःसु स इलाहाबाद एव विद्यार्थी आसीत्; यत्र कारणमासीत् राष्ट्रियमहासभात उग्रवादिनां जनानां निस्सारणम्।

नरेन्द्रदेव आसीत् सच्छात्रः। स आसीत् स्वाध्यायशीलः। नवनवग्रन्थाना मध्ययनं तस्य व्यसन मासीत्। "मेम्बर्स ऑफ ए रेवोल्यूशनरी", क्रोपोटकिन कृतो "म्युचुअल एड", ए. के. कुमारस्वामिनप्रणीतो "नेशनल आइडीयलिज्मः", अरविन्द घोषरचिता लेखाः, हरदयालस्य कृतयः, तुर्गनेवस्य कथाः, गैरीवाल्डी-जीवनचरित्रम्, मैजिनीरचिता लेखाः, फ्रान्सक्रान्तिपरकाणि पुस्तकानि, ब्लाट्सशेलिनः "थियॉरी ऑफ स्टेट", रूसदेशस्य च प्रभूतं निहिलिस्ट साहित्यं तेन सम्यक् पठितान्यासन्। गोविन्दवल्लभपन्त—कैलाशनाथकाटजू—शिवप्रसादगुप्त—ठाकुरछेदीलालप्रभृतयस्तस्यासन् सहयोगिनः।

भारतीय कांग्रेस समाजवादिसंगठने सति स्थापिते, पटनाधिवेशने नरेन्द्रदेव आचार्यः सभापतित्वं कृतवान्। तदाप्रभृत्येव सः समाजवादि संगठनम्प्रति मार्गनिर्देशको दिशानिर्णेता भूत्वा तदसेविष्ट। पटनाधिवेशने स यद् भाषणं करोति स्म, तद् गम्भीरप्रकृष्टवैदुष्यवन्धुरमासीत्। तद्भाषणमधिकृत्य सर्वत्रैव चर्चा नितरां प्रावर्तत। बहूनिवर्षाणि सः कर्षकाणामपि नेतृत्वं चकार। कृषिजीविनां हिताय स उत्तरप्रदेशे उल्लेखनीयं कार्यं विहितवान्। सोऽखिलभारतीय कृषीबलसभाया द्विकृत्वोऽध्यक्षतामकरोत्। प्रथमा सभा १९३९ तमेशवीयवर्षे गयायां, द्वितीया च १९४२ तमेशवीयाब्दे वेदुअलेऽभवत्।

आचार्य नरेन्द्रदेवे म० गान्धी भृशमस्निह्यत्। एकदा सः राष्ट्रियमहासभायाः अध्यक्षोभवितुं तन् (नरेन्द्रदेव) नाम निरदिशत्, परं कार्यकारिणी समिति र्न तं प्रस्तावं स्वीकृतवती। सुभाषचन्द्र वोसोऽपि नरेन्द्रदेवं कार्यकारिण्याः सदस्यत्वमङ्गीकर्तुं

प्रार्थयामास, यद्यपि सोऽन्यराष्ट्रियमहासभासम्बद्धेषु जनेषु न प्रियत्वं वा रुचिं न्यदधात् । १६४२ तमेशवीयवर्षे म० गान्धी नरेन्द्रदेवस्य श्वासरोगस्य चिकित्सामप्यकारयत् । तच्चिकित्सया सः स्वस्थताञ्चान्वभवत् ।

नरेन्द्रदेवः परमयोग्यः परमशिष्टश्चासीत् । योऽपि तस्य सान्निध्यमगात् स तं प्राशंसत् । स आसीन्महान् देश-प्रेमपरायणो मानवरत्नम् । देश-सेवाया मसकृत् कारागार-कष्टानि सोढवान् । तादृशो योग्यः सुपुरुषो वस्तुतोराजनीत्या मतितरां दुर्लभः । स बहुषु विषयेषु परमाधिकारेण लेखने भाषणे च नितान्त मेव अभिनन्दनीयां यौग्यतां भजते स्म । तदीयं जीवनं देशनिवासिनां कृते समुज्ज्वल आदर्श एव । मन्येऽहमात्मानं पुरोभागिनं, तस्य दर्शनमपि कर्तुं नाशकम् ।

आचार्य–सौम्यसुजनो हि नरेन्द्रदेवः
आसीन्महान् सुविदितो विदुषां वरेण्यः
वाग्मी च लेखनकलाज्ञ-समाजवादी
काराव्यथाश्च सहते स्म स देशहेतोः ।



# आचार्य कृपलानी

भारतीय राजनीत्याः क्षेत्रे आचार्यं कृपलानी नैजं स्वतन्त्रमेव महत्त्वं निदधाति ! अस्मिन् देशे स इव अन्यः कोऽपि कदाचिदेव राजनीतिकजीवने तावन्तमारोहमवरोहञ्च द्रष्टुं क्षमोजातः । द्वादशसमाः स राष्ट्रिय महासभायां साचिव्यं कृतवान् । पर मकस्मादेव रसवेदग्रहेन्दु सम्वत्सरे रत्नैस्ते पण्डित जवाहरलाल नेहरुस्तं राष्ट्रिय महा सभायाः कार्यकारिण्याः समितेः सदस्यतातोऽपि पृथग्विहितवान् । घटनेय माचार्य कृपलानिनो हृदयं प्राताडयत् । अस्त्येव राजनीति रीदृशी न तत्र स्थायित्वमीक्ष्यते । सप्त चत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्दे स राष्ट्रियमहासभायाः अध्यक्षतार्थं प्रस्तावितोऽभूत् । तन्मित्राणि विलोक्येदंविस्मयमगुः राष्ट्रियमहासभायाः केचन उद्भटसत्तमाः आचार्येविरोधं दर्शितवन्तः, परं कृपलानी एव अध्यक्षत्वेन वृतो भवेदित्येतन्महात्मागान्धी सर्वेषामपि वेदितव्यतामनैषीत् । गच्छता समयेन सरदारपटेलः जवाहरलाल नेहरू च कृपलानिनि विमततामगाताम् । सोऽध्यक्षपदात् त्याग-पत्रं प्राददात् । म० गान्धी तदीयं त्याग पत्र मुद्दिश्य तमश्लाघत ।

आचार्य कृपलानी ततः कांग्रेसडेमोक्रेटिक फ्रण्ट्स् ( प्राजातन्त्रिकं प्रतिमुखम् ) समस्थापयत् । इदं प्रतिमुखं राष्ट्रियमहासभाया नेतृणां पुरः गम्भीरा मेकां समस्या मसृजत् । स भूयः राष्ट्रियमहासभायां अध्यक्षपदलाभाय उदतिष्ठत् परं पुरुषोत्तमदास टण्डन स्तं पराजयते स्म। सः सर्वानपि समाजवादिपक्षान् ऐक्येन निबद्धुं प्रायस्यत् । तत्प्रतिष्ठापिते तस्मिन् संगठने विभिन्नमता जनाः सम्मिलिता अभूवन् । न तैः सह सः कार्यं मनुष्ठातु मशकत् । स तामपि संस्थामौज्झत् । तदनन्तरमसौ कस्मिन्नपि समुदाये आत्मानं नैवान्तर्भावयितु मैच्छत् ।

द्विषष्ठ्यधिकैकोनविंशतिशततमेशवीयवत्सरे मुम्बय्यां सामान्यनिर्वाचनकाले लोकसभायास्थानार्थं पुनः उदतिष्ठत् । तदानीं भारतस्य रक्षामन्त्रि श्री वी० के० कृष्ण मेननः राष्ट्रिय महासभायाः स्वकीयोऽभ्यर्थी आसीत् ! राष्ट्रिय महासभा निर्वाचनं तत् स्वप्रतिष्ठाप्रश्न मिवामन्यत । आचार्यं पराजेतुं सर्वविधान्यपि साधनानि समचिनोत् । सः पराभूतोऽभूत्; पराभवे जाते सति 'नास्य द्वन्द्वस्यावसानम् "अधुना तु द्वन्द्वस्य प्रारम्भो भवतीत्यगदत्" । ततोऽसौ अमरोहाक्षेत्रे उत्तरप्रदेशान्तर्गते हाफिज मुहम्मद इब्राहिमं विरोद्धुं निर्वाचने भागं ग्रहीतु मुद्युक्तोऽभूत् । तस्मात् क्षेत्राद् निर्वाचने भागमादातुं सर्वैरपि तत्सुहृद्भिः स निवारितः परं स न स्वकीयात् कृतान्निश्च यादात्मानमस्रंसयत् । तेनोक्तं 'जयाजयौ समावेव मत्वा युध्येऽह' मिति । स तु तदा

'जनानां ध्यानं काश्चन समस्याः प्रति, आवर्ज्य सर्वकारं शासनं चेतयितु मिच्छामि' इत्येतञ्चविचारं जनेष्वभिव्यानक् । तदा स 'म० गान्धिनो नेतृत्वे यत्पद माश्नुत न तद् कापि शक्तिरपहतुं शक्नोति; अहं तु युध्वा शासनस्य सदोषां नीतिं सर्वेषां समक्षे निधित्सामि' इत्येतच्चाभिदधदश्रूयत । जातः परं स निर्वाचने विजयी । असकृत् स विजयं पराजयं च प्राप्तवान् निर्वाचनेषु । परं जये पराजये च वस्तुतो नाहृष्यत् न चादूयत ।

आचार्यः कृपलानी अतिकटुनिशितवचः प्रयुनक्ति । उपालम्भवती भवति तदीया भाषा । अतएव तस्यानेके विरोधिनः सञ्जाताः सन्ति । परं बह्वीष्वप्यापत्सु निपत्यापि न सः स्व सिद्धान्तेभ्यो भ्रंशते । सिद्धान्तस्थिततत्वात् स बहुषु स्थलेषु न सफलतामधिगन्तु मशक्नोत् । अस्ति सः प्रकृत्या न्यायप्रियो बुद्धिमान् सदुत्साहवान् सत्साहसी च सत्यनिष्ठः । तेन तु वस्तुतः भारतीयगणतन्त्रस्य अध्यक्षेण किं वा तद् विधान्यस्मिन्नेव कस्मिंश्चित्पदे आसीनेन भवितव्यं, परं स्वतन्त्रस्वभावत्वात् स्वतन्त्र-विचारत्वाच्च स एतादृशपदप्रत्यासन्नतायामप्यात्मानं प्रापयितुं न प्राभवत् राजनीति-वित् स मतो भवति यः सर्वदा सन्धानेऽपि स्वं सन्नद्धीकरोति । परं सः स्वकीयान् सिद्धान्तान् अभिभूय न कामपि संस्थां न च कामपि व्यक्तिमेवान्ववर्तत । परिस्थितिः कीदृश्यपि स्यात्, स तु सत्यतातुलामध्यारोप्य तन्मूल्य मङ्कयितु मभिनिविशते । अस्ति सः स्पष्टवादी । यदपि तन् मनसि वर्तते तन्निर्भयो भूत्वा भणति । एतद्विधता तु नूनं राजनीतिक्षेत्रे भवत्यतितरा मनुचिता । ईदृशो हि जनः केन प्रकारेण राजनीत्यां नैजवर्चः संस्थापने क्षमोऽस्तीत्यत्राश्चर्यं भवति ।

यदाष्टादशाधिकैकोनविंशतिशततमेशवीयवर्षे पण्डित मदनमोहनमालवीयो राष्ट्रियमहासभाया अध्यक्षोऽभवत् तदा कृपलानी तस्य सहकारी समजायत । १९१९ तमेशवीय वर्षे सः काशी हिन्दू विश्वविद्यालये इतिहासाध्यापकः सञ्जातः; परं सत्याग्रहान्दोलने सति प्रवृत्ते स तत्रात्मानं समावीविशत् । कारागाराद्न्मुक्तो भूत्वा आचार्य नरेन्द्रदेव-श्रीप्रकाश प्रभृतिभिः सार्धं सः काशीविद्यापीठं स्थापयितुं प्रायतिष्ट । परं म० गान्धिना साबरमत्यां विद्यापीठस्य कार्यं वोढुं स आहूतोऽतस्तत्र न स्थातु मशकत् । तत्र स 'आचार्यं' इत्येतेनोपाधिना सत्कृतोऽभूत् । विद्यापीठ-शासनमभिव्याप्य प्रान्तीय कांग्रेसाधिकारिभिः सह वैमत्यं तस्य सञ्जात मतोऽध्यक्षपद परित्यज्य रचनात्मके कार्ये आत्मानं प्रवर्तयितु मसौ संयुक्त प्रान्तम् ( उत्तर प्रदेशम् ) अगमत् ।

आचार्य कृपलानी बहूनि वर्षाणि यावत् कांग्रेस महासमित्याः सदस्यः प्रधान सचिवश्च भूत्वा कार्यमकार्षीत् । सः स्वयं श्रमप्रियोऽस्ति । यैः सह कार्यं कुरुते तानपि सः श्रमिणो द्रष्टुमिच्छति । सः मदैव नैजाधीनतायां ये जनाः कार्यं कुर्वन्ति तेषामुन्नतिं कामयते । तथा यतते यथा ते उन्नतेः कृते आनुकूल्यं समुचितं च साधनं लभेरन् ।

अकर्मण्येषु स जुगुप्सते; तेषु सः कठोरो दृष्टो भवति । सोऽखिलभारतीयराष्ट्रिय महासभासमितेः कार्यालये कदाचिदेव कमप्यदण्डयत् परं कार्यालये सर्वे तस्मादमैषुः । सर्वेऽपि तत्रत्या जनाः "कार्ये कीदृशीमपि कृतामुपेक्षां वा प्रमादं श्रीकृपलानी कदापि न सहते इत्येतदज्ञासिषुः सम्यक् ।

आचार्य कृपलानि-रसना मधिवसति सरस्वती । अतस्तदीयानि सम्भाषणानि सदा असाधारणान्येव भवन्ति । वक्रोक्ति-व्यञ्जना-श्लेषादि समुल्लसितत्वात् तदीयानां सामान्यानामपि वार्तानां, जनास्तत्र कटुतामनुभवन्ति । तदीयानि बाह्यानि आवरणानि तान् गुणान् ऊर्णुवन्ति येषु परीक्षितारः सन्त्यभिज्ञाः । तत् तद्गुणानां सद्भावादेव स राष्ट्रनिर्मातृष्वन्यतमोऽस्ति ।

आचार्य कृपलानी सिन्धुप्रदेशे भद्रकुले जनुरग्रहीत् । तद्बन्धुष्वेकः परिव्राट् सञ्जातः; अन्यश्च राजनीत्या मासजत् । षड्यन्त्रे चैकस्मिन् सोऽपि अप्रथत । कार्यानुरोधात् प्रावसच्च निधनञ्च जातं प्रवास एव । आचार्य कृपलानी बाल्यादेव देशाभिमानी मनीषी अस्ति । एषा देशाभिमानवत्ता विद्यार्थिजीवनेऽपि तमसकृदापत्सु न्यपातयत् । छात्रजीवनादेवतस्मिन् राजनीतिपरकचेतना जागरूकाऽवलोकिताभूत् । लोकमान्यतिलकस्य अरविन्दस्य च प्रभावस्तं भृश मावर्जयति स्म ।

आचार्य कृपलानी बाह्यतस्तु रूक्षः प्रतीयते परं तदीयं हृदयं वर्तते परममृदुलम् । हास्ये स्वस्थे च तर्के स महतीं रुचिं निदधाति । अस्ति सोऽल्पभोजी दम्भरहितः प्रकृत्या च उदात्तः । तदीया प्रवृत्तिः कलाकारानुवर्तिनीव प्रतिभाति । देशस्य परिस्थितय स्तं राजनीत्यां नियोजयितुं सफलतामध्यगच्छन्नित्येतच्च प्रतिभासते । सः बाल्यादेव क्रान्त्यामरमत ! गेहे, विद्यालये अन्यत्र च तदीया क्रान्तिप्रियता प्रारम्भादेव पर्यलक्ष्यत । अस्ति तु सः परमार्थतः सद्धृदयः सहृदयश्च । परं कदापि हन्त, गुणोऽपि कश्चिद् दोषो जायते । अतएव सोऽन्यथैव बहुभि र्गृह्यते । तर्केषु स भृशं रज्यति । वादे विवादे च स अद्भुतं वैचक्षण्यं निदधात्यतः न कोऽपि तेन सह तत्रात्मानं प्रवर्तयितुमुत्सहते ।

आचार्यः कृपलानी कुशल लेखकोऽस्ति । आंग्लभाषायां तद्वक्तृताः भवन्त्योजस्विन्यो गम्भीराश्च । मेरठ कांग्रेसाधिवेशने यद्भावपेशलं पाण्डित्यपूर्णं भाषण मकरोत् तद् विस्मृतं न भवितुमर्हति । श्रीमती सरोजिनी नायडू तद्भाषणमधिकृत्य, "तस्य गतिमद्भाषणं को हि विस्मर्तुं शक्नोति ? क्रान्तिकारिजीवनाद् दूरीभूय अहिंसावादे कृतस्य प्रवेशस्य या गाथा तेन स्वभाषणे श्राविता सा चिर स्मरणीया भूत्वा श्रोतृणामन्तः करणे वत्स्यति । तद्भाषणं वस्तुतस्तस्य महापुरुषस्य महदात्मचरित्रमस्ति" इति स्वविचारानभिव्याञ्जीत् ।

 

डॉ० राजेन्द्रप्रसाद आचार्यं कृपलानिन मुद्दिश्य "तस्य भाषणानि अति प्रभावोत्पादकानि गम्भीराणि च भवन्ति । शान्त्या जनास्तानि शृण्वन्ति । जनास्तत् प्रदत्तेषु हास्यपूर्णेषु उदाहरणेषु विनोदोक्तिषु च भृशं प्रसीदन्ति । अस्ति स गान्धिवादस्य प्रवक्तृप्रवरः । रीति-तर्क-विचारावलिदृष्टया तल्लिखितं गान्धिसाहित्यं नितरामेव महत्त्वमहनीयम्" इत्येतदलिखत् ।

स्वकीयायां गान्धिवादिताया माचार्योऽनुभवति गर्वम् । तेन गान्धिवाद आलोचनात्मिकयादृष्टयादृष्टोऽस्ति परीक्षितश्च । एकदा सः "अहं गान्धिवादं सतर्कों भूत्वा विश्लेषयामि; परं सूक्ष्मयादृष्टया कृतायां विचारणायां प्राप्नोम्यहं सदैव वाप्वम् सत्यासक्तमेव । सः सर्वदानवद्यएवावाप्यते । एवं विधायां स्थित्यांकिमहं कर्तुं शक्नोमि; तदनुगमनं व्यतिरिच्य नान्यत् किमपि । दुर्भाग्यमेव मम; नाहं प्रतिभावान् । अतः कस्यचन प्रतिभावतोऽनुसरणमेव ममकृतेऽस्त्युत्तमः पन्थाः । चेत् तथा न क्रियते तदोभयत एव पतनम्" इत्येतदभिदधातिस्म ।

आचार्यः कृपलानी वर्तते राजनीतिकः साधुः । जीवनं राजनीतिं च स दार्शनिक्या दृष्ट्या मिमीते । मुम्बय्यां सति तस्यपराजये जनास्तं "पराजयादस्वस्थतां वा कृशतां भवान् गतः स्यादित्येतदस्माभि विचिन्तितं परं भवांस्तु स्वस्थः प्रसन्नश्च" इत्येतद् यदाब्रुवंस्तदा स उच्चै रहसदशंसच्च; नाहं स्वयं वेद्मि कथमहं जीवामि, साधाधारण्येन जनाः परमात्मानं बहुविधानि वस्तूनि याचन्ते परमहन्तु सुखदुःखसहन शक्ति तं याचे । अतोऽहं लीलया कष्टानि सर्वाण्यपि सोढुं क्षमो भवामि" ।

अस्त्याचार्यः कृपलानी विश्वासप्रियो मानवर्षभः । विश्वास एव तत्र वलं सञ्चारयति । अपेक्षिते सति, स्वोद्देश्यादर्शनिमित्तोन हसन् हसन् एवासुग्राहिफलकमपिस श्चुम्वितुं शक्नोति । ईदृश एव मानवोत्तमाः स्वसहयोगिनां मानसेषु सम्मानमुत्पादयितु मर्हन्ति ।

आचार्यः कृपलानी १९७७ तमेशवीयाब्दे निर्वाचने सञ्जाते, यदा हि तदीयं जीवनं वर्षाणां नवतिमतिक्रम्य ततः परस्तात् प्रवहत्स्वब्देषु विराजते, वार्धक्यजनितां कृशतां व्यथाञ्चोपेक्ष्य राष्ट्रे लोकतन्त्रं पातुं परिपोषयितुञ्च तन्नितरां भृशमभिवन्दनीयां सेवां कुर्वाणः परिलक्ष्यते । देशहिताय सोऽहर्निशं सर्वत्र प्रतिप्रदेशं विचरन्, जनतां जागरयन् श्रीमत्या इन्दिरायाः प्रधानमन्त्रित्वे प्रजातन्त्रस्य क्षीणतां म्लानताञ्च गच्छद् वीक्ष्य पुनरपि तत्प्रबलयन्, सकलमपि राष्ट्रं कर्त्तव्यपक्षाधिरूढमनुतिष्टंश्च चक्षुर्गोचरो भवति । भारतीयजनता तत्तपस्विविहिता मिमामतीताञ्च महनीयां विशालां सेवां कदापि न विस्मर्तुं शक्नुयात् ।

सिद्धान्तवत्ता स्फुटवादिता च, निर्भीकता कर्मणि लीनतापि ।
वैदुष्यवाग्मित्वगुणेषु रागो, यत्राश्रयन्ते स न कस्य गेयः ।
दुःखं सुखं यः सममेव वेत्ति, हानिञ्च लाभं विजयं तथैव ।
जानाति धीरो हि पराजयं च, श्रेष्ठः स नूनं जगदीशभक्तः ॥

विद्याभिरामः कुशलः प्रवक्ता शिक्षाविदामस्ति पुनीतवेषः ।
राष्ट्रस्य विद्वान् स च मान्य नेता, सत्यानुरक्तस्य हि भारतस्य ॥
यथा मनीषी गुण बन्धुरोऽस्तिथैव पत्नी विदुषी सुचेता ।
आसीन्महीमण्डलभामिनीनां तस्य प्रवीणा सुमति र्वरेण्या ॥

वंद्यो नृणां स कृपलानिधीमान्, स्वान्तेऽवदातो धिषणावलक्षः ।
शरण्य आचार्य वचोविदग्धः प्रणम्यते चित्तवतां महीयान् ॥



# डॉ. सर्वपल्ली राधाकृष्णन्

आसीद् भूतपूर्वो राष्ट्रपति डॉक्टर सर्वपल्ली राधाकृष्णन् अस्मद्युगस्य महान् दार्शनिको विचारकश्च विद्वान्। विचारपरम्पराया व्याख्यातृषु सोऽभून् मूर्धन्यो व्याख्याता। संसारस्य बौद्धिकेक्षेत्रे क्रान्तदर्शि-तत्त्वचिन्तकेन तेन अप्रतिमं सम्मान मवाप्तम्। तदीयाभी रचनाभि रिदानीन्तने चिन्तने गम्भीरः प्रौढश्च प्रभावः क्षिप्तोऽस्ति।

डॉ० राधाकृष्णन् महाभागो वाङ्मये तपसि विश्वविदितो वर्तते स्म। सोऽहर्निशं स्वाध्याये रतोऽदृश्यत। स्टालिनः प्रायेण देशान्तरीयेषु राजदूतेषु नामिलत् परं रूसराष्ट्रे डॉ० राधाकृष्णस्य प्रभावः सर्वत्र प्रसृत आसीत्; तत्रत्या जनता तस्मिन् परमसम्मानधियं निदधातिस्म। स्टालिनः स्वदेशे तत् प्रभावं तादृशं विलोक्य एकदाभ्यदधात्—"अहं तं प्रोफेसरं द्रष्टुकामोऽस्मि यो दिवानिश मधीयान एव प्राप्यते"। डॉ० राधाकृष्णो न साम्यवादी वर्तते स्म न च रूसदेशस्य राजनीत्या मेव स भृशमप्रीयत परं तदीया ख्यातिः समग्रेऽपि रूसभूमण्डले विकीर्णाऽस्ति। तत्र तेन स्पृहणीया लोकप्रियता प्राप्यत। यदाहि स राजदूत आसीत् तदा यादृशं महान्त मादरं सोऽविन्दत् तादृशं न कोऽप्यन्यो राजदूतः।

डॉ० राधाकृष्णेन "आंग्लानां साम्राज्येऽह 'सर' इत्येतया पदव्यालङ्कृतो भविष्यामि, स्वतन्त्रे सति च भारते देशो मां राष्ट्रपतिपदे प्रतिष्ठापितं विधास्यती" त्येतत् स्वशैशवे कदापि न विचारणं कृतं स्यात्। यदि मनुष्योऽस्ति परमार्थतः सुयोग्यो धीमान् विद्वांश्च तदावश्यमेव स विलम्बेनाविलम्बेन वा उच्चपदे आसीनो भवितु मर्हतीत्येतत् तस्य जीवनं प्रमाणीकरोति स्म। सोऽभूदुत्कृष्टतमाखिलजनहृदयाकर्षणकुशलसम्भाषणकलाविद् वाग्मी। अतः सर्वत्रैव सोऽपूज्यत। तद्विधो वक्तृत्वकलाकुशलो विद्वान् जगति अत्यल्पा एव दृग्गोचरीभवन्ति। तेन जीवने महान् कठोरः परिश्रमो विद्यार्जने विहितः। स ध्यानावस्थिततया कार्याचरणक्षमतां नितरा मपरिमितां न्यदधात्। संसारे दार्शनिकानां मण्डले तस्य परम सम्मानं दृष्टमभवत्। भारतीय सभ्यतायाः सन्देशस्तेन निखिलायामपि जगत्यां विततीकृतः किञ्च प्रतीच्येषु सकलेष्वपि देशेषु तेन भारतस्य संस्कृतिः समीचीनतया वेदितव्यतां नीता।

पण्डित जवाहरलाल नेहरूमपि डॉ० राधाकृष्णस्य विद्वत्प्राग्रहरस्य योग्यता विद्वत्ता च यदा आवर्जितवती तदा सः "कस्मान्न एतादृक् प्रभावपेशलोऽगाधवैदुष्यवन्धुरो वाग्मिनामग्रणी र्मतिमतां मूर्धन्यो महान् मानवः कस्मिंश्चिदुदग्रे पदे प्रतिष्ठा-

प्येत ? कस्माद् उच्चोच्चतरपदानि, राजनीतिज्ञानामेव कृते, अपि तु तानि सरस्वती-कृपाभाजनानां मनवद्यविद्याविद्योतितान्तःकरणानां विद्यानिधीनामपि कृते वर्तन्ते—इत्येतत् तथ्य मुद्घोषितं भवेदि"—त्येतद् विमृश्य तं (डॉ० राधाकृष्ण महाभागम्) भारतस्योपराष्ट्रपतिपदासीनं कृतवान् । उपराष्ट्रपतित्वात्, राज्यसभायाः सभापतिश्च सञ्जातः । राज्यसभायां सः सुव्युत्पन्नतया बुद्धिमत्तया च प्रकृष्टया कार्याण्यकरोत् । सर्वेषा मपि पक्षाणां नेतार स्तदीयाया अनन्यगायाः सुयोग्यताया दिव्यायाश्च धीदीप्त्याः पुरः प्रणतमस्तका अभूवन् । सर्वेषामपि सदस्यानां सः सम्मानास्पदं सञ्जातः । सर्वेऽपि तद्वार्तामादरपूर्वकमश्रौषुः । सर्वेष्वपि तस्य भव्यः प्रभावः प्रतिलक्षितोऽभूत् । समये सति समागते, स भारतस्य राष्ट्रपति रपि सञ्जातः । स तत्पदस्य गरिमाणमतितरा-मवीवृधत्; तदीयामुत्तरदायिताञ्च भास्वरतया सम्पादयामास । तस्मात् महामहिम-पदात् प्राप्ते सत्यवकाशे स दिल्लीतः स्वकीयं निकेतनं गत्वा पुनः यथापूर्वं स्वाध्याये आत्मानं प्रावर्तयत् :

यः कोऽपि तं सरस्वत्याः प्रियं पुत्रमपश्यत् स "नूनं सः संसारस्य शोभास्ति; तस्मादेव प्रकाशं प्राप्य जगदेतत् शमं शर्म च सम्प्राप्नोती" त्येतं विश्वास मधिगच्छति स्म । तद्दर्शनं मानवस्य समक्षे गुरुताया योग्यतायाश्च चारुचित्रं प्रस्तवीति स्म । तेन सह सम्भाषमाणा जनाः परमानन्द मनुभवन्ति स्म । स तेन सहोन्मुक्तहृदयेन वार्ता मकरोत् यस्तत्सकाशे कानिचन दिनानि स्थातुमशक्नोत् । तत्सन्निकर्षं प्राप्यैव वयं "सः संसारस्य विभिन्नेषु बहुलेषु वस्तुष्वभिरुचिं गृह्णाति; सः कीदृश मगाध मपरिमितं नवनवविषयकं विस्तृतं ज्ञानं निदधाती" त्येतदवबोद्धुं क्षमाः जाताः । पुस्त-कानामध्ययने, ग्रन्थानां विरचने, विदुषां समवाये च विचाराणा मुद्गिरणे सः परामेव प्रीतिं प्राप्नोत् । धर्म-दर्शन-राजनीतिषुतत्कृतं सरलं सुन्दरं विश्लेषणं निशम्य तत्र कियन्महन्महनीयमवदातञ्च पाण्डित्य मुत्तरङ्गं भवत् प्रवहतीत्येतस्मिन् विषयेऽभि-ज्ञतां गृह्णन्तोऽनिर्वचनीयं सुखमलभन्त सर्वेऽपि जनाः । दार्शनिकानां वार्ता भाषणानि वा प्रायेणास्मास्वालस्य मुद्वेगञ्च जनयन्ति परं तस्य दार्शनिकस्य वार्ताः विचारा वा वादा निरन्तर मुत्साहं प्रसादं स्फूर्तिञ्च समुत्पादयमासुः इत्येतदासीत् तदीयं नैजं वैशिष्ट्यम् । कामं, भवान् तद्रचितं ग्रन्थ मधीतां, कामं च भवान् तदीयं भाषणं शृणोतु; सर्वत्रैव सः स्वप्रौढप्रकृष्टविशिष्टव्युत्पत्त्या अस्मदीयं मानसं चिह्नितं विदधाति किञ्च तद्विषये 'स दार्शनिकः सन्नपि लोकाभिमतव्यवहार सौन्दर्य सुन्दरः सहृदयताश्रीसमुल्लसितश्चाभवदित्येदपि सम्यगवगतं सञ्जायते । न सः केवलकल्पना-स्वेवोत्पतति स्म स तु वस्तुतो यथार्थतायामपि अवागाहत ।

डॉ० राधाकृष्णस्य प्रचुरा उक्तयः सूक्तितां गताः सन्ति । जनाः प्रायेण ताः प्रयुञ्जते । सः पश्चिमीयां सभ्यतां टीकमान एकदा प्रावोचत्—"वयं विहगा इव

व्योम्नि उत्पतामो, मत्स्या इव च वयं वारिणि तरामः परं केन प्रकारेण मानव इव जगति वसेम इति न बुध्यामहे"।

"न अज्ञानवत्ता मानवस्य कापि विशिष्टता अस्ति,
पर मेतदज्ञान मित्येदवगमन मस्ति वैशिष्ट्यम्"।

"सदितिहास निर्माणार्थं मनेकशताब्द्योऽपेक्ष्यन्ते; वहुशताब्द्यभिव्यापिन इतिहासा 'प्रथात्वे' परिणमन्ते"।

द्वितीयस्मिन् विश्वसमरे उपसंहृते सति, सः (डॉ० राधाकृष्णन्) वदतिस्म—"शान्तिस्तु यदा युद्धे विजय-प्राप्त्यर्थं प्रयत्नः सञ्चलित आसीत्, तदैव उपरता; तेषामेव जनानां वा तासा संस्थानां निर्णेतृत्वात्, ये या वा जगत्या अस्या उपरि प्रलयङ्कारिणीनां विपदां निपातं विदधति स्म"।

डॉ० राधाकृष्णन् तैं र्जनैरेवसार्धं मुन्मुक्तमना भूत्वा संलपति स्म येषु सः साधुतयाभिज्ञोऽभवत्। अस्मित् विषये सी. ई. एम. जोडेन लिखित मस्ति—"एच. जी. वेल्स महोदयस्य सदने भोजनार्थं यदाऽहमुपस्थित आसं तदा डॉ० राधाकृष्णस्य सन्निकर्षोऽजायत य स्तं नाहं विस्मर्तुं 'शक्नोमि। तस्मिन् समयेऽन्ये च कतिपये प्रथिताः पुरुषा स्तत्र उपस्थिता आसन्। विविधेषु विषयेषु संलापः प्रवृत्त आसीत्। परं राधाकृष्णस्तूष्णीमेव स्थितोऽदृश्यत। स भोजनं तुं नागृह्णात्, जल मवश्यमसकृदपिवत्। स ध्यानपूर्वकं वार्ता मश्रृणोत्। अस्ति स महान् विद्वान् किञ्च संलपनेऽपि परमदक्ष इत्येतत्तु सर्वेषामप्यस्माकं विदितमेवासीत्। तस्मात् तदीयं तन्मौन मस्मास्वाश्चर्यमजनयत् परं तस्मिन् वादविवादकाले तस्य मौनाश्रयण मतितरां सबलं सजीवं प्रातीयत—इत्येतस्माद्धेतोस्तदीय स्तत्कालवर्ती प्रभावो नैज मेकं वैशिष्ट्यं निधत्तेस्म।"

डॉ० राधाकृष्णे प्रत्यङ्गमभिव्याप्य मानवता समुच्छलति स्म। मानवेषु प्रवर्तमानं पारस्परिकं सम्बन्धं स महत्त्वमय मवागच्छत्। स एकदा प्रावोचत् "अस्ति सः सत्पुरुषः. स चासत्पुरुष-'इत्येतदवगमनं परमकठिनं नास्ति। सिद्धान्ततः कस्यापि जनस्य विचारोऽच्छोऽनच्छो वा वक्तुं शक्यः परं कमपि नरं वा काममपि नारीम्प्रति तद्विधो विचारो नाभिव्यक्तीकर्तुं शक्यो भवति। प्रतिजन मूनोऽनूनो गुणो दोषश्चावश्यमेव सन्निविशते"।

डॉ० राधाकृष्णेनेदं प्रमाणीकृत यदेको दार्शनिक उत्कृष्टतरो राजनीतिज्ञोऽपि भवितु मर्हति। स दार्शनिकः पण्डित एव न स महान् साहित्यिकोऽप्यवर्तत। उपन्यास-कविता-रूपकाणि च रुचिपूर्वकं सः पठति स्म। मतभिन्नतायां सत्यां न सोऽप्रसाद

मयात्। सोऽस्मदीयमन्तव्यं ज्ञातुं प्रायतत। सोऽस्माकीनविचारेषु तु अभिज्ञतां निदधात्येव अतः सोऽस्माकं विचारान् तावत्यैव व्याख्यया व्याख्यातान् करिष्यति यावत्या स्वकीयानित्येतद् वदता सी. ई. एम. जोडेनैकदालेखि—"राधाकृष्णो येषु विचारेषु सहमतो न भवति तान् विचारानपि सोत्साहं मनसा व्याख्याति"।

डॉ० राधाकृष्णो यथा महान् विद्वान्, महान् दार्शनिको महान् वक्तासीत् तथैव स महान् लेखकोऽप्यभूत्। स बहूनां विशाल-विशालतराणां ग्रन्थानां प्रणेतासीत्। 'भारतीयदर्शन' (इण्डियन फिलासफी)-'धर्म और समाज' (रिलीजन ऐण्ड सोसायटी) 'सत्य की ओर' (रिकवरी ऑफ फेथ) 'पूर्व और पश्चिम' (ईस्ट एण्ड वेस्ट)–'प्राच्यधर्म और पाश्चात्य विचार' (ईस्टर्न रिलीजन्स ऐण्ड वेस्टर्न थॉट)—'उपनिषदों' की भूमिका' (दि प्रिंसिपल उपनिषत्स) इत्येतदादिकास्तदीया ग्रन्था अनेके सन्ति। तद् ग्रन्थान् सकलेऽपि संसारे परमादरेण रुच्या च सह अधीयते विद्वांसो विद्यार्थिनश्च।

डॉ० राधाकृष्णोऽस्मद् राष्ट्रस्य राष्ट्रपतिपदमध्यास्ते स्म—इत्येतद् विचार्यं कस्य न भारतीयस्य शिरो गर्वेणोन्नतं जायते। सः स्वकर्त्तव्यं परमोज्ज्वलतया हृदयहारितया च निरवहत्। आसीत् स मुनिरिव वस्तुतः। अध्ययने अनुशीलने च तन्मनो भृशं रज्यति स्म। अभूच्च सः प्रकृत्या धार्मिकः। स्थविरताया मपि तस्मिन् परमतीक्ष्णा धी र्व्यलसत्। सः स्वजीवने गुरुगुरुतराणि कार्याण्यन्वतिष्ठत्। परमप्रकृष्टोत्कर्षेण समुज्ज्वलया च दीप्त्या चेतश्चौर्यचतुरया च सुचारुतया सः स्वजीवनं व्यतीतम करोत्।

विद्वान् महान् दार्शनिकोऽद्वितीयः
क्वास्यां जगत्यां स इवास्ति कोऽन्यः
धन्योऽस्मदीयः प्रियदेश एषः
जातो ह्यसौ राष्ट्रपति र्यदीयः ॥१

चित्तं तदीयं रमते स्म नित्यं
शास्त्रेषु काव्येषु च दर्शनेषु
तस्मान्निशायां दिवसे स धीमान्
स्वाध्यायलीनो ह्यवलोक्यते स्म ॥२

भूत्वा बुधो राष्ट्रपतिः स वंद्यः
सिद्धं करोति स्म हि राजनीत्या
मेतत् समीचीनतयापि कार्यं
कर्तुं क्षमः दार्शनिकःसुरीत्या ॥३

लोकेऽस्ति कोऽसौ प्रवरो मनीषी
यं तस्य वैदुष्य महो चकर्ष
नो किञ्च जातो नितरां प्रसन्नः
सम्भाषणं तस्य निशम्य हृद्यम् ॥४

धन्या भृशं भारतभूमिरेषा
जातं जनु स्तस्य हि यद् बुधस्य
देशोऽस्मदीयोऽत्र गतः प्रकर्षं
नूनं तदीयै गुणराशिरम्यैः ॥५

विद्यासुधायाः स महानसीमो
गम्भीर आसीत् सुमतिः समुद्रः
ज्ञानं प्रकृष्टं हि नितान्तदीप्तं
विद्योतते स्मातितरां वलक्षम् ॥६



# पुरुषोत्तमदास टण्डनः

जीवने सफलताधिगता स्यान्नवा स्यादित्येतन्न चिन्तयन्तो मनस्विनो मनीषिणः सिद्धान्तपथात् कदापि नात्मानं स्रंसयन्ति । अविचलतया सिद्धान्तेषु स्वावस्थानमेव ते सफलतां मन्यन्ते । पदं प्राप्तं भवेन्नवा भवेत्; मित्राणि सहमतानि स्यु र्न वास्युरित्यत्र न मनागपि स्वचेतः सन्निवेशयन्तो नैजोद्देश्यसिद्ध्यै स्वीकृतेषु सिद्धान्तेषु स्वकीयामास्थां निदधतस्ते विना विरामं कर्त्तव्यानि पालयन्तः सततं पुरः उपसरन्ति ।

श्री पुरुषोत्तमदास टण्डनोऽस्मदीयो नेता शैशवादुपरामानेहसं यावत् कदापि न कस्यापि पुरः स्वकीयं शिरोऽनीनमत् । न सिद्धान्तानां स जातु विक्रयमेव व्यदधात् । यत् सत्यं सोऽमन्यत तत्र दृढीयस्कतयाऽऽत्मानं स्थिरीचकार; कामं निखिलापि जगती तत्र विरोधं दर्शयेत् । तल्लोभस्तं स्प्रष्टुमपि नाशक्नोत् गुरुगुरुतरो नेतापि तस्याग्रेऽनुचितं किमपि वक्तुं न समर्थोऽभवत् । सर्वेऽपि, सन्तोपि कतिपयेषु तत्त्वेष्वननुकूलाः, तं सदाद्रियन्ते स्म ।

एकदा पण्डित जवाहरलाल नेहरुणा सह श्रीटण्डनस्य कस्याश्चन सभायाः सम्भावनं निश्चितमभूत् । 'दशवादन समये भवतः स्थानमागन्तास्मि; भवान् पूर्णतया समुद्यतः प्राप्तोभवेदिति पं० जवाहरलाल ष्टण्डनं न्यगादीत् । पं० जवाहरलालो यथा-समयं श्री टण्डनस्य सदन मागतः परं तदा अस्नात एवासीत् श्रीटण्डनः । तं प्रतीक्ष-माणस्य श्री जवाहरलालस्य एकाघटी व्यतीयाय । रोषात् पं० जवाहरलाल इतस्ततः स्वहस्तौ चालयन् पुनः पुनः 'टण्डनजी समये कदापि न कृतसज्जः प्राप्तो भवति; विचित्र एव सः' इत्येतदभ्यदधात् । यदा हि स गन्तु मुद्यतो भूत्वा वहि रागतः; पं० जवाहर-लालं स 'विलम्बस्त्वधिको न जातः' इति पप्रच्छ । पं० जवाहरलालः सस्मितं प्राह 'कृपयोपविशतु, चलतु च शीघ्रमेव सम्प्रति' इति । इदमासीत् टण्डन-व्यक्तित्वं, यद्धेतोः पं० जवाहरलाल आवेशाश्रितो भूत्वापि नैकमपि शब्दं मुखान्निर्गमयितुमशक्नोत् ।

यदा श्री पुरुषोत्तमदास टण्डनश्छात्र आसीत्, स आंग्लमेकं, कृताशिष्टत्वात् तस्य, प्रताडयतिस्म । एतत्कार्यं, तेषु दिनेषु कोऽपि विरल एव भारतीयः कर्तुं साहसं न्यदधात् । न टण्डनः कदापि कस्मादपि अविभेत् । अन्यदा म्योर सेण्ट्रल कालेजे स आरक्षिणमेकमताडयत्; अतः आपदेव महत्युदतिष्ठत् । प्राचार्यः कालेजात् तं पृथगकरोत् । एतत् तस्यासीत् सह्यं परं नासीत् तस्य कदापि सह्योन्यक्कारः ।

आसीत् टण्डनः प्रयागविश्वविद्यालये क्रिकेट खेलायाः प्रमुखः। सः क्रीडा-स्वभिरुचिं बिभर्तिस्म। युवावस्थायां मल्लतायामपि भृशमरज्यत्। शतरञ्जनेऽपि सः प्रीतिमविन्दत्। श्रूयते यत् सकृत् स तत्र (शतरञ्जन-क्रीडायाम्) अतितरां निलीनत्वात् परीक्षा प्रश्नपत्रमपि विसस्मार अतः बी. ए. परीक्षायामुत्तीर्णतां न लब्धु मार्हत्। एतस्या घटनायाः अनन्तरं स तत्क्रीडायां जीवनपर्यन्तं भागं न जग्राह।

श्री टण्डनजी प्रयाग विश्वविद्यालये प्रतिभावान् छात्र आसीत्। सः प्रयागे उच्चन्यायाधिकरणे वाक्कीलतायामपि बहूनि अहानि अनैषीत्। स नाभाराज्ये मन्त्रि-पदमप्यध्यास्ते स्म। पञ्जाब नेशनल बेङ्के च सः साचिव्यमकरोत्। सार्वजनिके जीवने सः राष्ट्रिय महासभायाः सदस्यो भूत्वा प्राविशत्। प्रयागनगरपालिकाया अध्यक्ष-पद मपि व्यभूषयत् सः। लोकसेवकमण्डलस्याध्यक्षासनमपि चिरमलञ्चकार, अनेकानि च वर्षाणि उत्तरप्रदेश-विधानसभाया अपि आध्यक्ष्य मन्वतिष्ठत्। एकदाऽसौ उत्तरप्रदेशीय-विधानसभायाम् 'बहुमत प्राप्तिमात्रेण नाहमध्यक्षपदं स्वीकर्तु मिच्छामि, चेदल्पमतवन्तो जना अध्यक्षपदासीनं मां द्रष्टुं नैवाकाङ्क्षन्ति तदा पदत्यागमेव समुचितं मन्ये' इत्य-ब्रवीत्। तस्य निष्पक्षता सत्यनिष्ठा च सन्देहात् परतआसीदतः कोऽपि न प्रत्यादेशं प्रस्तुतीकर्तुं शक्तिं निधत्तेस्म। अध्यक्षतायां तु सः श्री बिट्ठलभाई पटेलमपि जनानां परमसम्मानस्तवनपात्र मतिशेते स्म।

श्री टण्डन उदारः संवेदनशील आसीन् मानवः। गृहागतस्म जनस्य वार्तां स ध्यानेन अश्रौषीत् तत्सहायकश्चाभवत्। बहवस्तु जनास्तत्समय भुधैव गमयन्ति स्म। तस्मात् सः पत्रादिलेखनकार्यार्थं पर्याप्तं समयं नावाप्नुते स्म। जनाः स्व पुत्रपुत्र्यादिपरिणयसम्वन्धिनीं, कौटुम्बिकरुजाविषयिकां, गृहीयसमस्यापरामार्थिक-तांञ्चधिकृत्य प्रायेण वार्तां विदधते स्म; सोऽपि अशृणोत् तां, परामर्शं च समुचितं प्रादात्।

श्री टण्डनः स्वपुरातनपुस्तकानां विक्रये न रुचिं न्यधात्। न तत्कार्यं तस्मै अरोचत। पुस्तकेषु लिखितानि तानि तानि वाक्यानि पठित्वा अतीता मधुराः स्मृतय स्तन्मानसे उद्बुद्धा अजायन्त अतः स तानि पुस्तकानि सततं रक्षन्नेव प्राप्यत। बी. ए. परीक्षोत्तरणात् प्राक् स व्याकरणविषयकमपि पुस्तकं प्राणैषीत्। तत्प्रकाशनं मुद्रणं च वी. ए. यदा स जातस्तदाभवत्।

श्री टण्डनस्य साम्यं निर्भीकतायामपि कर्तुं न कोऽपि क्षमोऽभवत्। इलाहावाद-निगमस्य यदा सोऽध्यक्ष आसीत्, वायसरायस्य तरणसरसोनिमित्तेन पानीयमपेक्षितम-

भूत् । तस्मिन् समये नगरे जलस्यातिन्यूनताऽऽसीत् । टण्डनमहानुभावः स्पष्टतया जल-प्रदानं प्रतिषिसेध समग्रेऽपि नगरे अस्मिन् विषये महती चर्चा प्रावर्तत । टण्डन एव तस्मिन् समये तद्विधं कार्यं कर्तुं प्रभवति स्म । इलाहाबाद निगमेन सेनाधिकारिणां कृते ऋणरूपेण षष्ठिसहस्ररूप्यकाणि प्रदत्तान्यासन्, तद्रूप्यक-प्रदानाय असकृत् तेऽधिकारिणोऽन्वरुध्यन्त परं न तैः स धनराशिः प्रतिनिवर्तितः । टण्डनोऽभवत् क्षुब्धः । न स एतं प्रमादमसहत । स तत्काल एव सेनाधिकारिप्रवरम्प्रति तस्मिन् विषये पत्रं प्राहिणोत् । लिलेख च स तत्र यद्यविलम्बेनैव रूप्यकाणि षष्ठिसहस्रसंख्यानि न प्रेषितानि स्युः, सेना न जलविन्दुमपि प्राप्स्यति । तत्पत्रप्रभावात् समस्तोऽपि धनराशिस्तत्काल एव लब्धोऽभवत् । एतादृशं श्लाघनीयं साहसं तं विहाय कोऽन्यः कर्तुं शक्नुयात् तदानीन्तने काले ।

श्रीटण्डनो भारतीय संस्कृते महान् परिपोषक आसीत् । हिन्दीभाषाया उत्थापने प्रसारणे च सोऽभिनन्दनीय मविस्मरणीयं कार्यमन्वतिष्ठत् । इलाहाबादस्य हिन्दी-साहित्यसम्मेलनं तदीय मेव दानमस्ति । अन्त्येषुदिनेषु सम्मेलनसम्बद्धजनेषु जातः कलहपूर्णः संघर्ष स्तस्य हृदयं नितरां पीडयति स्म; अतः स खिन्नो विषण्णश्च चिरमवालोक्यत । न हिन्दी भाषायाः प्रगतिं कोऽपि प्रत्यूहो रोद्धु मीष्टे इत्यत्र स विश्वसिति स्म; तस्मात् कारणात् सत्यामपि तथाविधायां स्थित्यां स धैर्यं नामुञ्चत् । तदीयं प्रकृष्टं हिन्दी-प्रेम, भारतीयसभ्यता-समुदाचारानुरागश्च प्रगाढः प्रायेण कतिपयेषु जनेषु 'अस्ति स यवन-विरोधी'त्येतं सन्देहमजनयताम् । अतः परस्तात् कान्या व्यलीकधारणा भवितु मर्हति ? न सोऽयं हिन्दू अयं च मुसलमान इत्येतद्भेदधियमपुष्णात् । 'मुस्लिम लीगस्य कटुनिन्दाकारित्वात् हिन्दी पक्ष पातित्वाच्च मां जना मुसलमानद्रोहिणमवगच्छन्ति; कियन्तो मुसलमानाः सन्ति मम मित्राणि किञ्च तेषां रक्षाया मह स्वकीयानसूनपि ग्लहत्वेन निधातुं शक्नोमीत्येतत् तथ्यं जना न जानन्ति' इति स एकदाभिदधदवाप्यत । स उर्दूभाषां च भृश माद्रियत, प्रायेण तत्कवितां च रुच्याश्रावयदिति न विदन्ति केचन जनाः ।

जीवनस्यान्तिमेषु दिनेषु पुण्यश्लोकष्टण्डनो राष्ट्रिय महासभायां (कांग्रेस) स्वकीय मसन्तोषं निदधदध्यगम्यत । असकृत् स गुरुगुरुतरान् राष्ट्रियमहासभापुरुषान् तीक्ष्णतया अनिन्दत् । एकदा इलाहाबादे एकस्मिन् महासमारोहे स नेतारं महान्तं कटुतयालोचयाम्बभूव । 'अयं नेतास्ति किं वा चारणः ? जवाहरलालो यद् ब्रूते तत्र 'आ एवम्' इत्येतदेव वदन् प्राप्यते । अनुनयनमेव तत्कार्यम् । राष्ट्रिय महासभायामेतद्विधानां जनानां संख्या वृद्धिं प्रयान्ती दृश्यते, अस्ति नैतद् देशहितावहम्' इति सः स्फुटतयैवा-

शंसत् । आसीद् वस्तुतःपुण्यचरितष्टण्डनो निर्भीकनेता । अनेकविषयेषु तदीयो महात्मना गान्धिनापि सह मतभेदो ऽदृश्यत ।

आसीत् पावनहृदयष्टण्डन उत्तरप्रदेशीयकृषीबलान्दोलनस्य ज़न्मदाता । सः दशाधिकैकोनविंशतिशततमेशवीयाब्दे कर्षक-संघं संस्थापयामास । तत्कार्यं मिलाहाबादमण्डलं यावत् सीमित मासीत् । एकविंशत्यधिकैकोनविंशति शततमेशवीयाब्दे सः प्रादेशिकाधारे कर्षकाणां संगठनं व्यदधात् । १९४२ तमेशवीयवर्षे स नैनी कारागारे आसीदस्मदीयशक्तेः साकारं स्वरूपम् । तत्र तस्य शक्तेः पारमार्थिकतया ज्ञानं प्राप्तमजायत ।

श्री टण्डनस्य जीवनं वस्तुतो देशभक्तिपरकं काव्यम् । तत् सर्वदैव भाविनीं सन्ततिं प्रोत्साहयिष्यति । स राजनीत्या मनन्यगमेव यशोऽविन्दत् । नूनं सोऽस्मद् भारतस्य श्रद्धेयो नेता । सः परमकुशलतया सत्यतया च स्वदेश मसेवत । न देशवासिनः कदापि तं विस्मर्तुं शक्नुवन्ति ।

सिद्धान्तनिष्ठः पदलोभहीनो
निर्भीकनेताऽतिपवित्रवृत्तो
देशानुरागी विदितश्च हिन्द्याः
उत्थापकष्टण्डन ईड्यते सः ॥

पुरुषोत्तमदास टण्डनः प्रकृत्या साधु रासीत् । स जीवनस्य दारिद्र्यकृशता मसहत परं न चारित्र्यस्य दुर्बलताम् । स बालिशतां तु नानिन्दत् परं दुर्जनतायां सदैव अताम्यत् । जाति वर्ग सम्प्रदायादिपरकान् विचारान् स न आद्रियत परं राष्ट्रियत्वं सर्वदैव आर्चत् । तास्ता भाषास्तु सोऽजस्र ममीमहत् परं सः स्वकीयां राष्ट्रभाषां हिन्दीं प्रति अनुक्षण मुच्चतमं सम्मानं महत्त्वञ्च प्रायच्छत् ।

ज्ञानं श्रीटण्डनस्यासीदगाधं हृदयञ्च परमोदार मतः स वस्तुत स्तु राजर्षि रिव समलक्ष्यत । सः सन्नीत्याम् अस्निह्यत्, सन्मार्गे च अप्रीयत । स धर्मभावनायाम् अरज्यत् त्यागे च स्पृहयते स्म । स तपस्यायाम् अतुष्यत् शूरतायाञ्च प्रासीदत् । सहिष्णुतायां सो ऽमोदत दयायाञ्च अरमत । स आर्जवेऽह्लादत सत्साहसे च अनन्दत् । स उत्साहेन्यषीदत् अनलसत्वे च अहृष्यत । क्रियाविधिज्ञतायां सोऽदीप्यत सेवायाञ्च अमोदत । उपकारितायां सः श्रद्धत्तेस्म ज्ञाने च अनमत् ।

स मेधावी निधानमिव स्फूर्तेः, राजधानीव विवेकस्य, कुलगृहमिव विद्यायाः, तीर्थस्थानमिव अनुशासनस्य, सिंहासनमिव कर्त्तव्यस्य, विहारोपवनमिव अभीरुतायाः,

सदनमिव सुरुचेः, सुशालेव शालीनतायाः, आराध्य इव अव्यसनितायाः, भारतमातुः प्रियपुत्ररत्न मासीत् । राष्ट्रं तेनात्मानं धन्यममन्यत ।

आसीदसावन्यतमः सुजनशिरोभूषणम् । तस्याप्रीति र्दोषे, भङ्गुरत्वं रागे, असम्बन्धित्वं दुर्वासनायां, मलिनत्वम् अलसतायां, विमुखत्वं कलुषतायां, घृणा असत्कर्मणि, खिन्नता राष्ट्रस्यापकर्षे, द्वेषोऽसत्यवादितायाञ्च पर्यलक्ष्यत । सर्वत्रैव तस्य राजनीतिचणतायाः, समाजहित साधनायाः, राष्ट्र श्रेयः प्रकल्पनाया मानवताराधनायाश्च प्रशंसाश्रूयत ।

यत् कृत्वा न भवेद् धर्मो न मोक्षो न यशो भुवि<br>
शरीरस्य भवेत् खेदः कस्तत् कर्म समाचरेत्

इत्येतदभिदधत् सोऽश्रूयत ।

सोऽद्य न, परं यशः शरीरेणाद्यापि वर्तते ।



# गणेशशङ्कर विद्यार्थी

प्रज्वालित साम्प्रदायिकतानलभीषणस्य तस्य हृदयच्छेदकस्यानेहसो व्यतीतस्य २५. ३. १९७६ तमदिनाङ्के पञ्चचत्वारिंशद् वर्षाणि जातानि । एकत्रिंशदुत्तरैकोन विंशतिशततमेशवीयाब्दे, मार्चमासे पञ्चविंशे दिनाङ्के कानपुरे शोणितसरिद् अतितरां रभसा प्रवहन्ती प्रेक्षिताभवत् । समग्रमपि नगरं श्मशाने परिणत मजायत । समिद्धस्य हिन्दू-मुस्लिमवैमनस्याशुशुक्षणे निर्वापणार्थं न किमपि साधनं सुलभं बभूव । तदानीं फीलखानाख्यया वीथ्या श्रीगणेशशङ्कर विद्यार्थी मनसि दृढतमं सङ्कल्पं निधाय तासां वसतीनां दिशायां प्रविवेश यत्र हिन्दवो मुसलमानाश्च दारुणे नृशंसतापूर्णे हत्याकाण्ड-कर्मणि रक्तपायिनो राक्षसा भवन्तो निलीना आसन् । तस्य समदर्शिन उदात्तचरितस्य सिंहस्य पदानि पुरः क्षिप्रतयोपसरन्त्येव व्यालोक्यन्त । सश्चटाईं, ततो बंगालीं, तत इटावाबाजारं, ततो नारियल बाजारं ततश्च मिश्री बाजारं गच्छन् चौबेगोला मास-साद । तेन सार्धं कतिपये कार्यकर्तारः कतिपयाश्च स्वयंसेवका आसन् । केचन मुसल माना मुस्लिमपरिवाररक्षणाय भ्रमन्तं तमभ्यत्रासिषुः । केचन च तेष्ववादिषुरुच्चैः काफि-रोऽयं, व्यापादयत, इमम् । विद्यार्थी गणेशशङ्करः स्वकीयं शिरो नमयन् "यदि मम शोणितेन एतेषां पिपासा शाम्यति, तदा शाम्यन्तु ते तामिति व्याहरत् । मृत्युस्तु ध्रुवः, अतः पलाय्य न जीवन-रक्षण मुचितम् । पलायनं कापुरुषत्वम्" । हतश्च तैः रक्तपा-यिभी राक्षसाधमैः स मानवताराधक ईश्वरीयो महान् दूतः ।

तस्मिन् समये स एकचत्वारिंशद्वर्षदेशीय एव वयसि समतिष्ठत परिवार-स्थिति नितरां च छिन्नभिन्ना । माता, पिता, ज्येष्ठभ्राता, पत्नी, अबोधाः षड् वत्साः, येष्वपत्येष्वेक एवाष्टादशवर्षवयस्क आसीद्,—इत्येते सर्वे जीवन्तोऽपि हतजीवना अजा-यन्त । अथ च साप्ताहिक 'प्रताप' पत्रस्य सः पाठकवर्गो, यः कानपुरात् पोर्ट ब्लेयरं यावन्नियमिततया व्याप्त आसीत्, सञ्जातोऽनाथः । किञ्च सः क्रान्तिकारि-समुदायो ऽभवत् नाथरहितो, यस्मिन् आजाद-भगतसिंह-अशफाकउल्लादिका आसन्; ये देशभक्ताः प्रतापकार्यालयाद् धनमन्यच्च साहाय्यं सर्वदैव यदा तदा समलभन्त । कानपुरस्थाः श्रमजीविनस्तं स्वरक्षकं मेनिरे, कानपुरसंकाशौद्योगिकनगरे सर्वप्रथमं तस्यैव श्रमि समासंस्थापकत्वात् । आदौ स एव नरवल ग्रामे ग्रामवासिनः समवेतीकृत्य जीवन-नौकासञ्चालनप्रयोजनेन कार्यकलापं तेषां कृते प्रदापयन् कुटीरोद्योगवर्धनात्मकस्य कार्यस्य सूत्रपातं विदधावतोऽसौ कानपुर मण्डलस्य ग्रामवासिभिः स्वकीयपरमहित-

चिन्तको मतोऽभवत् । संयुक्तप्रान्त ( उत्तर प्रदेश ) राष्ट्रिय महासभायाः आध्यक्ष्य मप्युवाह । यवीयस्येव जीवने षट्कृत्वो देशसेवायां कारावासदण्डेन दण्डितोऽभवत् ।

अद्यतनं भारतं केवलं तं पत्रकारत्वेण हुतात्मत्वेन च अभिजानाति । स आसीद् एकः सहृदयः पिता, कर्त्तव्यनिष्ठश्च पति रप्येतन्न कोऽपि अवगच्छति । उत्तरदायित्व-षरकः कियान् व्यथाप्रदो भरस्तस्योपरि निपतित आसीदासीच्च स महान् सत्साहसी मानवोऽद्भुतो मानसेन कियानेकाकीत्येतत्तु सर्वं तदीयानि पत्राणि जानन्ति, जानन्ति च दैनिकवृत्तायाश्च मूकानि पत्राणि । पत्रकारस्य गणेशस्य पत्राणां ज्ञातारस्तु सन्ति भूयांसः परं पितु र्गणेशस्य पत्राणां वेत्तारस्तु सन्त्येव न । पितु र्गणेशस्य भावनाया मनभिज्ञा जनाः पत्रकारप्रवरस्य गणेशस्य भावनानां चित्रणं कथं हि कर्तुं मर्हन्ति ? तद् यद्यसम्भवं न, तदा कठिनन्त्ववश्यमेव ।

श्रीगणेशशङ्करस्य जीवनं कर्त्तव्यपालनपर मासीत् । 'कामं कर्त्तव्यपालने कठोर कठोरतराण्यसहनीयानि कष्टानि आपतेयुः परं न तत्र कदापि स्खलनं वरम्'—इत्येत-स्य यस्य विचारस्य सः पोषकोऽभूत् तं विचारं समग्रापि जनता तदाचारे व्यवहारे च दृष्टवती । आसीत् स वीरवरो योद्धा । २९. १. १९३१ तमेशवीयदिनाङ्के हरदोई कारागारे स स्वडायर्य्या मलिखत् "आजीवन मह मन्यायमत्याचार ममानुषिकताञ्च विरोद्धु मयुध्ये; ईश्वरः प्रयच्छेद् वलं, येनागामिन्यपि काले योद्धुं क्षमो भवेयम्" । रायबरेलीस्थेषु कृषीवलेषु आंग्लशासनकृतां गुडवृष्टि मधिकृत्य यां हि शासनालोचनां स निर्भीकतयापत्रे चकार तद्धेतोस्तदीया कारागारयात्रा याभवत् साभवत् प्रथमा । तदनन्तरन्तु कारायात्राणां ततिरेवोदतिष्ठत् । यदा यदा शासनमन्याय मत्याचारश्चाक-रोत् तदा तदा सः तद्विरोधार्थं स्वकीयं स्वर मुत्थापयामास; शासनञ्च तद्वक्त्रं संवरीतुं प्रायतिष्ट । एतस्मिन्नेव सन्दर्भे प्रतापपत्र मपि व्याहतगतित्वं नीतमभूत् वहुधा । मानहानिविषयक आरोपश्च सोढोऽनेककृत्वः । जीवननिर्वाहार्थं कणोऽप्यन्नस्य दुष्प्रापः सञ्जातः । वृत्ते रपहृतत्वाज्जीवनं तस्यापद्भिः कठोराभिः पर्यपीड्यत भृशम् । परं न सः स्वकर्त्तव्याद्-देश-सेवामार्गात्-च्युतो वभूव । त्रिंशत्यधिकैकोनविंशति शततमेशवीय वर्षे फतहपुरकारागृहस्य वन्दितां गतत्वात् प्राक् सः स्वर्गीय पण्डित माखन-लाल चतुर्वेदिनोऽतिथि रभवत् तत्सन्निधौ वासं विदधता तेन बन्धुज्येष्ठं प्रति यत्पत्र मलेखि, तदिदानीमपि स्वकीयाः सम्पूर्णा अपि भावनाः परिगृह्य मुखरीभवन्ति पूज्यबन्धो, प्रणामाः ।

झांसीतो मत्प्रेषितानि पत्राणि प्राप्तान्येव स्युः ।....... प्रत्यूष एवाहं चतुर्वेदिना सार्धं बनापुरामागतोऽस्मि । होली-दिनमिदम् । भवन्तो मयि चिन्तिताः स्युः । परं न चिन्ता कार्या मनागपि । इतोऽहं पञ्चमे दिनाङ्के प्रस्थास्ये । षष्ठे प्रातः कानपुरं

प्राप्तः स्याम् । गेहमागम्य भवत्सु सर्वेषु मेलनं भवेत् । चेत् सम्भवं जातं, तदा नित्य कर्मभ्यो निवृत्तो भूत्वा किमपि अभ्यवहरेयम् । ततः करिष्याम्यात्मान मारक्षि (पुलिस) करगतम् । दण्डः कियान् कीदृशश्च स्यादिति न ज्ञायते । एकवर्षव्यापि दण्ड-कष्टन्तु सोढव्यं भवेदेवेति तर्क्यते । न भवन्तः परं तत्कष्टचिन्तायां भवतः पातयेयुः । मम हितधियस्तु सन्ति सर्वत्र । ततः परस्तात्तु बलवत्तम मवलम्बनं भगवतोऽस्त्येव । इदं कष्टं सोढव्यमेव । चेदस्मात् कष्टादात्मनः पदमपसृतं व्यधास्यं तदा मम जीवनमभविष्यत् कटुतरम् । कष्टाल्लाभविशेष एव कोऽपि भवेदित्यहं विश्वसिमि । भवांश्चिन्तां न कृत्वा स्वजनानाश्वामयतु, भवतु च मयि शुभंयुः ।

कारां गच्छन्नपि गणेशशङ्करो न कुटुम्बिनां पीडां विसस्मार । नासीत् सः स्थिरप्रज्ञो यं जीवनस्य भावनाः न स्पृशन्ति । सामान्यं मानवत्व मपि तमप्रीणात् । तन्मानवत्वमेव तज्जीवनस्य लक्ष्याय अकल्पत । सः सुख दुःखञ्च न समममंस्त । परं तत्सहन मवश्यमेवाजानात् । नूनं सहिष्णुताया मेव मानवः साधु परीक्ष्यते । कुटुम्बस्य कृते स्व जीवनस्य वाञ्छनीयत्वं सः सम्यगवेदीत्; स्वपरिवारार्थं सन्ततं तन्मानसे करुणासागर उत्तरलो भवन् विराजते स्म । स जीवनादर्शप्राप्तिप्रयोजनेन जीवनधारणं श्रेयस्कर मित्येतां भावनां स्वजनानां चेतसि सन्निवेशयामास । क्व फतेहपुरस्य नैन्याश्च कारागारः; क्व च तत्रत्यो भीषणो निदाघः, क्व च तृतीयस्याः श्रेण्याः वन्दी गणेशशङ्करः ! नासीद् दैहिक्या मानसिक्याश्च व्यथाया अवसानम् । स्वमनोवलं धैर्य्यं च न मुञ्चन् सदैव सः ईश्वरावलम्बिनीमास्थां नोज्झाञ्चकार । स्वकीये ज्येष्ठे पुत्रे हरिशङ्करे स भृशं प्रीयते स्म स्निह्यति स्म च । सः ( हरिशङ्करः ) प्रायेण अस्वस्थतामियाय । ७।२।१९२२ दिनाङ्के लखनऊ कारागृहे यदा स हरिशङ्करस्य सुस्वस्थतोन्मुखताविषयिणीं सूचनां प्राप्तवांस्तदा मूकडायर्य्याः पृष्ठान्येव पितु र्व्याकुलं मनः सान्त्वनाप्रदान्यभूवन् ।

ईश्वरानुकम्पया स मोहवान् सन्नपि निर्मोह इवावातिष्ठत । शासन-कोपपात्र त्वात् तस्य परिवारः सर्वापहारिण्यां विचेयतायां ममुत्पादितां विध्वंसनसहनशक्तिमपि अविन्दत् । पितुः कारागार वासित्वात् तद्वत्साः पितृतुल्यस्नेहावाप्तौ तु यथाकथञ्चिदाशावन्त आसन् परं पितुः प्राप्ति स्तु कठिनैवेत्येतत् ते मन्येरन् । विधाता चकार च तत्परिवारं तद्विधासहनीयविपत्सहनक्षमम् । सः सर्वदा स्वपरिवारं स्वानुहारिणं विधातुमियेष । सदा सः पत्रैः स्ववत्सान् प्रति विवेकपूर्वकं बोधयितुं प्रायस्यत् । एकदा सः पत्रे लिलेख—'वक्तव्या स्वमाता, न सा मयि व्याकुला स्यात् । अस्म्यहं स्वस्थः । अस्मिन् समये तस्यां या विपद् वर्तते सा देशस्य सहस्रशः परिवारान् बाधते । वयं धर्मकार्यानुष्ठानपराः स्मः । यत् कष्ट मिदानीमस्माभिः सह्यते न तत् पापकर्मणः कृते । परिवार स्थिते रवरत्वात् स तथा प्रायतत यथा चिन्ता न भृशं तं पीडयेत् । आसीद्

गृहस्यार्थिकी दशा चिन्तास्पदम् । चतस्रः कन्याः, रुग्णा पत्नी, ज्येष्ठो भ्राता, माता, पिता च परिवारे यस्मिन् स्युः सः कथन्न स्याद् ध्यानाकर्षकः । महान् भवति तद्भारः। इतः स भार इतश्च—देशसेवापरकभावना बलवती, पत्रकारितायाञ्च दृढीयसी निष्ठा । एतस्यां विषमायां स्थित्यां जीवनं कठिनतर मेव । एषा हि परिवारस्थिति स्तमनिश मदुनोत् । परं तदन्तिके न साधनं किमप्यासीद् येन स्वानुपस्थित्यां परिवारमुपकृत्यात्मानं निश्चिन्ततां प्रापयेत् सः । सः स्वकीयैः पत्रैः आत्मजं हरिशङ्करं तथोपादिशद् यथा तदीयं जीवनं सफलतां प्राप्तुं शक्नुयात्, भवेच्च तद् विपदः सहनानं कर्मठम् ।

सः सदैव नवांस्तरुणान् क्रियात्मकं कार्यमाचरितुमुपदिदेश । स निराशेषु मृतमानसेषु युवसु अजुगुप्सत । सः पं० कृष्णदत्तपालीवाल–पं० बालकृष्ण पं० सुरेन्द्र शर्म—श्रीकृष्णानन्दगुप्तादीन् बहून् यूनः प्रोत्साहयति स्म; रचनात्मकानि कार्याणि कर्तुं मनूनुदत् तान् । यस्मिन्नपि यूनि तां प्रतिभां ददर्श, तत्रात्मीयतां न्यवध्नात् । तन्मार्गेण न जानीमोऽद्य कियन्तो जना युवानो मान्या नेतारः समाजसेविनः साहित्यकाराश्च भूत्वानुकरणीयं जीवनं वहन्ति ।

सः कारावास-स्थित्यां तथाचेष्टत यथा तस्य पुत्रो हरिशङ्करो मुद्रणालयं वोढुं प्रभवेत् । यद्यपि 'प्रताप' मुद्रणालय स्तस्यैव सम्पदासीत् परं सः सर्वदा तामपि सम्पदं स्वकीयां न मेने । स तु तेनाश्रमीकृतः । स आश्रमोऽशरणानां शरणं बभूव । मुद्रणालयाश्रमे तस्यानुशासनं नितरामेव विस्मयावह मवालोक्यत । तदीय मनुशासनं परेषां जीवनस्य निर्माणाय उत्थापनाय च सदा प्रायतत । स महात्मगान्धिनोऽनुयायी आसीत्। परं क्रान्तिकारिणोऽपि तदाश्रयमवाप्नुवन्त । क्रान्तिभावनां सः पर्यपूपुषत् परं स्वयं हि सोऽहिंसामार्गस्य पान्थोऽभवत् ।

रक्तसरितो निरोद्धुं गणेशशङ्करः प्राणानपि जुहवाञ्चकार । भारतमातुर्द्वयो र्भागयो विभक्ततां न स कदापि द्रष्टु मैच्छत् । साम्प्रतं तु तस्य स्मृति रेवावशिष्यते । वात्योपमं तस्य जीवनं यदा स्मृतं भवति तदा चेतो यांस्थिति मनुभवति नं सास्ति वाचा वक्तुं शक्या ।

हिन्दू मनुष्यो यवनोऽपि सैव
नो मानवात् कोऽपि पृथग् विचार्य
योऽसून् जुहावेति महान् विवेकी
तं श्रीगणेशं मनसा नमामः ॥



# कस्तूरबा गान्धी

कस्मिन्नपिविश्वविद्यालये वा महाविद्यालये यद्यपि न सा अधिजगे परं सा मानव जीवनस्य किमुद्देश्यं, तदीयं किं कर्त्तव्यं, कश्च तदीयो धर्मः, मातृ-पितृ-भर्तृ-पुत्रादिस्वजनेषु केन प्रकारेण व्यवहर्त्तव्यं, समाजं देशं विश्वञ्च प्रति स्वकीयं कर्त्तव्यं तत्र तत्र करणीयाश्च सेवाः सा सम्यगवगच्छति स्म अतः उच्चोच्चतरशिक्षाजनिताः सद्गुणा स्तस्यां सर्वे एव संशोभन्ते स्म। अल्पीयस्येव वयसि तस्याः परिणयः सञ्जातः। तस्या विवाहस्तेन सह जातोऽस्ति यो जगत्यां महान् मानवो मतः स्यात् किञ्च यस्य साहचर्य्येऽनुपदं गरीयसी विपदः कठोरतराणि कष्टानि च तयोपभोक्तव्यानि स्यु रित्येतत् सावबोद्धुं क्षमैव नासीत्। तस्या जन्म ग्रहरसवसु विध्वब्दे पोरबन्दरेऽभवत्। उद्वाह-समये सासीत् त्रयोदशवर्षदेशीया। स्वकीय विवाहसंस्कारविषयकवृत्तमधिकृत्य महात्मना गान्धिना आत्मकथायामलिख्यत इदम्, "उत्तमोत्तमवाससा मवाप्तिः, मधुर मधुरभोज्य-पदार्थाभ्यवहारो मङ्गल तूर्यनिस्वनः" इत्येतदादिकार्थपरको 'विवाह' इत्येष शब्द इत्येतावदेवाहमवेदिषम्। द्वयो रपि तयोः पाणिग्रहणानेहस्यबोधावस्थैव बभ्राजे।

कस्तूरबा छायेव स्वभर्तार मन्वगमत्। तया तदनुगमने स एव पुण्यमार्गो गृहीतो यः सीतासावित्रीदमयन्तीप्रभृतिपुरातनकालवर्तिमहिलाभिः पर्यगृह्यत। सा तदेव ऐच्छत् यत् तदीयः पति रैच्छत्, तस्याः कृते तदेव सुखनभूत् यत् तस्याः स्वामी सुख ममंस्त। न सा स्वकीय मस्तित्वं स्वपत्यस्तित्वात् पृथक्कृत्य निहितवती। सा नैजान् सर्वानपि मनोऽभिलाषान् सुखसम्पदैश्वर्यादिकञ्च सकलं पत्युर्मनोऽभिलाषेषु तदीये च सकले सुख-सम्पदैश्वर्यादिके पर्यणीनमत्। सा यमुत्कृष्टतम मुत्सर्गं कृतवती स तां भारतस्य श्रेष्ठासु गेय चरितासु नारीषु सन्निवेशयति। अङ्गीकृततद्विधत्यागत्वात् सा कथं हि स्वभर्तुः कस्मिन्नपि कार्ये प्रत्यूहो भवितु मर्हति! वस्तुतस्तु महात्मा गान्धी तदीयै श्चारुचरितै रावर्जितः। तदीयानामसाधारणानां गुणानां प्रभावो महात्मन उपरि स्पष्टतः पर्यलक्ष्यत। सा म० गान्धिन आदर्शानां पूर्ति नैजजीवनस्य ध्येयमेव मेने। म०गान्धिना तस्या महनीयायाः महत्तायाश्चर्चायां लिखितम्, "तस्यां स गुणोऽधिकमात्रायामवर्तत योहि अधिकांशभारतीयनारीषु कस्यामपि मात्रायां विद्यमानः प्राप्यते। इच्छया अनि-च्छया वा ज्ञाततायां वा अज्ञातताया ममपदचिह्नावलम्बने आत्मानं धन्याममंस्त। साऽऽसीद् दृढ सङ्कल्पवती महिला। प्रथम महं तदीयं तद् वैशिष्ट्यं प्रगल्भत्व मवागमम्। तस्या दृढसङ्कल्पवत्त्वात्, सा अज्ञाततामेव अहिंसात्मकासहयोगकलायाः प्रयोगे मम गुरुः संवृत्ता"

यो हि महापुरुषः कष्टान्यात्मशुद्धेः साधन मवेति स्म किञ्च जीवनस्य सुखदानि सकलान्यपि वस्तूनि अजहात् तस्यैव महापुरुषस्य सा पत्नी आसीत्। कथं न पुनस्तस्यां ते ते गुणा स्ता स्ता विशिष्टताः शोभेरन्। वस्तुतो ये भवन्ति महापुरुषा स्तेषां पत्न्योऽपि भवन्ति महामहिमवत्यः।

द्विचत्वारिंशदधिकैकोनविंशतिशततमेशवीयवत्सरे म० गान्धी यदा धृतोऽभवत् माता कस्तूरबा, मुम्बय्यां शिवाज्युद्याने तस्यां सभायां सा संभाषिष्यते यस्यां महात्मा गान्धी सम्भाषिष्यमाण आसीदि"त्येतद्, उद्घोषयति स्म। आरक्षिविभागः "भवती तत्र भाषिष्यते, अपिकिं सत्य मिदमि"ति तामप्राक्षीत्। सा 'अथकिम्' इत्युदतरत्। ततश्च तत्काल एव सा अध्रियत। सापि तत्रैव आगाखाँप्रासादे, यत्र म० गान्धी परदृष्टिरक्षित आसीत्, आहूताऽभूत्। तस्मिन् कारालये तस्याः स्वास्थ्यमहीयत। तत्रत्यं वातावरणं तदीयं स्वास्थ्यमदूषयत्; दुर्बलं तस्याः शरीरं निराशाजनकमभूत्। शिवरात्रौ सा स्वकीयं पाञ्चभौतिकं शरीर मत्यजत्। तन्मृत्योरनन्तरं श्री देवदास गान्धिनाम्नातं, बा (अम्बा) सेवाग्रामं निर्वर्तितुं परमोत्सुकाऽऽसीत्; कारागारस्य वातावरणं तस्य च प्रांशुतरा भित्तयस्तदीयं स्वास्थ्यं दृढतया प्राहरन्।"

महात्मनो गान्धिन आश्रमपद मधिकृत्य तु पर्याप्तं जानीमो वयं परं तत्र कस्तूरबाकृतानि कार्याणि तस्याश्च प्रभावमधिकृत्यअत्यल्पमेव विद्मः। दक्षिणाफ्रीकातः पञ्चदशाधिकैकोनविंशतिशततमेशवीयाब्दे निवृत्त्य महात्मा गान्धी अहमदाबादे सत्याग्रहाश्रमं स्थापयाम्बभूव। कस्तूरबा विना विलम्बं तस्य सदस्या कार्यसञ्चालिका च जाता। श्रीमती सरोजिनी नायडू अपि आश्रमस्य तस्य सदस्याऽऽसीत्। सा कस्तूरबां लक्ष्योकृत्य लिलेख, "विजयवेलायां सा स्वभर्तुः पार्श्वे तथैव सरलतया शान्त्या सौम्यतया च न्यषीदत् यथा परीक्षाकाले दुःखमयीषु घटिकासु शान्ता निर्भया च भूत्वोपाविशत्। तस्यास्तद् रूपमपि स्मृतं सञ्जायते, यदा वैदेशिक्यां धरित्र्यां सा आहतानां सेनाचराणां कृते स्थूलवासः प्रस्तुतीकरणे संलग्नासीत्। दक्षिणाफ्रीकाया महान् नेता, यमधिकृत्य श्री गोखले महाभागेन "मृत्तिकाया मपि स वीरता मादधात्" इत्येष विचारोऽभिव्यक्तीकृत आसीत्, अस्वस्थतया निपीड्यमानः क्लान्तायां धरित्र्यां सुखेनोपविष्टो यदा फलकन्दादिकं गृह्णन् आसीत्, तदा तदीया पत्नी स्वश्रमसाध्यकार्येषु परमसन्तोषमनुभवन्ती गृहस्य शतशो गुरुलघुकार्य-प्रपञ्चनिलीनसामान्यगृहिणीव पर्यलक्ष्यत। 'यया राष्ट्रस्य कृते सहस्रशः कष्टानि सोढानि सन्ति; यया च विश्वविश्रुतया नायिकया भूयते' इत्येतन्मन्ये, तया सर्वं विस्मृतं कृतमासीत्।

हन्त, तदीयं स्वास्थ्यं दिनानुदिनं ह्रासोन्मुखतामियाय परं नांग्लशासनं तां कारालयत उन्मुक्तां व्यदधादित्येतद् यदा स्मृति पथमधिरोहति, नितरा मेव हृदयं

दूयते। ज्ञायते, शासनेन "मानवता का? मानवम्प्रति किमस्ति कर्त्तव्य मि"त्येतत् कृत्स्नतया विस्मृतं कृतमासीत्। कस्तूरवायाः निधनं यासु परिस्थितिषु सञ्जातं, तद्-विस्मरणं कदापि न सम्भवम्। कस्तूरवायाः कारागारे घटितो मृत्यु र्नूनं सभ्यताभि-मानिना माङ्ग्लानां मस्तकं येन कलङ्केनाङ्कितं कृतवान् सः कलङ्कः कदापि न मृष्टो-भवितु मर्हेत्। यः प्राणी कस्याप्यपकर्ता नासीत् स एव शक्तिशालिनः साम्राज्यस्य कारागारे वन्द्यवस्थायां व्यापन्नतां प्रपन्नः। यावत् तस्याः नाम स्मृतं भवेत् तावत् ब्रिटेन-कृत मिदं निन्दनीयं कार्यं न विस्मृतं स्यात्।

कस्तूरवा भारतीयं नारीत्वं समुत्कृष्टतर मुदाततरं च कृतवती। सा राष्ट्रार्थं महतीष्वापत्स्वपि सत्साहसेन धैर्येण च कार्याणि अन्वतिष्ठत्। तत्कृतास्ता स्ता देश-सेवाः भारतीयाः नारीः प्रति सततं पथप्रदर्शिका भविष्यन्ति। तस्याः निर्बले वपुषि दृढीयसी बलीयसी च इच्छा शक्तिः प्रच्छन्नाऽऽसीत्। सा भारतीयानां महिलानां भूषण मासीत्। तामधिकृत्य श्रीमती सरोजिनी नायडू, "सा मृत्यो रमरत्वं गता; तस्या नाम इतिहासगीतायां महिला समाजस्य शश्वत् अनुपमां दीप्तिं भजत् अनन्यगं गरिमाणं च बिभ्रत् विद्योतिष्यते"—इति यदाह तत्सत्यमेव।

कस्तूरवा भारतभामिनीनां
संवर्द्धयामास भृशं प्रतिष्ठां
सा गौरवं किञ्च यशोऽपि तासां
सत्यं निनायातितरां प्रकर्षम्॥१

पत्युः सदाध्वानमसावगच्छत्
कांक्षा-विरुद्धं न कदापि तस्य
कार्यं हि किञ्चित् कुरुते स्म साध्वी
आज्ञां च सा पालयति स्म नित्यम्॥२

लब्ध्वा निकारं च न सा कदापि
याता प्रतीपं महिलासु मान्या
वाचां कठोरा मपि सा न पत्या
वूचे स्वकीये सरसस्वभावा॥३

देशस्य हेतो विपदः प्रगाढाः
सेहे पुरन्ध्रीकुलमौलिरत्नं
कष्टानि सा धैर्यवती सदैव
राष्ट्रस्य सेवाध्वनि चागतानि॥४

दुःखानि कारासदनस्य चापि
ह्यत्यन्ततीक्ष्णानि तपस्विनी सा
प्रीत्या भुनक्ति स्म परं न जातु
देशस्य सेवा मजहात् पुनीता ।।५

धन्यास्ति वै भारतभूमि रेषा, जग्राह या जन्म पवित्रवृत्ता ।
कस्तूरवा गान्धिमहात्मकान्ता, विश्वाभिवंद्यात्र वदान्यचित्ता ।।६

भूभुवनललनाललामभूता माता कस्तूरवा कृतयुगस्य प्रसवभूमि रिव बभूव । सद्धर्मकर्मादिविधिविधानावदाता सा स्मृतिरिव, सकलजीवानुकम्पानुरागा सा जिनवाणीव, जातमित्रोदया सा प्रभातलक्ष्मीरिव, तपः पूताकृतिः सा गौरीव, सर्वजननमस्कृतेव सा संध्येव, क्षमास्वभावा सा वसुंधरेव, अध्यात्मजीवना सा उपनिषदिव, शान्तिप्रदा सा तपोवनभूमिरिव, सत्त्वगुणोद्भाविनी सा सतां सभेव, तमोगुणक्षयकारिणी सा विद्येव, तमः समुच्छेदनविधायिनी सा सत्सङ्गतिरिव, कृताकृतसुकृतविचारनिपुणा सा विवेकवतां संहतिरिव, शशिकिरणकलापधवला सा शुक्लपक्षप्रदोषवेलेव अस्माकं राष्ट्रस्य विभूति रासीत् ।

देहवती मुनिजनध्यान समृद्धि रिव सा माता प्रतिभासते स्म; महीतलावतीर्णा सा तपः सिद्धिरिव शोभते स्म; गङ्गोदकधारेव सा निर्मला इह विदुद्युते; अग्निशिखेव पवित्रा सात्र दिदीपे; चन्दनतरुराजि रिव तापापहा सा सर्वत्र बभ्राजे; त्र्यम्बकजटाकलापस्य शशिलेखेव, रमारमणोरःस्थलस्य कौस्तुभप्रभेव, श्रीकृष्णस्य वनमालेव, सरसः कमलिनीव, मानसस्य हंसीव, भक्तिकर्मज्ञान निर्देशकारिणी भगवद्गीतेव, भगवद्गुणकीर्तनपरा व्यासगिरेव, रामचरित्रवर्णनपरा वाल्मीकिकविकृतिरिव, गीतचन्द्रापीडचरिता बाणरचित कादम्बरीव, महात्मचरणाश्रया सा आश्रमस्थलीव, शरत्कादम्बिनीवं अवदातहृदया दर्शिताभयापि समयान्विता, अकुलीनापि सद्वंशविभूषिता सा सर्वेषामपि वन्दनीयाभवत् ।

सा कस्तूरवा मङ्गलमयी मर्यादामयी समुदाचारमयी संस्कृतिमयी सभ्यतामयी स्नेहमयी उदारतामयी वत्सलतामयी हितकारितामयी प्रसादमयी कालिदासपदपंक्तिरिव भूत्वा भुवि बभासे ।

मुखे स्वातन्त्र्याभा नयन युगले सात्विकविभा
ललाटे तेजःश्री विलसति गले राष्ट्रगरिमा
स्फुरत्खादीशाटी सितगुणवती वर्ष्मणि बभौ
नुमस्तांत्वां यस्या भरतवसुधाराधनपराम् ।।



# सरोजनी नायडू

श्रीमतौ सरोजिनी नायडू एकोनाशीत्यधिकाष्टादशशततमेशवीयाब्दे, फेब्रवरी मासे, त्रयोदशे दिनाङ्के 'हैदरावाद' नगरे जनुर्गृहीतवती । तस्याः पिता अघोरनाथ चटर्जी एकोनविंशशतकोत्सङ्गनिषण्णस्य वङ्गप्रदेशस्म विभूति रासीत् स्वकीयस्यजीवनस्य महान् भागस्तया हैदराबादे गमितः । सा पितुः परमप्रिय पुत्री आसीत् । तस्यां तस्य सान्द्रं वात्सल्यमवर्तत । सा पितुरेव पठनमारब्धवती । सा स्वयमेव एकदाचकथत्—"पितुर्निरीक्षणे मदीया शिक्षाऽऽसीद् वैज्ञानिकी । स मां विज्ञानविदुषीं किं वा सङ्गीत-मनीषिणीं द्रष्टु मभिलषते स्म । परं तस्मात् किञ्च स्वमातुः सकाशात् कवित्वविष-यिण्यभिरुचिर्या मया प्राप्ता साऽसिद्ध्यत् दृढीयसी । यदाहमेकादशाब्दवयस्काऽऽसं गणित-प्रश्नस्य कस्यचन समाहिततायां यतमानाऽभूवं, प्रश्नस्तु न समाहितो भवितु मशकत् परं कवितावश्यमेव मदाननान्निर्गताभवत् । सा मया तत्क्षण एवालेखि" ।

तया घटनया सरोजिनी नायडू स्वकवित्वशक्तेराभासमधिगतवतीति कथ्यते । सा स्वकवितां तामंग्रेजीभाषायां निबबन्ध-इत्येतत्तु सत्यं परं तत्र भावना भारतीयास्ति सौन्दर्य माकर्षणं च विशिष्टमेव सद्विभाति । तदीयायाः कवितायाः सन्ति विशिष्टता एता;—१. विचार-प्राधान्यम्, २. संगीतमाधुर्यम्, ३. भाषायामधिकारः । तस्यां भृशं प्रफुल्लितारविन्दस्य प्रत्यग्रता, मधुरता, स्वाभाविकता च राजमानाः प्राप्यन्ते ।

श्रीमती नायडू असकृत् देश-सेवापराधे कारागारे आंग्लशासनेन वन्दिनीकृत्य प्राक्षिप्यत । सा सदैव कारागारे जीवनं नैसर्गिक्या ऋजुतया अयापयत् । देशस्य स्वातन्त्र्याय सा किं नासहत किंनात्यजच्च । द्विचत्वारिंशदधिकैकोनविंशति शततमेशवीय वर्षे तस्या अभवत् कठिनतमा परीक्षा, यदा हि आगाखाँ-भवने सा महात्मगान्धि-कस्तूरवा-महादेव देसाई-इत्यतैः सार्धं निहिताक्रियत । सा अतिसतर्कतापूर्वकं महात्म-गान्धिनः सेवाया मात्मानं समर्पयन्त्यवालोक्यत सदैव सा तान् प्रयत्नानकार्षीद् यै र्महात्मा सर्वविधतया सुख मानुकूल्यं मनः प्रसादं च लब्धुं शक्नुयात् । चक्राकार-पटल सभां सम्भावयितुं यदा सा लन्दनमगात् तदा बहुलासु सभासु सा समभाषत । सम्भाषणेषु भारत-स्वतन्त्रतामधिकृत्य स्वान् विचारान् न्यदधात् । कस्मात् कारणात् भारतीयाना मभिमता स्वतन्त्रता समुचितास्ति-इत्येतत् सा दृढीयसीभि र्युक्तिभिरच्छे-द्यैश्च तर्कैं विद्वत्तावदातायां भाषायां निहितवती इङ्गलेण्डे तु सा स्वकीयै र्न्याय्यै र्विचारै र्जनतामतूतुषदेव, अमेरिकाञ्च प्रयाय सा तत्रत्यान् जनान् अपि स्वयुक्तियुक्तैः

प्रौढै विचारै भृंशमाचकर्ष । सा तेषां पुरो भारतीयानां भावनां तेषां दृष्टिदिशां च निधाय यदुचितं विवेचनं कृतवती तत् समेषामपि नृणामुपरि प्रकृष्टं प्रभावं प्राक्षिपत् । जनता मुहुर्मुहुस्तामुपश्लोकयति स्म । कैथरिनमेयो-रचित 'मदर इण्डिया' कुपुस्तकं यद् विषं व्यातनोत् तद्दूरीकरणे च सा प्रयासममोघं कृतवती । अमेरिकायां न सा स्वभाषणेषु कस्यापि कृपाया याच्ञां व्यधान्न च साहाय्यलाभाय दैन्यमेव दर्शितवती; सा तु भारतोद्देश्यमेव संसारस्य समक्षे निदधाति स्म । सा अमेरिकायामेव सभाया-मेकस्यां भाषमाणा "वयं प्रतीच्यां कस्मादपि न सहानुभूति मवाप्तुं प्रार्थयामहे; न वयं प्रतीच्यां कस्मिन्नपि विश्वसिमः; कारणमस्य स्पष्टं, सुकरतया ज्ञातुं योग्यं च वर्तते । कामं ब्रिटेनस्य स उदारवादी भवतु वा अनुदारवादी आहोस्वित् श्रमिक संघः किं वा कोऽप्यन्यो, न कोऽपि भारतं स्वकीयाच्छयात् स्रंसयितु मभिलषते । न वयं याच्ञाहेतोः क्वापि भ्रमामः । वयन्तु स्वशक्ति मवलम्ब्य स्थिताः स्म" इति निर्भीकतया प्रोक्तवती ।

पञ्चचत्वारिंशदधिकैकोनविंशति शततमेशावीयेब्दे दिल्ल्यां सा 'भारतं त्यज्यताम्' इत्येतत्प्रस्ताव मादाय पत्रकाराणां पुरः भारतस्य स्थितिं स्फुटतया विशदतया च अवागमयत् । तदानीं सैव राष्ट्रिय महासभायाः (कांग्रेसस्य कार्यसमित्या) ईदृशी सदस्याऽऽसीद् या वहिरवर्तत । सर्व एव नेतृत्वनिमित्तेन दिशादर्शनाय च तस्या वक्त्र माकुलतया वीक्षमाणाः समतिष्ठन्त । सा तस्मिन् समये जनतोपरि शासनकृतै रत्याचारैः कारागारेषु च वन्दीकृत्य क्षिप्तानां सहस्रशो देशवासिनां दशया नितरां दुःखिताऽऽसीत् । सा राष्ट्रियमहासभायाः स्थितिं भारतीयान् देशान्तरीयांश्च पत्रकारान् प्रति परमौजस्विन्यां वाण्यां बोधितान् व्यदधात् । तदीयं भाषणमसाधारण-मासीत् । श्रोतार स्तस्या राजनीतिकतयाऽतितरा माकृष्टा अभूवन् । तस्याः स्वान्तं सात्विक संरम्भाकुलीकृतमासीत् । सा आंग्लशासनं तीव्रतया हि भर्त्सयन्ती अभणत्— "भारतेन नैतिकप्रश्नाधारे निर्णयः कृतोऽस्ति; राष्ट्रियमहासभावाः कार्यसमितिः स्व निश्चये निश्चला भूत्वा स्थास्यति, कामं तत्फलं किमपि स्यात्" । सा आंग्लसाम्राज्य-गृध्नून् सावधानान् विदधती "ते परदृष्टि-रक्षितेषु नेतृषु अभियोगं चालयन्तु अधिकरणे, यदि वर्तते शक्तिः श्वासोवा तदा प्रमाणीकुर्वन्तु तेषामपराधम्" इत्युच्चै रघोषयत् । अस्मिन् पत्रकार-सम्मेलने तत्प्रतिभाया असाधारणः प्रभावोऽपतत् । स्वविचारान् संवृण्वती सावदत्—"पत्रकाराः, चेदहमुपरमेय तदा जनतां कथमत श्रीमती नायडू पत्रकारैः सह वार्ताः विदधती प्राणानुदसृजत्" ।

उत्तर प्रदेशस्य महत् सौभाग्यमेवेदं मतं भवेद् यत् प्रतिभापुनीता अनवद्यविद्या-वदाता राजनीतिविशारदा नितान्तसुयोग्या देशसेवैकव्रता गुणगणविभूषिता विज्ञोत्तमा देवी तस्य राज्यपाल-पदमध्यास्य तमनुगृहीतवती । तां स्वप्रदेशस्य राज्यपाल-पदासीनां प्राप्य अधिकारिणो मन्त्रिणश्च सर्व एव भृशमप्रीयन्त । सा तत्पदमलङ्कुर्वन्ती

सर्वाण्यपि स्वकीयानि कार्याणि पूर्णतया प्रजातन्त्रात्मकानि चकार। लखनऊ नगरस्य राजप्रासादस्तस्या महिलामहनीयाया अट्टहासेन अगुञ्जत्। सायं वेलायां निर्धना धनसमृद्धा हिन्दवोऽहिन्दवः कवयो राजनीतिविदोऽधिकारिणश्च सर्व एव श्रीमत्याः सरोजिनी नायडू महाभागाया मङ्गलमयसन्निधौ मनोविनोदनं धियः प्रसादनपरं कमप्य-निर्वचनीयमेवानन्दमविन्दन्त।

श्रीमती सरोजिनी नायडू परमतेजस्विनी भव्यभाविभूषिता विश्वविभूति रासीत्। महात्मा गान्धी तस्यां परमौदात्तसम्मानधियं न्यबध्नात्। सांग्लभाषायां साहित्ये च विस्मयावहां व्युत्पत्तिं परिपुष्णाति स्म। यदपि सा अलिखत् तत्र तदीयायाः अनुपमाया योग्यताया आभा आभासते स्म। उदग्रं महनीयं पावनं च कवित्वमुच्छल-देव तत्र व्यालोक्यत। पञ्चविंशत्यधिकैकोनविंशतिशततमेशवीयेऽब्दे सा अखिलभारत-राष्ट्रियमहासभायाः आध्यक्ष्यमप्यकरोत्। सा स्वप्राणपणेन निजदेशमसेवत। भारतीय राजनीतिकक्षेत्रे सा महान्तं निजप्रभावं प्रातिष्ठिपत्। तस्या हिन्दू-मुसलिमयो रैक्ये असत् समर्थनं न दृष्ट मभवत्। अनेकोत्कृष्टतरगुणमण्डितत्वात् तस्याः, समग्रमपि राष्ट्रं तस्यां सम्मानधियं न्यदधात्। वस्तुत स्तदीय मखिल मपि जीवनं देशप्रेमपरक मूर्जस्वलं गीतमेव भवत् परिस्पन्दते स्म।

श्रीमती सरोजनी नायडू प्रकृत्यैव विनोदप्रियाऽऽसीद्। यदा हि राजगोपाला-चार्यो भारतस्यासीद् देशपालः, सा तं द्रष्टुं गता। राजाजी राष्ट्रपतिभवनं तामदर्श-यत्। "साम्प्रत मेतेषु विशालेषु सर्वविध-श्रीसमुल्लसितेषु प्रकोष्ठेषु, एतादृशेषु च महाकायेषु पर्यङ्केषु हि विश्राम-शयनादिकं कर्तुं बाधितो भवामि" इत्येतन्निर्विण्णत-याचकथत्। सरोजिनी नायडू तन्निशम्याववदद्, "राजाजी, मयागुरुगुरुतरवैषम्येषु भवदनुगमनं कृतमस्ती" ति भवान् सम्यग् वेत्ति परमिदानी माशासे, न भवान् मामस्यामापदि साहचर्यार्थं मनुरोत्स्यति।"

एकदा पण्डित जवाहरलाल नेहरो र्भाषणं श्रोतुं भूयस्यो युवतयोऽपि गता आसन्। भाषणावसरे श्रीमती सरोजिनी नायडू च तत्रसमुपस्थिताऽऽसीत्। भाषण-समाप्त्यनन्तरं श्रीमती नायडू पण्डितं जवाहरलाल मशंसत् "एताः सर्वा युवतयो भवदीयं भाषणं श्रोतुमागच्छन्ति अतस्ताः समाजवादिन्यः सञ्जाताः सन्तीत्येषा विचारणा न भवता कदापि कार्या; एतास्तु वस्तुतो भवदीयं सुन्दर माननं विलोकयितु मायान्ति"।

श्रीमती नायडू न केवलं नेत्री वा कवयित्री आसीत्। सा तु स्वयं संस्थेवा सीत्। योऽपि तस्याः सान्निध्यं प्राप्तवान् सोऽवश्यमेव तदीयया निशितया धिया गम्भीरया मानवीयभावनया, स्निग्धया च सहृदयतया अवश्यमेवावर्जितोऽभवत्। सा

नेहरू परिवारे ज्येष्ठा स्वसेवासीत् । यदा तन्मन आकाङ्क्षति स्म तदैव पं० जवाहरलाल नेहरूणा सह मनोविनोदं कर्तुं प्रावर्तत । सा सत्वरमेव स्वविनोदननिपुणया प्रकृत्या तदीयं संरम्भं शमयितु मशकत् ।

आदरणीया विदुषी महिलानां धुरि कीर्तनीया सरोजिनी आसीद् भारतभूषणम् । सा सांख्यविद्येव प्रकृतिपेशला, योगदर्शनमिव यमनियमवती, वेदान्तशास्त्रमिव आत्मनि रममाणा, आन्वीक्षिकीव वाणीप्रमाणा, वैशेषिक दर्शनमिव विशेषानुरागा, मीमांसेव कर्मसंलग्ना, विश्वम्भरेव क्षमा-संभारसंशौभिनी, नभः श्रीरिव अश्रान्तस्थिति रोचिष्णुः, वारीव स्वभावधवला, पवमान इव प्राणिनामवलम्बदा, विभावसुरिव पवित्रा, प्रावृडिव जीवनवर्षिणी, वसन्तवन्धुरतेव सर्वहृदयहारिणी, निदाघर्तुरिव मलयज रसरुचिरा, शरदिव प्रसन्नेन्दुमुखी, हेमन्तप्रभेव हिमप्रतीकाशाशा, शिशिर-सुन्दरतेव राजत् कुन्ददशना, विधातेव नवनवयोजनासृष्टिनिपुणा, लक्ष्मी वल्लभ इव लोकरक्षणप्रवीणा, शिव इवाशुतोषाभवत् ।

माननीयास्मद्देशस्यकोकिला कामप्यनिर्वचनीयामेवावदातां व्युत्पत्तिमशिश्रियत । सा सानुचरापि न गोत्रभूषिता, अकुलीनापि सद्वंशविभूषिता, पिहिताम्वरापि उल्लसदंशुका, तिथिपराप्यतिथिसत्कारपरा, अविदितस्नेहक्षयापि कुलप्रदीपा, अग्रहापि काव्याकूतज्ञा सर्वलोकातिशायिन्या विभूत्या व्यभ्राजत । शास्त्राभ्यासरसायनेन सा समनसां मनांसि अमोदयत् । सा शश्वदेवसद्गुणराजिष्व स्निह्यद् । सततं धर्ममशीलत् । जनतायां श्रेयः प्रेयश्चाशीलयत् सा । न सा शोकेन स्तमति स्म, न च सा दुःखेन अताम्यत् । सन्मार्गेऽनिशमभिनिविशते स्म, एधते स्म च जिज्ञासासु । नवनवगवेषणासु विहरन्ती सदानीतिञ्चालोचयन्ती सत्क्रियाश्चालोकयन्ती सा प्राप्यते स्म ।

नवचत्वारिंशोत्तरैकोनविंशतिशततमेऽशवीयाब्दे मासमार्चे दिनाङ्के च द्वितीये सकलां भारतीयजनताञ्च विश्वमखिलं स्वकीयानन्तविच्छेद शोकसागरे निमज्जयन्ती स्वर्गमारुरोह सा संसारललनाललामम् ।

सरोजिनीवाजनि कुत्र विज्ञा
देशे मनोज्ञप्रतिभानवद्या
देशानुरागा सरसस्वभावा
सचित्त चेतोहरकाव्यविद्या ॥

—××—

# सम्पूर्णानन्दः

संस्कृति संस्कृतञ्च संसेवमानेषु महामनीषिषु श्रीमान् विद्वद्धौरेयः सम्पूर्णानन्दोऽन्यतमः । सः सदैव कर्मणि विश्वसिति स्म न च वक्तृतायाम् । स महान् लेखक आसीत् । तद्विरचिताः ग्रन्था स्तदीयामध्ययनशीलतां स्पष्टतयैव अभिव्यक्तीकुर्वन्ति । यद् यत् सोऽलिखत् तत् सर्वं गवेषणागुम्फितं युक्तिसमन्वितं प्रमाणपरिलसितं च वर्तते । वैदेशिकै विद्वल्लेखकै र्भारतीयेतिहासे न न्यायः कृतोऽस्ति । तैः प्रायेण सः प्रयासः कृतोऽस्त्यनृततानिष्ठो येन भारतस्य गौरव मपह्नुतं भवेत्ः तदीया समुज्ज्वला संस्कृति र्मलिना दृश्येत, तदीयेषु समुत्कृष्टेषु कार्यजातेषु च पानीयं निपतेत् । याः घटनाः न भारते कदाप्यघटन्त तासां घटनानां स्वकीयया कल्पनयैव सृष्टिं विधाय तै र्भारतं विश्वस्य पुरः किमप्यन्यदेव कृत्वा समुपस्थापितमस्ति । श्री सम्पूर्णानन्देन प्रमाणोपन्यासपुरस्सरं तत्कथनानि प्रत्याख्यातानि सन्ति । हिन्दी-संस्कृतांग्लभाषासु इतिहास-दर्शन-राजनीत्यादिविषयकान् पञ्चत्रिंशद् ग्रन्थान् रचयित्वा स भारतीयसाहित्यस्य संवर्द्धने तस्यगौरवोत्थापने चाभिनन्दनीयं योगं प्रदत्तवान् । 'समाजवाद' इत्येतन्नामधेयग्रन्थस्य रचनाचातुरी सहृदयानां हृदयेषु चमत्कारं जनयति । अस्मिन् ग्रन्थे १२०० रूप्यकात्मक 'मङ्गलाप्रसाद' पारितोषिकेण हि सम्मानितोऽप्यभूत् सः । वस्तुत स्तदीयाः सर्वा अपि कृतयो मौलिकतां प्रौढतां नैजानन्यगां विशिष्टतां च निदधति । ताभिस्तदीय मगाधं प्रकृष्टञ्चवैदुष्यं ज्ञाततां याति । स 'टु डे' इत्येतन्नामकमांग्लपत्रं किञ्च मर्यादाख्यां हिन्दी पत्रिकां सम्पाद्य च नैजं वैदुष्यं प्रकाशयतिस्म ।

भूयांसो हि जना उच्चपदं न त्यक्तुं शक्नुवन्ति । तत्पदं त्यजन्तस्ते परमदुःख मनुभवन्ति । ते स्वसिद्धान्तानां हननं सहन्ते परं तदुच्चपदत्यागं न सहन्ते । जगति ते मानवाः सन्त्यल्पीयांसो ये स्वसिद्धान्तात् न मनागपि स्रंसन्ति किञ्च पदे वा सत्ताया मीषदपि नाभिनिवेशं दर्शयन्ति । सम्पूर्णानन्दोऽपि एतेष्वेवाल्पीयःसु जनेषु परिगण्यते । सः सिद्धान्तं न कदापि पर्यत्यजत् । सिद्धान्तनिष्ठत्वादेव स एकदोत्तर प्रदेशे मुख्यमन्त्रित्वपदेऽपि नामुह्यत् । "प्रान्तीय कांग्रेसकमेट्याः अध्यक्षेण तेनैव भाव्यं यस्मिन् प्रान्तस्य मुख्यमन्त्रिणा सह सौहृदेनैक्येन च कार्याचरणक्षमत्वं स्यात्" इत्येतत् तत्कथन मासीत् । 'यदि प्रान्तीय कांग्रेस कमेट्याः अध्यक्षो मुख्यमन्त्रिविरोधी अभविष्यत् तदा सः (मुख्यमन्त्री) कार्यं न कर्तुं मशक्ष्यत्" इत्येतं विश्वासमसा वबिभः । "चेत् श्री चन्द्रभानु गुप्तो यत्र तदीयो मतभेद आसीत्, प्रान्तीयकांग्रेससमित्याः अध्यक्षत्वेन गृहीतो

भविष्यति तदा स मुख्यमन्त्रिपदं त्यक्ष्यति" इत्येतत् सः स्वमत मुदजूघुषत्; सोऽन्ततोऽन्वतिष्ठदप्येतदेव । यदा हि तदनुयायिभि "भवता कृतास्मदीया राजनीतिकी हत्या" इत्यभिहितं तदा "सिद्धान्तप्रियत्वादेव स इदमकार्षीदि"ति तेनाभ्यधीयत ।

माननीयः सम्पूर्णानन्दो विधुग्रहवसुसोमेशवीय सम्वत्सरे काश्यां जनवर्यां प्रथमेऽहनि समुत्पेदे । सः क्वीन्सकालेजे वाराणस्या मथ च प्रशिक्षणमहाविद्यालये प्रयागे चाधिजगे । बी. एस-सी., एल. टी. च भूत्वा प्रथमं डूँगर कालेजे वीकानरस्थे प्रधानाध्यापकपदं व्यभूषयत् । ततश्च स द्वाविंशत्यधिकैकोनविंशतिशततमेशवीयाब्दे काशीविद्यापीठे ऽपीपठत् । आसीत् सः प्रकृत्या अध्ययनव्यसनी । पुस्तकानां सद्ग्रन्थानां च विविधविषयकाणां पठनेऽतितरां सः प्रगाढामभिरुचिं न्यदधात् । तदीयसमयस्य भूयान् भागो हि स्वाध्याय एव व्यत्यगात् । न सः कदापि समयं व्यर्थमगमयन्न च सः राजत्व एवाप्रीयत । सः समयविनाशिषु अजुगुप्सत । उत्तर प्रदेशे यदा स मुख्यमन्त्री आसीत् । न्यूनतरेष्वेव जनेषु अमिलत् । तथा प्रायतत यथा समागताज्जनाच्छीघ्रमेवोन्मुक्ति मवाप्तुं शक्नुयात् । अमितभाषितायां न सोऽरज्यत् । मितभाषितैव तमतूतुपत् । तत्सविधे आगत्य यदि कोऽपि नोदतिष्ठासत् तदा सः पुस्तकमादाय तत्पठने आत्मानं प्रावर्तयत् । तदीयेन व्यवहारेणेदृशेन जना यद्यपि अखिद्यन्त परं न सः स्वसमयं मुधा गमयितु मभ्यलषत ।

साहित्य-सङ्गीतकलाभिज्ञत्वं यत्सचेतसोलक्षण माम्नातं तत् तस्मिन् पूर्णतया अघटत । तस्य साहित्यप्रियत्वन्त्वनुपदमेवोक्तमेव । सः संगीते यद्यपि रुचिं गाढतरां न्यदधात् परं तस्मिन्नेव यन्मानसं संस्करोति नेनेक्ति च । तस्य मानवस्य सांस्कृतिकं धरातलं कीदृशमित्येतत् स तत्सङ्गीतादतर्कयत् ।

श्री सम्पूर्णानन्दः संस्कृतेः परमोपासक आसीत् । स्वकीयेनाचारेण व्यवहारेण चरित्रेण च शश्वत् संस्कृति मुत्थापयितुं तामाराधयितुं तां वर्धयितुं चायतत । न सः संस्कृत्यवज्ञां सोढुमशकत् । एकदा कस्मिंश्चिद् प्रशिक्षणविद्यालये कोऽप्यधिकारी जनो गीता मुपहसन् तांलक्ष्यीकृत्यानुचितमेव विचार मभिव्यानक् । स तं गीतोपहासपरं वक्तारं भृशमभर्त्सयदतर्जयच्च । यदिह कश्चिद् देशान्तरीयो जनोऽभविष्यत् तदा स इदं सर्वं माकर्ण्य किं व्यचारयिष्यत् । अपि किं वयमित्थं स्वकीयधर्मग्रन्थानवज्ञातुं शक्नुमः ? अपि किं स्वग्रन्थेष्वेतद्विधं जल्पन मसदसत्यविचाराणां प्रकटीकरणं कदाप्युचितं मतं भवितु मर्हतीत्येतदादिक मुक्त्वा तं नितरा मक्षेपयत् ।

श्री सम्पूर्णानन्दो हृदयेनोदारः स्वभावेनावदातो महान् मानव आसीत् । स तस्मिन्नपि क्षमा मदर्शयत् यो हि तं विषेण व्यापादयितुमयतिष्ट । स तस्मिन् जनेऽप्यदयत यं सोऽभियोगे पराजितं कृतवान् किञ्च यस्तस्मिन् अलीकमेवापवादं व्यतानीत् ।

सन्त्यनेकान्युदाहरणानि यैस्तस्य विशालहृदयतायाः परिचयः प्राप्यते। तदीयायाः क्षमाशीलतायाः संस्तवस्तदापि प्राप्तोऽभवत् यदा स वहुमूल्यानि वस्तूनि चोरयित्वा पलायमानं तं सूपकारममोचयत् यं तस्य द्वारपाला धृत्वा भृशमताडयन्।

श्री सम्पूर्णानन्दं चाटुकारिता अनुनयो वा नाप्रीणात्। सः स्पष्टवादी आसीत् एकचत्वारिंशदधिकैकोनविंशतिशततमेशवीयवर्षे स महात्मगान्धि-सञ्चालित-सत्याग्रहान्दोलनालोचनपरकान् कतिपयांल्लेखानलिखत्। देशस्य महान्तो महत्तराश्च नेतारस्तस्य सत्यतायां योग्यतायाञ्च विश्वासवन्त आसन्। ज्योतिषमधिकृत्य व्यक्तीकृतेषु पण्डित जवाहरलालस्य विचारेषु सः स्वविरोधं प्रकाशयति स्म। स जीवने सत्यतामेवाशिश्रियत् तत्र सः प्रसिद्धि मपि लब्धवान्। स रूक्षजन इव प्रातीयत परं तस्य चेतसि विपुला दया सञ्चरते स्म। सः समयमनतिक्रम्यैव कार्यं कृतवान्। आसीत् स वस्तुतः समयाराधकः। यदपि कार्यं सोऽकरोत् तन्मनोयोगपूर्वकमेवान्वतिष्ठत्। स व्युत्पन्नस्तीक्ष्णप्रज्ञ आसीदतः शीघ्रमेव वस्तुस्थितिमवागमत्। अर्थपरिग्रह मविलम्वेनैव कर्तुं प्राभवत्। पञ्चकृत्वः सः कारागारकष्टानि देश-सेवापराधे सहते स्म। प्रायेण पञ्चाब्दान् स कारागृहे निनाय।

श्री सम्पूर्णानन्द उत्तर प्रदेशस्य प्रान्तीयकांग्रेस समिते र्मन्त्रि-पदं त्रिधाध्यास्ते स्म। मुम्बय्यां जातस्य द्वितीयस्याखिलभारतीय समाजवादिसम्मेलनस्य, चत्वारिंशदधिकैकोनविंशतिशततमेशवीयवत्सरे पुण्यपत्तने जातस्य हिन्दीसाहित्यसम्मेलनस्यैकोनत्रिंशत्तमस्याधिवेशनस्य चाध्यक्षतामकार्षीत्, स विद्वान् महानुभावः १६३८, १६३६ तमेशवीयवर्षयो रुत्तरप्रदेशीयसर्वकारस्य शिक्षामन्त्रिपदं, १९४६ तमेशवीयाब्दात् १९५१ तमेशवीयाब्दं यावदुक्तप्रदेशस्यैव शिक्षा-वित्त-श्रमत्रितयमन्त्रिपदं १९५१ तमाब्दतः १९५४ तमाब्दपर्यन्तं निर्दिष्टस्यैव प्रदेशस्य गृहश्रमोभयमन्त्रिपदं १९५५ तः १६६० पर्यन्तं चोत्तरप्रदेशीयसर्वकारस्य मुख्यमन्त्रिपदं च शासनकलाकौशल कुशलः सः विभूषयति स्म। १९६२ तमेशवीय वर्षे स राजस्थानस्य राज्यपालो भूत्वा देशमसेवत।

न श्री सम्पूर्णानन्दः कस्मिन्नपि दुर्भावनां न्यवध्नात्। विरोधिन्यपि न तन् मनोऽम्लायत। स आपदां पुरः कदापि न स्वशिरोऽनमयत्। वीरतया साहसेनोत्साहेन च तासु अयुध्यत। न ता स्तं पराभवितु मशकन्। स तदाक्रान्तोऽपि अविचलतया नैजं कर्त्तव्यं पालयन्नेव व्यालोक्यत। वस्तुतस्तस्मिंस्ते गुणा व्यराजन्त येषां सद्भावात् मानवो महान् भवति 'वीर' इति च कथ्यते।

पण्डितसमुदायस्य कूपमण्डूकत्वे स उदविजत। एकदासावाह 'न विद्मः कस्मादद्यतनाः पण्डिता भूगोलेतिहासयोर्न रुचिं निदधते? कौटिल्योऽर्थशास्त्रे यान्

विभिन्नान् राज्येतिहासान् प्रति सङ्केतं कुरुतेस्म, तेषां ज्ञानं सः कुतोऽधिजगाम ? न श्रुतिस्मृतिपुराणानि तत्र प्रकाशमस्यन्ति । सायणवेदभाष्याध्येतारः सायणः कानि पुस्तका न्यधीत्य सुवकराज्यसञ्चालने कुशलतामविन्ददित्यत्र अपि किं कदापि विचारं विहितवन्तः ? भूगोलेतिहासविज्ञानविषयपाठनानेहसि संस्कृतच्छात्राणां मनः स्वकीयेषु प्राचीनेषु ग्रन्थेषु न स्यादश्रद्धामयमित्येतद्विधं प्रयत्नमवश्य मेव शिक्षकः कुर्वीत । संस्कृतच्छात्रा एव न सर्वेऽपि भारतीयाः प्रत्नासु कृतिषु श्रद्धावन्त एव स्युः परमित्येतदर्थ मस्त्युपायः कः ? पुराणवर्णितः क्षीरसागरः क्व इत्येतस्मिन् प्रश्ने समुपस्थापिते सति विद्यार्थिना, भूगोलाध्यापयिता केन प्रकारेण तं प्रश्नं समाधास्यति ? पुरातनेषु ग्रन्थेषु सूर्यस्य भूमण्डलाद् या दूरवर्तिता वर्णितास्ति तस्य दूरस्थितायां यावतां हि क्रोशाणां वा योजनानां संख्या प्रतिपादितास्ति तत्र न वर्तते तथ्यता ? कथं हि तत्र सामञ्जस्यं कृतं भवेत् ? प्राचीनभारतस्य भूगोल मुद्दिश्य प्राप्ता ज्ञेयता कनिंघम कृतायाः आंग्लविद्वद्भारतीयविहितायाश्च गवेषणाया एव फलम् । आर्याणां मूलनिवासः क्वासीदित्येतस्मिन् विषये लिखितां मद्रचनां कतिपये विद्वांसः साधुवाद मभिव्यक्तीकृतवन्तः । तदर्थमस्मि कृतज्ञः । परं मद्रचितग्रन्थात् प्राक् तु तत्रैव ते श्रद्दधते स्म यत् प्रतीच्याः अलिखन् । कामं संस्कृतपण्डितास्तत्र नासन् आस्थावन्तः, परं ते तत्प्रत्याख्यानं कदापि कर्तुं स्वल्पमपि प्रयासमकार्षुः ? मत्प्रणीतं पुस्तक मेतद्विषयकं किं वा केनाप्यन्येन रचितं पुस्तकं पर्याप्तं न भवितु मर्हति; यानि मतानि भूयस्कवर्षव्याप्यध्यवसाये कृते सति प्रकटीकृतानि न हेलयैव तेषां प्रतिवादो भवितुं सुशक' इत्येतदादि विचारेभ्यस्तदीयेभ्यस्तस्य सत्य मवगन्तुं या हि गम्भीरा प्रगाढा च जिज्ञासासीदथ च भारतीया विद्वांसो वा संस्कृतपण्डिता नवनवतरविषयज्ञानप्राप्त्यर्थं नूतननूतनतरेषु च विषयेषु स्वकीयां मार्गणपरां लेखनीं प्रेरयेयुरित्येषा च योत्कटकामनावर्तत सा स्फुटतयैव विदिततां याति ।

अद्य वाराणस्यां यो हि संस्कृतविश्वविद्यालयो दृश्यते स तस्यैव संस्कृतवाङ्मयाराधकस्य विद्वन्मूर्धन्यस्य प्रयासेण प्रतिष्ठापितो जातः । सम्प्रति 'सम्पूर्णानन्द संस्कृतविश्वविद्यालयः' इत्येतत् तन्नाम यत् वृतं, वस्तुतस्तु इदन्त्वस्मदीयं कार्यं तं संस्कृतसेविनं भारतीयसंस्कृत्यनुरागिणं प्रति वशिक एव श्रद्धाञ्जलिः ।

यस्य प्रयत्नेन हि देववाणी
जातोन्नता भारतदेशभक्तः
सम्पूर्ण आनन्द इमां हि तथ्यां
संज्ञां दधातिस्म मयेड्यते सः



# नेता-सुभाषचन्द्रः

यूयं मह्यं शोणितं प्रदत्त; युष्मभ्यमहं दास्यामि स्वतन्त्रताश्रियम्। स्वतन्त्र-भारतानीकिन्याः अमरसेनान्याः शूरशिरश्चूडामणेः सुभाषचन्द्रस्यैव उद्घोषः श्रीकृष्ण-चन्द्रस्य पाञ्चजन्य शङ्ख इव सर्वत्राश्रूयत। स्वतन्त्रताया आवेदनपत्रभूतस्य तस्य स्वरोऽद्युनापि जेजीवीति। स्वाधीनतोपासकं तज्जीवनं स्वातन्त्र्यायोधनस्याद्भुतमेवे-तिहासं निजेगिल्यते। आसीत् सुभाषचन्द्रेऽजय्या शक्तिः। तस्मिन् प्रतिभाया विचित्रैव विच्छित्तिः परिस्फुरति स्म। तस्य कर्मस्वनभिभवनीयं कौशलं व्यवहरत्, तस्य गिरायां, ध्रुवं दुर्हृद्हृदयदलनकृद्भीषणं बल मुपबृंहत् समतिष्ठत; तत्रहि पावनमेव भारतप्रेम पर्यस्पन्दत। अनेकतैकतायामात्मानं परिणमय्य तत्र विदिद्युते। तदीये जीवनानाये, मन्ये, महामहाराजनीतिमत्स्य उद्ग्रथिता भूत्वा समशोभन्त। स दृश्यतातोऽदृश्यतातश्च दृश्यतां परिष्वजमानः समलक्ष्यत। संसारे आश्चर्यसृजस्तस्य मृत्युञ्जयस्य जन्म सप्त-नवत्युत्तराष्टादशशततमेशवीयेवर्षे वङ्गेषु बभूव।

सुभाषचन्द्रो बाल्यादेव तपस्वीव प्रतिभातिस्म। सः कुशाग्रप्रतिमः प्रारम्भादेवा-त्मनो भारतगौरववर्धननिपुणमहाकार्याचरणचणत्व मभिव्यनक्तिस्म। आंग्लेषु तदीयं स्वान्तं गम्भीरमपरितोष मदीदृशत्। महाविद्यालये यदाहि कश्चिदांग्लप्राध्यापको भारतीयेष्वपशब्दं प्रायुनक् तदासौ तं स्वाध्यापकं कपोले प्रहृत्य स्वकीयस्यापरितोष-स्याद्यं संस्तवं प्रदत्तवान्। स 'बी. ए.' इत्येतमुपाधिमवाप्य इङ्गलेण्डं प्रयाय आई. सी. एस. परीक्षामुदतरत् परं त्यागपत्रं समर्प्य भृतिं तां पर्यत्यजत्।

इङ्गलेण्डान्निवृत्य सुभाषचन्द्र एकविंशत्यधिकैकोनविंशतिशततमेशवीयाब्दे महा-त्मगान्धिनो दर्शनं कृतवान्। न महात्मगान्धिनोऽहिंसावादस्तमप्रीणात्। तस्मान्न सः स्वामभिरुचिं स्थापयितुमशकत्। सः कलिकातायां चित्तरञ्जनदासस्य सविधेऽयासीत्। तस्य प्रभावस्तमावर्जयति स्म नितराम्। ततश्च सः स्वशरीरं स्वकीयां सम्पदं स्वकीयं मानसञ्च राष्ट्रस्य सेवायां प्रयोक्तुमारभत। इङ्गलेण्डाद् भारत मागते सति युवराजे आंग्लशासनं तं प्रत्युद्गन्तुं धनं जलमिव प्रावीवहत्। तस्माद् राष्ट्रियमहासभा तत्र घोरं विरोधं कृतवती। सुभाषचन्द्रचित्तरञ्जनदासौ वन्दितां नीतावभूताम्। कारागारा-न्निर्मुक्तो भूत्वा स बहुमुखीषु सेवास्वात्मानमयूयुजत्। राष्ट्रियताप्रसारकपत्रसञ्चालना-तिवृष्टिनिपीडितजनोद्धरण-स्वराज्य पक्ष-परिपोषण-नगरनिगमाध्यक्षताकर्त्तव्यपरिपा-

लनादिविविधगुरुगुरुतरकार्याणि बिधाय स वङ्गेषु परामेव लोकप्रियतामानर्ज । शूल-शिखेव स आंग्लशासनमव्यथयत । परप्राणापहरणविषयकमनृताभियोगमारोप्य तस्मिन्, आंग्लशासनेन स माण्डले काराग्रहं प्रेषितः । ततो मुक्तिमवाप्य यदा स आगतो वङ्ग-राष्ट्रिय सभा तं प्रधानत्वेनावृणोत् । कलिकातायां मद्रासे च राष्ट्रियमहासभायाः सञ्जाते सति महाधिवेशने तत्र सः परमोत्साहमवलम्ब्य ओजोमय्या शक्त्या सह भाग-मग्रहीत् ।

त्रिंशदधिकैकोनविंशतिशततमेशवीयाब्दे सुभाषचन्द्रोऽखिलभारतीय राष्ट्रियमहा-सभायाः स्वाधीनताविषयकं प्रस्तावमन्वमंस्त । महात्मगान्धिसञ्चालितान्दोलनेषु भागञ्च सक्रियं प्रकृष्टोत्साहपूर्वक मगृह्णात् स देश-भक्तभूषणम् । एतस्तिन्नेवान्तराले तस्य स्वास्थ्यं रुग्णतामगमत् । अतः स योरपमियाय । तत्र स बहुषु नेतृषु महापुरुषेषु चामिलत् वार्ताश्च देशस्वतन्त्रताविषयिकास्तैः सह चकार । १९३७ तमेशवीयवर्षे स हरिपुर राष्ट्रिय महाधिवेशनस्य प्रधानोऽभवत् । तदानीं सः स्वातन्त्र्योपलब्धिप्रयोजनेन कठोरं परिश्रमं विदधान एव सततं समलक्ष्यत । आगामिनिवत्सरे पुनः सः त्रिपुराराष्ट्रियमहासभायाः प्रधानासनमध्यासीनः कृतो बभूव । अखिलभारतीयराष्ट्रिय महासभां द्वैधीभावानलात् पातु मसौ यदृच्छया त्याग पत्रं प्रस्तवीति स्म चकार च ततः पृथगात्मानम् । तदनन्तरं सोऽग्रगामिपक्षस्य स्थापनां व्यदधात् ।

द्वितीयस्मिन् महासंग्रामे प्रारब्धे सति सुभाषचन्द्रस्तत्सद्मन्येव वन्दीकृतः । स न कस्यापि जनस्य दृष्टिपथपतितो भवेदित्येतद्रीत्या निगूढतां नीतोऽभूत् । परं कृतेऽपि तादृशे सुदृढे प्रयत्ने, स आंग्लशासनाक्षिमध्ये पांसु मुत्क्षिप्य भारतान्निरगात् । अनेक-विधानि कष्टानि सहित्वा दुस्तराश्च वहुला विपद उत्तीर्य, स्वरक्षार्थं बहूनि च कैतवा-न्यारचय्य जर्मन देशं प्रापद्यत; ततश्च स जापानं नाम देशं प्रतस्थे । जापानदेशे स रासविहारीवसु-साहाय्यं परिगृह्य स्वतन्त्रभारतसेनायाः संगठनं चकार । सिंगापुरे रंगूने च सेनाया अस्याः सम्यगायोजन मक्रियत । रंगूने स्वतन्त्रभारतशासनस्यापि व्यवस्थायां रचनायाञ्चोद्यम आरब्धः सञ्जातः । मलयाख्यस्य प्रदेशस्य रंगूनस्य च नगरस्य सहस्रशो भारतीया अस्यां सेनायां प्रवेशं लब्धवन्तः । अस्यानीकस्य पुनीत मुद्देश्यमासीद् भारतस्योन्मोचनम् । यस्मिन्नहनि सेनेयं योद्धुं चचाल सुभाषचन्द्रः पर-मौजस्विभाषणं कृतवान् । इयं वाहिनी कोहिमाम् इम्फालञ्च यावदतोञ्जत् तावदेव जर्मनीदेशः पराजितो बभूव । गौराङ्गाश्च १९. ५. १९४५ तमेशवीयदिनाङ्के रंगूनं नैजाधीनतां नीतवन्तः । स्वतन्त्रभारतसेनायाः सर्वेऽपि सैनिका वन्दीकृताः । सुभाषचन्द्र इतो वायुयानेन जापानं प्रतिष्ठते स्म । पथि वायुयानमग्निना धृतमतोऽन्यै र्यात्रिभिः

समं सोऽपि मृत्युना पर्यष्वज्यत। इत्थं स्वातन्त्र्यस्योपासकोऽसौ महान् मानवो जीवनस्यान्त्यं श्वासं यावत् स्वमातृभुवं स्वतन्त्रीकर्तुं शत्रुष्वयुध्यत।

देशे स्वातन्त्र्यप्रदीपा अहिंसयैव प्रज्वलिता अभूवन्नित्येतदवगमनं वस्तुतो नावितथम्। आंग्ला गान्धिभयाद् भारतं परित्यज्य पलायिता इत्येतन्न सर्वांशभावेन विश्वासार्हम्। न ते आसन् अविमृश्यकारिणो विवेकशून्याश्च। सदसद्युक्तमयुक्तं च ते सर्वथा विचिन्त्य भारत हातु मुद्यताः समजायन्त। तेषां पुरस्तात् सुभाषचन्द्र-भगत सिंह-चन्द्रशेखरप्रभृतिहुतात्मनां वीराणां तेजो दारुणतरं भूत्वा तान् दग्धुं धूं धूं कुर्वत् प्रज्वलदासीत्; स्वतन्त्रभारतसैनिका यद्यपि तैः सम्यङ् निगृहीता वन्दिनश्च विहिता आसन् परं तत्कृतं दुरितं मृत्यु र्भूत्वा तान् संहर्तुं स्वकीयं भयङ्करमाननं व्यादाय सुदृढतया स्थितमासीत्। तदधीना भारतसेनापि नातः परं स्वेषु बन्धुषु कृतानांग्लात्याचारान् सोढुमियेष; सावसरं प्रतीक्षमाणासीदतस्ते तत्रापि नैजं विश्वासं निबद्धुं न प्राभूवन्। वस्तुत स्तेषां चरणतलात् धरित्री सर्प्तुकामाजायत। हुतात्मनां भारतीयानामुद्भटभटानां नायकेन वीरवरेण सुभाषचन्द्रेण, "हन्त, भारतस्याकाशं दिशो वातावरणं वसुधा चास्माकं कृते प्रातिकूल्यं प्रापिताः सन्ति; चेदस्माभिः साम्प्रतमपि न भारतं त्यक्तं तदा दैवमप्यस्मान् कालाद् रक्षितुं न क्षमं भवितु मर्हेत् तस्माद् द्रुतमेव भारतं त्यक्तव्यमेवेत्येतत् कृत्स्नतया विभाव्य ते भारतं जहति स्म" इत्येतदेकदोक्तम्। एतेन भारतस्य पारतन्त्र्यबन्धनादुन्मोचने स्वतन्त्रभारतसेनाया अमरसेनानीसुभाषचन्द्रस्य बलिदानं न कदापि महात्मगान्धि सञ्चालिताहिंसान्दोलनादूनतरमित्येतत् सर्वथैव वैशद्येन विदिततां प्रयाति।

सुभाषचन्द्र आजीवनं ब्रह्मचर्यं निषेवमाणस्तपस्यन् कठोरं तपः स्वतन्त्रताहवे भागं गृहीतवान्। स देशान्तरं प्रयाय तत्र कृतोद्वाहोऽभूदिति यदुच्यते श्रूयते वा न तत् सुदृढप्रमाणाभावाद् विश्वासार्हम्। एवंविधस्य प्रवादस्य मूलेऽवश्यमेव केनापि कूटरहस्येण भवितव्यम्। तपस्विनः सुभाषस्य तपस्यां न काचन रम्भापि भग्नीकर्तुं प्राभवदित्यत्रनास्ति मनागपि संशयः। सुभाषस्य पाणिग्रहणं चेत् कयापि सार्धं जातं तदा तन्मृत्युबालयैव सह।

न विदितं, का अपरिचिता क्व तमनैषीत्। स्वतन्त्रतालक्ष्मी रिहादातरत् परं सुभाषचन्द्रः क्वाप्यात्मानं न्यगूहिष्ट। कश्चिदुदीरयति वायुयानस्य पतनात् सोऽमृत; कश्चिद् वदति स भूमितलदुर्गे हिटलरेण सार्धं मुपविशति; कोऽपि कथयति सः कस्यामपि हिमाद्रेः कन्दरायां समाधिमास्थाय सन्तिष्ठते; कश्चिन्निगदति स जर्मनदेशमधिवसति। परमस्मन्मत्या तु स जने जने वसति; स आकारं हित्वा पार्थिवं सकलामपि वसुधामभिव्याप्य तत्र माति। तदीया मृत्तिका धरायाः कस्यामपि मृत्तिकायां निलीना भूत्वा राजते; तदुपरि चास्मदीया स्वतन्त्रतावल्लरी पुष्पिता फलिता च भवन्ती समुल्लसति।

आसीद् वस्तुतः सुभाषचन्द्रः स्वातन्त्र्यशलभराजः। स आत्मानं सन्दह्य सम्प्रति स्वातन्त्र्यप्रदीपस्य ज्योतिष्यात्मानं परिणमय्य शान्तिप्रदेनालोकेन समग्रमपि संसारं विद्योतयति।

सुभाषचन्द्रस्य बलिदानं भारतीयेषु तरुणेषु देशभक्तिभावनां सञ्चारयद् देश-सेवार्थं शश्वत् तान् प्रवर्तयद् गरिमाणमतितरां वर्धयितुं तान् प्रेरयत् तेषु त्यागभावनां तरलयद् राष्ट्रियताञ्च तदीयां प्रबलयद् विलोकितं भविष्यति। भारतीया वीरयुवान स्तत्कृतं शपथमिमं प्राणपणेन च पूरयितुमजस्रं प्रयतिष्यन्ते—

'भगवन्तं साक्षीकृत्याहं प्रनिजानामि यद् भारतं स्वतन्त्रीकर्तुं मन्त्यं श्वासं यावत् सैनिक इव योत्स्ये। सदैवाहं भारतस्य सेवको भूत्वा जीविष्यामि; भारतस्य हितं मामकीनस्य जीवनस्यैकमात्रं लक्ष्यं स्यात्। स्वतन्त्रता प्राप्त्यनन्तरमपि यदा कदापि प्राप्तायाः स्वतन्त्रताया रक्षार्थं महमपेक्ष्यमाणः स्यां तदाहं स्वशोणितस्यान्तिमं बिन्दुमपि मातुश्चरणयोः समर्पयिष्यामि'।

श्रूयतां तावत् कोऽयं वक्ति—

स्वदेशस्य वयं भक्ताः स्वदेशस्य वयं सुताः।
स्वदेशस्य वयं वीराः स्वदेशः प्राणवल्लभः॥
स्वदेशे जन्म सञ्जातं स्वदेशे वर्द्धिता वयम्।
स्वदेशेन कृतार्थाः स्मः स्वदेशो जीवनाधिकः॥

पृष्टा देवाः 'शरीरेऽस्मिन् कस्यास्ति महती कृपा'।
स्वदेशस्य स्वदेशस्य स्वदेशस्येति तेऽब्रुवन्॥
विमानस्थोऽवदद् रामः स्वदेशं वीक्ष्य जानकीं।
स्वर्गादपि गरीयान् स स्वदेशः सर्वदा प्रिये॥

भवन्तोऽपि देशस्य भारतस्य युवानो ब्रुवन्तु उच्चैः—

'स्वदेशस्य वयं भक्ताः स्वदेशस्य वयं सुताः'………।

सुभाषचन्द्रो यदर्थमजीवद्, यदर्थं सोऽसूनजहात् तदर्थमस्माभिरपि जीवितव्यं तदर्थमस्माभिरपि मरणीयम्। अथाधः स्थितैः पञ्चभिः श्लोकैः स वीरनेतोपश्लोक्यते—

विद्वद्धीरः पुनरपि सदा भक्तिमान् यः स्वदेशे
यस्य त्यागो भुवनविदितो जीवनं यस्य शुभ्रं
कुर्वन् नित्यं जनहितकरं कर्म यः शोभते स्म
वन्देऽहं तं भरतवसुधामातृसूनुं सुभाषम्॥१

स्वातन्त्र्यार्थं विमलचरितो बङ्गभूमे र्महत्त्वं
य: कष्टानि प्रतिदिन महो सोढवान् विश्ववंद्यः
प्राणांश्चापि प्रियगुणगणस्त्यक्तवान् देशहेतोः
वन्देऽहं तं भरतवसुधामातृसूनुं सुभाषम् ॥२

राष्ट्रार्थं यः सपदि गतवानन्यदेशांश्च वीरः
आंग्लानां स्वां भरतधरणीं शासनान्निन्दनीयात्
कर्तुं मुक्ता ममितविभवां तत्र सेनां चिकाय
वन्देऽहं तं भरतवसुधामातृसूनुं सुभाषम् ॥३

शत्रु र्यस्मात् सुभट युवकात् सर्वदा वेपते स्म
जीवत्यस्मिन् कथमपि हि नः शासनं सम्भवं नो
चिन्ता मेता मिह स विदधद् यापयामास कालं
वन्देऽहं तं भरतवसुधामातृसूनुं सुभाषम् ॥४

वाण्या मोजः प्रवलमतुलं यस्य रेजे सदैव
तेजो यस्मिन् प्रखरममितं द्योतते स्मातिदिव्यं
तीव्रा मेधा परमनिपुणा यत्र चक्रे स्ववासं
वन्देऽहं तं भरतवसुधामातृसूनुं सुभाषम् ॥५



# जयप्रकाश नारायणः

यः प्रतिभायाः पात्र मपि, विद्यानामास्पदमपि, गुणानां भाजनमपि, व्युत्पत्ते र्निधिरपि शासनपदासीनतायाः क्षमतां निदधानोऽपि, क्लिष्टक्लिष्टतराः समस्याः समाधातुं सुयोग्यतां बिभ्राणोऽपि, व्यक्तित्व-तेजस्वितार्थबलादिकं भजमानोऽपि, लोकप्रियतां लभमानोऽपि, राजनीत्याञ्च बलवती मभिरुचिं गृह्णन्नपि विधान सभाया वा संसदः सदस्योऽपि नाबुभूषत् सः अस्त्यनुकरणीयचरितो जयप्रकाश नारायणः ।

जवाहर लाल नेहरू जयप्रकाशनारायणे महतीमादरधियं निदधौ । सोऽसकृत् तं मन्त्रिमण्डले समाविष्टो भवितुं सादर मामन्त्रयामास परं, न स त्यागवीरो जयप्रकाश नारायण स्तदामन्त्रणं स्वीकुरुते स्म । केषाञ्चन जनानां समुदायेन अस्यां राजनीत्यां मनो निधीयते किं वा यैं निंजहित-लाभप्रयोजनेन स्वकीयः समूहविशेष आरचितोऽस्ति तेषु आत्मानं सन्निवेशयितुं न स मनागपि रुचिं बिभर्ति । स्वार्थसाधनरतायां राजनीत्या मवश्य मेव स इच्छां न धारयति परं राजनीत्यां स्पृहयति । सर्वोदयः स्वयमेवास्ति गरीयसी राजनीतिस्तत्र सिद्धान्तानभिव्याप्य कार्याणि क्रियन्ते । अस्ति स न कस्मिन्नपि पक्षे पर मीदृग् न वर्तते कदाचित् कोऽपि पक्षो यस्य पक्षस्य न जनाः सन्ति तस्मिन्नादरबुद्धिधराः । सर्वे तमाद्रियन्ते, सर्वे तं सम्मानयन्ति सर्वे च तस्मिन् श्रद्दधते । यत्रापि दुःखं प्रत्यूहाश्च घटन्ते स जनान् निषेवितुं तेषां सहायकोभवितुं धावति । जवाहरलाल नेहरो रनेहस्यपि सः समये समये शासनस्य तानि कार्याणि प्रति नैजं विरोधं दर्शयितुं स्वकीयं स्वर मुत्थापयतिस्म यानि सोऽनुचितान्यमंस्त । जनता तदा तत्कथन मादर पूर्वक मश्रौषीत् । महात्मा गान्धी च तस्मिन्नप्रीयत, जवाहरलालोऽपि तस्मिन्नस्निह्यत् । सः कस्मिंश्चिदवसरे गान्धिनं नेहरूमपि आलोचयत् परं न गान्धिनो न च नेहरोस्तस्मिन् निहितां प्रियतां सालोचनना न्यूनीकर्तुं मार्हत् । एकदा स जवाहर लाल नेहरूं प्रति सम्प्रेषिते एकस्मिन् पत्रे 'प्रिय प्रधान मन्त्रिण्' इत्येतदलेखीत्, इदं पत्रं विहाय न कस्मिन्नपि पत्रे स उक्तं सम्बोधनं तस्मिन् प्रायूयुजत्, सदैव 'प्रिय बन्धो' इत्येतदेव प्रायुङ्क्त । जवाहरलालनेहरू तत्पत्रोत्तरे लिलेख--"अहं भूयसां जनानां 'प्रधानमन्त्री' अस्मि परं जयप्रकाशस्यास्मि बन्धुः" । जयप्रकाशः पत्र मवाप्य तदातितरा मत्रपत । प्रधानमन्त्रिणि जवाहरलाल नेहरावुपरते सति स एकस्मिन्नधिवेशने न्यगादीत् "नैतत्त्रुटिनिमित्तेनाहमात्मानं कदापि माष्टुं शक्नोमि" ।

जयप्रकाशोऽस्ति महान् बीरः पुरुषः। सः शश्वत् सिद्धान्तेषु अविचल एव अवालोक्यत। 'अकसाइ चिनम्' अधिकृत्य तत्प्रकटीकृते विचारे केचन जनास्तं कटुतया आलोचितवन्तः। कश्मीरमुद्दिश्य च तदीयान् विचारान् बहवो जना नादृतवन्तः। "भारत-पाकिस्तानयोर्मध्ये सन्धि रेकान्ततोऽपेक्ष्यते, सत्यो श्च द्वयो र्देशयोः कलहरतयो रुभावपि तौ महतीं हानिं सोढारौ" इत्येतत् तस्यास्ति कथनम्।

जयप्रकाशो विहार प्रदेशे ११. १०. १९०३ इत्येतस्मिन्नीशवीये दिनाङ्के जन्म अग्रहीत्। सोऽल्प एव वयसि भारतं हित्वा शिक्षार्जनाय अमेरिकाम् अगमत् तत्र स वर्षाण्यष्टौ न्यवसत्। सः पञ्चसु विश्वविद्यालयेषु अध्ययनं कृतवान्। शिक्षा ग्रहण काले जीविकोपार्जनाय स भोजनभवने कर्मचारी भूत्वा, कदापि श्रमिको भूत्वा, कदापि यन्त्रालये कार्यंकृत्वा, कदापि च विक्रेता भवन् समय मगमयत्। स तत्र गणितं, भौतिकंशास्त्रं, रसायनशास्त्रञ्चाध्यगीष्ट; एतेष्वेव विषयेषु स वैशारद्यं न, अपितु जीवविज्ञाने, मनोविज्ञाने, अर्थशास्त्रे, समाजशास्त्रे च वैदग्ध्य मधिगतवान्। अमेरिकादेशेऽपि केषु चन स्थानेषु ईदृशान् जनान् सोऽपश्यत् ये नितरामेव निर्धनतायां नैजं जीवनं यापयन्तोऽलभ्यन्त। एतां विषमतां विलोक्य 'केचन पर्याप्तं धन मधिगच्छन्ति तदितरे च अतितरामकिञ्चनतां वहन्ति—'इत्येतत्तु नोचितमित्यस्यां चिन्तनायां न्यलीयत। स एकोनत्रिंशदधिकैकोनविंशतिशततमेशवीयवर्षे भारतमागच्छत्। न सः सुखमयं जीवनं नेतुं भारतं न्यवर्तत, अपितु स्वस्य देशस्य सेवायै कष्टमयञ्च जीवनं वोढुमसावागमद् देशान्तरात् स्वदेशम्। अत्र भारते भारतीयराष्ट्रियमहासभायाः (कांग्रेसस्य) श्रमानुसन्धानविभागस्याध्यक्षपदे सः प्रतिष्ठापितोऽभूत्। अश्विनीकुमार-गुण-ग्रह-सोमाब्देशवीयेऽब्दे सतिनयावज्ञान्दोलने कांग्रेसस्य महामन्त्रित्वमप्यन्वतिष्ठत।

जयप्रकाशोऽस्ति महान् लेखकः। तदीयायां लेखन्यां राजते महती शक्तिः प्रबल मोजोऽगाधञ्च वैदुष्यम्। तस्य भाषा भवति प्रभावशालिनी सरला मृदुला च। तस्य वक्तृतायां तदीयं सुयोग्यत्वं व्युत्पन्नत्वञ्च स्फुठतयाभिव्यक्तं सञ्जायते। स तथा यतते यथा पाठकाः श्रोतारश्च तद्भाव भवगन्तुं क्षमा भवेयुः। तस्य भाषणकलायां संलापसौन्दर्यं शोभते। केनचन मित्रेण सार्धं ते वार्तायां लग्नाः सन्तीत्यनुभवःन्ति। तदीयं भाषणं भवति मृदुलस्वररमणीयम्। युक्तयुक्ततरतर्का नुगतञ्च तद्भवति। विषये सः कृत्स्नतयाधिकारं निदधाति। न सः श्रोतृषु भावावेश मुद्भावयति। स तु सदैव अवबोधनचेष्टापर एव भवन् भाषते। सः स्वकीयया सत्यपरतया श्रोतॄन् सतत मावर्जयति।

जयप्रकाशो नूनं राजनीत्यां काश्चन प्रियाः परम्पराः वपन् वीक्ष्यते। न कोऽपि पदं प्रदाय तं क्रेतुं शक्नोति। सः सत्यं संश्रित्य निःस्वार्थाभिः सेवाभि रेव

तत्पद मध्यास्ते यन्नान्यो भारतीय आसादयितु मशक्नोत्। पदमप्राप्यैव मनुष्यः कार्याणि सेवाश्च कर्तु मर्हति। न सत्यपथगामी कदापि पदं कामयते। अस्ति सः सत्यभाषी। शासनाधीनतायां तु जनः सत्यस्य-यथार्थतायाः—अभिव्यक्तीकरणे विभेति। अस्ति सः पुरुषसिंहः, कर्मठो मानवः। न स विपद्भ्यः शङ्कते। पर विचारावगमनार्थं सर्वदैवेहते। सर्वोदये यो जनः कार्यं चिकीर्षेत् तेन भाव्यमादर्शाचारवतेति स इच्छति। नारायणो नैजै रूपश्लोकनीयैः कार्यै रित्येतत् समीचीनतयासाधयत्। सर्वोदयस्थिताः सर्वेऽपि कर्मचारिणः सन्ति सर्वोदयसिद्धान्ताचारा इत्यत्र तु न तस्य विश्वासः परं न तदीयाचारः कदापि सर्वोदयमान्योद्देश्यविपरीतः। अतएव सः स्वराष्ट्रस्याभ्युत्थानकृदेव समलक्ष्यत। वस्तुतो निःस्पृहा एव यथार्थत्वेन विश्वोपकर्तारो दृष्टा अभूवन्। जवाहर लालंव्यतिरिच्य यदि कोऽपि महीयसीं लोकप्रियता मवाप्नोन् तदा स जयप्रकाश नारायणो ऽस्ति, स उत्तराधिकारी नेहरोरिति जनानां कथनमस्ति।

एकदा तदीयः कोऽपि सखा तमब्रवीत् "भवान् शासन कार्ये कथं न स्पृहयालुः। तत्कार्यं भवन्तं प्राप्य गौरवं लभेत। निशम्येदं सः सस्मित मवादीत्" शासनात् को लाभः? ततो वहिस्तु जनाः सर्वजनीन मभिमत मनुष्ठातु प्रभवति। ततो वहिः स्थित्वैव देशसेवा सभ्यग् भवितु मर्हति"।

अस्ति जयप्रकाशो महान् मानवः। तत्सान्निध्ये जनाः आश्वसन्ति। तं विलोक्यैव जनताया चेत स्तस्मिन् श्रद्धाप्रणतं सञ्जायते। मन्यन्ते चात्मानं ते पुण्यभाजम्। तत्स्वान्ते दयोत्तरलीभवन्ती प्रवहति। सन्ततं सः सर्वेषु साहाय्यकृत्। अस्ति सः स्वाभिमानवान्। दर्पस्यतु तत्र लवोऽपि न। तत्पत्नीप्रभादेवी अस्ति साध्वीशिरोभूषा। सा सततं श्रद्धया भक्त्या तं प्रेम्णा च संसेवते। तत्स्वास्थ्ये सदा चिन्तितैव सन्तिष्ठते। छायेव सा तमनुयाति। तत्र न तस्याः प्रमादः प्राप्तः।

जयप्रकाशस्य स्वराष्ट्रं भजमानस्य चत्वारिंशद् वर्षाणि व्यत्यगुः। एतस्मिन् कालान्तराले सः स्वदेशार्थं कानि कानि न कष्टान्यसहत। सहमानोऽपि कष्टान्यसहनीयानि कदापि न मन्दोत्साहः संवृत्तः।

म० गान्धी यस्मिन्नन्निह्यत् यत्र च पं० नेहरू भृशमप्रीयत, जनता च यत्र श्रद्धत्ते स एव महान् देशाराधयिता शासने स्थित्वा दुस्तराः समस्याः समाधातु मनेहसं त्यक्तवानिति तु मन्ये, दुःखं महत्। अस्ति तत्रत्या राजनीति र्महाविचित्रैव व्रीडेति विमृश्य कदाचित् स मतिमान् दूर एव ततः समतिष्ठत। अस्ति साम्प्रत मसौ रुग्णः। आपातकाले बन्दित्वं तत्स्वास्थ्ये परमेव प्रहार माचरत्! भूयात् सः शतवर्ष

जीवी येनास्माकं देशो जगती च विपुलं भद्रं तस्मादासादयितुं शक्नुयाताम् । नूनं राजनीत्यां स इव कोऽपि नान्यस्त्यागनिष्ठो नेता ।

षष्ठे निर्वाचनावसरे राष्ट्रकल्याणाय सः सन्नपि रुग्णो यां महनीयां वन्दनीयां वरिवस्यां निदधद् वीक्ष्यते देशो न तां कदापि विस्मर्तुं शक्नुयात् तां सः सदा कृतज्ञतया श्रद्धया च स्मरेत् ।

मान्यः सुधीशसुजनोऽस्ति जयप्रकाशो
नारायणो भरतभूजननायकेषु
त्यागी महानतितराञ्च महांस्तपस्वी
सर्वोदये स्थिति मसौ निदधत् प्रकृष्टां
सेवां हि या मनुपमां कुरुते मनीषी
देशः स्मरेदनिश मेव नतो भवंस्तां
कष्टानि तानि च वुधः सहतेऽति शान्त्या
यानि स्वदेशसमुपासनहेतुना सः ॥



# सरदार भगतसिंहः

संसारस्येतिहासावलोकनेन पराधीने देशे ईदृशाः सत्साहसोत्साहादिसद्गुण सम्पन्ना वीराः समुत्पद्यन्ते ये स्वजीवनमपि समर्प्य स्वदेशं पारतन्त्र्याद्उन्मोचयितु प्रयतन्ते-इत्येतत् तथ्यं विदितं जायते । वर्तमानानेहसि अस्मद्देशस्य परतन्त्रता-शृङ्ख-लाया उच्छेदनाय ये वीरतरुणा नानाविधानि कष्टानि कठोराश्च विपदां ततीः सहित्वा, एतावदेव न, प्राणानपि स्वकीयान् हुत्वा नैजं जीवनं सफलीकृतवन्त स्तेषु भगतसिंहः पुरुषसिंहो हुतात्मवीरदेशभक्तो भवतिस्म ।

अस्मदीयस्य भारतस्य पञ्जाबप्रदेशे लायलपुरं नगरं, यत्साम्प्रतं पाकिस्तानेऽस्ति, वर्तते । तदन्तर्गतोहि विद्यते वङ्गाभिधानो ग्रामः । तत्र क्षत्रियसिक्खपरिवारः पुरा वसतिस्म; परिवारो हि सः देशभक्त्यां लब्धयशस्कोऽभवत् । तस्मिन्नेव परिवारे सप्ता-धिकैकोनविंशतिशततमेशवीयवर्षे सितम्बरे मासे भगतसिंहस्य जनु रजायत । बालस्य जन्म काले तत्पिता सरदार किशनसिंहो देश-प्रेमापराधाच्छासनेनाङ्ग्लीयेन कारायां वन्दीकृत आसीत् । बालस्य पितृव्यः सरदारोऽजीतसिंहश्च महान् देशभक्तो वभूव । तदीय (बालस्य) लघुः पितृव्यः स्वर्णसिंहश्च देशभक्तोऽभवत् । तस्य मृत्युः कारागार एव समजायत ।

भगतसिंहस्य महत्ता तदीयाद् बाल्यादेव दृग्गोचरीभवितु मारभत । वीरतायाः संस्कारा स्तस्मिन् वासं कुर्वन्तीत्येतद् वदन्त स्ते सर्वेऽपि जनाः प्राप्यन्त ये हि तं पिता-मह्या मातु र्वोत्सङ्गे शोभमानं, वा समवयस्कैः पृथुकैः सार्धं क्रीडन्तमवलोकयामासुः । यदाहि भगतसिंहः पञ्चवर्षवयस्को जातः, सः पठनार्थं पाठशालां नीतोऽभूत् । पठने सः अतिश्रमं विदधानोऽदृश्यत । सः स्वपाठं ध्यानपूर्वक मभ्यस्यति स्म; अध्यापकस्य च आज्ञायाः पूर्णतया पालनमकरोत् । बालस्य भगतस्य एते सद्गुणाः सर्वानपि जनान् अतूतुषन् । सः सर्वेषामपि प्रियतायाः वत्सलतायाश्च पात्र मभूत् । एकदा स वालो भगतः स्वपित्रा समं लाहौर मगमत् । तदीयः पिता तेन सह आनन्दकिशोरस्य सदने-ऽवस्थानमकार्षीत् । आनन्दकिशोरेण सवात्सल्यं भगतं स्वकीयोत्सङ्गस्थश्चकार । वालः स्वकीयै र्मधुरै र्वचोभिस्तं भृशमप्रीणात् । गायत्रीमन्त्रं च संश्राव्य तन्मनो नितरां जहार । 'पुत्र, त्वं किं करोषि'—इत्येतदानन्दकिशोरेण पृष्टोऽसौ बालोऽहं शतघ्नीं विक्रीणामीत्येतेन प्रतिवचनेन तमाश्चर्यितं व्यदधात् । ग्रामविद्यालयाच्चतुर्थीकक्षा

मुत्तीर्य भगतसिंहोऽध्ययनाय लाहौरनगरस्थखालसा-स्कूले प्रवेशितः । पिता आसीन् मातृभुवो महान् उपासकः । सः 'विद्यालयस्त्वयं मम सुत मांग्लानां दासं करिष्यती-ति विमृश्य तं तस्माद् विद्यालयाद् दूरीकृतवान् । पिता तु तदीयः स्वसूनुं तैः शुभैः संस्कारैः सुसंस्कर्तुं मभिलषते स्म ये संस्काराः स्वमातृभूमेः परतन्त्रतायाः—भेदने सहायका भवितुं शक्नुयुः । स तं डी. ए. वी. स्कूले प्रविष्टमचीकरत् । डी. ए. वी. स्कूले पठन् स नवमीं श्रेणी मुदतरत् ।

एकविंशत्यधिकैकोनविंशतिशततमेशवीयेऽब्दे देशेऽसहयोगान्दोलनं प्रारब्ध मभूत् । सर्वत्रैव देशे वैदेशिकानि वस्तूनि वहिष्कृतानि अभूवन् । पुरे पुरे, ग्रामे ग्रामे गेहे गेहे इंगलेण्डीयानि वासांस्यदह्यन्त । देशस्य नेतारोऽभिभावकान् प्रार्थयामासु र्यत् ते स्वकीयान् पुत्रान् पुत्रीश्च तेभ्यो विद्यालयेभ्यः पृथक् कर्तुं कृपां कुर्यु र्ये सन्ति लब्ध राजकीयसाहाय्याः । देशस्य सेवकः सरदार किशनसिंहः स्वकीयं सुपुत्र भगतसिंहम पि डी. ए. वी. स्कूलात् पृथक् कृत्वा तं नेशनल कालेजे पठितु मन्वित मकारयत् । कालेजस्यास्य सञ्चालक आसीत् लाला लाजपतरायः प्राचार्यश्च परमानन्दः । पञ्चापकेशरिणोदेशभक्तस्य ला० लाजपतरायस्य किञ्च पवित्रात्मनः श्रेष्ठस्य देशोपासकस्य परमानन्दस्य च छत्रच्छायायां सरदारभगतसिंहः शिक्षां गृहीतवान् । भा० परमानन्दः सत्वर मेव शिष्यस्य भगतसिंहस्य विशिष्टतां विवेद; अतः स तथा प्रायतिष्ट यथा सः सुशिक्षितः परमभारतभक्तिभावितमना युवको भवितु मर्हेत् । अस्यामेव राष्ट्रिय शिक्षा संस्थायां भगतसिंह ईदृशान् सत्सुहृदः प्राप्तवान् ये जीवनपर्यन्तं नान्योन्यस्य साहचर्य ममुञ्चन् । तेषु मित्रेषु सुखदेव-भगवतीचरणावास्तां मुख्यौ सखायौ । सुखदेवः स एव यो हि अनेन भगतसिंहेनैव साकं प्राणदण्ड मलब्ध । भगवतीचरणो भगतसिंहं कारालयादुन्मोचयितु मतितरां प्रयासमकार्षीत् ।

शिक्षार्जनकाले सरदार भगतसिंहस्य प्रियतरौ रुच्यनुकूलौ विषयावास्तां-राजनीति रितिहासश्च । प्रायेण सः अनयो रेव विषययोः स्वसहचरैः सार्धं वार्ता कुर्वाणोऽध्यगम्यत । भगतसिंहस्तत्सहचराः सुहृदो नाटकादिष्वपि रुचिं निदधुः । ते नाटकै रपि देशभक्तिं प्रचारयामासुः । सङ्गीतानुरागिणश्च ते आसन् । सङ्गीतमपि ते देश-प्रेम-प्रसारणे प्रयुयुजुः । सद्भाषणेषु तु ते कुशला आसन्नेव । भगतसिंहस्योत्साह वर्धकै र्भाषणैः श्रोतृणां प्रत्यङ्गं प्रस्फुरति स्म । सोऽनायासपूर्वकमेव आंग्लकृताना-मत्याचाराणां चित्रणे परामेव निष्णाततां न्यदधात् । जनेषु तद्भाषणानि क्रोधज्वाला-मुत्पादयितुं ताञ्चोद्दीपयितुं वर्धयितुञ्च क्षमाणि समजायन्त ।

भगतसिंहो यदा कालेजे शिक्षार्जन-संलग्न आसीत् तदैव तदीयौ मातापितरौ तस्य परिणयं कर्तुं मतितरामभिनिवेशं कृतवन्तौ । भगतसिंहो न वैवाहिकबन्धने

पतितु मैच्छत् सः स्वकीयं परिच्छदमादाय कालेजं च परित्यज्य क्वापि पलायते स्म। परं प्रस्थान काले पत्रं पितृसेवायामेकं प्राहिणोत् तत्र सः 'नाहं विवाहं कर्तुं मिच्छामि। अतएव कालेजं विहाय गच्छामि। नान्यत् किमपि कारणं; मा भवान् चिन्तां कार्षी-दि'त्येतल्लिलेख।

लाहौरात् स दिल्लीं प्रापद्यत। तत्र सः 'अर्जुन' कार्यालये कानिचन दिनानि संवाददातृकार्यमन्वतिष्ठत्। ततश्च सः चतुर्विंशत्यधिकैकोनिर्विंशतिशततमेशवीयाब्दे कानपुर मागम्य 'प्रताप' कार्यालये कार्यं कर्तुं मारभत। गणेशशङ्करविद्यार्थी यूनो भगतसिंहस्य सद्गुणै राकृष्यत। स तं प्राप्य भृशमप्रीयत। वस्तुतः यः कोऽपि तं प्रसन्नानन माकर्षकव्यक्तित्वं गुणवन्तं युवान मपश्यत् स तस्य मित्र मभूत्।

यस्य वङ्गवासिनो वटुकेश्वरदत्तस्य वलिदानं कदापि न विस्मृतं भवितु मर्हति सोऽपि कानपुर एव तस्य प्रगाढं सुहृद्भावमुपेयिवान्। कानपुर-स्थितिकाले भगतसिंहो वटुकेश्वरदत्तश्चोभौ उल्लोलतरङ्गयो गङ्गायमुनयो र्भयङ्करैः रयवता मगाधजलभृतां प्रवाहाणामोघै र्निपीड्यमानान् ग्रामीणान् जनान् रक्षितुं रात्रिन्दिवंमहत्कष्टसाध्यं श्रमावहं कार्यं चक्रतुस्तौ शतशः सहस्रशश्च बन्धूनां भगिनीनां च प्राणानगौप्तां सेवा-भिश्च स्वकीयाभिस्तेषां विपदोऽभिभवितुं प्रायतिषाताम्। सर्वत्रैव जनास्तयोः सेवा कार्यं मुक्तकण्ठतयाभूयोभूयः प्रशंसन्तोऽश्रूयन्त। तेष्वेवाहःसु चन्द्रशेखर 'आजाद'स्तत्स-न्निकृष्टतामागच्छत्। एतेषां नवतरूणानां वृन्द केन 'प्रकारेण वैदेशिकाच्छासनान् मातृ-भूमि रुद्धृता स्यादित्येतदेव विचिन्तयत् प्राप्यत।

श्रीगणेशशङ्करो विद्यार्थी सरदार भगतसिंह मेकस्मिन् राष्ट्रियविद्यालये प्रधा-नाध्यापकासनमध्यासयामास। प्रधानाध्यापकपदेऽपि गुणनिधि र्भगतसिंह उत्तमयारीत्या कार्याणि निष्पादयामास। जनाः 'अहो अयं नवयुवा कार्यमेतदपि कियत्या महीयस्या योग्यतया सम्पादयती'त्येतदाद्युक्त्वा पुनः पुनः तं श्लाघन्ते स्म।

मातु रस्वस्थत्वाद् भगतसिंहः कानपुरतः स्वकीयं ग्राम माजगाम। मातृसेवायां न स दिनं न च रात्रिमेवाजीगणत्; तदीयया सेवया माता क्षिप्रमेव स्वस्थतां प्राप। तेषु दिनेषु पञ्चापप्रदेशे सत्याग्रहः सवेगं प्रवृत्त आसीत्। नवतरुणा मृत्युना केशेषु गृहीताः स्मो वयमित्येतद् विनिश्चत्य कारागारान् परिपूरयन्तोऽवालोक्यन्त। शासन-कृतं दमनमपि परमनृशंसताया सीमामप्यतिक्रम्य उच्चै रुद्वेल्लत् क्रियायां रत मासीत्। वीरभगतसिंहः सत्याग्रहिणां सेवायामात्मानं नियोजयामास। धन-भोजनादिसहायतया स देशसेवकान् सत्याग्रहपरान् न्यषेवत। स देश-सेवार्थं नवयुवक भारतसभां स्थाप-यामास। तत्प्रयत्नेन सत्वरमेव तस्याः सभायाः सहस्रशो ते युवानः सदस्यतामङ्गीचक्रुः।

स 'देशादांग्ला निस्सारणीया एव सन्तीत्येतल्लक्ष्ये दृष्टिं निधाय तत्सभाद्वारेण जनतोद्बोधने संलग्नोऽभवत् । 'बन्धवः, उत्तिष्ठत, जाग्रत, अद्य सः समयः समागतोऽस्ति यदा हि अस्माभि र्वैदेशिकशासनं समूल मुन्मीलनीयमस्ति । अद्यास्माकं देशे सर्वत्र क्षुधा दरिद्रता अर्थसाधनशून्यता च विकीर्णाः सन्ति । तासां निरसनमपेक्ष्यते । भो रामकृष्णोपासकाः, भो गुरुगोविन्दसिंहस्य प्रियवत्साः, उत्तिष्ठत, उत्तिष्ठत । स्वपूर्वजराजपुत्रवीरा इव यूयमपि केशरवर्णोष्णीषेण शिरोऽलङ्कृत्य मातृभूमे र्दासता—शृङ्खल कृन्तत । वीरवराः, यथा प्रताप-शिवाजि-हरिसिंह नलुआप्रभृति वीरधौरेयाः स्वेन शोणितोदकेन स्वकीय-देशोपवन मसिञ्चंस्तथैव यूयमपि स्वकर्त्तव्यं पालयितुं सन्नद्धा भवत । अद्यास्माकं देशो यूना मुत्सर्ग माकाङ्क्षति । अप्यस्ति कश्चिन् मातुः सुतो योऽद्य सन्तापसन्तप्ताया जनन्याः आह्वाने आत्मानं जुहुयात्' इत्येतया सिंहगर्जनया प्रसुप्तान् जागरयाम्बभूव, जागृतान् उत्थापयामास, उत्थापितांश्च क्रियायां योजयाञ्चकार ।

यत्रापि तस्य सिंहोद्घोषोऽभवत् तत्रत्यं गगनं 'वयं सन्नद्धाः स्मः, वयं प्राणानपि समर्प्य स्वमातृभुवं सेविष्यामहे, वयं तां स्वतन्त्रां कृत्वैव विरंस्यामः, जयतु जयतु अस्माकं भारतमातृभूमिः' इत्येतैः शब्दै र्भृशं जुगुञ्ज ।

वीरभगतसिंह आंग्लेक्षणपीडाकरोऽभवत् । आंग्लशासनं तस्यैकैकं कार्यं गम्भीरया दृष्ट्या द्रष्टुमारभत । लायलपुरे देशभक्ता महत्याः सभायाः आयोजनं विदधुः । तस्यां सभायाम् आंग्लशासनकृतदेशरक्तशोषणप्रकारप्रतिपादनपुरस्सरं भगतसिंहस्तान् वीरान् प्रशशंस येऽत्याचारपरान् आंग्लान् व्यापादयामासुः । सः 'डे' संज्ञकां ग्लहन्तारं बङ्ग वासिनं नव युवानं गोपीनाथ साहाम् अपि प्रशंसति स्म । तदीयै स्तै स्तै र्वक्तव्यै रांग्लशासन मतितरां तस्मिन् प्राकुप्यत । तत् तं दण्डयितु मवसरमार्गणे समलगत् । यत्रापि सोऽगमत् तत्रैव गुप्तचरा अपि अगमन् । ते छायेव तमन्वगच्छन् । शासनमसकृत् तं निग्रहीतुं प्रायतत परं बहुविधान् असत्यानप्यपराधान् तस्मिन्नारोप्यापि न स्वाभीष्टं साधयितु मशकत् । यदा सः अमृतसर नगरे 'अकाली' पत्र सम्पादक आसीत् तदा, किञ्च यदा लाहौर नगरे रामलीलायां गुडपातोऽभवत् तदा चारक्षिभिः स गृहीतः परं जनमतमतितरां प्रचण्डतया विपर्यस्तं दृष्ट्वा न शासनं स्वकीयं कुत्सितं निन्द्यं च मनोरथं सफलीकर्तु मपारयत् । स्वाभाविकी देशभक्ति स्तस्मिन् अदीप्यत । तस्य देश-प्रेम्णि मनागपि न दम्भो वा कृत्रिमताया लेशोऽपि समतिष्ठत । तदीयाया देश-भक्तेः परीक्षा असकृत् कृताभूत् सः शुद्ध सुवर्णमिव सदैव विशुद्ध एवासिद्ध्यत्[1] । आंग्ल-

१—प्राणनाथ वानप्रस्थिकृत सरदार भगतसिंहः पृ० ३०

शासनमुन्मूलयितु ं क्रान्तिकारिणामग्रणीः इव सः तस्मिन्नपि संघे, यस्य नेतृत्वं चन्द्र शेखर आजादो व्यदधात् किञ्च यस्य नामकरणं 'हिन्दुस्तान सोशलिस्ट रिपब्लिकन पार्टी' इत्येतत् स्वयं सः (भगतसिंहः) कुरुतेस्म, नानाविधानां काठिन्यानां साम्मुख्यं समुदं विधाय देशस्य पावनेऽजिरे स्वतन्त्रतादेव्याः अवतारणाय क्रान्तिमयं वातावरणं विदधत्, जनसामान्यस्यापि मानसे देशानुरागं सञ्चारयन्, सर्वत्रैव प्रतिनगरं प्रतिग्राम मांग्लशासनपरिपन्थिनीं स्थितिं जनयन्, वैदेशिकशास्तु मार्गे अनुपदमुपप्लव-कण्टकततिं च विकिरन् स भारतमातरं समसेवत। योऽपि तं प्रिय भारतमातृपुत्र मपश्यत् सोऽनिर्वचनीयामेव शान्ति मविन्दत्।

यदा हि 'सायमन कमीशन, निवर्तस्व' इत्येतैः शब्दै राकाशं गुञ्जयन्ती देश-भक्तानां विशाला संख्या ला० लाजपतरायस्य नायकत्वे तत् स्थलं, यत्र शासनेन कमीशनस्वागतनिमित्तेन आयोजनं कृतमासीत्, उपासरत्; आंग्ल आरक्षिणामधिकारी सांडर्सो जनता हृदयसम्राजं पञ्चापकेसरिणं लाजपतरायं शिरसि कठोरतया लगुडेन प्राहरत्। तस्य नेत्रयोः पुरस्तमः प्रापतत्। अयं हि नृशंसः प्रहारो भगतसिंहस्य हृदये प्रबलं क्रोधं क्षोभञ्चाजनयत्। पञ्चाप-सिंहस्तं प्राणापहारिणं घातं न सोढु ं शशाक। सोऽष्टादशे दिने पञ्चत्वं गतः। क्रान्तिकारिणो नवयुवानः स्वनेतरि कृतं तं प्राण-ग्राहिणं प्रहारं न सोढुं शेकुः। १७।१२।'२८ दिनाङ्के सः सांडर्सस्तैः शतघ्न्या हतः। इमे त्रयो युवान् आसन् भगतसिंहो राजगुरु राजादश्च।

शासन मत्याचार मनुष्ठातु ं जनतारक्षणविधेयकं यं पारयितु मैच्छत् किञ्च अकारयच्च यं पारितं; तं विरोद्धुं क्रान्तिकृतस्तरुणाः समुद्यता अभूवन्। ते सभाभवने तस्मिन् काले, यदा विधेयको भवेत् पारणोन्मुखः, गुडं (बमम्) प्रक्षिप्य विधेयकविरोधं प्रकटीकर्तु ं दृढं सङ्कल्पं कृतवन्तः। सरदारभगतसिंहो वटुकेश्वरदत्तश्च एतत्कार्यार्थि नियुक्तीकृतौ। यथासमयं तौ द्वावपि सभा-भवनमायातौ। विधेयकस्य पारण-काले सति प्रत्यासन्ने शून्यासन्दिकादिशि गुडः प्रक्षिप्तोऽभूत्। सर्वतो धूम एव धूमः प्रससार। तत्रत्याः सर्वे जना भूत्वा व्याकुलाः उच्चै राक्रोशन्। केचन आहता एवाभूवन्ः न च ततः परं किमप्यन्यदघटत। तत्काल एव तौ आरक्षिभिः परिगृहीतौ। न्यायाधिकरणे भगतसिंहोऽ'स्माभि र्यत् कृतं तद् विदद्भिरेवानुष्ठितम्; आंग्लशासनं जानीयाद् यन्न भारतवासिनः सम्प्रति कीदृशं कमप्यत्याचारं सहिष्यन्ते' इत्येतत् स्ववक्तव्यमभिव्यानक्। अधिकरणं १२।६।१९२९ तमेशवीयवर्षे द्वावपि नवयुवकौ (भगतसिंह-वटुकेश्वरदत्तौ) कालपानीयदण्डेनादण्डयत्। उभावपि सहर्षं दण्डमङ्गीकृतवन्तौ। सः भगतसिंहो नियाँ-वाली कारानिकेतने वटुकेश्वरदत्तश्च लाहौरकारागारे न्यधीयाताम्। तेषु दिनेषु, कारागारेषु न वन्दिनः सद्भोजनं, न स्थातु युक्तं स्थानमेव लब्धुमशकन्। अस्यां

दिशायामधिकारिभि र्महान् प्रमादोविहित आसीत् । भगतसिंहतत्सहचरवीरयतीन्द्र नाथदासादिभिस्तद्विरोधेऽनशनं कृतम् । अनशनाद् यतीन्द्रनाथदास स्त्रिषष्ठितमेऽह्नि नश्वरं शरीरं तत्याज । सहस्रशो जनास्तस्मै श्रद्धाञ्जलिं समर्पयामासुः । भगतसिंहः पञ्चदशाधिकशतदिनानि अनशनं चकार । अस्मादनशनाच्चासनं प्रणतं भूत्वा समुचितव्यवस्थां व्यदधात् । वीरभगतसिंहोपरि सांडर्सहत्या गुडप्रक्षेपणाद्यारोपान् आरोप्य ७।१०।१९३० तमदिनाङ्के स० भगतसिंहः सुखदेवो राजगुरुश्च त्रयोऽपि प्राणदण्डेनादण्डयन्त ।२३।३।१९३० तमे दिनाङ्के चैते वीरदेशभक्ताः प्राणापहारि-पाशेनान्यायिना शासनेन व्यापादिताः । पाश-दोलादोलनात् प्राक् त्रयोऽपि ते स्वतन्त्र-तागानमगायंस्ततश्च हसन्त एव ते प्राणपाशं ग्रीवयाचुचुम्बुः । तस्मिन्नेव समये फिरोजपुरं निकषा शतद्रुतटे तेऽदह्यन्त च । यदा जनताज्ञासीदिमां कुघटनां, सा शोका-कुलहृदया उच्चैः क्रन्दन्ती शतद्रुतटं गता परं भस्मैव सा तेषां दृष्टवती । तदा समग्रमपि भारतं प्रगाढशोकग्रस्तमभूत् ।

हित्वा सुखानि सकलान्यपि जीवनस्य । देशप्रियो भगतसिंह युवा सहर्षम् ।।
प्राणान् समर्पयदहो भरतक्षमार्थं । सेवामहै स इव भारतमातृभूमिम् ।।



# श्रेष्ठि गोविन्ददासः

यस्य हि गेयचरितस्य पुण्यानि चरितानि गातु मिह उपस्रियते तस्य समग्रमपि जीवनं राष्ट्रियेतिहासस्य महत्त्वमहनीयोऽध्यायो वर्तते । तेनातुलधन-समृद्धिवैभववतिवंशे जनुर्गृहीत्वापि तपस्त्यागमयमेव जीवनं तद् गमितं यदस्ति सर्वथैव विगतोपमानम् । सामाजिके राजनीतिके साहित्यिके च क्षेत्रे क्रियमाणाभिः श्लाघनीयाभिरभिनन्दनीयाभिश्चतत्सेवाभिः स देशस्याखिलस्य जनतायाः परम सम्मानभाजनं कृतोऽस्ति । सोऽयं यशोधवलित दिग्दिगन्तः श्रेष्ठिश्रेष्ठः श्रीगोविन्ददास स्त्रिपञ्चाशदधिकैकोनविंशतिशततमेवैक्रमसम्वत्सरे विजयदशम्याममितसम्पत्सम्पन्न राजभक्तकुले समजायत तत्पितामहस्य 'राजा' इत्येतत्सम्मानसम्मानितस्य गोकुलदासस्य जन्मत एव अञ्चितोऽभिलाषस्तस्य जनुषा परिपूर्णतां गतः । पितामहेन परमोल्लासोल्लसितहृदयेन मासं यावत् पौत्र जन्मोत्सवः सहर्ष मायोजितः । तत्रैकलक्षरूप्यकाणि व्ययीकृतानि; तावन्त्येव च निर्धनेभ्यो दीन दरिद्रेभ्यः प्रदत्तान्यभूवन् । येनान्ववायेन भारते ब्रिटिशशासन स्थापनायां महती सहायता कृताऽऽसीत् तस्यैवान्ववायस्य बाल एष ब्रिटिशशासन-मूल-प्रकम्पने महान् सहायको भविष्यतीत्येषा तु तदा कल्पनापि न केनापि व्यधायि ।

तद्विधातुलधनसम्पन्नवंशे समुत्पन्नत्वाद् गोविन्ददासस्य लालनं पालनञ्च भृशस्नेहेन पूर्णवात्सल्येन च विलसितविलासे वातावरणे यद् दृष्टमभूत् तत्तु स्वाभाविकमेव । स तत्कालवर्तिभ्यः सर्वश्रेष्ठेभ्यः शिक्षकेभ्यः स्वकीये सदन एव आंग्लहिन्द्योश्च शिक्षां गृहीतवान् । तस्मिन् हि समृद्धे परिच्छदे तस्य वेष-सज्जादि सकलमेव पूर्णतया प्रतीच्यमेवाभवत् । तद् दृष्ट्वा तस्यापि जीवनं धनवत्कुलसम्भूतवालकस्य जीवन मिव नृत्यगृहेषु आमोदालयेषु च परमविलासितया व्यतीतं स्यादित्येतत् प्रतीतिपथमुपेतमभूत् । परं तस्य जीवनं तु हन्त, 'कस्यचिज्जनस्य तु जन्म महोद्देश्यनिमित्तेन भवति, भवतीष्वपि विपरीतासु परिस्थितिषु स तदुद्देश्य-पूर्त्ति मन्तरेण स्थातुमेव न शक्नोति । धनवद्गृहाणां कुमाराः स्वपितेव सफला व्यापारिणो भवन्ति किं वा कुपथगामिनः सञ्जायन्ते, जायन्ते च प्रभूतदुर्गुणनिधयः । परं गोविन्ददासस्तूक्तनियमस्याभूच् चमत्कारपूर्णोऽपवाद एव । समृद्धे वैभववन्धुरे कुले गृहीत्वापि जन्म, स लक्ष्मीपूजको न भूत्वा, सरस्वतीपूजको महान् देशभक्त एवावर्तत । विलासितामयं जीवनं न्यक्कृत्य तेन त्यागमयं तपः समुज्ज्वलं जीवन मङ्गीकृतमतितरांहर्षेण । तदीयं व्यक्तित्वं निदधाति स्म काश्चन ईदृशीः आकाङ्क्षाः यासां पूर्ति भौतिकसाधनानां प्राचुर्यं नैव कर्तुमर्हति

स्म। तासां तृप्तिप्रयोजनेन तेनैकतस्तु ब्रिटिशराज्यस्य कारागारेषु निवासः कृत एकतश्च निस्तब्धायां निशीथिन्या मपि सुखनिद्राया मात्मानं नो निपात्य साहित्य-निर्माणस्य चिन्तायां स्वकीयं मनः प्रावर्त्यत। वस्तुतः, भौतिक साधनानां विपुलत्वमेव मानवस्यात्मानं न तोषयितुं क्षमं जायते, तस्मान्मानवोऽजस्रं कस्यचन लोकोत्तरस्योद्देश्यस्य परिपूरणाय प्रयतमानो भवति। एषैवाकाङ्क्षा सज्जीवनस्य परमार्थतः प्रस्रवणम्। मानव-प्रकृत्यां यद् दौर्बल्यं सम्भवं तत् तत्र न इत्येतत्तु न, परं भारतीयादर्शाभिरामा तस्य रमणी धर्मपरायणा जननी च तद् दौर्बल्यं न तमभिभवितुं शक्नुयादित्येतद्धेतोस्तस्य परमसहायिके अजायेताम्।

श्री श्रेष्ठि गोविन्ददासो भारतीयैः शुभैः संस्कारैः साधुतया च संस्कृतोऽभूदतस्तदीया धीस्तदीयमन्तः करणं तदीया विचाराश्च नितरामेवावदाता उदग्राः स्वच्छा उदाराश्च दृष्टा भवन्ति स्म। स्वकीये जीवने याः काः अपि सफलताः सोऽध्यगमत् तत्र कारणं ते श्रेयस्कराः संस्काराः एव सन्ति स्म।

श्री गोविन्ददासो न क्षणमप्येकं व्यर्थं गमयति स्म। सः सर्वदा कर्मणि रत एव संलक्ष्यते स्म। स्वजीवन-प्रवेशे कृते सति स घटी-चक्रमिवाजस्रं चलन्नेव चक्षुर्गोचरीकृतः। वणिक्कुलप्रसूतस्यापि तस्य जीवन मर्थार्जनदृष्ट्या न सफलं दृष्टं भवति स्म परं स यादृशीं महतीं प्रतिष्ठां यादृशञ्च यशो व्यापकं प्राप्नुते स्म तादृशीं महतीं प्रतिष्ठां तादृशञ्च व्यापकं यशोऽल्पीयांस एव जनाः प्राप्नुवते स्म।

श्री गोविन्ददासस्य जीवन मासीद् बहुमुखम्। तेन ब्रिटिशशासनस्य शृङ्खलाश्छेत्तुं भेत्तुं च स्वकीयं जीवन मपि पणीकृतम्। आसीत् सोऽविचलः सेनानीः; सः कवितोपन्यासनाटकानां महान् स्रष्टा चासीत्। तस्य तास्ताः कृतीः विलोक्य तस्य लेखनीपतित्वं स्फुटतयैव प्रकटीभवति। स्वातन्त्र्याधिगमनानन्तरं राष्ट्रस्य नव निर्माणे, नवीनाया आर्थिक्याः शान्तिपूर्णायाश्च क्रान्त्याः समुद्भावने च तस्य योगदान मतितरामभिनन्दनीयमस्ति। स तेषु सुकृतिष्वन्यतमो यैः स्वकीय एव जीवने स्वकीया मनोऽभिमताः आकाङ्क्षाः फलवत्यः प्रेक्षिता अत्र लोके। आश्चर्य मिदं, सफलतास्तास्ताः प्राप्यापि स न निष्क्रियतां गतः। तस्य, प्रत्युत, नवनिर्माणपथाग्रेसरत्वमेव वीक्षितं भवति स्म। तत्तद्वैशिष्ट्यवत्त्वात् तस्य, सः समेषामपि कृते प्रेरणाप्रदं स्रोतः सञ्जातः।

गोविन्ददासस्यासीद् राजनीति र्हि गान्धिवादिनी राजनीतिः। गान्धिवादितत्त्वभूतसत्याहिंसाभ्यां राजनीतिज्ञस्य तस्य निर्माणं जातम्। अतस्तस्य राजनीत्यां गान्धिवादस्य सन्निवेशः स्वाभाविक एव। गान्धिवाद-द्रुमकस्य सम्पोषणाय संवर्द्धनाय

च तस्य मनोमही सर्वथैव आसीदुपयुक्ता; तस्मादेव हेतोः गान्धिवादिनी राजनीतिस्तं लीलयैव आवर्जयितुं क्षमा जाता। अतितरामेव तस्यास्तन्मनोऽनुकूलत्वात्, सः कष्ट-मन्तरेण स्वकीयां विपुलां सम्पदञ्च अवाजानात्।

विंशत्यधिकैकोनविंशतिशततमेशवीयाब्दे, सार्वजनिकं क्षेत्रं गतस्य, नाधिकेहि समये गतेऽपि, तत्कालवर्तिपरमादृतनेत्रा पण्डित मौतीलाल नेहरूणा जवलपुरे प्रोक्तम्— "मम एको न, अपितु द्वौ पुत्रौ स्तः एको जवाहरलालोऽन्यश्च द्वितीयो गोविन्ददासः।" एतेन तस्याद्भुतप्रतिभावत्त्व मथ च विस्मयप्रदकार्यक्षमत्वं च विदितं जायते। इदं कं न भारतीयं गौरवाधिरूढं विदधाति? देशस्वातन्त्र्य-संग्रामानेहसि सोऽष्टकृत्वः कारागारं गमितोऽभूत्। कारागारेऽपि सोऽकर्मण्योभूत्वा नैकमपि क्षणं समतिष्ठत। स तत्र सर्वमपि स्वकीयं समयं साहित्य-प्रणयने उपायुनक्। कारालये ये हि सुहृद स्तेनैव सह वन्दि जीवनं गमयन्ति स्म ते समीचीनतया तस्य नियमनिष्ठत्वं समयोपासकत्वञ्च विदन्ति स्म। स यथास्वसद्मनि दिनचर्यायाः पालनं यथासमयं यथानियमञ्चाकरोत् तथैव सः कारागार निवासानेहस्यपि तां विधिपूर्वक मपालयत्।

साहित्यस्य राजनीतेश्च सांकर्यं यादृशं माननीये गोविन्ददासे दृष्ट मभवत् तादृश मन्यत्र अत्यल्पमेव परिवीक्ष्यते। तद् विरचितानां नाटकानां संख्या शतमप्यति-क्रमते। आचार्य डॉ० हजारीप्रसाद द्विवेदिना तमधिकृत्याभिहितम्—"श्री श्रेष्ठि गोविन्द दासः प्रतिभाशाली नाटककारोऽस्ति। तदीयेषु नाटकेषु मानवजीवनावगमननिमित्तेन अनेकानेकानि द्वाराण्युद्घाटितानि प्राप्यन्ते। तच्चरित्राणि जीवनवतां मानवानां सन्ति। याश्च समस्याः सोऽस्मत्समक्षे निदधाति ता मानव समाजस्य जीवनस्य चोपरि गम्भीरं प्रभावं प्रक्षिपन्त्यो दृष्टा भवन्ति। श्री श्रेष्ठिप्रवरेण स्वकीययाद्भुतप्रतिभया जीवन-स्यातिमहर्घभाण्डागारः सुलभीकृतोऽस्ति। अस्ति सा प्रतिभा बहुमुखी जातास्ति च सा अनेकविधेषु काव्याङ्गे सफला"। न केवलं स नाटकानि रचितवान् वृहदाकार-उपन्यासो यात्रापरकाश्च तिस्रः कृतयोऽपि तेन कृताः सन्ति। सर्वत्र तेषु तदीयायाः प्रतिभायाः प्रेक्षावत्तायाश्च मनोज्ञता वीक्षिता भवति। अनया साहित्यिकतया सः सहृदयो राजनीतिज्ञोऽक्रियत; राजनीत्याश्च जीवनेन स यथार्थवादी साहित्यिको व्यधीयत।

स्वातन्त्र्येऽधिगते सति श्री गोविन्ददासो हिन्द्याः गोरक्षायाश्च क्षेत्रे परामेव प्रसिद्धि गतः। हिन्दी साहित्यस्य सेवकत्वेन स हिन्दी राष्ट्रभाषापदे प्रतिष्ठापयितुं यत् कार्यं गरीयो विहितवान् तदर्थं हिन्दीजगत् सर्वदैव तस्य कृतज्ञं सत् सन्तिष्ठेत। स गोरक्षापक्षं परमवलपूर्वकं परिपुष्णाति स्म; स तं पक्षं न्याय्यं मन्यमानो राष्ट्रिय दृष्ट्या तस्यौचित्यमात्ययिकत्वञ्चावागच्छत्। अतः सः पक्षोऽभूत् तस्य कृते अपरिहार्य्य एव।

श्री गोविन्ददासः संस्कृतसाहित्यस्यापि व्युत्पन्नो विद्वानवर्तत। तन्मतेन स न पूर्णो भारतीयो भवितु मर्हति यो नास्ति संस्कृतवित्।

राष्ट्रपती राजेन्द्रप्रसादः श्री गोविन्ददासस्य हीरकजयन्त्यवसरे, यदा तस्य सेवाया मभिनन्दन ग्रन्थोऽर्पितोऽभवत् प्राह—"श्रेष्ठिनां श्रेष्ठेन श्रीगोविन्ददासेन राष्ट्र-सेवार्थं यस्त्यागः कृतोऽस्ति तत्र सर्वेऽपि जनाः सन्ति सम्यगभिज्ञाः। अद्यतनादनेहसः प्राक्, यस्यानेहसः सम्प्रति षट्त्रिंशत् समा व्यतीता स्तस्मिन् काले म० गान्धिनोऽसह-योगान्दोलने तद्विधसमृद्धिसम्पन्नपरिवारजातस्य जनस्य प्रवर्तनं स्वसमग्र सम्पदां किञ्च समृद्धीनां पूर्णाहुतित्वाय कल्पनमसम्भवं मतमभूत्। तत्कार्यन्तु तदानीं तं जनं तस्यां-ग्लशासनस्य कोप पात्रं कर्तुं पर्याप्तमभवद् यद्धि तदा सम्पूर्णा मपि सत्तामभिव्याप्य विभ्राजते स्म। स्वातन्त्र्यायोधने श्री श्रेष्ठिना नितरां निष्ठया तत्परतया च भागो गृहीतः। स न कदापि स्वमार्गादस्खलत्। स यदपि कार्यं कर्तुं प्रावर्तत तावत् तत्कार्यं नात्यजत् यावत् तत् पूर्तिं न प्रापद्यत। स देशस्य बहुलेषु रचनात्मकेषु कार्येषु वपुषा मनसा सम्पदा चाञ्जसा भागं पर्यग्रहीत् तेषु मुख्ये स्तः गोसेवा, भूदानयज्ञश्च। हिन्द्यर्थं ( हिन्दी राष्ट्रभाषापदे आसीनां कर्तुम् ) तेन यत् कृतं तदितिहासे अमरं भवद् विराजेत................"।

अस्ति सोऽस्मिन् काले ख्यातिशिखरासीनः। तादृशं दीर्घतरं सार्वजनिकं जीवन मतिवाह्यामरलोकं गतस्यापि साम्प्रतमपि तस्य ख्यात्यां लोकप्रियतायाञ्च न्यूनता न दृश्यते। तस्य कार्याणि कृतयश्च तदीयाः शश्वत् तं स्मारयितु मलम्।

(अ) नो सद्मनः श्री र्न हि कापि बाधा,
चान्याक्षमाऽभूत् सुधियं निरोद्धुं।
गोविन्ददासं निजदेशभक्तं,
सेवासु राष्ट्रस्य वदान्यवंद्यम्॥

(आ) संसाधितं तेन कठोर साध्यम्
आराधकेन प्रिय भारतस्य
हिन्द्या स्तपस्त्याग सभुज्ज्वलेन
साहित्यकार प्रथितेन चोर्व्याम्॥



# लाला लाजपतरायः

एतस्यां जगत्यां प्रत्यहं लक्षशो जनाः समुत्पद्यन्ते विलीयन्तेच कालार्णवे जलबुद्बुद्वत् परं तस्यैव जनस्य जननं निधनञ्च प्रशंसनीयं यस्य जनननिधनाभ्यां प्रसुप्त राष्ट्रं प्रवुध्यते। माननीयः श्री लाला लाजपतरायो जीवनस्य तद् वैशिष्टयं परिगृह्य संसारेऽजीवद् यल् लक्ष्यीकृत्य कश्चिन् कवि रगायद् एवम्—

यस्योद्भवेन हि भवे भवति स्वदेशः
उत्थानगौरवमहीध्रशिरवाधिरूढ
स्तस्यैव जन्म भुवि धन्यतमं च गेयं
सञ्जायते च यशसा नितरां वलंक्षम्॥

लोकमान्यबालगङ्गाधरतिलक-मदनमोहनमालवीय-गोपालकृष्ण-मोतीलाल नेहरू-योगिराजारविन्दघोष-महात्मगान्धिप्रभृतयो ये हि भारतमातुः पारतन्त्र्यान्दुकं भङ्क्तुमेकोनविंशस्य शतकस्योत्तरार्द्धे प्रादुर्वभूवुस्तेषामन्यतमोऽभवद् विभ्राजिष्णुः पुरुषर्षभो लाजपतरायः।

सतां वन्दनीयो लाजपतरायः पञ्चनदेषु नवजागरणस्याऽऽधारशिलां प्रातिष्ठिपत्। तद्दृष्टे व्यापकत्वात्, तद्हृदयस्य वदान्यत्वात्, तद्धियोऽवदातत्वाच्च पञ्चनदप्रदेशस्य नैवंविधमेकमपि क्षेत्रमासीद् यन्नाभ्युदयं प्रापद्यत। समेषामपि क्षेत्राणामुत्थानस्य मूले स एव विराजमानः समलक्ष्यत। शिक्षा-समाज-राजनीति-धर्मार्थादिकानि निखिलान्यपि राष्ट्रस्याङ्गानि सर्वाङ्गीणभावेन परिपोषयितु मसौ भृश मीहाञ्चक्रे। तत्तारुण्यांकुरोन्मेषानेहस्येव महर्षे र्दयानन्दस्य यो हि महीयान् प्रभावस्तदुपरि न्यपप्तत् स तं देशसेवार्थ मामन्त्रयाञ्चकार। स्वकीये यवीयस्येव वयसि यद् व्रतं मातृभूमिसेवाविषयकं पर्यग्रहीन्नैजजीवनावसानं यावत् तदसौ सम्यक् पर्यपालयत्।

आदरणीये श्री लाजपतराये मानवतापरकं प्रेम समुदं समुन्मीलदवालोक्यत। तस्मात् सः स्वजीवनस्य वसन्त समयादेव अनाथां स्त्रातु मनाथालयान्, माणवकान् विनेतुं शिक्षणालयान्, ईतिभ्यो जनता मुद्धर्तुं साहाय्य प्रदाः संस्थाश्च समुद्घाटयन् अनवरतं समवाप्यत। तदीयं मनो दयाया महान् सागर आसीदत स्तस्य सम्पदः शश्वद् दीनार्तिप्रशमनायैव प्रयुक्ता अभूवन्। एतादृशानेव जनान् शरव्यीकृत्य वस्तुतः कालिदास आह—

'आपन्नार्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्'

पञ्चापप्रदेशे स्वातन्त्र्यार्थ मान्दोलनं लाजपतरायमहाभागस्यैव नेतृत्वे प्राक्रमत। असकृत् सः स्वदेशस्य कृते असहनीयाः कारायातनाः असहत। असंशयं हि स आंग्ल-साम्राज्यम्प्रति शिरोवेदनेव भूत्वा समतिष्ठत। तदीयान्निर्भीकात् कर्मठाज्जीवनादांग्ल-जाते रनिशं मानस मेजमान मेव लोकेन व्यालोक्यत। माण्डले कारावासं नीयमानोऽसौ यं विचार मुदगारीत् कस्य न सचेतसि स राष्ट्रभक्तिभागीरथीं सञ्चारयति—'आयान्तु विपदो या अपि आयान्ति, वीरतापूर्वकं तासु निर्भीकभावेन योत्स्यामहे'। वस्तुतः, मानवमानसे देशप्रेमरसाप्लाविते सञ्जाते तदीयानि साम्प्रदायिकता-जातिवादिता-परिवार-बन्धनव्यक्तिगतस्वार्थादिकानि सर्वाण्यपि क्षुद्राणि नियन्त्रणानि छिद्यन्ते युगपत्। वङ्गविच्छेदऽऽपद्घनघटा यदा भारतीयं नभ आवृणोत् तदा सोऽपि तद्विरोधाय रणा-जिरेऽवातरत्। तदानीं सः सक्रियं भाग मादाय यत् स्पष्टवादित्वं, गम्भीरत्वं, भावकुत्व-ञ्चादीदृशत् तद् राष्ट्रेतिहासे नवीनैव प्रतिपत्तिः। कृषीवलाना मान्दोलनं तदीये महो-ज्ज्वले जीवने नूतनैव घटनाऽघटत।

क्षेत्राजीवानामान्दोलने तं विश्रुतं नेतार मवाप्य आंग्लशासनस्य स्वान्तं तथैवा-धुनुत यथा सप्तपञ्चाशदधिकाष्टादशशततमेशवीयाब्दे तदेजाञ्चक्रे। पञ्चनदाख्ये प्रदेशे चेत् तृणमपि किञ्चित् पर्यस्पन्दत तदा तत्र आंग्ला लाजपतरायस्यैव मस्तिष्कं प्रैक्षिषत। विंशत्युत्तरैकैकोनविंशतिशततमेशवीयवर्षे पञ्चनदेषु यदा आंग्लशासनेन भारतमानसमेदिनीधरभेदनपटीयान्नशनिरक्षिप्यत तदायं पञ्चाम्बुनरकेसरी देशान्तर-मध्यतिष्ठत्। स तत एव स्वदेशबन्धून् समदिशत्—

'जहीत कापुंस्त्वम्। अस्ति तत् सकलानर्थबीजम्। शृणुत आत्मनः शब्दम्। मा स्म भौतिक्यां लोलुपतायां निपत्याऽऽत्मानं हिंसिष्ट। युष्माकं सविधे नात्मानमालोक्य नितरामिदानीं दूये।'

सः सिंहो यदा स्व मातृमेदिनीं प्रतिनिवृत्तस्तदांग्लेषु निर्भीकाणि पदानि प्रयु-ञ्जानो जगर्ज एवम्—

'पच्यते कृशरः; परं सत्स्वस्मासु न तमभ्यवहर्तुं यूयं प्रभविष्यथ। न सुखेन स्थास्यामो न च यूय मेव ससुखं स्थातुं शक्ष्यथ।'

भरतभूमातुः प्रियः सुतो लाजपतराय आसीत् स्वातन्त्र्यप्रियः। तदीयेषु विचारेषु कार्येषु च क्वचिदपि अनुदारता आविलता च न मनागपि वरीवर्ति स्म। सः स्वातन्त्र्य समराजिरे श्रद्धया नेतृप्राग्रहरं महात्मानं गान्धिनमनुययौ परं न तमोलिप्सया श्रद्धया।

तत्कृताः सेवास्तं देशस्य कवीनप्यतितरा मार्वाजितवत्यः । विद्वद्वरेण्यो भारद्वाजस्त-मित्थं स्तवीति शिवप्रसादः—

भीमभूमिकम्पितेषु कालजालचम्पिते —
ष्वकाल-बल-झम्पितेषु लोकसेवनेऽग्ररी
जाल्मजन-जल्पितेषु कोटिकूटकल्पितेषु
वादिवाद गल्भितेषु वाग्भटेष्वनादरी
सङ्कटेषु विव्यथे न, वेपथौ च पप्रथे न,
सिष्विदे धनोष्मणा न सत्यपालनाऽऽदरी
मातृभूमिसेवनाय, हिन्दुस्वत्वरक्षणाय
संचिकाय कीर्तिमसौ पञ्चसिन्धुकेसरी ॥

निश्चप्रचतया श्री भारतभक्तस्य लालालाजपतरायस्य जीवन मात्मसमर्पणस्य जीवन मवर्तत; न तदीये त्यागे दम्भस्य लवोऽप्यविद्यत । त्यागमयं जीवनं वोढुं न केनापि सः प्रेरितोऽभूत्; तद्दिशि तदीया प्रकृतिरेव तमुन्मुखीचकार । तस्य पञ्चचत्वारिंशत् समाः अजस्रं स्वराष्ट्रोपासनायामेव व्यत्यगुः । देश-सेवायामेव सः स्वानसूनप्यजुहोत् । वर्तमानं भारतं यदा तच्छताब्द्युत्सवावसरे तं हुतात्मानं वीरनायकम्प्रति स्वीयं भावभावित मञ्जलि मार्पयत् तदा माननीयः श्रीरक्षामन्त्री यशवन्तराय चह्वाणस्त मधिकृत्य 'राष्ट्रनिर्मातु र्लालालाजपतरायस्य निर्भीकोत्कटदेशानुरागपरकात् जीवनादस्माभिः प्रेरणा ग्राह्या....' इत्येतदाद्युद्गारं; पुनर्वास-मन्त्री माननीयः श्री महावीर त्यागी 'तत्प्रेरणयाऽहं राष्ट्रियमहासभायां प्राविशम्, श्री पुरुषप्रवरो लाजपतरायः स्वशोणितदो देशोपर्युन्मदिष्णु रासीत् न स दुग्धपायी मजनू रासीत्' इत्येतन्मतं, माननीयः सत्यनारायणसिन्हा 'लाला महोदयो वस्तुतस्त्वासीत् केसरी । स आसील्लेखकः; वक्तापि स आसीत्, किं नासीत् सः ? तद्भाषणमाकर्ण्य श्रोता देशभक्त्युन्मादेनोन्मत्तो भूत्वा देशाऽऽराधनायामात्मानं न्ययूयुजत्' इतीमान् विचारानभिव्याञ्जिषुः ।

अस्मद्देशस्य स्वर्गीयः प्रधानमन्त्री लालबहादुरशास्त्री तममरयशस्कमधिकृत्य यदाह तच्छ्रूयताम्—

'एकोनविंश्याः शताब्द्यां पश्चिमे भागे देशेऽस्मिन् नवजागरणस्य तरङ्ग उद्वेल्लितः । आरभमाणायामेव तु विंश्यां शताब्द्यां जागरणतरङ्गोऽयं झंझा-भावे हि परिणतः । अस्याः परिणते निमित्तभूतेषु महापुरुषेषु लालालाजपतरायस्य नाम नूनं प्रथमस्यां पंक्तौ विराजते । वस्तुतस्तु राष्ट्रियेऽस्मिन् नवजागरणे तत्क्षेत्रमेव तावद्

दुर्लभं यत्र लाला महाभागोऽस्य मग्रणीभावेन नाभिभाति। धार्मिकस्य नवजागरणस्य वा क्षेत्रम् अस्तु, सामाजिकसूद्धारस्य पुनरुत्थानस्य वा शिक्षाया वा तद् भवतु, देश-भक्ते राष्ट्रियताया वाऽस्तु लाजपतरायो न क्वचिदपि पश्चात्पदो दृग्गोचरो भवति। स नूनं तेषु चतुर्षु राष्ट्रियमहानेतृष्वन्यतमो येऽस्माकं राष्ट्रस्य, अस्माकं समाजस्य, अस्माकं जातेश्च चेतनया सह तथानामैकीभावं गता यथा ते राष्ट्रस्य कस्मिन्नप्यङ्गे सञ्जातया वेदनयाऽस्पृष्टाः स्थातुं नापारयन्निति।

ला० लाजपतरायो वाणरसवसुचन्द्राब्दे जनु र्जग्राह, १९२८ तमख्रिष्टाब्दे नव-म्वरमासे सप्तदशदिनाङ्के च स भरतभूभानुरस्तमुपेतः। माताऽऽसीत् तदीया साध्वी गुलाबदेवी पिता च धन्यो राधाकृष्णः पञ्चावप्रदेशान्तर्गतढुडिकाख्यग्रामोजन्मस्थल-ञ्च तस्य।

प्रो० श्री बहादुरचन्दश्चापोत्कट :—

मिथ्याजात्यभिमानघूर्णितशिराः क्लिश्नाति दीनं धनी,<br>
क्लिष्टो दीनजनः कथं कथमपि प्राणान् बिभर्ति क्षितौ।<br>
इत्यालोक्य नितान्तदुःखितमनाः पञ्चापपञ्चाननो<br>
दीनोद्धारकृते महान्तमकरोत् कं कं प्रयासं न सः॥

इत्येतदादिशब्दैः

श्री प्रो० श्यामदेवः—

लाला लाजपतः कृतार्थमकरोद् यं जन्मना सन्मनाः<br>
ग्रामो नाऽऽत्मनि माति गीतगरिमाऽरववर्वेण गर्वेण सः।<br>
बाल्ये तेन पवित्रितं मधुमयै र्यस्याङ्गणं रिङ्गणैः<br>
स्पर्धालुं क्वचिदप्यहो न लभते तत् सुन्दरं मन्दिरम्॥

इत्येतदादिवाक्यैः

विद्वान् श्रीसाधुरामः—

येनाऽऽलोक्य विदेश-शासन गतं देशं निजं सुप्रियं,<br>
सोढं येन च भूरि कष्टमनिशं रुद्धेन कारागृहे।<br>
त्यक्तो येन च देह आङ्गलकृतै र्यष्टिप्रहारै र्दृढैः<br>
सश्रद्धं प्रणताः स्म तं वयममुं देशस्य लज्जापतिम्॥

इत्येतेन श्लोकेन

पञ्चाम्बु सिंहस्य पराक्रमाब्धेः
को नाम वीरस्य गुणान् न वेत्ति ?
ते सर्वथा वैरिगजप्रमाथे
द्युतिं वहन्तोऽकुंशतां व्रजन्ति ॥

इत्येतदादिश्लोकैः आचार्य ब्रह्मानन्द शुक्लः—

लोकस्य हितकर्तारः स्वात्मबुद्धयात्मदर्शिनः ।
लालासमा हुताऽऽत्मानः कियन्तः सन्ति भूतले ॥

इत्येतदादिपदैः श्री विश्वबन्धुः—

तं महान्तमात्मान मुपश्लोकयन्तः श्रूयन्ते ।
प्रार्थनास्ति भगवच्चरणयो र्लालालाजपतराय इव वयमपि भवेम देशभक्ताः ।



# मोतीलाल नेहरू

देशस्य स्वातन्त्र्याय यः स्वकीया मतुला सम्पदं, स्पृहणीयं वैभवं सकलान्यपि भौतिकानि सुखानि न्यक्कृत्य नैज मेकमात्रमपि गुणवन्तं विद्यावन्तं तनयं, यस्मिन् स्वराष्ट्रस्य पारतन्त्र्यानलं शमयितुं परमसान्द्रा घनघटा वितन्वानाऽऽसीत्, स्वकीय भारतमातुः सेवायां सहर्षं संलग्नीकृत्य स्वयमपि भारत-परतन्त्रताश्रृङ्खलां छेतुं महात्मगान्धिप्रवर्तित स्वाधीनतान्दोलनाभिधसम्परायेऽवातरत् स त्यागमूर्तिः पण्डित मोतीलाल नेहरू आसीत् ।

पं० मोतीलाल नेहरू एकषष्ठ्यधिकाष्टदशशततमेशवीयवर्षे मई मासे षष्ठे दिनाङ्के, आगरा नगरे काश्मीरज कौल ब्राह्मणकुले जनुरग्रहीत् । तस्य पिता पण्डित गङ्गाधर नेहरू मुगल शासनानेहसि दिल्ल्यां नगरपाल आसीत् । सप्तपञ्चाशदधिका. ष्टादश शततमेशवीयाब्दे प्रथम स्वातन्त्र्याहवे सपरिवार सः विहाय दिल्लीं आगरा मागन्तु मनुद्यत । सः, तदीयाः देशभक्तिभावविभाविताः पूर्वजाश्च यदा दिल्ली मध्यवसंस्तदा आंग्लास्तेषु समशेरत । अतस्ते तदावास माक्राम्यन् । मुगलवंशस्य राजकुमाराश्चेन्न समर्पितीकृताः स्युस्तदा नेहरू परिवारः कीनाशनिकेतनातिथिः कृतो भवेदित्येतामांगलास्तर्जनां प्रदाय तत्परिवार मभाययन् । परं न नेहरूपरिवारो मन ागप्यविभेत् । जीवनरक्षां विधायैव देशहितकार्याणि भवितुं शक्यानीति विमृश्या- त्मान मांग्लारातिभ्यः संररक्ष सः । दिल्ली परित्यागस्य वेलायां तस्मिन् विविधा बहुलाश्च विपदो निपातयामासुररयः; परं धैर्येण शौर्य्येण साहसेन च सः ( नेहरू परिवारः ) ताः सर्वा अपि सेहे । दिल्लीं परित्यज्य गच्छन्त स्तदीयाः पारिवारिकाः सदस्या भगवदनुकम्पयैवांग्लानीकिनीतोऽसून् पातु मशकन् । तत्परिवारः सङ्कटादात्मान मुन्मोचयितु मपि नावसरं यदा ग्रहीतु मार्हत् तदैव सः ( पं० गङ्गाधर नेहरू ) शरीरं तत्याज । तस्योपरतत्वात् परिवारस्य विपद्दारुणता बलमवाप ।

पितु रुपरामात् त्रिमासानन्तरं पं० मोतीलाल नेहरू समुदपद्यत । तस्य बाल्यं ज्येष्ठभ्रातुः श्री नन्दलाल नेहरोः संरक्षतायां व्यत्यगात् । सूनोः ( मोतीलाल नेहरोः ) कनिष्ठतमत्वात् माता तस्मिन्नतितरा मस्निह्यत् । मोतीलाल नेहरू प्रार- म्भादेब स्वज्येष्ठभ्रातरि भक्तिं निदधौ । स मातुर्भ्रातुश्चोभयोरपि वात्सल्यामृतं पिवन् ववृधे ।

आगरानगरस्य साँस्कृतिकं जीवनं जागृतिमयमासीत् । मोतीलाल नेहरू वाल्या देव सांस्कृतिकेषु कार्यकलापेषु सोत्साहं भाग मगृह्णात् । वस्तुतोऽसौ सांस्कृतिकानां समारोहाणां नेता बभूव तेषु तेष्वायोजनेषु तन्नेतृत्वं सर्वेषामपि सहयोगिषु मुत्साहं जनयतिस्म, कार्यपाटवञ्च । सः कार्यकर्तृषु परां प्रियता माप ।

मोतीलाल नेहरू शिक्षार्जन समये कालेजे उल्लेखनीयं जीवन मजीगमत् । तत्रत्येषु क्रियाकलापेषु तस्य नामाग्रगण्यतांमगमत् । स विविधासु क्रीडास्वभिरुचि गृह्णंस्तत्र प्रशंसनीयां पटुतामदीदृशत् । प्रतीच्यवेषभूषादिकं तस्मिन् प्रीतिमजीजनत् । कालेजीय शिक्षा मधिगम्य सः स्वकीयं भाविजीवनं स्थिरीकर्तुं मचीकमत । अस्मिन् विषये तदीयो यशस्विनां मूर्धन्यः सुतः पं० जवाहर लाल नेहरू स्वरचिताया मात्मकथायां लिखति—

"स जीवने स्थिरीभवितुं भृशमभ्यलषत; कमपि न कमपि व्यवसायं सोऽजिघृक्षत् । सःप्रतिभोन्मेषावसरप्रदं वाक्कीलत्वं व्यवसायत्वेन चिचाय । तस्य पुरस्ताद्भ्रातापि निदर्शनत्वेन समतिष्ठत । स उच्चाधिकरणस्य ( हाईकोर्टस्य ) प्राड्विवाक्ता परीक्षाया मन्वियाय, तस्यां सर्वश्रेष्ठस्थानमेव न, स्वर्णपदकञ्चलब्धवान् । सः कृत चयनस्वप्रियव्यवसाये साफल्य मासादयितुं दृढं सङ्कल्पञ्चकार ।" गुणवसुवसु विधुवर्षे कानपुरे स वाक्कीलत्व मारेभे । वाक्कीलत्वे च प्रवृत्तोऽपि न क्रीडासु न च मनोरञ्जनेषु स्वां रूचि लधिमानं निनाय । मल्लताया मपि सः स्वानुरागं पर्यपुष्णात् ।

१८८६ तमेशवीयवर्षे मोतीलाल नेहरू इलाहाबाद नगरे उच्चाधिकरणे प्राड्विवाक्तां प्रारेभे परमागत एव सति तत्र, तस्य ज्येष्ठो भ्राता पं० नन्दलाल नेहरू पञ्चत्व मवाप । तस्य दिवङ्गतत्वं तदुपरि महान् वज्रप्रहार आसीत् । स तं पितर मिव मेने तद्देहावसानात् समग्रस्यापि कुटुम्बस्य रक्षणभारस्तस्योपर्यापपात । धैर्य्यं धरन् सः कर्त्तव्यपथाधिरूढो वभूव ।

यदाहि मोतीलाल नेहरो र्जीवनं लोके प्राड्विवाक्ताऽऽलोकालोकितं भवद् विवभौ तदा भारतीय राष्ट्रिय महासभा (इण्डियन नेशनल कांग्रेसः) आंग्लभाषायां भाषण तेन :चांग्लभाषाभाषिणोजनसमवायस्य मनसः परिप्रीणनमेव नैजराष्ट्रसेवाममंस्त । यदा तदा मोतीलाल नेहरू तां सम्भावयाम्वभूव परं न सक्रिय भागमग्रहीत् । वस्तुतः स्ववाक्कीलत्वकार्यादवकाश मल्पमपि न लेभे । यथा यथा तदीयं वाक्कीलत्वं ववृधे तथा तथा तस्मिन् स्वाभिमानभावनाऽऽत्म निर्भरता च पर्यपुष्यताम् । कठिनतासु योद्धुमपि तद्भावना भृशमेधाञ्चक्रे ।

तदानीं मोतीलाल नेहरो विचारा राष्ट्रियास्त्वासन् परमांग्लेषु तत्पद्धत्याञ्च प्रशंसाधियंन्यबध्नात् । देशवासिनां विनिपात स्तज्जनिता दुरवस्था च समुचितैवेत्येष स्तद्विचार आसीत् । वचस्येव ये राजनीतिज्ञास्तेषु सोऽजुगुप्सत । जीवने सफलताया अनधिगतत्वात् केचन राजनीतिक्षेत्रे प्रविष्टा सन्तीत्येषा धारणाऽऽसीत् तस्य तेष्वहःसु ।

प्राड्विवाक्त्वे मोतीलाल नेहरू राजजीवनं व्यत्यगमयत् । प्रतिमासं तस्याय आसीत् परः सहस्ररूप्यकः । तस्य पारिवारिकं जीवनं प्रभूतसुखसमृद्धि मुपभुञ्जान मदृश्यत । सायमनुदिवसं मित्राणि तस्य सविधे उपस्थितान्यवालोक्यन्त । अह्न एकर-सतां क्लमञ्चपनेतुं सः सुहृत्सु मनः कृत्स्नतयारीरमत् । तत्सन्निधौ स उच्चै र्हसन्न-श्रूयत । प्रयोगे स स्वाट्टहासे ख्याति मगमत् । शक्तेः साहसस्य उत्साहस्य वैदग्ध्यस्य प्रतिभायाश्चासीत् सः भव्या प्रतिमा । कदापि स तिग्मतामपि जगाम । तत्संरम्भात् सदन मातङ्किततां गच्छदपि कदापि समलभ्यत । परं तस्य हृदयमासीदुदात्तवदातं शुद्धौदार्यशक्तिसम्पन्नञ्च । आसीदसावात्मसंयमवान् । यथा यथा तदीयं वयोऽवर्द्धत तथा तथा तस्यात्मसंयमोऽपि वृद्धि मुपेयिवान् । तत्स्वभावमधिकृत्य लिखितानि कानिचन संस्मरणानि जवाहरलाल नेहरू प्रणीतात्मकथायां चकासति ।

पं० मोतीलाल नेहरू स्वसुते नितरामेव सिस्नेह । इङ्गलेण्डे यदा पं० जवाहरलाल नेहरू शिक्षार्जनाय न्यवात्सीत् तदा सः सन्ततं तस्मिन् ध्यानावस्थितः प्राप्यत । अर्थस्य तु पुष्कलताऽऽसी देवातस्तच्चिन्तात्ववाधत एव न तं स्वप्नेऽपि परं तत्कुशलताऽवश्यमेव तच्चिन्ताया विषय आसीत् । एकदा जवाहरलालः 'कार' नाम यानं क्रेतु मियेष, मोतीलालः परं दुर्घटनाशङ्कया न तस्य तामाकांक्षा तदान्वमोद-यत् । सोऽपि पितु रादेशं शिरोधार्य मकार्षीत् ।

खव्योमग्रहेन्दुखैस्तवर्षे यदा पं० मोतीलाल नेहरू यूरोपभ्रमणं विधाय स्व-देशं न्यवर्तत तदा काश्मीरीय विप्रसमाजे प्रवल प्रतिक्रियोदपद्यत परं स ईषदपि न चिन्तायां निपपात । न च तदर्थं सः कामपि शुद्धतामेवानुमेनेः । तद्दृष्ट्या तत्सर्वं रूढ़ि-वादात् परं न किमप्यन्यदासीत् ।

भारतस्य तत्कालवर्तिनी राजनीतिकदशा पं० मोतीलाल नेहरू मतितरां सक्रियां राजनीतिम्प्रति आचकर्ष । आदौ स उदारतावादिषु अन्वियाय । ऋष्याकाश-ग्रहशशीशवीय वर्षे सूरतं यदा राष्ट्रिय महासभां सम्भावयितुं प्रपेदे तदा स उग्र-वादिनो भृशमालोचयाञ्चकार । स तन्नीति मनादीनवां नापश्यत् । उग्रवादिविरोधी सन्नपि स लोकमान्य तिलके प्रशंसाशील आसीत् ।

विधिविधानयोः पृष्ठे स्थितोऽसौ तद्विधोच्चतरप्राड्विवाको वैधानिक मेवाध्वानं श्रेयस्करं मेने। क्रियाविहीनाना मुग्रवादिता व्यर्थैवेत्येष तस्य दृढीयान् विचार आसीत्। स्वादेशिकतायां वहिष्कारान्दोलने च स लक्ष्योन्मुखत्वं न ददर्श। तत्विधस्यान्दोलनस्य धार्मिकराष्ट्रवादपरतैव तस्य प्रतिभाति स्म। भारते प्राचीनकालावतारणं न सोऽन्वमंस्त।

लोकमान्य तिलकस्य श्रीमत्या एनीबेसेण्ट देव्याश्च कारागहे निपातनं तं चिन्ताऽऽक्रान्तं चकार। तदानीं जातास्तास्ता अन्याश्च घटनास्तमुदारवादितात उग्रवादितामनैषिषुः। हिन्दूमुसलिम समस्या समाधान मसौ तदा प्रमुख ममन्यत। १६१६ तमेशवीयाब्दे लखनऊ नगरे राष्ट्रियमहासभाधिवेशनावसरे यदा राष्ट्रियमहासभाया लीगस्य च मध्ये सन्धि रजायत तदा स भृशमप्रीयत १६१६ तमेशवीयवर्षे पाञ्चालेषु 'जलियाँवाला' स्थाने जाता हत्याकाण्ड विषयिणी दुर्घटना तदीये जीवने परिवर्तनमजीघटत्। तदा स याः सेवाः स्वदेशाय ददौ सन्ति ताः प्रशंसार्हाः। तत्सेवाः लक्ष्यीकृत्य केन्द्रीयविधानसभायां पं० मदनमोहन मालवीयस्य प्रकटीकृता विचारास्तस्य (मोतीलाल नेहरोः) सेवानां त्यागस्य च प्रकर्षं ज्ञापयन्ति। भारतं तदा तत्सेवानां मूल्य मानङ्क्ष। १६१६ तमेशवीय वर्षे अमृतसरे राष्ट्रियमहासभाधिवेशनस्य सभापतिपदे आसीनः कृतोऽभवत्। लो० तिलक स्तत्सभापतिपदासीनतां प्रशंसन्नब्रवीत्— "तत्सेवाः सन्त्येतावत्योऽधिका याः बौद्धिकस्य मानसिकस्य च मानयन्त्रस्य, (थर्मामीटरस्य) सामाजिकस्य राजनीतिकस्य च तापयन्त्रस्य (वैरोमीटरस्य) पारदी गतिः पं० मोतीलाल नेहरू मेव स्पृशति।

पं० मोतीलाल नेहरू तूर्णतया आंग्लसाम्राज्य परिपन्थी बभूव। तदीयादिव्या प्रतिभा, अद्भुतकार्याचरणविधिः, देदीप्यमानमस्तिष्कज्योतिः, महानध्यवसायः, विशिष्टा स्वाभिमानश्रीः उदात्ताश्च गुणास्तं महान्तं नेतारं विदधुः। न स राष्ट्रियाव मानना मसहत। एकविंशत्यधिकै कोनविंशतिशततमेशवीय वर्षे म० गान्धि सञ्चालितसत्याग्रहान्दोलने स्वात्मजेन समं भागं परिग्रह्णन् आंग्लशासनेन न्यगृह्यत। तस्य निग्रहणं लक्षशो जनान् स्वतन्त्रता जन्यार्थं प्रेरयामास।

आन्दोलन प्रभञ्जन प्रचण्डप्रवाहस्तत्समयवर्तिनं देश पालं (वायसरायम्) भृश मधूनयत्। सोऽप्यान्दोलनस्य सफलता मङ्गीचकार। तस्मिन् आन्दोलनानेहसि जातायां चोराचोरीदुर्घटनायां महात्मा गान्धी तदान्दोलनमरूरुधत्। राष्ट्रे निराशावातताऱ। पं० मोतीलाल नेहरू स्वसहयोगि देशबन्धुचित्तरञ्जन दासस्य सहयोगं प्राप्य स्वराज्य पार्टीं स्थापयामास। तल्लक्ष्यमासीद् विधानमण्डलेषु अन्वयनम्। विधानसभार्थं तदवचयनं जातम्। जातश्च स विरोधिवर्गस्य नेता। सप्तवर्षाणि विधानसभायां तस्याक्षुण्णः प्रभावः समलक्ष्यत। असकृत् स आंग्लशासनमभिभूतं विदधौ।

स्वकीयया चतुरस्रया दूरदर्शितया च सः स्ववर्गं भृशमुपचकार। वस्तुतोदेशस्य स्वातन्त्र्य संग्रांमेतिहासे तदीयं विरोधि वर्गस्य नायकत्वं प्रदीप्यमानं भवद् राजेत। इङ्गलेण्डे यादृशी सैन्यप्रशिक्षण संस्था विद्यते तादृशीहापि इष्यते इत्येतस्य विचारस्य सः स्वकीयया वाक् चातुर्या प्रतिभया च महान्तं विरोधं विधाय तत्र सफलतां प्राप। चीन देशम्प्रति सम्प्रेषितेषु भारतीयेषु सैनिकेषु आरोपित मारोपञ्च न्यायप्रियः स न्याय्यया धिया निरास्थत्। विधानसभायामसकृद् वाग्युद्धानि प्रावर्तन्त, आंग्लशासका स्तदा तस्य वाग् विदग्धताया अमोघत्वं स्वीकुर्वन्तोऽभैषुः। न भारतं कदापि तस्य धीचातुरीं विद्वत्ताञ्च विस्मर्तुं प्रभवेत्। को न देशस्तादृशि योद्धरि गौरववन्तमात्मानं मन्येत। १६२७ तमेशवीयवर्षे मद्रास राष्ट्रिय सभा (कांग्रेस) सायमनमायोगं (कमीशनम्) वहिष्कर्तुं राष्ट्रमाजुहाव। सर्वनेतृपरामर्शेण देशस्य संविधानं प्रस्तुतीकर्तुं समितिर्गठिताऽभवत्। तदध्यक्षः स नियुक्तीकृतः तत्रापि सःसफलता मियाय। तदीयाः सेवाः पुना राष्ट्र मानङ्क। सः कालिकातायां राष्ट्रिय महासभायाः वार्षिकेऽधिवेशने सभापति पदमध्यास्त। तदा तस्य भव्यस्वागतमभूत्। तदा "औपनिवेशिकं स्वराज्यमिष्ट मजायत।

यदा १६२६ तमेशवीवर्षे लाहौरे जवाहरलाल नेहरो रध्यक्षतायां पूर्ण स्वराज्यप्रस्तावोऽपार्यत तदा पं० मोतोलाल नेहरू विधानसभाममुञ्चत्। देशार्थं च सः स्वकीय मानन्दभवनमर्पितवान्। निः संशयं भारतस्वातन्त्र्येतिहासे भवनमिदं पं० मोतीलाल नेहरोः अमरकीर्ति सर्वतो वितन्वद् विद्योतते।

व्योमगुणग्रह चन्द्रेशवीय वत्सरे पं० जवाहरलाल नेहरौ शासनेन काराग्रां क्षिप्ते सति पं० मोतीलाल नेहरू पुनः अध्यक्षताभारं वोढुं वाधितोऽभूत्। परं सोऽपि गच्छद्भिर्दिनैःपर्यगृह्यत। साम्प्रतं तत्स्वास्थ्यं निर्वलत्वात् कारागार कष्टसहनयोग्यं नासीत्। नैनीकारागृहे कोष्ठे सः परां पीडां सहते स्म। अस्वस्थताया गम्भीरत्वाद् क्षीणतरत्वाच्च सः कारालयादुन्मुक्तीकृतः। तत्समयवर्तिनी कारायातना तदन्तसमयं निनाय। स महान् देशभक्ताग्रणीः ६।२।१६३१ तमेशवीय दिनाङ्के स्वकीयं नश्वरं देहं हित्वा सर्वञ्च राष्ट्रं शोक समुद्रे निपात्य ब्रह्मणि व्यलीयत।

वुद्ध्यां वाचि च तर्कशक्तिलसिते वैदुष्यविद्योज्ज्वले
नार्हत् कर्तुं ममुष्य हन्त समतां देशान्तरे कोऽप्यपि
त्यागस्तस्य महानभून्मतिमतः श्लाध्याश्च सेवा भृशं
मोतीलाल सुधीप्रियो गुणनिधिः सः स्तूयते नेहरू॥



# जवाहरलाल नेहरू

वंद्यः स पुंसां त्रिदशाभिनन्द्यो विश्वैकसेवोपकृति क्रियाभिः ।
संसारसारत्वमुपैति यस्य परोपकाराभरणं शरीरम् ।।

मधुरिव नानारामानन्दकरः शरन्मेघ इव अवदातहृदयः, पारिजात इवाश्रितनन्दनः क्षीरोदमथनोद्यतमन्दर इव ( जय शब्दघोषणया ) मुखरितभुवनः, विष्णु रिव कमलादयितः, हिमालय इव जनितशिवः, चन्द्र इव क्षणदानन्दकरः, मदन इवोल्लासितरतिः, ईशान इव भूतिविभूषितः, समुद्र इवेन्दिरासम्भवः, विरञ्चिरिव प्रियहंसः, गोविन्द इव गोपालकः, राम इव आनन्दितप्रजोऽभूत् जवाहरलाल नेहरू भारतीयतरुणानां हृदयसम्राट् । स्वकीयैः पावनैश्चरितैः स भारतौकसामेवन, समेषामपि देशान्तरवासिना मन्तः करणेषु श्रद्धाभिरामं स्थान मवाप्तवान् । ऐहिकजीवन प्रियाण्यखिलविधान्यपि भौतिकानन्दवर्षीणि साधनानि सम्पदोऽतुला वैभवं च विबुधदुर्लभं निदधानोऽपि सः स्वकीयं जीवनं नैजस्य देशस्य पराधीनताया उत्सादनाय सर्वत्रापि संसारे ऐक्यं शान्तिं सौहृदञ्च प्रसारयितुं घोरेष्वपि परतन्त्रतोत्पादितेषु विविधेषु प्रचुरेषु च प्रत्यूहेषु असहनीयासु च विपत्सु समुद मुपाययुजत् । परकीयशासनापहृत जीवनयापनापेक्षितसामान्यतम परिच्छदानां पारतन्त्र्यकवलीकृत जीवनोत्थापननिपुण सकलसाधनानां दारिद्रयदानवनिशितरदनिकरसञ्चूर्णितशरीरमनोवुद्धि परिपोषकोपादानकलापानाम् अन्यायकठोरकरबालोच्छिन्नाधिकारशिरः समूहानां जनितालस्यकलह- वारूणीपानादिविविधदोषवृन्दानां कारितोत्कोच परिग्रहाभिलाषाणां पैशुन्योन्मुखीकृतचित्तानां परनिन्दाप्रवर्तितौत्सुक्याना मज्ञानान्धकूपनिपातितानां नानादुर्व्यसनकर्दमकदर्थितानां जनानां हृदयद्राविणीं दुरवस्थां प्रेक्ष्य सः सुखोपभोगान् पापानीवामंस्त । देशस्य परतन्त्रता रात्रिंदिवं तमतितरामदुनोत् । स तदुच्छेदनाय आत्मानं स्वातन्त्र्यायोधनयागे आहुतित्वाय अकल्पत । तस्मिन् नव एव वयसि स्वकीयस्य सुतस्य सर्वाङ्गसमुल्लसितेषु सांसारिकषु सर्वविधेषु समृद्धेषु सुखेषु विरतिं वीक्ष्य, देशसेवायै परतन्त्रताविनाशनाय च न्यक्कृतनिखिलवैभवं तादृश मुत्सर्गञ्च तदीय मवलोक्य माता स्वरूप रानी, पिता पण्डित मोतीलाल नेहरू पत्नी कमला, पुत्री च इन्दिरा परित्यक्तपुत्रकलत्रराज्यसुखं बुद्ध मिव तमेवानुगन्तुं प्राक्रमन्त । पिता राष्ट्रार्थं पुत्रमेव नान्वमंस्त नैजमतुलं वैभवं लक्ष्म्या आधारभूतं स्वकीय मानन्दभवनञ्च पर्यत्यजत् । एतावदेव न राष्ट्रस्यवरिवस्यायै स्वयं स्वमपि स्वातन्त्र्याहवाय समर्पयत् असूर्यम्पश्या माता स्वरूपरानी · देशार्थं कठोरमातपं तीक्ष्णं शैत्यं

वर्षाञ्च वेगवतीं सेहै, शिरीषमृद्वी कमला देशसेवामार्गे स्वभर्तारम्प्रति साहाय्यं प्रदातुं नैजं शरीरमपि उपेक्षते स्म तदपि सा सहर्ष मक्षिणोत्, वत्सा च तस्मिन् अल्पीयसि वयस्येवेन्दिरा स्वमातृभूमेः स्वतन्त्रतायै कष्टानि सोढुं समुदं समुद्यता समजायत। तदेवं सः सुनासीरशरासनमिव भारताम्बरे व्यद्युतत्। देशस्य परतन्त्रता-शृङ्खलायाश्छेदनार्थं तस्याह्वानं केसरिणो निशम्य समग्रमपि भारतजनवृन्द मभिनव-मनभिभवनीय मुत्साहं संश्रित्य, भयस्यापि हृदि भयमुत्पादयत् सुदृढं बलं परिगृह्य, अभिवन्दनीय मुत्कटं साहस मवलम्ब्य, राष्ट्रपरकं पावनं प्रेम चापरिमित मादाय, मातृभूमेश्चरणयोः स्वकीयानां प्राणानामपि कृते मोहं परित्यज्य स्वतन्त्रताहवे प्रसन्न-हृदयेनावातरत्।

कवीन्द्रो रवीन्द्रनाथः पण्डित जवाहरलाल मेव मुपाश्लोकयत्—

'जवाहरलाले कुसुमाकरो मूर्तिमान् भूत्वावतीर्णोऽस्ति। तत्रोल्लामोल्लसितोत्साहं तारुण्यमुत्तरलं भवदुच्छलति संघर्षाय तत्र विद्योततेऽतुलमनभिभाव्यं सत्साहसं; स्वतन्त्रताञ्च प्रति तत्र प्रस्फुरत्यदभ्रं पौरुषम्'।

विन्स्टन चर्चिलोऽस्तावीत् तमित्थम्—

'अनेन पुरुषसिंहेन मानवप्रकृतेः द्वौ गुरुतमौ दोषौ किङ्करीकृतौस्तः। न तस्मिन् वर्तते भयं न च तत्र विद्यते द्वेष एव'।

लिण्ड्नवी जान्सन स्तं महापुरुषमेव मभिनन्दितवान्—

'मानवाभीप्सितशमाधिगमनौत्सुक्य मौत्सुक्यं यादृशं प्राज्यतयाऽत्र विभ्राजते न तादृश मन्यस्मिन् नेतरि। जन्योन्मुक्तस्य संसारस्य निर्माणाय प्रयास पावन मारचय्य अनेन सर्वाङ्गीणतया मानवतायाः सेवा कृतास्ति'।

श्रीमहामहिमभूतपूर्व राष्ट्रपती राधाकृष्णंस्तस्मिन्नित्थं स्वकीयान् हृद्गतान् भावान् श्रद्धयाभिव्यानक्—

'वर्तमानस्य जगतः सर्वश्रेष्ठमानवो राजनीतिज्ञवृन्दवृन्दारकोऽविस्मरणीय-स्वातन्त्र्यसेवः पं० जवाहरलाल नेहरू आसीत् स्वाधीनतासमरस्य प्रख्यातः सेना नायकः। आधुनिकस्य भारतस्य निर्माणाय तत्समर्पिताः सेवाः सन्ति सर्वथैव निरुपमानाः। तदीयस्यादमनीयपुनीतपौरुषपेशलस्य जीवनस्य त्रिभुवनवन्दनीयस्य च तदीयस्य महनीयस्य कार्यस्य भव्यः प्रभावोऽस्मन्भानसिकालोकनिर्माणे, सामाजिके गठने, वौद्धिके च विकासे पर्याप्तभावेन परिस्फुरन् प्रतिलक्ष्यते। तत्क्रियाशीलव्यापक-नेतृत्वमन्तरेण भारतीयस्य स्वरूपस्यावगमनं नास्माकं सुकरम्। अस्मद्देशस्येतिहासे सञ्जातोऽस्ति साम्प्रतं तदुपरामे सति युगस्यैकस्योपसंहारः।'

जवाहरलाल नेहरू अभूत् परमार्थतो महान् मानवः। तस्मिन् दृष्टिः सूक्ष्मग्राहिणी, उद्भावना प्रत्यग्रतोपस्कृता, वृत्तयश्च उदात्ता व्यराजन्त । निराशम्प्रति तस्य मानसं गम्भीरां सहानुभूतिं पर्यपुष्णात् । स्वतन्त्रतायाः प्रत्यूषादेव गुणिनां प्राग्रहरो मेधाविनां धुरीणः परोक्ष सुहृदस्मदीयस्य राष्ट्रस्य प्रधानमन्त्रिपदमध्यास्ते स्म । नैजदैर्घकालिके प्रधानमन्त्रित्वे सः प्रगतिशीलवैज्ञानिकाभिमतशक्तिसम्पन्नं साम्प्रदायिकताशून्यं स्वदेशं विधाय तमुन्नमयितुं प्रायस्यत् । वदान्यतावदातेषु कतिपयेषु मूलभूतसिद्धान्तेषु तस्य द्रढीयसी आस्था अस्मदीयस्य जीवनस्य विचारधाराया निदेशिका समजायत । तदुदारप्रवृत्तिमतां नवगतिविधिजुषाममितानां विवेकाम्भोधिगम्भीर तलावगाहन पराणामाश्चर्याणामबवोधनं नास्माकं कृतेऽतितरां कठिनम् । चेद्वयं स्वातन्त्र्ये गणतन्त्रे च तदीया माहृता मास्थां ध्यानेनैक्षिष्यामहि तदा तासामुपयुक्तता मवगन्तु मवश्य मशक्ष्यामहि । विद्यमानाः सामाजिर्काः राजनीतिकुशलाश्च संस्थाः स विनियुज्य तासु नूतनां भावना मभिनवां च प्रौढां शक्तिं समचीचरत् । सः स्वकीयैः सर्वजनीनैः सम्भाषणैश्चिरपोषितमूल्यानि जनता मवगमयितु मचेष्टत । स मानवजीवनमुत्थापयितुं महान्तं संघर्षञ्चकार। सः स्वेनोदग्रेण स्वरेण पञ्चशीलसिद्धान्तेषु श्रद्धामगाधां प्रतिष्ठापयितुं भारतीया माधुनिकीं सन्तति मनूनुदत् । आदर्शवत्तैवनालम् । तत्प्राप्त्यर्थं प्रयासाचरण मप्यपेक्ष्यते । परिस्थिते र्मूलतत्वमस्ति समयः । नेहरू तत्र प्रभूतं ध्यानं निदधौ । हन्त भवति हि स महान् क्रूरोऽत एव तु सोऽस्मदीये महति पथप्रदर्शकेऽप्यमूर्च्छत् ।

राष्ट्रियायोधने सप्तचत्वारिंशदधिकैकोनविंशति शततमेशवीयाब्दे विकीर्णानां भारतीयसमस्यानामन्तिमेषु समाधानेषु तत्कृतं योगदानमाधुनिकभारतीयेतिहासस्य भास्वरमङ्कं भवद्विभासते ।

सुव्यवस्थितां योजनां विना नास्माक मार्थिक उद्धारो भवितु मर्हेत् न च गत्वरमतिनूतनं जीवनमेव लभ्यं भवेदिति जवाहरलालः स्वतन्त्रतायाः समुपनतेः प्रागेवान्वभवत् । सत्तायां हस्ताधीनायां जातायां, योजनायोगस्याध्यक्षो भूत्वा स एव विभिन्नासु योजनोपयोजनासु गतिं शक्तिञ्च प्रायच्छत् । अद्य ता योजनाः प्रयोगे आह्रियमाणाः दृश्यन्ते ।

स्वतन्त्रतायाः पौरस्त्येषु वर्षेषु राष्ट्रनिर्माणकृन्नेहरोरध्वागुरुतरकाठिन्यकण्टकै र्भीषणैः प्रत्याह्वानकेतुभिराच्छन्न आसीत् । देश-विभाजनोद्भूता घस्मराः उपप्लवाः दारुणा उत्सर्गा नितान्तप्रचण्डा आततायिता च यदा चतुरस्रमुखव्यादानपूर्वकं प्रास्फुटन् कोठिशश्च जनाः उपमहाद्वीपस्यैकस्माद्भागाद् भागान्तरं कान्दिशीकाः सन्तः पलायिषत । प्रलयोपमेन तेन विभाजनेन सार्धं विषमराजनीति समुद्ग्रथिता अर्थ

विषयिण्यश्च असाध्या बाधाकुलाः समस्या उदगुः । इदानीमप्यस्मद्देशे साम्प्रदायिकाना मुत्पातानां यो हि यदा यत्र कुत्रापि प्रस्फोटः संजायते तस्यमूले तद्विभाजनमेवहेतुः। पराधीनतानेहसि सोढासक्कत्कारावासकष्टो ब्रिटिशशासननयनारुन्तुदो जनितसम्प्रदायवादिहृदयप्रगाढभयो मलिनीकृतभेदभावासन्नीतिरतमनोरथः पण्डितनेहरू गुरुगुरुतरतत्तत्कार्यस्य दुष्करतां सम्यगजानात् परं दृढतमधैर्यं माश्रित्य स तं दुस्तरं सागरं स्वकीयेन कठोरभारसहनक्षमसुदृढ विवेकसेतुनालंघयत् ।

विश्वस्य देशान्तरेषूपेक्षां विधाय न भारतं विचारयितुं सुशकमित्येष आसीन्नेहरो र्बलवत्तरोविश्वासः । स्वतन्त्रताप्राप्तेः प्रागेव 'भारतस्य समस्योपनिवेशवादपरिपन्थि संघर्षनिलीनोत्पीडितराष्ट्राणां विशङ्कटतरस्यान्दोलनस्याङ्ग मिति सः शशंस । सः स्वातन्त्र्यपर्युपासको न केवलं स्वस्य राष्ट्रस्य स्वातन्त्र्यमचीकमत, अपि तु सर्वाण्यपि विश्वस्य अस्वतन्त्राणि राष्ट्राणि स्वतन्त्राणि द्रष्टु मभिलषते स्म । अस्मादेव कारणात् स एशियाफ्रीकादक्षिणामेरिकादिदेशानां स्वातन्त्र्याय युध्यमानेष्वान्दोलनेषु स्वकीयां समवेदनां सम्पुष्टिञ्च प्रकटीचकार । नासौ जातिबर्ण-साम्प्रदायिकता धर्माद्याधारे भेदभावं कदाप्यसहत । स सकलानि राष्ट्राण्येकतासूत्रनिवद्धानि दिद्रक्षति स्म । संयुक्तराष्ट्रसंघीय घोषणापत्रे यादृशीं सः श्रद्धामदीदृशत् तादृशीमन्यो न कोऽपि कदाचित् । एतस्मिन् परमाणुयुगे आस्कन्दनस्यार्थः स्यात् सर्वेषामपि सांस्कृतिकानां मूल्यानां संहार इत्येतदनुबभूव सः । एतस्मिनुन्मत्ते संसारे कस्यचन राजनीतिविदः परमार्थतः कर्त्तव्यमिदंयत् स भयं संघर्षञ्च श्लथयितु मुपायांश्चिन्तयेत्, सुमनस्कतायाः समन्वयतायाः समञ्जसतायाश्च वातावरणं सृजेदित्वत्र सः स्वांमतिं न्यवध्नात् ।

नेहरो विवेक व्यक्तित्व-कर्मठत्वनिरन्तरश्रमपरत्वादिका गुणाः देशमेत मैक्य सूत्रेण निवद्धीकर्तुं प्राभूवन् । चेद्वयं जीवितुं कामयामहे तदा गुणानामेतेषामर्जनं विकासनञ्चोचिततरं स्यात् । अद्य वयं तं मानवजाते रीदृश मेक मुद्धारकं मन्यामहे यः स्वकीयां सर्वामपि शक्तिं मानवीयं मानसं च राजनीतिकाद् बन्धनाद् आर्थिकाद् दास्यात्. सामाजिकादुत्पीडनात् सांस्कृतिकाच्चावरोधादुन्मोचयितुं प्रायूयुजत् ।

वस्तुत स्तेन मानवतार्चकेण स्वकीयेन गुणगणेन सर्वेऽपि जना जगतीतल र्वतिनोऽक्रीयन्त; दशापि च दिशः स्वसौजन्यमाधुर्येण च तेनगतदास्याअकारिषत । 'त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही । दक्षोऽनुरक्तलोकस्तेजो वैदग्ध्यशीलवान् नेता' इत्येतच्छ्लोकनिर्दिष्टनेतृविशिष्टता तस्मिन् पूर्णतया विलसन्ती पर्यवालोक्यत । मुक्ताधवलेषु गुणेषु सः प्रसाधनधियं निवबन्ध न चाभरणभारेषु; यशसि तस्य प्रीतिः प्राप्यत न च जीवित

जरत्तृणे । वैदग्ध्यरसालस्य सुरभिमासः, आदर्शः सौजन्याननस्य, स्पर्धानिकेतनं लक्ष्मीसरस्वत्योः, आदिनिवासस्थानं शील सम्पदां, सः १४।११।१८८९ तमेशवीय दिनाङ्के काश्मीरोद्भवसारस्वतविप्रान्ववाये प्रयागनगरे जनुरग्रहीत्; २७।५।१९६४ तमेशवीय दिनाङ्के च स्वर्गमारुरोह । अद्य सर्वमपि जगत् विशेषतश्च भारतमिदं तदीयैस्तत्तत् कार्यैः कृतिभि र्महनीयाभिः कीर्त्या च गौरववद् वर्तते ।

गान्ध्यध्वगो भारतभव्यभावनः,
स्वातन्त्र्यजन्यस्य महांश्चमूपतिः ।
विद्यानवद्योत्तमलेखकाग्रणीः,
वंद्योऽस्ति सः पण्डित नेहरू सदा ॥

—××—

# श्रीमती इन्दिरागान्धी

सेवायाः सद्विचारास्त्यागानुरागा उदात्ता भावा देशभक्तिपरका पावनी भावना तस्मादेवानेहसः समुन्मेषं विन्दमानाः इन्दिरायां समलक्ष्यन्त यस्मिन्ननेहसि वयस्तदीयं शैशवस्यादिमं चरणं समुद्दीपयददीव्यत् । वयसोऽष्टमे वर्षे सा यदा फ्रान्समियाय 'जॉन ऑफ आर्क' इत्येतदाख्यायाः स्मरणीयचरितायाः पुण्यश्लोकायाश्चरितमध्यगीष्ट; तज्जीवनगाथा तस्याः हृदये स्वकीयं स्थायिनं प्रभाव मक्षिपत् । त्रिंशदधिकैकोनविंशतिशततमेशवीयाब्दे पण्डितनेहरू लिलेख पत्रे 'वत्से, स्मरसि त्वं 'जॉन ऑफ आर्क' कथामध्येष्यसे ? तस्मिन् काले भृशावाप्तप्रभावा भवन्ती 'सेव सापि किमपि कार्यं मनुष्ठास्यतीत्यवोच' इति । सत्यमेव—

नागुणी गुणिनं वेत्ति गुणी गुणिषु मत्सरी ।
गुणी च गुणरागी च विरलः सरलो जनः ॥

महात्मा गान्धी कवीन्द्रो रवीन्द्रनाथ टैगोरश्च स्वकीयेन पुनीतेन प्रभावेण इन्दिराया जीवनं समुच्छ्रिततां नयन्तौ परिलक्ष्येते । सा महात्मनो गान्धिनो निर्भयतां सत्यताञ्च पर्यग्रहीत् । एकदा सा वैदेशिकं लेखकम् 'अस्ति सा कवीन्द्ररवीन्द्रप्रभावप्रभाविता; तत्सन्निकर्षे साश्नुतेस्म विशिष्टां शान्ति मन्वभवच्च स्वजीवनं दिव्यपरिवेशावृताम् । शान्तिनिकेतनागमनात् प्राङ् न सा संगीते न च नृत्ये ज्ञानमविन्ददि'त्यशंसत्।

कानिचन दिनान्युषित्वा शान्तिनिकेतने शिक्षामिन्दिराध्यगमत् । सा स्वकीयान्तेवासित्वानेहसि नैजै र्गुणै रवीन्द्रनाथं भृशमप्रीणात् । यदा हि सा शिक्षा मवाप्य शान्तिनिकेतन मत्यजत्, तदा रवीन्द्रनाथ ष्टैगोरः पत्रे पण्डित जवाहरलाल नेहरूम्प्रति लिलेख 'शान्तिनिकेतनस्य शेवधित्वादिन्दिरायाः स्मरणमनिशं भवति । इह तस्याः, शिक्षावाप्तिनिमित्तेन, अधिष्ठितत्वादहं तां प्रत्यासन्नतया प्रैक्षिषि; भवता सा यथाविधया शिक्षया, दीक्षया, सम्भरणपद्धत्या संस्कारैश्च सम्यगुपस्कृता संवर्द्धिता सम्पोषिता च । तस्यास्तद्विधत्वं नूनं मां परिप्रीणाति । तदीयाः सर्वेऽपि गुरूजना मुक्तकण्ठतया तां प्रशंसन्ति, छात्राश्च सर्वे तस्यां प्रीयन्ते । गच्छतानेहसा पुनः भवांस्तां शान्तिनिकेतनं प्रेषयिष्यतीत्यहमाशासे । सा त्वच्चरित्रमनुहरति' ।

नेन्दिरां बहुभाषिता तोषयति । सा राजनीत्याः अभ्याशेऽपि स्वाधिष्ठानं न विधास्यतीति प्रथमं प्रतिभासते स्म; परं परिस्थितयस्तामन्वरौत्सुस्तस्मात् तस्या राजनीतिक्षेत्रेऽवतरणमतितरामपेक्षितमभवत् । तस्या देशभक्तिस्तां लोकप्रियामकुरुत ।

तस्याः सेवाः शनैः शनै र्विश्रुतिमगमन्। जनेषु सम्भाषितुं सा अवसराननेकानलभत। अतः वक्तृतायां स्तुत्यां प्रवीणतामविन्दत्। सा साधिकारं भाषते, भाषणञ्च तदीय मनुद्विग्नं भवद् रयं गृह्णाति। तदीया भाषणकला जनान् प्रीणयति, तद्वाग्मिता जनाभिरुचिं परिपुष्णाति। सा सम्यगभिभाषते। तद् भाषणं सार्थक्यान्वितं ज्ञातव्य-ज्ञापनपर मित्येतद् भाषण मधिकृत्य तस्याः जनाः प्रायेण शंसन्तः श्रूयन्ते।

इन्दिरायाः सन्निधिमध्यास्य ये तदीये व्यवहारे, आचारे, विचारे, निसर्गे च निदधत्यभिज्ञतां तेषामभ्युदीरणमिदम्—'नास्तीन्दिराभिनिवेशानुरागा, अस्ति सा स्पष्टवादिनी। विवेकतर्कादिगुणा वाक् तामभीक्ष्णं नन्दयति। सा चाटुकारितायां भृशं जुगुप्सते। जनानां निर्भयता पूर्वकं कर्त्तव्यपालनपरत्वं साभिवन्दते; तदीयः समुदाचारः श्लाघनीयो व्यक्तित्वञ्च तस्या अद्भुतप्रभावनेशलम्। अकृत्रिमतायां देशानुरागितायाञ्च सा सन्ततं रमते।

यदेन्दिरा बाल्यावस्थायामासीत्; तस्याः पितामहः पं० मोतीलाल नेहरू तामेकदाचकथत् 'वत्से, जना द्विविधाः प्रायेण प्राप्यन्ते; तत्रैके तु स्वयं कार्यमनुतिष्ठन्ति, तदितरे अन्यनिष्पादिते कार्ये स्वस्यकर्तृत्वमध्यारोपयन्तः सुखेनैवात्मानं यशोभाजनं कुर्वते। परं पौत्रि, त्वं तु स्वकीये परिश्रमे मनोरमय, भव स्वयं पौरुषप्रिया'। स्वपिता-महोपदिष्टं वचस्तत् सा सादरं स्वकण्ठाधिष्ठितमन्वतिष्ठत्।

इन्द्रियप्रियः कर्मण्यतापराङ्मुखो विश्रामो नेन्दिरायै कदापि रोचते। कठोरे परिश्रमे तन्मनो रज्यति। त्रिषष्ठ्यधिकैकोनविंशतिशततमेशवीयाब्दे निर्वाचनावसरे, यदा तदीया पितृष्वसा फूलपुर क्षेत्रान्निर्वाचिता भवितुं प्रायतिष्ट तदेन्दिरा यमुद्योगं श्रमञ्च संलग्नतापूर्वकमकार्षीत् तं तु कोऽपि कदाचिदेव कर्तुं शक्नुते। न सा तदानीं क्षणमपि विश्रममगृह्णात्। तदर्थं सा कदापि मनागपिचिन्तां नापद्यत। सा तदा तत् तद् दविष्ठां क्षोदिष्ठाञ्च ग्रामटिका मगाद् यत्र प्रचण्डोऽपि प्रौढोऽपि नेता गच्छन् न प्रेक्षितो भवति। अवसथस्य न्यूनतममतदातृसंख्यावत्त्वं दविष्ठत्वं लघुतमत्वमतिकठिन जनगमनं च न तस्या मनसि स्थानं लब्धुमशकन्। सा तु तद्विधस्थानप्रयाण मपि भृशमपेक्षितममंस्त। येष्वल्पसंख्यकेषु अतिदूरस्थितेषु लघुतमेषु ग्रामवासिषु न कोऽपि मिलति, तेषु मेलनं तद्विचारावगमनञ्च सातितरामिष्ट ममन्यत। जनमात्रस्य सेवां तज्जीवनस्य सा प्रधानलक्ष्यत्वेन मनुते।

अस्तीन्दिरा वीरमहिला। एकदा सा तं जनमगौप्सीद् यं जनाः शतशोऽनुधा-वन्तस्ताडयितुं पर्यलक्ष्यन्त। सानिर्भया भवन्ती एकाकिन्येव हिंसोन्मुखो नृशंसकर्मपरे जनसम्मर्दे प्रविवेश। प्रावोचच्च सा जननिवहमुच्चैः न तस्यासवो भवद्भि र्गृहीतुं शक्यन्ते, इदं हि कार्यं युष्मदीयं कायरताऽऽकीर्णम्; न जातु कापुरुषत्वमिदं संश्रयणीयम्।

जना निशम्यैतत् कुकृत्यात् तस्माद् विरता भवन्तो जल्पन्तश्च किमपि इतस्ततः पलायिषत। आहतं जनं सा चिकित्सालयं नीत्वाऽचिकित्सयत्। वस्तुतः सा आपन्नजनत्राणधृतमति स्तेजस्विनी मनस्विनी भामिनी। न तेजसः पुरस्तमः स्थातुमर्हति। सत्यमेवाभिहितम्—

बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम्।
तेजसा सह जातानां वयः कुत्रोपयुज्यते॥

इन्दिराया विश्वजनीनगुणगौरवास्पदत्वात् तस्या निरामयत्वमनारतं म. गान्धी कामयते स्म। यरवदाकारागृहस्थं महात्मानं गान्धिनं द्रष्टुमिन्दिरैकदाऽगच्छत्, तदा तस्याः परितोषाधायकं सुस्वस्थत्वं महात्मानमतूतुषत्; सः स्वतोषं तं तारद्वारेण जवाहरलाल म्प्रति व्यक्तीचकार। वस्तुतस्तस्या गुणाः, गुणानां कर्मसंलग्नत्वं, कर्मसंलग्नत्वस्य कुशलत्वं, कुशलत्वस्य च सन्मनः प्रीत्याधायकत्वं महात्मनस्तद्‌गतां वत्सलतां नितरामवीवृधन्।

निसर्गतयैवेन्दिरा बालेषुस्निह्यति। यत्र यत्र बालोत्थानकारीणि कार्याणि प्रवर्तन्ते, तत्र तत्र सा प्रसन्ना भवन्ती तादृशकार्यप्रवर्तकान् प्रोत्साहयति। निर्धनत्वाद् विद्याधिगमनाक्षमाणां बालानां कृते कदापि सा 'बालसहयोग' इत्येतदाख्यां शिक्षा शालामपि प्रातिष्ठिपत्। बाला विद्याकला-सद्‌गुणार्जनाय जीवननिर्वहणयोग्यवृत्त्यधिगमनाय सदवसरंलभेरन्निति सा शश्वदभिलषते। बालेषु तन्मनसः समवेदनशीलत्वेऽधोलिरिवता घटना सम्यक् प्रकाशं क्षिपति–भारतविभाजनानन्तरं तस्या निकेतन मेका शरणार्थिनी कन्याऽऽगच्छत्। तस्याः कन्यायाः शैशव एव द्वावपि पादावुच्छिन्नतां नीतावभूताम्। सा आत्मानं हस्ताभ्या मेवासर्पयत्। तदीया सा दयनीया दशेन्दिरायाश्चेतोऽद्रावयत्। तस्याः साहाय्यं विधातुं सा कृतसङ्कल्पाभवत्। महति कृते सति मार्गणे, पूनायां स्थितस्य तस्य सैनिकचिकित्सालयस्य ज्ञातताजायत यत्र कृत्रिमं पाणिपादं निर्मीयते। परं स श्चिकित्सालयः सैनिकानामेव हिताय आसीत्। गुरुतम प्रयासे कृते सति तस्याः कन्यायाः प्रवेशायोद्योगः कृतोऽभवत् यः सफलता तत्र प्राप्ता। जाता च सा कन्या कृत्रिमपादवती। सैनिकान् व्यतिरिच्य अन्येऽपि जनाश्चिकित्सालयात् तद्‌विधां सहायतामधिगच्छेयुरित्येतस्मिन् समीहिते च सा सफलमनोरथाऽभूत्। धन्यं हि इन्दिराया वात्सल्यम्।

इन्दिराया जनतायां वर्तते हितबुद्धिः। तस्याः काः काः वर्तन्ते कठिनताः; के च तस्या अध्वनि सन्ति गुरुतराः प्रत्यवायाः—इत्येतदखिलमपि सा समीचीनतया वेत्ति। देशोनिर्धनताराक्षस्याः कठोरात् करकारालयादुन्मुक्तो जायेत इत्येषास्ति तस्या बली-

यसीच्छा। सा जनतां सुखसमृद्धिसम्पन्नां द्रष्टुमाकाङ्क्षति। कार्यमिदं दुष्करं परं तत्र सफलता प्राप्ता भवितु महंतीत्येषाशा तु तस्यां गरीयसी भूत्वा परिस्पन्दते।

नूनं सा भरतावने रनुपमं वर्चस्वलं गौरवम्
संस्कारा अथ सभ्यता सुरुचिरा स्तस्यां विभान्ति प्रियाः
श्रौतस्मार्त विचारचारुमहिमा विद्योतते चामलस्
तस्या न्यायरते प्रसन्नहृदये दीनार्तिनाशक्षमे॥

दश वर्षाणि इन्दिरा गान्धी प्रधानमन्त्र्यासनमध्यास्ते स्म। देशस्योत्थापनाय कृतास्तदुद्योगा भृशमभूवन्नुपश्लोकिताः।

ऐश्वर्यं वा प्रभुत्व मासाद्य मानवस्य विमलमपि मानसं मलीमसं सञ्जायते तत्र बहुविधा विकारा उत्पद्यन्ते। ऐश्वर्यशालिनं शासनोच्चतमासनाधिष्ठितं जनं तेषां जनानां विशाला संख्याऽऽवरीतुं सरयं प्रधावति ये भवन्ति स्वार्थसाधनानिपुणाः प्रिय-भ्रष्टाचाराः चाटुकारितायां चतुराः प्रियंवदाः। एतादृशानां जनानां सान्निध्यात् मति-मतामपि मतयोऽसत्पथगामिन्यो जायन्ते। स्वार्थान्धा धूर्ता स्तथा यतन्ते यथा न वस्तु-स्थितिं शास्तावगन्तुं शक्नुयात्। शास्ता स्वयमपि प्रभुत्वं प्राप्य प्रायेण जायते प्रमत्त उन्मत्तश्च। उन्मादः प्रमादश्च बलीयान् भूत्वा तदीयं हृदय मूर्णौति; तस्मात् विवेक स्तं सद्यो जहाति। हन्त, नानाविधकार्यप्रपञ्चग्रस्तत्वात्, आत्मीयजनपरकव्यामोहा-वृतहृदयत्वाच्च न सः सद्ग्रन्थानध्येतुं समयमश्नुते; न च सतां सन्निधानमेव लब्धुं शक्नुते। कुफलं महज्जनयति सा स्थितिः। मानवं सा ऐश्वर्याद् भ्रंशयति, सा तं शासनोच्चतमासनाच्च्योतयति तं च सा कीर्तेः स्रंसयति।

अतएव सप्तसप्तत्यधिकैकोनविंशतिशततमेशवीयाब्दे निर्वाचने नेन्दिरां विजये-न्दिरावृणुत।

अनिश मेव हि यस्य मनस्तले प्रवहते निजराष्ट्रहितस्थिता।
परममञ्जुलपावनभावना विजयतां चरिते च स मानवः॥

———

# सरदार बल्लभ भाई पटेलः

सः प्रसूनादपि मृदुलतरः कुलिशादपि च कठोरतर आसीत् । तस्य नयनयोरद्भुतमेव तेजो व्यराजत । तदीयायां वाचायां महाशक्ते र्हुङ्कारोऽवात्सीत् । तदीया वङ्घ्री समीरस्य गतिं जगृहतुः । प्रतिभायां तदीयायां ज्ञानज्योतिः परिस्पन्दते स्म । स निर्भीकलोकोत्तरसत्त्वसम्पन्नः प्रचण्डोत्साहसमुज्ज्वलो महानरिन्दम उद्‌बुद्धमेधः, कर्मसु परमकुशलः, राजनीत्यां महान् पारदृश्वा, देशभक्तशिरोरत्नं मानव-सिंह आसीत् । आसीत् सः पुण्यश्लोको विश्वविदितनामा बल्लभभाई पटेलः ।

बल्लभभाई पटेलस्य व्यूढोरस्कता प्रांशुललाटता विशालेक्षणता च दुर्हृदां हृदयेषु भीतिं सुहृदाञ्च प्रीतिं समचीचरन् । तद्भालवर्तिनी तरङ्गभंगुरा त्रिगुणात्मिका त्रिवली त्रिवेणीव प्रतिलक्ष्यते स्म । उदग्रान्मौलिपटलान्मनीषिता वृषस्कन्धतात आफलोदयकर्मपरता भुवनविजयस्तम्भभूताभ्यां दोर्दण्डाभ्यामरातिषु तस्य निशूदनशीलता च प्रकटीबभूवुः ।

मतिमतांवरस्य पटेलस्य जन्म पञ्चसप्तत्यधिकाष्टादशशततमेशवीयाब्दे गुर्जर-प्रदेशान्तर्गत करमसद इत्येतदारव्यग्रामे बभूव । तस्य पिता झवेर भाई पटेलो देशस्य वीरभक्तेषु अग्रणीः समजायत । सप्तपञ्चाशदधिकाष्टादशशततमेशवीये वर्षे यदा देश-भक्ताः स्वदेशस्य स्वातन्त्र्यार्थं प्रथमं स्वातन्त्र्यसमरस्यारम्भं विदधुस्तदा स झाँसी राज्ञ्या लक्ष्म्याः सेनाचरो भूत्वा युयुधे । माताप्यस्मद्वर्ण्यमानस्य नायकरत्नस्य धर्म-परायणा वीराङ्गनाऽऽसीत् । शैशवं हि बल्लभस्य पित्रो र्वात्सल्यमयोत्सङ्गे समुदं व्यतिचक्रमे । विद्याध्ययनानेहस एव वल्लभः शान्तो गम्भीरमनाश्चादृश्यत । अविद्यत तत्र बाल्यसुलभं चापल्यं परं तत्सर्वदा मर्यादायामेव स्थितमवाप्यत । स्वतन्त्रतया निर्भीकतया च विचाराविर्भावनाभिरुचिस्तदापि तत्र व्यराजत । शिक्षक-गरिमणि सः प्रारम्भादेव श्रद्धां निदधौ । अनौचित्यं प्रसभमसौ व्यरौत्सीत् । शिक्षार्जनकाले कश्चिच्छिक्षकस्तं 'महापुरुष' इत्येतेन शब्देन सम्बोध्योपजहास परं गच्छता कालेन सोपहासमभिहितः स शब्दोवरदानमसिद्ध्यत् । छात्रजीवनसमय एव दृष्टा निर्भीकत्व-स्वातन्त्र्य-प्रियत्वाध्यवसायपरत्वानौचित्यविरोधित्वादिगुणास्तज्जीवने जीवनान्तसमयं यावद् भृशं भासुरतां गाहमाना लोचनगोचरीबभूवुः । स मरणं वरं मेने परं दैन्यं न कदापि सेहे । सत्यमेव कविर्महान् श्रीहर्षो निजगाद—

त्यजन्त्यसूञ्शर्म च मानिनो वरं
त्यजन्ति न त्वेकमयाचितव्रतम् ॥

वल्लभ भाई पटेलो महानध्ययनशीलस्तरुण आसीत् । सः स्वाध्याये दृढ मविचलमतिशयमनुरागं न्यदधात् । यदा स इंगलेण्डमध्युवास, कश्चित् पुस्तकालय स्तदावासात् सार्धद्वययोजनमितदूरस्थित आसीत् । परं प्रत्यहं स तत्रागमत्; पुस्तकालय विवारसमयमारभ्य तत्संवारसमयपर्यन्तं पुस्तक पठन एवात्मानं प्रावर्तयत् । सः विधिवक्तृत्व (वैरिस्टरी) परीक्षां प्रथमश्रेण्यामुत्तीर्य भारतमाजगाम । इंगलेण्डाद् भारत मागम्य विधिवक्तृत्ववृत्ति माललम्बे सः, परं, देशस्य परतन्त्रता तदीया शोचनीया स्थितिश्च तं तां वृत्तिं हातु मनुरुरोध । स्वदेशं निषेवितुं तस्य पारतन्त्र्यं दूरीकर्तुं तमधः पतनात् पातुं च सः कार्यक्षेत्रेऽवातरत् ।

वल्लभ भाई पटेलं महात्मगान्धिनः प्रभाव आचकर्ष । महात्मगान्धिनः सत्यनिष्ठा तपश्चरणशीलता साधुता देशप्रेम च पटेलं तदनुयायिनं चक्रिरे । महात्मनि किमप्येतादृशमासीदाकर्षणबलं यन्मानवं तत्क्षण एव तस्यानुयायिनं कर्तुं प्रबभूव । भारतस्य कृषाणानां जगदांग्लशासनेनातितरां सर्वथैव दरिद्रतां प्रापित मासीत् । ग्रामाणां धन-पौरुष-कला-विद्यादिकं सर्वमप्यपहृतं तेन । एतावदेव न, मानवाना मधिकारेभ्योऽपि सर्वे ग्रामनिवासिनस्तेन विप्रालम्भिषत । स्वकीयस्य देशस्य सा शोचनीयतां नीता दशा पटेलं गम्भीरतया अदुनोत् । स देशमत्याचारेभ्योऽन्यायेभ्यश्चोद्धतुं सुदृढं सङ्कल्पं चकार । 'हन्त, ये कृषीबला निदाघेऽसहनीयमातपं प्रचण्डोष्णवात्यां च, प्रावृषि वृष्टि मजस्रं, शैत्ये च कठोरं हिमपातं सहित्वान्नमुत्पाद्यास्मान् पान्ति त एवास्मत्पोषयितारः स्वोदरपूर्त्यै, हा अन्नमपि न लब्धु मर्हन्ति; त एव क्षुधया म्रियन्ते । हा, येषां कृतेनाविरामेणोद्योगेन वयं वसनानि वस्महे, त एव नग्नाः सन्ति । हा, ये श्रमिका अस्माकं कृते प्रासादान् विरचयन्ति, त एव क्षरितसलिलच्छदिषूषित्वा येन केन प्रकारेण वर्षर्तौ निशां क्षिपन्ति, त एव गृहाभावात् घण्टापथेषु शेरते सहन्ते च नानाविधान्यसहनीयानि कष्टानीत्येतद् विचिन्त्य सः कर्षकाणां हिताय आत्मानं न्ययूयुजत् । यदपि तदर्थं सः कर्तुं मशकत् तत् सः कृतवान् । तेषां कल्याणाय वारदोल्यां यं हि आन्दोलनयज्ञं स वितताान तेन सकलमपि आंग्लशासनं वेपाञ्चक्रे । तन्नेतृत्वे क्षेत्राजीवा देवदुर्लभमपि त्यागं कर्तुं मुद्यता अभूवन् । ते तदाज्ञया प्रेरणया चाङ्ग्लशासनकृतानत्याचारान् कठोरकठोरतरान् सहर्ष मसहन्त परं न सकृदपि तदनुज्ञामवज्ञातवन्तो न च तन्निर्दिष्टमध्वानमेवोज्झाञ्चक्रुः । अन्ततो गत्वा प्रतिहतगतिका आंग्ला लोहपुरुषस्य तस्य पुरतः प्रणता बभूवुः । कृषीबला स्तं श्रेष्ठं नायकमवाप्यात्मानं धन्य ममंसत । पावकमपि न कृष्णवर्त्मान माश्रयाशमपि न दहनं तमाश्रित्य अकुतोभया अभूवंस्ते ।

रौलटाधिनियमं सः कर्मयोगकुशलः प्रधीः पटेलः सडिण्डिमघोषं व्यरौत्सीत्। सत्याग्रहावसरे सोऽशंसत् "बन्धवः, वैशाख ज्येष्ठयोः प्रचण्डातपमन्तरेण नाषाढश्रावणयो र्भवति वर्षा। दारुणानां कष्टानां सहनं विना स्वातन्त्र्यजनितानि सुखानि कुतः सन्ति सुलभानि। वैदेशिकं शासन महिनिर्मोक इव; न तदवरोपणं दुष्करम्। यो रक्षको भक्षकः सञ्जातस्तत्र न स्वताबुद्धिः करणीया। कर्त्तव्यमस्मदेतद् यत् तादृशतां गतं तं रक्षकं समूल मुन्मूलयितु प्रयतेमहि।

बल्लभ भाई पटेलस्य विद्या-प्रेम कीदृश मासीदित्येतद् वयं तस्यच्छात्रजीवने समीचीनतया विलोकितवन्त एव। स देशस्य यूनो विद्याविद्योतितानवलोकयितु मची-कमत। अतः सः स्वप्रदेशाल्लक्षशोरूप्यकाणि संगृह्य विद्यापीठं प्रातिष्ठिपत्।

बल्लभ भाई पटेलः १६३१ तमेशवीयवर्षे कराँच्यां राष्ट्रियमहासभायाः सभा-पति र्बभूव। आसीदसावनेहाः सङ्कटकण्टकाऽऽकुलः। भगतसिंहस्तस्मिन्नेववर्षे शूलदण्ड आरोपितस्तस्मिन्नेवाब्दे यवनानां भयङ्करा उपप्लवाः सर्वत्र प्रास्फुटन्; सत्याग्रह-निग्रहाय च तस्मिन्नेववत्सरे शासनेन घोर उपक्रमः कृतः। परं महासाहसी पटेलः सविवेकं कार्याणि सम्पाद्य नेतृत्वञ्च विधाय तस्मादसीमविषमसङ्कटार्णवाद् देशतरी मुदधरत्।

बल्लभ भाई पटेलो दुष्टहृदयेषु केन प्रकारेण व्यवहर्त्तव्यमिति साधु विवेद। शठम्प्रति शाठ्यं समाचरेदित्यत्र स विश्वसिति स्म। 'व्रजन्ति ते मूढधियः पराभवं भवन्ति मायाविषु ये न मायिनः' इत्येतद् भारविमतं सोऽपि पर्यपुष्णात्। यदा चर्चिलो भारतम्प्रति विषमवमत् तदा स एव साहसी निर्भीको वीराग्रणीस्तं संवृताननं व्यदधात्। सत्यपथात् स न कदापि विचचाल। भीति र्न तं कापि माययितुमशकत्। मयराष्ट्रे राष्ट्रियमहाधिवेशने स जगाद 'चेदात्मानं रक्षितु यवनानां पुरः करवालान् उद्यम्य न यूयमस्थास्यत, नूनं व्यनंक्ष्यत'।

बल्लभो लोकबल्लभो बभूव। जनता यादृशमधिकतमं विश्वासं तस्मिन् न्यद-धान्नान्यत्र। स भारतीय संस्कृते र्महान् संरक्षक आसीत्। तस्य कार्येषु विश्वस्य भद्रं विबभौ। तस्य वाणी, तस्य वेषविन्यासः, तस्य जीवनगतिविधिस्तस्याचरणानि च भारतीयां संस्कृतिं सभ्यतां च सर्वाङ्गीणतया समवीवृधन्। तस्य सत्तया भारतीयता-ऽऽत्मानं स्वस्तिमतीममन्यत। तदीयस्य जीवनस्य श्वासानुश्वासा भारतमातुः सेवायै एव गमन मागमनञ्च विदधानाः समलक्ष्यन्त।

देशसेवापटीयसां पटेलसदृशां तपस्विनामेव तपसः प्रभावात् भारतम् ऋषि-वेदग्रहशशिसम्वत्सर ऐशवीये, मासेऽगस्ते, पञ्चदशे दिनाङ्के स्वतन्त्रताश्रियो दर्शन मवाप्तु मशक्नोत्। स्वतन्त्रं भारतम्प्रति बल्लभ भाई यद् गौरवं यां च शक्ति प्रदत्तवान्

वस्तुतस्तेन गौरवेण तया च शक्त्या स्वतन्त्रता नितरामुत्कृष्टं तेजः प्राप्य विभ्राजते। स्वतन्त्रतालक्ष्म्याः अवतरणकाले यवना भारतस्य प्राप्तां स्वतन्त्रतां परतन्त्रतायां परिणमयितु मयस्यन् परं तत् पटेलस्यैव शौर्य्यमयं विवेकमयं सत्साहस मासीद् यत् तेषां निन्दनीयः प्रयासो न सफलतामवाप्तु मशकत्।

स्वातन्त्र्यावाप्तिकाले भारतमासीच्छतशः खण्डेषु विभक्तम्। तदा यावन्त्यपि नृपतीनां राज्यान्यासंस्तावन्ति सर्वाण्यपि स्वच्छन्दान्यासन्। तानि स्वतन्त्रे भारते मिलेयु र्न वा मिलेयुरित्यत्र सर्वथा यदृच्छया विचारयितुं क्षमाण्यासन्। तेषां राज्यानां षट्शतीत्वं स्वतन्त्रं भारतम्प्रति नूनमभिशापायते स्म। बल्लभभाई पटेलस्य राजनीतिविचक्षणा निशिता प्रतिभा विकीर्णानितानि सर्वाण्यपि स्वाच्छन्द्यभोगीनिराज्यानि अन्तर्भावयितुं सफला बभूव। पाकिस्तानस्यांग्लानां च कुटिलतया जूनागढ-हैदरावाद राज्ये धाष्ट्र्यं मौद्धत्यञ्च प्रादीदृशताम्। परं कुशलकर्मठस्य पटेलस्य भ्रूभङ्ग्यैव ते द्वेऽपि राज्ये अपास्तमाने भूत्वा भारतीयराष्ट्रध्वजनिघ्नतां स्वीकुरुतः स्म। अस्मन्नीतिनिष्णातो गृहमन्त्री पटेलस्तत्तद्राज्योत्थापितांश्चन्द्रहासान् एकेनैव प्रहारेण खण्डशश्चकार। शतशः स्वाच्छंद्यभुजां भूभुजां राज्यानि विनाशोणितविन्दुपातं हेलयैव वशीकर्तुं यदि कोऽपि भूमण्डलेऽस्मिन् अमोघां शक्ति निदधौ तदा, सोऽयं पटेल एवासीत्। सर्वाण्यपि राज्यानि जनराज्ये परिवर्त्य स वीरचरितो भारतस्य मानचित्रमेव क्षणेनैव पर्यवर्तयत्। सर्वराज्यनिलयकारित्वात् तस्य, भारतेतिहासे वा संसारस्येतिहासे तत्स्थानमस्ति सर्वथैवोपमानविहीनम्।

बल्लभभाई पटेलः समयवित्सु श्रेष्ठः समयविदासीत्। स जनतातो नेतृत्वं न गृहीत्वा जनताया एव नेतृत्वं प्रायच्छत्। स भारतस्य स्थितिं सम्यगज्ञासीत्। 'न शत्रुभ्यो भयं तावद् देशम्प्रति, भयन्तु वस्तुतस्तु मित्रेभ्य एव' इत्येतत्कथनं तदीयं सर्वथैवावितथम्। एतत् तस्य धिय स्तिग्मतरता मैतिह्याभिज्ञतां चाभिव्यक्तीकरोति। भारतस्य गृहमन्त्री उपप्रधानमन्त्री च भवन् स आशातीतसफलतया भारतमशिसत्। स युगस्यास्य चाणक्य आसीदिति वहवो वदन्ति। भारतेतिहासे महापुरुषेषु बल्लभः पटेलोऽमरोभूत्वा भारतीयानां हृदयेषु स्थितः स्यात्। स्वतन्त्रं भारतं तद्यशोगीतानि गायत् सन्ततमात्मानं धन्यं मन्येत।

समस्त राज्यान्यकरोत् पटेलो
लीनानि राष्ट्रे नयविद् वरेण्यो
जातः क्षितौ लोहनरो न तादृक्
कुत्रापि नूनं गुणिवृन्दवंद्यः॥



# रफी अहमद किदवई

अस्यां जगत्यां मानवा स्तानेव पुरुषान् सादरं संस्मरन्ति ये समुचितेऽनेहसि उल्लेखनीयानि कार्याणि कर्तुं प्रभवन्ति। रफी महाभागस्तेषु नेतृष्वन्यतम आसीद् यस्मिन् भूयिष्ठा जनाः श्रद्दधते स्म। 'उदारचरितानां वसुधैव कुटुम्बकम्' इत्येषा सूक्तिस्तस्मिन् साधु समगच्छत। साम्प्रदायिकता तच्छायामपि स्प्रष्टुं नाशकत्। भेद-भावस्तस्माद् भृशमबिभेत्। स एवेदृङ् मानव आसीद् यः स्वविरोधिनोऽप्युपाकरोत्। मित्राणितु ह्यस्य सर्वदैव तमवलम्बन्ते स्म अतिदृढविश्वासेन आस्थया च सह। कोऽप्येतादृक् समयो न जातो यदा तदीयं साहाय्यं न जना अवाप्नुवन्। वस्तुतः सः परेषां कृते साहाय्यदानं स्वकीयं धर्म मवागमत्। तस्मिन् सत्युपरते पं० जवाहरलाल नेहरू तद्गेहं मसौलीग्राममगच्छत्; स तस्य भग्नं सद्म विलोक्याभ्यदधात्—"रफी महानुभाव स्तु सदा परेषा मेव गृहनिर्माणे संलग्नमात्मानं कृतवान् स्वगृहनिर्माणार्थं तु सोऽवकाश मेव न लब्धवान्।"

सोऽनेकमनोरञ्जनपटीयसीः विशिष्टताः भजते स्म। तास्तस्य महत्तायां प्रकाशं प्रक्षिपन्ति। स धन-सञ्चयने परमविदग्ध आसीत्। सः स्वप्रत्यर्थिभ्योऽपि प्रभूत मर्थं समगृह्णात्; वयस्यास्तु तदर्थं प्रतिषेध मकार्षु रेवन। परमुल्लेखार्हस्तु विषयोऽयं—सः स्वप्रयोजनेन कदापि पणमेकमपि न प्रायुङ्क्त। राष्ट्रियमहासभायाः (कांग्रेसस्य)नेतारो-रफीमहोदयस्य सुहृदो वा सहचारिणोऽनेके—सदैव स्वात्ययिकतायाः पूर्तिं तस्मादेव विदधति स्म। रफीप्रवरः प्रतिमासं भरणमिव तेषां कृते धनं प्रायच्छत्। दिवं प्रयाते सति तस्मिन्, तद्भार्या नेहरूपण्डिताय तां लेखनीं प्राददात् यस्याः प्रयोगस्तेन सदैव कृतः किञ्चैकं नामावलीप्रपत्रमदात् यत्र तेषां जनानां नामानि लिखितान्यासन् ये प्रतिमासं तस्मात् (रफीतः) धनमलभन्त। इदं तत्त्वं पण्डितनेहरू तदीय पत्नीत एव ज्ञातु मशक्नोत्। सः श्रुत्वेदं स्मितरेखाङ्कितान्नो जातः। "कार्य मेतद् रफी महाभाग एव कर्तुं क्षम आसीत्, साम्प्रतं विषयस्यास्योत्थापनं नोचितं स्यात्, धनलब्धारो 'भेदोऽयमुन्मीलितो जात' इत्येतद् यदा ज्ञास्यन्ति तदा तेऽवश्यमुद्विग्ना भविष्यन्ति" इत्येतद् विमृश्य पण्डितनेहरू तूष्णी मेवाभवत्।

रफी अहमद किदवई महाभागस्य गेहं योऽप्यगात् यच्च तमयाचत, स तत् प्राप्नोत्; न कदापि रिक्तपाणि र्न्यवर्तत। सः (किदवई) सर्वेषामपि सहायको ऽभवत्। तस्य सदनं धर्मशालेवासीत्। जना गत्वा तत्र सुखेन विश्राम्यन्ति स्म। प्रत्यहं तन्नि-

केतने दश-पञ्चदश जना भोज्य मवाप्नुवत। स्वाभीष्टसाधनानिपुण आसीत् किदवई। परं सः स्वकीयं गुण मिमं न स्वहिताय उपायुंक्त। तेन तु स परेषामेव सहायता मकुरुत। परिपन्थिनस्तदीयास् तस्माद् व्याकुलाः सन्त एव समतिष्ठन्त। "किदवई कस्मिन् काले किं करिष्यती" ति न ते वेत्तुमशकन्। सः आधिक्येन दूरभाषमुपायुजत्। कार्य्यं क्षिप्रतयैव स्फूर्त्या च सः समपादयत्। तदीय-पटलोपरि नध्रीणां विविधानाञ्च प्रपत्राणां राशिः कदापि न वीक्षितोऽभूत्। रक्तसूत्रजाले न कदापि न्यपप्तत्। तमेव विधिं सोऽश्रयत् येन कार्यं सत्वरमेव सम्पन्नतामुपेयात्। सः स्वराजनीतिकाभिघातिनां च कृते पर्याप्तमर्थसाहाय्यमकार्षीत्। साम्यवादिपत्र सञ्चालनाय सः चिरकालं धनमद-दात्। समाजवादिष्वपि सः सत्सम्बन्धं निहितवान्। किदवई राष्ट्रियमहासभायां विनोदे ख्यात आसीत्। स तत्र प्रसन्नता मन्वभवत्। पर तदीयाः प्रत्यर्थिनः सहचराश्च प्रायेण तत्प्रतिपत्त्याऽताम्यन्। अस्मिन् विषये केचन पण्डित जवाहरलालमप्यभिज्ञ मकुर्वन्। ते "नैवैतत् किदवई महाभागेन करणीयमित्ये" तन् पण्डितनेहरूं व्यजिज्ञपन्। पं० नेहरू सस्मितमवदत् "भवतां कथनं सत्यमेव परं विदितं भवत्वेतद् भवत्सु यन्न-कदापि किदवई एताभ्यश्चेष्टाभ्यो विरमेत्। तत्तु तदीय जीवनस्यास्त्यङ्गमेव। तदीया दुर्बलतैषास्माकं सहनीया।"

आचार्य कृपलानी पण्डित नेहरौ राजनीतिकं विरोधं निधत्ते स्म परं किदवई नेहरोः परममित्रमासीत्। सः (किदवई) कृपलानिन्यपि सौहृदं पर्यपुष्णात्। एकदा नेहरू–कृपलानिनो र्मध्ये मतभेदो भृश मवर्धत, किदवई मुम्बय्यां समज्यायाम् "अहं भवति किमपि वक्तव्यं कर्तु मिच्छामि, कृपया व्रवीतु कदा भवतः सविधे उपस्थितो-भवेयम्" इति कृपलानिनं पप्रच्छ। कृपलानी तदोदतरत्—"जवाहरलाले मिलतु भवान्, मान्तु मुञ्चतु"। किदवई तु न कदापि स्वसङ्कल्पात् विचलितोऽभवत् स तमभाषत—"अस्तु, दूरभाषद्वारेण संसूच्य भवत्स्थानमायास्यामि"। निशम्येदं तत्काल एव सः प्रावोचत्—"अपि किमहं जवाहरलालः ? न मम सद्मनि दूरभाषः"। आकर्ण्य तद् रफी महाभागो व्यरमत्। सः समज्यां हित्वा तत्काल एव दूरभाषायोजनसंस्थाम् आचार्य कृपलानिनः सदने दूरभाषप्रतिष्ठापनार्थमादिशत्। तेषु दिनेषु सः (किदवई) दिल्ली-शासने मन्त्र्यासीत्। आचार्यः कृपलानी यदा स्वस्थानमाससाद तदा तत्र दूरभाष मवाप्नुत। किदवई तदैव दूरभाषेण कृपलानिन मशंसत्, "श्रीमन्, कृपया ज्ञापयतु, कदा भवद्भवनं मयाऽऽगन्तव्यमि" ति। अन्ततः कृपलानी तदागमनार्थं समयं प्रदातु मवाध्यत। एतद्विधां चपलतां प्रायेण व्यवहरन्तं किदवई महाभागं जनाः प्राप्तवन्तः।

उत्तरप्रदेशस्य राजनीत्यां पण्डित कमलापति त्रिपाठी पण्डितपन्तस्य सहयोगी आसीत्। रफी महोदयः प्रायेण पन्ते विसमवदत्। कमलापति र्न किदवई पक्षेऽवर्तत।

 


गच्छतानेहसा कमलापतेः पुत्रो ज्येष्ठो हि स्वसदनं दूरभाषवत् कर्तुं मैच्छत् । स भृशं तदर्थं प्रायतत परं न सफलतामध्यगमत् । अन्ततो गत्वा सः किदवईं प्रति स्वप्राप्तव्यतां प्रकटीकृतवान् । किदवई तत्कथनं सर्वमश्रृणोत् तं च सः स्वस्थानात् प्रास्थापयत् । यदाहि सः (कमलापति त्रिपाठि पुत्रः) वाराणस्यां स्वस्थान मुपेयिवान्; सः सद्मनि दूरभाषं प्राप्नोत् । विपक्षिणः सुतेऽपि किदवई सौजन्य मीदृशं व्यवाहरत् । कमलापति-स्त्रिपाठी सन्दर्भेऽस्मिन् स्वकीय मित्रमेकमेवं किदवई मधिकृत्य अभ्यधात्—"रफी महाभाग इव को भवितु मर्हति ? अस्ति सः वस्तुतोऽतिद्वय एव । तदीया प्रभविष्णुता स्वकीयैव" ।

रफी अहमद किदवई १८।२।१८९६ दिनाङ्के मसौल्या मुदपद्यत । तदीयं कुलं भूमिमत्कुलमासीत् । तस्य पिता इम्तियाज अली राजकीयः कार्यकर्ताऽऽसीत् । एकदा कश्चित् आंग्लाधिकारी "भवदीयाः पुत्रा सन्ति निरंकुशा" इत्यभिदधत् तमत-र्जयत् परं सः तत्कथनमुपैक्षिष्ट । किदवई महाभागस्य पितृव्यो वाक्कीलतया जीवनं निरवहत् । किदवई तत्सकाश एव निवसन् शिक्षामग्रहीत् । तत्र वसन्नेव स ततो राज-नीतिक गतिविधावात्मान मभिज्ञमकार्षीत् । तेन सह स लखनऊ नगरे राष्ट्रियमहासभाधि-वेशनमपि सम्भावयति स्म । अलीगढस्थ एम. ए. ओ. कालेजे स उच्चतरशिक्षामानर्ज । स छात्र जीवने देशभक्तो मतोऽभवत् । स्नातको भूत्वा सः सत्याग्रहे भागं ग्रहीतु मारभत । तदीयो बन्धुः शफी च राजसेवां विहाय सत्याग्रहान्दोलने कार्यं कृतवान् । वन्दितां च स नीतोऽभवत् । श्रीरफी बाराबङ्कीनगरे देश-सेवां परमोत्साहेनान्वतिष्ठत् । सः राष्ट्रियमहासभा(कांग्रेस)या नेतृसमुदाये विदिततामगमत् । द्वाविंशत्यधिकैकोनविंश-तिशततमेशवीयाब्दे कारागारतो यदा स मुक्तोऽभूत् पं० मोतीलालनेहरू तं स्वकीयं सचिवमकरोत् । तस्मादेव समयात् स नेहरूपरिवार-सान्निध्यमगच्छत् किञ्च स्वजीवन-स्यान्त्यं दिनं यावत् पं० जवाहरलालस्य परमप्रियसुहृद् भूत्वा अजीवत् ।

एकदा रफी अहमद किदवई, यदा स मोटरयानेन गच्छन्नासीत्, दुर्घटनयाऽऽ-क्रम्यत; म० गान्धी तं द्रष्टु मागतः । तेषु दिनेषु रफीमहाभाग उत्तरप्रदेशे मन्त्र्यासीत् । रफी महाभागो महात्मनोक्तः—"रफिन्, तव मोटरयानमेतावद्वेगवद्गत्या चेन्न चलेत्, तदा उत्तरप्रदेशे किमपि कार्यं न भवितु मर्हेदित्येषास्ति तव विचारणा" ? श्री रफी महात्मनि न्यवेदयत् "बापूजी, इयमसत्प्रकृतिः सञ्जातास्ति; न सा दूरीभवति" ।

रफीमहाभागो गृहमन्त्रिपदासीनो भूत्वोत्तरप्रदेशे महान्ति महान्ति जनहित-कार्याण्यकरोत् । दिल्ल्यां केन्द्रीयशासने च यदा स खाद्यमन्त्रिपदे स्थित आसीत् नितान्तप्रशंसनीयानि कार्याण्यनुतिष्ठति स्म । तदीयां सेवां समग्रोऽपि देशो मुक्तकण्ठतया प्राशंसत् । न तदीयास्ताः सेवाः कदापि भारतीय जनता विस्मतुं शक्नोति । शेख

अब्दुल्ला यदा देशस्यैवाहिताचरणोन्मुखः सञ्जातस्तदा अयं किदवई एव यत्प्रयासः शेखं धर्तुं क्षमो जातः। श्री रफी न महान् विद्वान् आसीन्न च महान् वक्तैव। परं स महान् निःस्वार्थसदाचारनिष्ठः साधुचरितो देशभक्त आसीत्। स मानवमेव शिक्षाप्रद पुस्तकममन्यत। न सः स्वसाफल्ये उन्मादं कदाप्यगमत्। देशस्य सेवैव तस्य देशभक्त-शिरोमणे धर्म आसीत्। तस्मिन् सत्कर्त्तव्यासक्ते सुजनमूर्धन्ये न निर्विण्णता कदाप्य-दृश्यत। तस्मादेव हेतोः श्रियं शुभं लाभञ्च लभमानं तदीयं जीवनं परिवीक्षितमभूत्–

"अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च।"

परं कदाचिदसौ 'श्रियि यन्मनो रज्यति तद् दुर्व्यसनै र्हन्यते' इत्येतद् विमृश्य न तस्यां (श्रियाम्) कदाप्यरज्यत्: परं स तां शश्वद् दीन-दरिद्र-साहाय्यार्हजनहिताय उपायौक्षीत्। अकारणबन्धुत्वं तदीय चरित्रस्य चारुतरं वैशिष्ट्य मासीन्—

'करुणार्द्रा हि सर्वस्य सन्त्यकारण वान्धवाः'

सः प्रकृत्यैवोपकृतिपरः प्रियंवदोऽकृत्रिमस्नेहस्निग्धहृदय आसीत्—

'उपकर्तुं प्रियं वक्तुं जने स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः'॥

स मेधावी विनोदप्रियः स्मिताननो बुधवरः सर्वदैव स्वकीयं जीवनं सद्वृत्त-बन्धुर मेव विधातु मयस्यत्। न तस्य विवेकिनश्चित्तं वित्ते रागं न्यदधात्—

"वृत्तं यत्नेन संरक्षेद् वित्त मेति च याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः॥

यै गुणैः कोऽपि मानवः सतां वन्दनीयतां प्रपद्यते ते गुणाः समुदं नमधिवसन्तः समलक्ष्यन्त—

'वदनं प्रसादसदनं सदयं हृदयं सुधामुचोवाचः।
करणं परोपकरणं येषां केषां न ते बन्द्याः॥'

वस्तुत स्तस्योदारस्य सद्गुणानांवर्णनाद् विरन्तु मेव नेच्छति लेखनी। परमन्ततः सा स्वकीयं हृद्गतं भावमिममुदीरयन्ती विरमति—

देशस्य सेवैव सदैव तेन
धर्मः स्वकीयो हि महानमानि
दृष्टाभवत् तत्र न भेदबुद्धि
र्धन्यो रफी पुण्यचरित्रमन्त्री॥



# लालबहादुर शास्त्री

पण्डित जवाहरलाल नेहरोरनन्तरं कः प्रधानमन्त्रित्वपदस्य गुरुतरं भारं वोढुं क्षमः स्यादित्येषा चर्चा सर्वत्रापि तदैव भृशं प्रावर्तत यदाऽऽसीत् पण्डितनेहरोः प्रधान मन्त्रित्वकालः। न कस्यापि दृष्टि स्तत्र न्यपतत् यो हि देशभक्त प्रवरो जनसेवैकधनो भारत मातृ मस्तकोन्नमनकारी 'मुहुर्तं ज्वलितं श्रेयोन च धूमायितं चिरम्' इत्येतां भणितिं स्वजीवने साधुतया चरितार्थीकुर्वन् नेहरूढभरस्य प्रधान मन्त्रित्वस्य परमोत्तरदायित्वमयीं महीयसीं धुरमतितरां सफलतया धारयित्वा समग्रेऽपि भूभुवने भारतस्य कीर्ति कौमुदीं व्यातनीत्। कः सः आसीत्? आसौत् सः काये ह्रस्वः परं कर्मणि महान् कुशलो मनस्विनां माननीयो मनीषिणामनुकरणीयः पुण्यचरितः श्री लाल वहादुरशास्त्री। यदा शास्त्री प्रधान मन्त्रिपद मध्यास्त प्रायेण भूयिष्ठाः 'न सः प्रधान मन्त्रित्वकार्यंभारं वोढुं प्रभवेदित्येतत् समधिक्षन्। परं तस्मिन् अलम्बकाये नर श्रेष्ठे तु लोकोत्तरसत्त्वता समशोभत; तत्र तु निः स्वार्थ भावेन कृतस्य लोकसेवातपसो दिव्यैव शक्ति र्व्यराजत्, तत्र तु अजेयं पौरुषं, स्पृहणीयं सत्साहसं, श्लाघनीयोऽध्यवसायः, आश्चर्यकारिणी कर्मठता च व्यद्योतन्त अतोऽष्टादशमासै रेवेदं समुज्ज्वलं सत्यं सर्वेषामपि पुरः प्रस्फुरत् समुपस्थित मजायत यदुत्तमतया शासनं सञ्चालयितुं, प्रधान मन्त्रित्वस्य गुरुतमं कार्यं वोढुं विशालः कायो, धनवत्कुले समुद्भवो, वैदेशिक वातावरणे निवासो, यूरोपीयशिक्षासंस्थातः शिक्षार्जनञ्च नापरिहार्यतया अपेक्ष्यन्ते, तदर्थं तु विवेकश्चारित्र्यचारुता; कर्त्तव्यपरायणता, देश-प्रेम, वैदुष्यं, राजनीतिविशारदता, दृढ सङ्कल्पश्च वस्तुतोऽनिवार्य्यभावेनाकाङ्क्ष्यन्ते।

लालबहादुरशास्त्री वेदाकाशग्रहविध्वब्देशवीये, मासेऽक्टूवरे द्वितीयस्मिन् दिनाङ्के वाराणसी मण्डलान्तर्गत मुगलसरायँ संज्ञक पत्तने समुदपद्यत। तस्य पिता शारदाप्रसादः साधारण एव जन आसीत्। न स धनवान् आसीत्, न चोच्चपदे कार्यकर्ता नैश्वर्यभागेव। स, यदा लाल बहादुरः स्तनन्धयताया मेवा वर्तत, दिवङ्गतो वभूव। तस्य तदीययो र्द्वयो र्भगिन्योश्च संरक्षणभारस्तन्मातामहेनोह्यते स्म। लाल बहादुरो वाराणस्यां हरिश्चन्द्र विद्यालये शिक्षां प्राप्य देशसेवाकार्ये आत्मानं प्रावीवृतत्। स महात्मगान्धि प्रवर्तितान्दोलनेऽभिरुचिं क्रियात्मकतया पर्यग्रहीत्; तस्माच्छासनेन गृहीतोऽसौ। प्राप्तवांश्च वर्षद्वयभोग्यं कारावासनिवासदण्डम्। कारागृहान्निर्गत्य एकविंशत्यधिकैकोनविंशतिशततमेशवीय वर्षे स उच्चतरशिक्षालाभाय काशी-

विद्यापीठमन्वगात् । तस्माद् विद्यापीठात् सः शास्त्रि पदवीं लब्धवान् । विद्यापीठे शिक्षार्जनानेहसि महादार्शनिकस्य डॉ० भगवान दासस्य प्रभावस्तमावर्जितवान् । तस्य देशप्रेमभावना ततोवलमलब्ध । सः पुनः राजनीत्यां सक्रियं भागमादातु मुपचक्रमे । भारतसेवकसमाजेऽपि स कार्यमन्वतिष्ठत् । १९२१ तमेशवीयाब्दात् १९४७ तमेशवीयाब्दं यावदजस्रमान्दौलनेषु स आत्मानं प्रावर्तयत् । अष्टकृत्वश्च स गौराङ्गशासनेन कारागृहेऽक्षिप्यत । निःस्वार्थभावनया, कर्त्तव्यधिया, मातृभूमिभक्तिप्रकृष्टतया च सततं भारतसेवाकार्यकारित्वात् स जनतायाः श्रद्धाभाजनमभूत् । तस्य व्यक्तित्वं चतुरस्रतया अचकात् । महात्मगान्धि जवाहरलाल नेहरू-लाजपतराय-राजर्षि पुरुषोत्तमदासटण्डन प्रभृति नेतृणां सान्निध्यात् सोऽतितरामुददीपि ।

सप्तचत्वारिंशदधिकैकोनविंशतिशततमेशवीयवर्षे, सति स्वतन्त्रे भारते, शास्त्रि महाभागः प्रदेशीयशासनकार्यभार मवाक्षीत् ततश्च केन्द्रीय शासन कार्यधुरा मवहत् । तत्तद्विभागस्यमन्त्रित्वं स्वीकृत्य देशोन्नति विधायकानि बहूनि कार्याणि कृतवान् । स्वेन प्रज्ञापाटवेनात्मबलेन च भारतीयानां जनानां विश्वनेतृमण्डलस्य च स्वान्तेषु तत्सम्मानमवाप्नोत् ।

लाल बहादुरशास्त्री यद्यप्यल्पमेव कालं प्रधान मन्त्रित्व कार्यं कर्तुं प्राभवत् परं तस्मिन्नष्टादशमासगामिन्येवानेहसि सः स्वामनभिभवनीयां शक्तिमद्भुतां पुनीत पौरुषप्रियतां, सर्वहृदयहारिणीं देशभक्तिं च प्रादीदृशत् । स भयानकेभ्यः सङ्कटावर्तेभ्यो देशनावं निःसार्य तां तटी मानिनाय । तत्र तदलौकिकं नैपुण्यं विलोक्य, तदीयं दिव्यं साफल्यं च प्रेक्ष्य देशभारतस्यैव जनता न, सर्वाण्यपि राष्ट्राणि 'भारतस्य भाग्यं वस्तुतः शास्त्रिणः करकमलयोः सर्वथैव सुरक्षितं वर्तते' इत्यनुभवन्ति स्म । पाकिस्तानेन सार्धं सति तुमुले मृधे स यमात्मविश्वासं, यच्च पुरुषसिंहत्वं, यञ्च निर्भयभावं समुपस्थापितवान्, तत्सर्वमपि वीक्ष्य जनताया मानसं तम्प्रति श्रद्धाप्रणतिप्रणतमभूत् । यादृशं यशः पण्डित जवाहरलाल नेहरू अष्टादशवर्षाणि यावत् प्रधानमन्त्रित्वमूढ्वा न लब्धु मार्हत् तादृशं यशः सोऽष्टादशमासैरेवाध्यगच्छत् । शान्त्यर्थं कृतेन कच्छसमयेन कदाचित् पाकिस्तानदेशो मति भ्रमं प्रापितः । स देशः कल्पना मिमां विधातुं नाशकद् यदसौ म० गान्धिनः शिष्यो नेहरू-शान्तिनीतिसमुपासकः सरलहृदयो ह्रस्ववपुष्कः पूरुष एतावत्तया कठोरतया पदं निधातुं समुद्यतः स्यात् । वस्तुतो यावद् वैरिणो मदमर्दनं न क्रियते, तावत् सः अन्यथैव विचारयति ।

शास्त्रिमहाभागः संयुक्तराष्ट्र संघस्य महासचिवस्य शान्तिविषयि नीतिसमाश्लिष्टामभ्यर्थनामधिकृत्य न्यगादीत्—'पाकिस्तानदेशो यदेच्छेत् तदा विरामरेखा मुल्लंघ्य आक्रमणपरः स्यात् तदाक्रमणं वयमुदासीना भूत्वा सहेमहि, इत्येषाशास्मासु न कदापि निवन्धनीया; पाकिस्तानद्वारेण कृतेसति निर्देशोल्लंघने, तत्प्रतिक्रियावश्यमेव

बलपूर्वकं भवेत्' । शास्त्रिण एतेन वक्तव्येन सकलस्यापि पाकिस्तानस्य सर्वस्यापि च संसारस्य भ्रमएव न निराक्रियत, शास्त्रिणो दृढ सङ्कल्पशक्ति रसाधारणपुरुषता च सर्वत्र प्रथते स्म ।

लाल बहादुरशास्त्री महान् कर्मनिष्ठो बुद्धिमान् लोकदुःखनिराकरणनिहित-हृदयः प्रधीप्रवर आसीत् । स दारिद्र्यजनितानि दुःखानि सम्यगवेदीदेव न, अन्वभवच्च भृशम् । साधारणजनसमुदायस्याग्रे काः का दुस्तरा विषमाः स्थितयः सन्तिष्ठन्ते इत्येत-दादिकं कृत्स्नतया वेत्तिस्म अतः मन्त्रिणः प्रधानमन्त्रिणो वा पद मपि प्राप्य न सः साधुचरितः पथभ्रष्टोऽभवन्न चोन्मादप्रमादाभ्यां जित एव सञ्जातः । तदीय जीवनस्य एकैका घटी लोकतन्त्रस्य रक्षायां संवृद्ध्यां च, अथ च जनजीवननिमित्तेन सुख समृद्धि स्वस्थतानां च समुत्पादने संलग्नैव प्राप्यत । कर्त्तव्यम्प्रति जागरूकतायाः अतः परं किं सन्निदर्शनं दृष्टं स्यात् यद् अरियालूर रेलदुर्घटनानन्तरं स रेलमन्त्रित्वमेवोदसृजत् । १९५१-'५२ तमेशवीयवर्षसत्रे राष्ट्रियमहासभायाः संगठनस्य, '६२ तमेशवीयाब्दे च साधारणनिर्वाचनावसरे राष्ट्रियमहासभायाः अभ्यर्थिनां चयनस्य च भारस्तस्मा एव प्रदत्तोऽभूत् । तदीयायाः प्रतिभाया एवेदं फल मदृश्यत यन्न केवलं कामरूपेषु तामिल-नाडु प्रदेशे च भाषां लक्ष्यीकृत्य उत्थापितो विवादः शान्तिपूर्णयारीत्या संवृततां नीतोऽभवत् । नागानां पाञ्चाल प्रदेशवासिनां च समस्यामादाय समुपस्थितं प्रश्नं समाधातुं सः यं प्रयास मकार्षीत् स विस्फोट शङ्कां समूलमेवोन्मूलयामास । खाद्य-समस्यायाः समाधानाय वैदेशिकस्याक्रमणस्य निवारणाय निरोधनाय वा तत्कृताः प्रयत्नाः निःसंशयमभिनन्दनीया एव असिद्ध्यन् । सः पञ्चवर्षीय योजनां समाप्य एक वर्षीयां योजनां प्रावर्तयत् । अस्यां योजनायां खाद्यं रक्षाञ्चोद्दिश्य बलवत्तरं ध्यानं दत्तमभूत् । खाद्यान्न हेतो र्भारतस्य परान्ननापेक्षित्वं तस्मै नारोचत । तदर्थं सः कर्ष-केभ्योऽधिकाधिकतरसाधनान्याधुनिकानि कृषिहितान्युपकरणानि च दापयितुं प्राय-तिष्ट । प्रचुरतर मात्रायामन्नमुत्पादयितुं सोऽयाचत कर्षकान् । चेत्सैनिकाः स्वान-सूनपि हुत्वा देशं त्रायन्ते तदा कृषीवला देशार्थमन्धउत्पाद्य तं (देशं) जीवयन्ति ।

शास्त्रिणः कार्याणि तस्य पण्डित नेहरोर्युक्ततरोत्तराधिकारित्वं प्रमाणी कुर्वन्ति स्म । सत्यन्त्विदं स नैजेन कार्य सौरभेण पूर्ववर्ति महापुरुषकृतं कर्मसुवर्ण सुगन्धमयं कर्तुं मार्हत् । वर्मा-रूस-कनाडा-यूगोस्लाविया संयुक्तारवगणराज्यनैपाला-दिदेशान् प्रति तत्कृता यात्राः प्रमाणीकुर्वन्ति यदसौ प्रतिवेशिदेशान् स्वसुहृदः कर्तुं भृश माकाङ्क्षति स्म । इदमेवोद्देश्यं लक्ष्यीकृत्य सोऽमेरिका मपि जिगमिषति स्म । यदि स दीर्घतर मायुरलप्स्यत तदावश्यं राष्ट्रान्तरीयक्षेत्रेषु भारतं स्वकीयं यशः स्तम्भं स्थापयितुं प्राभविष्यत् ।

श्री शास्त्री पूर्णतया प्रजातन्त्रशासन प्रणाल्यां न्यश्वसीत् । सः समये समये विरोधिनामपि सभामाकार्य्य तदीयान् विचारान् ज्ञातुं प्रायतत । तदीयं कार्यमेतद् विरोधिवर्गमप्यप्रीणात् । रूसदेशस्य प्रधानमन्त्रि श्री कॉसीजिनानुरोधेन सः पाकिस्तानस्य राष्ट्रपतिना अयूबरवानेन सह सत्सम्बन्धं स्थापयितुं समुत्पादयितुं च शान्ति, यदा ताशकन्दं प्रस्थातुं प्रायतिष्ट तदा स विरोधिवर्गानपि आहूय तेषां विचारान् पर्यग्रहीत् ।

कस्येदं ज्ञातमासीद् यत् सत्सम्बन्ध-शान्ति-समुत्पादनाय ताशकन्दं गत्वा पुनः सः ततः परावर्तेत एव न । १०.१. '६५ दिनाङ्के नक्तं समाचार पत्राणि ताशकन्द वार्तायाः सफलता मुदघोषयन्; परं तस्या घोषणायाः सम्यक्पठनानन्तरं प्रत्यूष एव शास्त्रिणो निधनंश्रु त मजायत । भारतस्य जनता जडीभूतेवाभवत् । नेहरूनिधनशोक-व्यथा त्वासीदेव यथावत् स्थिता; द्वितीयमिदं शोकवज्रं कठोरेण दैवेन, हा, भारतोपरि क्षिप्तम् । इतिहासनिर्माणकर्तास्वयमेवेतिहासोऽभवत् । शान्त्यर्थं कृता ताशकन्दवार्ता तस्यामरस्मारकत्वं गता । तत्स्मारकं शान्तिदूतमिमं स्मारयितु मलम् ।

परमार्थतः शास्त्री लोकप्रियो नेतासीत् । शोणितं भूत्वा तदीयं, राष्ट्रभक्तिस्तत्र प्रवहति स्म । स एवास्मदीयः पूज्योनेतेदृग् जातो यो निर्धनतायामुत्पन्नो, निर्धनतायां जीवनमनयन्निर्धनतायामेवोपारमत । यदा अन्ये वहवोनेतारः स्वराज्ये प्राप्ते सति विपुलं धनमार्जयंस्तदा स भारतमातुः प्रियः पुत्रो देश सेवामेव नैजं धनं सुखं सर्वस्वं च मन्यते स्म । हन्त, यदा स दिवं गतस्तदा तस्य सकाशे न धरा न धाम न धनमेवाविद्यत । स महान् आत्मा ११. १. १९६६ तमेशवीय दिनाङ्के स्वकीयं नश्वरं भौतिकंपिण्डं विहाय नैजाव्यक्तरूप एव ममौ ।

लोकश्रद्धास्पदमभिनवः पुण्यमार्गप्रदीपः
सर्वाश्चिर्चयस्फुरण सुखदं देशसेवानुरक्तं
सौजन्यश्री भरतवसुधादत्त सर्वस्वरम्यं
श्रीशास्त्रिंस्ते धवलचरितं भारतस्यात्मभावः ॥



# श्रीमोरारजी देसाई

श्रीमद्भगवद्गीतायां 'योग' इत्येतस्य पदस्य प्रधानोऽर्थः 'कर्मयोग' इति, योगीत्येतस्य च पदस्य प्रधानोऽर्थः कर्मयोगीति मतोऽस्तीत्येतद् गीतास्वाध्यायशीलानां विदित मेव । तत्र कर्मयोगो वा कर्मयोगीत्यत्र यो हि विचारः प्रकटीकृतोऽस्ति स यदि दृष्टि पथे आरोप्यते तदा सम्माननीये 'श्रीमोरारजी देसाई' महाभागे कर्मयोगीत्येतद् विशेषण पदं वस्तुतः सम्यक् चरितार्थीभवति ।

श्रीमोरारजी कर्मसिद्धान्ते निदधाति दृढीयसीं प्रौढतरामास्थाम् । धृतकर्म-श्रद्धत्वात् तस्य, सफलतायां सः प्रसन्नो विफलतायाञ्च विषण्णो न दृष्टः । 'दी स्टोरी आफ माई लाइफ' इत्येतस्य स्वरचितस्य ग्रन्थस्य भूमिकायां सः स्पष्टमेव लिखति— 'विधे रस्ति नैजमपरिहार्यं विधानमित्येतन् मां मदीया जीवनानुभूतयो बोधयन्ति; न कदापि तल्लेख उल्लङ्घयितुं शक्यः; यत् किमप्यस्मास्वापतति तत्स्वकर्मणः फलमेव'। त्रिंशदधिकैकोनविंशतिशततमेशवीयाब्दे स राजनीतिकक्षेत्रे आत्मानमवातीतरत् । तदाप्रभृत्येव सोऽनारतं तत्र कार्यं कुर्वाणो विलोक्यते । एतस्मिन् सप्तचत्वारिंशद्वर्ष-व्यापिन्यनेहसि वहुला विविधा अनुकूलाः प्रतिकूलाश्च स्थितयः समुदपद्यन्त ता स्तस्मिन् विधे विधानं बलीय इत्येतमविचलं विश्वासं जनयन्ति स्म । परमेषा हि विधिविधानबलीयस्कता न तं कदापि कर्मपथात् स्रंसयितुमशकत् । दिनानुदिनं तस्मिन् कर्माचरणभावना प्रवलतां गतैव व्यालोक्यत । सः

'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन :<br>
मा कर्मफलहेतु र्भूर्मा ते संगोऽस्त्वकर्मणि' ॥

इत्येतस्मिन् गीता-वचने महीयसीं श्रद्धाशेमुषीं निबध्नन् कर्मसु प्रवर्तनमतितरां हितकरममंस्त । एवंविधा मङ्गलमया भावास्तेषां मानसे समुत्पन्नाः सञ्जायन्ते, तेषां व्यवहारे आचारे च परिणता भवन्ति यैः प्राक्तनेषु जन्मसु पुण्यकर्माणि कृतानि सन्ति श्रीमोरारजी महानुभावस्य पूर्व जनुःषु कृतपावनकर्मत्वं तस्य बाल्यादेव दृग्गोचरं भवितु मारभत ।

श्रीमोरारजी स्व मातरिपितरि च परां भक्ति न्यदधात् । सः प्रत्यह मध्ययनार्थं पाठशालामगमत् । न कदापि स बालान्तरमिव विद्यालयेऽनुपस्थितो जातः, विद्यालय-समये क्रीडासूपस्थितस्तत्र च भागं गृह्णन् समलभ्यत । सोऽध्यायनकालेतरकाल एव क्रीडासु रतोऽवाप्यत । तत्रापि सः समुचितामभिरुचिं पर्यपुष्णात् । स यदा यवीयस्या-

मेवावस्थायामासीत् तदैव तस्य पितोपरेमे । एकतः पितुर्दिवंगततैकतश्च गृहस्यार्थिक-स्थितेः कृशतरता तं शख्यतामनयताम् । बाल एव यदा स आसीत् तदैव यद्यपि तस्य पिता तं त्यक्त्वा स्वर्गवासी सञ्जातोऽथ च स यद्यपि जातविवाहोऽभवत् परं न सा सा अध्ययनपरिपन्थिनी दशा तं विद्यार्जनाद् विरतीकर्तुं प्राभवत् । निर्धनत्वं, बालविवाहः, पितृराहित्यं च युवानमवश्यमेवोन्नतिमार्गात् स्रंसयन्ति परं तं तमभावं धैर्येण सहमानः स विद्याध्ययने मनोन्ययूयुजत् नवतारुण्योदयात् प्रागेव सः कालेजीय शिक्षां गृहीतु-मारभते स्म । स गृहे बालानध्याप्य प्राप्तया च च्छात्रवृत्त्या स्वपरिवारम्प्रति अल्पा-मार्थिकीं सहायतामपि दातुं प्रायतिष्ट । ज्येष्ठबन्धुत्वात् परिवार-भारो गुरुतरस्तस्मि नापतत् । तस्मिन्नल्पीयस्यपि वयसि सः स्वधर्मं स्वकर्त्तव्यञ्च गम्भीरतया भृशमवोढ । तस्य तद्बाल्यमाप्तमिव समलक्ष्यत । बाल एव सः स्थविरत्वप्राप्तविवेकेन सभाजितः । आयुषोदशमे वर्षे वङ्गभङ्गान्दोलनं निशम्य सोऽजहाच्चाय; मायुषश्चतुर्दशेऽब्दे लोक-मान्यस्य तिलकस्य धरणं विज्ञाय वैदेशिकवस्तूपयोगमहासीत्; द्वाविंशतिवर्षवयस्कोऽसौ स्वजात्यां यौतुकग्रहणकुरीतिं विरोद्धुं प्रतिज्ञां कृतवान् यन्नाहं तस्मिन् विवाहे समन्वितो भवेयं यत्र सा कुरीतिरनुस्रियते । मैट्रिकपरीक्षामुत्तीर्य स मुम्बय्यां विल्सनकालेजेऽभव-दन्वितः । तत्र स तं छात्रावासमध्यवसत् यत्र वासे भोजने च न शुल्कः परिगृह्यते । बाल्यादेव सः स्वयमेव स्वहस्ताभ्यां कार्यं मकार्षीत् तदीयोऽयं स्वभावस्तस्मिन् छात्रावासे सुदृढतां प्रशस्तताञ्च लभते स्म तत्र वसन् सः प्राकृतिक्यां चिकित्सायां रुचिं निदधत् व्यायामोपवासादिना शरीरं नीरोगं बलवच्च विधातुं कृत्स्नतया स्वकीयं चेत आवर्जयत् ।

श्रीमोरारजी यवीयस्कतात एवादर्शयुवत्वेन मतोऽभूत् । न तस्मिन्नपि वयसि स नाटक-चित्रपटादिषु रुचिं मदीदृशत् । क्रिकेटाख्यक्रीडनेऽवश्यं सोऽरज्यत् । न क्रिमपि व्यसनं तदापि समलक्ष्यत । प्रथमन्तु तस्यकृते व्यर्थव्ययिता सम्भवैव नासीत् परं न प्रकृत्यैव सा तस्मा अरोचत । स दवीयोऽपि स्थानं पत्त्यैवायासीन्न किमपि वाहन मशिश्रियत ।

तेषु दिवसेषु श्रीमोरारजी राष्ट्रप्रेमपरकेषु भाषणेषु स्वकीयं मनो भृशं प्रवर्तयन् प्राप्यत । स मुम्बयीमधिवसन् सरोजिनी नायडू–गोपालकृष्णगोखले–लोकमान्यतिलक–भूलाभाईदेशाईप्रभृतिनेतृणां सम्भाषणानि ध्यानेनाश्रृणोत् परं न तदा राजनीत्यां सक्रियं भागमगृह्णात् । पञ्चदशाधिकैकोनविंशतिशततमेशवीयाब्दे राष्ट्रियमहासभा (कांग्रेस) धिवेशने स्वयं सेवकत्वेन सोऽवश्यं कार्यमकरोत् ।

श्रीमोरारजी कठोरं परिश्रमं कृत्वा विश्वविद्यालयस्योच्चतरां बी. ए. परीक्षां प्रथम श्रेण्यामुदतरत् । स यद्यपि एम. एस-सी. भूत्वा प्रोफेसरो भवितु मकामयत परं

परिस्थित्यनुरोधस्तदिच्छायां बाधामजनयत् सोऽष्टादशाधिकैकोनविंशतिशततमेशवीयवर्षे अहमदाबादे उपमण्डल-शास्तृ-पदमध्यास्त । द्वादशवर्षाणि तत्र कार्यं मकरोत् । स महान् योग्यः कर्मठः कुशलः शास्ता मतोऽभवत् । परं प्रकृत्या स आसीद् राष्ट्रिय-भावनावान् मानवः । अतः स न तत्र कार्ये स्वजीवनं नेतुं प्राभवत् । परिवारगता जनास्तु तत्पदे कार्यं कर्तुमेवान्वरौत्सुः परं राष्ट्रभक्त्युद्रेकस्य नितरां प्राबल्यात् जन्मनोनिर्धनतानलतापेन सन्तप्यमानोऽपि स राष्ट्रस्याह्वानं नोपेक्षितु मशक्नोत् । वैदेशिकभृत्यताबन्धनादात्मान सोऽमूमुचत् ।

नभोगुणग्रहसोमाब्दे श्रीमोरारजी सविनयावज्ञान्दोलने आत्मानं प्रावीवृतत् । त्रिः कारादण्डं सोऽवाप्नोत् । एकत्रिंशाधिकैकोनविंशतिशततमेशवीये वर्षे सोऽखिल-भारतीय राष्ट्रिय महासभायाः सदस्योऽभवत् । १९३७ तमेशवीयवर्षे राष्ट्रियमहासभा (कांग्रेस) याः प्रथमे सर्वकारत्वे स राजस्वमन्त्रिपदं व्यभूषमत् । १९४६ तमेशवीयेऽब्दे मुम्वईशासने गृहमन्त्रित्वं राजस्वमन्त्रित्वञ्चावहत् । १९५८ तमेशवीयवर्षे मुम्वय्यामेव मुख्यमन्त्रिपदमध्यास्ते स्म । तत्र च १९५६ तमाब्दपर्यन्तं कार्यमकार्षीत् । शुष्कतायां, सुदृढतया, किञ्चादर्शवादितायां स वल्लभभाई पटेल इव मतोऽभूत् । श्रीजवाहलाल नेहरू प्रधानमन्त्रित्वे केन्द्रीयमन्त्रिमण्डले बहूनि पदानि व्यभूषयत् ।

अस्ति श्रीमोरारजी देसाई पदेऽगृध्नुः । तस्य प्रकृत्यां न वर्तते दुरभिनिवेशो न च निन्द्या पदस्पृहा । तदीयेयं विशिष्टता कामराजयोजनावसरे स्फुटतयैव दृष्टाभवत् । न देसाई महाभागः प्रपञ्चप्रियः । न तत्र विद्यते दम्भः । स तु मनसि वचसि कर्मणि च निश्छलः स तु सहोदर इव सुकृतस्य, सार इव सारल्यस्य पोषक इव च शुचितायाः प्रतिभाति । न तत्र विद्यते कपटः । स तु मनसि वचसि कर्मणि च पुनीतः । तदीयैषोदात्तता श्रीलालबहादुरशास्त्री किञ्च श्रीमती इन्दिरागान्धी प्रधानमन्त्रिपदोन्-मुखतायां यदा समतिष्ठत अथ च यदा श्रीशास्त्री श्रीमती इन्दिरागान्धी च प्रधानमन्त्रि पद मध्यासाते स्म तदा लोकेन सम्यगदर्शि ।

वस्तुतः कामराजचक्रप्रवर्तनारम्भात् तदवसानं यावत् श्रीमोरारजी महाभागस्य जीवनं बहुषु संघर्षेषु गच्छद् व्यालोक्यत । स्वाभिमानप्रियत्वात्, आत्मसम्मानानुरा-गित्वाच्च स तत्र तत्र लोभं समवृणोत् यत्र यत्र तस्य स्वाभिमानप्रियता आत्मसम्माना-नुरागिता च नाप्रीयेताम् । अस्ति सः सत्यपक्षप्रशंसकः । न सः कस्मिन्नपि द्वेष्टि । अतः यद् भवति समुचितं तन्मनोऽभिमतं सत्यञ्च तदवश्यं प्रकटीकरोति । १९५६ तमेशवीयवर्षे बंगलौरे अखिलभारतीय रा० महासभायाः ( कांग्रेसस्य ) समितौ कांग्रेसाध्यक्षकार्यविधिप्रसङ्गे सति प्रारब्धे, प्रस्तावे निहिते सति, सः स्वकीयं विचारं स्पष्टतया न्यदधात् । तदीयः स विचारस्तस्य न्याय्यतामभिव्यनक्ति !

ऋषिरसग्रहविध्वब्दे मन्त्रिमण्डलस्य विरचयिष्यमाणस्य मध्ये प्रतिष्ठायाः स्वाभिमानस्य च हेतोः श्रीमोरारजी नात्मानं समावेशयितुमभ्यलषत परं राष्ट्रहितं विमृश्य सम्मान्य सुहृज्जनानुरोधञ्चानुगृहीतुं मन्त्रिमण्डलान्तर्गतोभवितुं स्वां सम्मतिं प्राददात् परं स तन्मन्त्रित्वस्वीकरणं विषपानमेवामन्यत । वित्तमन्त्रिपदाधिष्ठितः स राष्ट्रस्यार्थिकीं स्थितिं समुत्थापयितुं सफलताप्रदं प्रयासं कृतवान् ।

चतुः सप्तत्यधिकैकोनविंशतिशततमेशवीयाब्दे सौराष्ट्रविधानसभां भङ्क्तुं युवजनान् हिंसोन्मुखान् विलोक्य तांस्ततो विरमयितुं विधानसभाञ्चामर्दयितुं श्रीमोरारजी अहमदाबादे आमरणानशनं प्रारभत । यावज्जना युवानश्च सभामाकार्य मम मन्तव्यं शान्त्या न श्रोष्यन्ति तावत् तदनशनं स न त्यजेदिति सोऽचकथत् । अन्ततो गत्वा जनाः सर्वे तन्निर्बन्धं स्वीकृतवन्तोऽनशनं स त्यक्तवान् । १९७५ तमे वर्षे सः सौराष्ट्रे निर्वाचनं कारयितुं श्रीमती मिन्दिराञ्च तदर्थं सन्नद्धीकर्तुं मामरणा नशनं विहितवान् । सौराष्ट्रे, ततो निर्वाचन मजायत । स विजय मवाप्नोत् स्वाभीप्सिते । वस्तुतः स राजनीतिक्षेत्रे कार्य्यं कुर्वाणोऽनेकेषु संघर्षेषु न्यपतत । श्रीगोविन्दवल्लभस्य निधनसमयादद्यपर्यन्तं तस्मिन् बहवोऽन्याया अघटन्त परं स तान् धैर्येण सहमानो विरोद्धुञ्च युध्यमानः प्राप्यत । इदं सर्वमेव कार्यं सोऽन्यायं निवारयितुमेव व्यदधात् न च पदलिप्सया ।

अस्ति श्रीमोरारजी देसाई सत्यानुगामी न्यायप्रियः । न सत्य निष्ठस्य न्यायपरस्य हृदयं भवत्यपवित्रं न तत् कस्मिन्नपि द्वेष्टि न च क्रुध्यति । सत्याचरणं न्यायरक्षणञ्च तदभीष्टं भवति । सत्याराधकं न्यायशीलं जनाः प्रायेण शुष्कं कठोरं मन्यन्ते अतः श्रीमोरारजी महाभागोऽपि तद्विधो मतो भवति । वस्तुस्थितिस्तु नेदृशी । यस्य हृदयं श्रीमद्भगवद्गीतायां भृशं रज्यति, रमते च तद् श्रीवापूकृताया मात्मकथायां यश्च तदनुकूलमाचरन् वीक्ष्यते, यः कृत्रिमतायां जुगुप्सते, प्रकृत्या यः साधुस्वभावः संयमरतः शीलवान् मानवस्तं जगदिदं काठिन्येनैवाभिज्ञातुं शक्नुते । जीवन मस्त्याकाङ्क्षावदिति स मनुते परं तद्वर्तिनी तीव्रता न तमभिभवितुं शक्नोति । न सः पदमनुधावति यदपि पुरः समुपतिष्ठते तत् सोऽभ्युपयाति । तमधिकृत्य 'अप्रियं प्राप्य न स उद्विजते, प्रियञ्च प्राप्य न प्रहृष्यतीत्येतद् यद्युक्तं स्याद् तदा नानुचितं भवेत् ।

अस्ति श्रीमोरारजी महानुभावो गुणोपासकः । आधुनिकोऽनेहा यां यां सर्वजनीनां विंशिष्टतां निदधाति स तामाद्रियमाणः स्वकीयेनाचरणेन व्यवहारेण च सर्वथैव भारतीयतामुत्थापयति । अस्ति सोऽनुशासनस्य महान् समर्थकः । श्रीमहात्म गान्ध्युपदिष्ट पथमनुसरदेव तदीयं जीवनं दृग्गोचरं जायते ।

अस्ति साम्प्रतं सः प्रधानमन्त्री । स पदमिदं कण्टकमयं किरीटं मन्यते । सः केन प्रकारेण तद्विधं मुकुटं धारयेदिति साधु वेत्ति । जानाति च केन प्रकारेण राष्ट्रं सेवेत । प्रधानमन्त्रिपदाधिष्ठितो भवन् सः स्वभावश्रितया स्वकीयया सुदृढया निष्ठया देशं देशवासिनश्च सेविषीष्ट इत्येषास्ति शुभकामना ।

श्रीदेसायि मुरारजीसहृदयं मन्त्रिप्रधानं बुधं
लब्ध्वा भारतवर्ष देशजनता जाता प्रसन्नाधुना
सर्वाङ्गीणतया भवेत् समुदितात्यन्तं जगत्यां च सा
मन्त्रित्वे तनुते दृढं मतिमिमां तस्य प्रधाने भृशम् ।।

यस्य प्रौढशये सुरक्षित मिदं राष्ट्रस्य नो गौरवं
संस्कारा अथ शिष्टता सुरुचिरा तन्त्रञ्चलोकश्रितं
श्रौतस्मार्तविचार वृत्तमहिमानेहाश्च भावी शुभः
इत्येतत् सकलं प्रसन्नहृदयं सोऽयं हि धन्यः सुधीः ।।

दारिद्रयं ह्रियतां समस्तजनता धर्मे च संस्थाप्यताम्
आचारे विमले शुभे च चरिते सन्नीतिमार्गे त्वया
ज्ञाने कर्मणि मञ्जुले च सुखदे श्रेयस्करे मङ्गले
भक्त्यां भूतपतेश्च लोकहितकृत्स्वान्त स्त्वमस्यां क्षितौ ।।

अज्ञानोदधिमग्नमानवगणं त्वं सत्वरं चोद्धर
तां शिक्षां वितनुष्व भारतगृहे कुर्वीत या मानवान्
लग्नान् कर्मणि सर्वथार्थजनके विद्याप्रकाशं गताः
मोदेरन् नितरां च ते स्वदयितापुत्रान्विताः सर्वदा ।।

पश्यन् शतं हि शरदो मतिमन् मनस्विन्
स्वस्थो भवन् विमल मानसधीकुशाग्र
चोत्थापयन् प्रतिदिनं प्रियभारतन्त्वं
सम्प्रीणयन् जनकुलं भवताद् यशस्वी ।।

—××—

# प्रो० चिन्तामणिः शुक्लः

स्वकीयं देश मेव यो नैजमिष्टदेवं मन्यते; तदाराधनात् परं न यः कस्याप्याराधनं गुरुतर मवगच्छति, यस्तस्योत्थान मेव स्वकीय मुत्थानं तस्योत्कर्ष मेव स्वकीय मुत्कर्षं ञ्चवेत्ति; यद्दुःखं तदीयं दुःखं किञ्च यत्सुखं तदीयं सुख मस्ति; यस्य सेवामेव सः सदैव स्वकीयं सर्वस्वं ह्यवगच्छति सोऽनुकरणीय चरितश्चारुचेताश्चिन्तामणिः शुक्लो भारतभुवोऽद्भुतं किमप्यभिराममाभरण मिव विभाति ।

स तेषु कतिपयेष्वङ्गुल्यवच्छेद्येषु मानवाग्रयेषु गण्यते येषां स्वान्ते न कपटस्य लवो नच्छलस्यैव लेशोऽवाप्यते; येषां मानसं न कश्चिदपि वैभवविलास आवर्जयितुं शक्नोति; येषां जीवनश्रीः कामपि सात्त्विकीं सरला मार्जवमयीञ्च रमणीयतां परिपुष्णन्ती परिस्पन्दते; येषां प्रकृतिः स्वप्नेऽपि न कस्याप्यनिष्टं चिन्तयन्ती दृष्टा भवति; येहि अन्यायं प्रतिकर्तुं सकृदेव नासकृत् स्वकीयानसूनपि बलिवेद्यां होतुं लोकेन समुद्यता हि दृश्यन्ते; न ये श्रम कठोर साध्यं मपि सत्कार्यं मनुष्ठातुं कदाप्यालस्यं विदधतोऽवाप्यन्ते; ये परेषामुपकारात् कदापि नैज मानन न व्यावर्तयन्तः संलक्ष्यन्ते. ये नैज कार्यमपि स्वीयं हितमप्युपेक्ष्यावज्ञाय च परकार्य साधनाय परहिताचरणाय चानिशं सोत्साहहृदयाः लक्ष्यन्ते; ये क्षणमप्येकं न प्रमादं बिभ्राणा न च श्लथतामेव श्रयन्तः केनापि विलोक्यन्ते; येषां जीवनं जातु ना कर्मण्यः वीक्ष्यते; ये सदैव स्वदेशनिर्मितेषु वस्तुष्वेव प्रकृष्टां प्रगाढां चाभिरुचिं निदधत एव संलक्ष्यन्ते; येऽजस्रं स्वदेशीयेभ्यो यन्त्रतन्त्रेभ्यो निष्पाद्यमानानि वासांसि वसते; येषा मवस्थितयोऽकृत्रिमाः ऋजुतराश्च, अथ च विचारा उदात्ततरा वलक्षतराश्च पर्यवलोक्यन्ते; ये नित्यं महापुरुषाणा मध्वान मेवाधिरूढाः प्राप्यन्ते, ये स्वदेशस्य सभ्यतां संस्कृतिञ्च संश्रयन्तो भजन्तो वर्धयन्तश्च अनारत मीक्ष्यन्ते; ये दम्भे जुगुप्सां, हिंसायां घृणां, पिशुनतायां च परुषतां निदधत; आसाद्यन्ते ये हि सत्ये शिवे सौन्दर्य्ये च मनः प्रीतिं निबध्नन्तः सततं लभ्यन्तेऽतः सोऽस्ति भृशं लोकप्रियः ।

चिन्तामणि शुक्लः सप्तषष्ठ्यधिकैकोनविंशति शततमे वैक्रमे संवत्सरे राजस्थानप्रदेशान्तर्गत धौलपुरे कान्यकुब्जविप्रान्ववाये जनु रग्रहीत् । देश-प्रेम सः स्वपित्रोः ज्येष्ठस्वसु र्मनोरमायाश्च सकाशाद् रिक्थत्वेनाध्यगमत् अतस्तस्मिन् किशोरे तत् तदैवोन्मीलद् दृष्टमभूद् यदा स हाई स्कूल श्रेण्याश्छात्र आसीत् । बाल्यादेव स विद्यार्जने परामेवाभिरुचिं न्यदधात् तस्मात् यदाऽसावष्टम्याः श्रेण्याआसीद् विद्यार्थी

तस्य तीव्राव्युत्पत्तिर्निशिता च प्रतिभा तदीयाश्छिक्षकान् नितरामा वर्जयताम् । स उक्तायां कक्षायां प्रथमं स्थानं प्रथमाञ्च श्रेणी मविन्दत् तस्मात्कारणात् राजकीयां मासिकच्छात्रवृत्ति ( कदाचिद् दशरूप्यकमिताम् ) प्राप्नोत् । दशम्यां कक्षायां ( हाई-स्कूल परीक्षायाम् ) यदा सोऽध्यगीष्ट महात्मगान्धि प्रवर्तितस्वातन्त्र्यान्दोलेन स्वकीयां मतिं मानस मेव च न न्यवध्नात् सक्रियं भागञ्च सोत्साह मगृह्णात् तस्मात् न केवल माङ्ग्ल शासन प्रदत्तां छात्रवृत्ति मुपसमहार्षीदपितु षण्मासभोग्य-कारावास दण्डेन तमदण्डयत् । आकाशगुणग्रहशशीशवीयाब्दे स देश-सेवापराधे प्रथमं कारावास दण्ड मविन्दत् । यस्मात् कालादसौ युवक संघस्य मन्त्रित्वं बिभ्राणो ग्रामेषु राष्ट्रियाञ्चेतनां प्रसारयितु मात्मानं प्रावीवृतत् तस्मादेवानेहसः स आंग्लशासनस्य दृष्टि पीडयितु मारभत । तत् तस्योपरिष्टात् स्वकीय दृष्टेः अवहिततया प्रतिष्ठापन मति-तरामपेक्षितममंस्त । यत्रापि सः समिद्धदेशप्रेमपावकस्तेजोमय आलोकोऽगमत्, यत्रापि सोऽभाषत आंग्लशासनस्य गुप्तचरा स्तमन्वगमन् । सञ्जातः स क्षिप्रमेवांग्लशासक शासनाध्वनि भयावह- प्रत्यूहः । एकदाहि यदा स 'राया' सभायां संभाष्य न्यवर्तत आरक्षिणां ( पुलिस कर्मचारिणां ) सङ्केतं प्राप्य कश्चिच्छबरो लगुडेन तं कठोर-तया प्राहरत् । जातश्च स आहतः । तस्य देशसेवायै कृतानि च तानि तानि कार्या-ण्यपि वस्तुतस्त्वांग्लशासनं तं धर्तुं भृश मनूनुदन्नतः लवण सत्याग्रहस्य प्रत्यूष वेला-यामेव स त्वरयैव शासनेन धृतो दण्डितश्च ।

निर्धनकुलोत्पन्नत्वात् चिन्तामणेः, तं तदीयं च परिवारम्प्रति स देशप्रेमपथो भूयांस्यसह्यानि कष्टान्यसृजत् । तस्य कारावासकाले देशभक्तस्य तस्य देशभक्ता हि मातृपित्रादिस्वजनाः स्वजीवन मार्गं मनेकविधोपप्लवावृतमेव प्राप्नुवन् । सङ्कटमयानां तेषामह्नामतिवाहनं राष्ट्रियताराष्ट्रियसंस्थानावलम्वनाभावे नितान्तमेव कठिन मासीद् वा सम्भवमेव नासीत् ।

चिन्तामणिः शुक्लो देशस्वातन्त्र्यायोधने भागं गृह्णन् या विपद आपतन् न तासु कदापि धीरता ममुञ्चत्, न निराशाम् अगमत्, न च अनुत्साह मेव अशिश्रियत् तस्य तत्रापि कार्यत्रितयं युगपदेव सञ्चलद् दृष्टमभूत् । जीवननिर्वहण-परिवारपालनयो र्निमित्तेन सोऽध्यापने, ज्ञानस्य योग्यतायाश्च संवर्द्धनप्रयोजनेन विद्यार्जने, देशस्य पर-तन्त्रतायाः दलनोद्देश्येन देशाराधने च आत्मानं न्ययूयुजत् । यत् किमपि धन मध्या-पनेन सोऽविन्दत् तेनैव सःस्वं स्वकुटुम्बञ्चागोपीत्, यमपि समयं यदाप्यसावध्यगमत् तत्ससदोपयोगं स उच्चतम शिक्षां यावदात्मान मासादयितुं व्यदधात् । गच्छता कालेन स विद्याव्यसनी राजनीत्याम् इतिहासे हिन्दीसाहित्ये च एम. ए. सञ्जातः साहित्या-लङ्कार-साहित्यरत्नोपाधिविभूषितश्चाजायत । यदाहि स हाई स्कूल कक्षायाश्छात्र

आसीत् चित्रकलायाञ्च तदीयो महाननुरागः संलक्षितोऽभूत् । तदीया सा चित्रकलाभिरुचिः सत्वरमेव तं तत्रापि आचार्यता मनैषीत् । देश-सेवां कुर्वाणोऽसौ त्रिकृत्वः कठोरेण कारादण्डेन दण्डितोऽभवत् । स्वभगिनीप्रतिष्ठापितराष्ट्रिय महिलासेवा श्रमेऽवैधसाहित्योपलब्धत्वाच्छासन निग्रहणभाजनं समाजायत किञ्च द्वित्रिंशदधिकैकोन विंशतिशतत मेशवीयसम्वत्सरे षण् मासान् यावत् स देशभक्तः कारावास कष्टान्यसहत । स एव न, तदीया पत्नी व्रजेश्वरी, तच्छ्यालस्नुषा राधा अथ च तत्पिता पण्डित गुरुदेवशुक्लश्च कारासद्मनि शासनेनांग्लीयेन प्राक्षिप्यन्त । तदेवं स तत्परिवारे जनाश्चात्मानं 'देशसेवास्ति प्रतिदेशनिवासिनः प्रमुखं कर्त्तव्य' मिति विचिन्त्य सहर्षं देशवरिवस्यायां समर्पयन्ति स्म । बुलन्दर शहर मण्डले 'निठारी' ग्रामे समायोजिते एकस्मिन् राष्ट्रियसम्मेलने तत् (चिन्तामणि) कृतं भाषण मापत्तिजनकं मतमभवत् तस्मात् द्विचत्वारिंशदधिकैकोनविंशतिशततमेशवीयाब्दे पुनः सः वन्दीकृत्य काराकोष्टे षण्मासान् यावन्न्यधीयत । तस्मिन् कारावासानेहस्येव तत्पिता च दिवंगतो जातः । पितुर्वियोगजनितञ्च दुःखं कारागृहस्थितं तं भारतमातृभक्तप्रवरं नितरामदुनोत् । कारागृहकष्टान्युपभुज्य यदैव पितृनिधनोद्भूतसन्तापसन्तप्तः स्वसदन मागमत् द्वितीया चापत् तस्योपरि अपप्तत् । तस्य देशभक्तमाता च त्रिचत्वारिंशदधिकैकोनविंशति शततमेशवीयवर्षे नाकं प्रातिष्ठत । मातृनिधनकाले सोऽयं निःस्वार्थं देशसेवासाधना संलीनो राष्ट्रैकाराध्यदेवो दिव्यचरितः अलीगढ नगरे कायस्थ पाठशालाख्यसंस्थायामध्यापयन् विद्यार्थिषु च राष्ट्रप्रेम सञ्चारयन् स्वकालक्षेपे संलग्नो यदाऽऽसीत् तदैव मथुरामण्डलस्य सुविदितो देशभक्तः प्रो० कृष्णचन्द्रो वृन्दावननगरपालिकाध्यक्षस्तं व्रजावनि नेतारं नगरपालिकाया हाईस्कूलेऽध्यापनार्थं माहूतवान् । तदेवं स भूयोराष्ट्रियः कर्मठः कार्यकर्ता जनताया देशस्य च सेवामधिगन्तुं सदवसर मनुकूलमलब्ध । निर्दिष्टायां शिक्षणसंस्थायां पाठयन् स महात्मगान्धि मार्गगामी देशभक्तो यदा नगरपालिका जनसंघाधीनतां गतः, पुनः विपदि निपातितः । जनसंघीयाधिकारिभिः स राष्ट्रियमहासभानीति परिपोषकः सुधी विद्यालयात् पृथक् कृतः । जीविकायामपहृतायां सत्यां परमकष्टानि तं व्यथयितु मारभन्त परं स धीरधौरेयो जनसंघस्य तमन्यायं विरोद्धुं समुदयतत । सः स्वकीये प्रयासे सफलः सञ्जातः । उच्चन्यायालयस्यैतिहासिको निर्णयो जनसंघस्यान्यायपरमभिलषितं निरास्थत् । पुनः स विजेता विद्यालये स्थानमध्यगच्छत् । शुक्लस्य तस्यासौ विजयो वस्तुतः सत्यस्य-गान्धिवादस्य—विजय आसीत् । जीविकाविहीनतानेहसि तस्य वीरपत्नी जानकी देवी आदर्शपत्न्या आदर्शं निहितवती । सा गार्हस्थ्यम्प्रति सद् गृहिणी धर्म पालयन्ती पत्युर्देश-सेवायामभिनन्दनीयं योगं प्रदत्तवती । शुक्लो हि स तस्मिन् वर्तनाभावसमये साहित्यं सृष्ट्वा जीवनमत्यवाह-

यत् । 'मथुरा जनपद का राजनीतिक इतिहास' नामक ग्रन्थस्तस्मिन् संघर्षकाल एव प्रणीतोऽभवत् ।

चिन्तामणिः शुक्लो दासतानेहसि वैदेशिकं शासनं विरुन्धानो ऽजस्र मदृश्यत । सति भारते स्वतन्त्रे साम्प्रतं सः साम्प्रदायिकीं क्षोदीयसीं मनोवृत्ति प्रतिवदन् समाजवादिनीं विचारधाराञ्च परिपुष्णन् वीक्ष्यते । अस्ति सोऽन्यायासहिष्णुः । अन्याय दलनाय सोऽसकृत् अनशनं विदधातिस्म । तदीयानि सर्वाण्यपि देशसेवाविषयकाणि सामाजिकानि कार्याणि भवन्ति स्वार्थंरहितानि, अतः स देशे परमादरदृष्ठया दृष्ठो जायते । तस्योत्कृष्टतर उत्सर्गो मथुरा जनपदेतिहासे तु विशेषतश्चिर स्मरणीयोऽस्ति ।

चिन्तामणिः शुक्लो यथा महान् विद्वान् महान् वाग्मी वर्तते तथैव स महान् लेखकोऽपि वर्तते । तद्रचिताः कृतयः सन्त्येताः—

१. मथुरा जनपद का राजनैतिक इतिहास, २. विश्व का सरल इतिहास, ३. भारत पर चीनी आक्रमणों की ऐतिहासिक झांकियाँ, ४. फ्रांस की राज्य क्रान्ति एवम् नेपोलियन, ५. राष्ट्रियता के पितामह स्वामी विवेकानन्द, ६. भारत के रण बाँकुरे, ७. स्वर्गीय मोतीलाल नेहरू, ८. आदर्श जीवन की ओर, ९. सन् १८५७ की क्रान्ति के अमर शहीद, १०. सरदार पटेल की अन्तिम झाँकियाँ, ११. नेताजी सुभाष चन्द्र बोस, १२. सन्त और हरिजन, १३. चीन के इतिहास की रूपरेखा, १४. दासता के अभिशाप, १५. वृन्दावन के राष्ट्रिय आन्दोलनों का इतिहास, १६. भारत के इतिहास की रूपरेखा, १७. स्वातन्त्र्य युद्धों के मथुरा जनपदीय सेनानी । १८-२२. आगरा, अलीगढ़, एटा, मैनपुरी और बुलन्दशहर के राजनीतिक इतिहास, २३. स्वाधीनता संघर्षो की काव्यमयी झांकियां ।

निर्धनत्वाच्चिन्तामणि शुक्लस्य जीवनमृणग्रस्तमेव सतत मवर्तत । वार्धुषिका यदृच्छया तस्य शोषणं कुर्वन्त एव समलक्ष्यन्त । साम्प्रतं तस्य सुयोग्या देशभक्ता विद्वांसः सूनवोगार्हस्थ्यधुराधरणक्षमाः सन्त्यतः स तपस्वि शिरोभूषणं स्वकीये गुरुदेव भवनाभिधाननिकेतने स्थविरः सन्नपि देशाराधने संलग्न एव वीक्ष्यते । आचार्यं युगलकिशोराभिनन्दन ग्रन्थस्तत्प्रधानसम्पादकत्वे प्रकाशितः सोऽस्यां जरावस्थायामपि महान् कर्मण्य आस्ते ।

कष्टानि यः शुचिमतिर्निजदेशहेतोः । भूयांसि भारतभुवः सहते स्म भक्तः ;।
वाग्मी महान् प्रथितलेखकविज्ञवंद्यो जीव्याच्छतं हि शरदः सुजनाग्रणीः सः ।।



# वीर देशभक्त शिरोमणिः सावरकरः

भारतस्य स्वाधीनताया इतिहासे वीरसावरकरस्य नाम परमादरपूर्वकं गीतमस्ति। तस्य जन्म १८।५।१८८३ ईशवीये दिनाङ्के महाराष्ट्रप्रदेशान्तर्गतनासिकमण्डलेऽभवत्। बाल्यादेव सावरकरो महापुरुषाणां जीवनचरिते भारतीयेतिहासे च महतीमभिरुचिं निदधौ। तस्य पितरौ मातृदुर्गाया उपासकावास्ताम्। स ताभ्यां रामायण-महाभारतयोः कथाः, शिवाजि-राणाप्रतापादीनामोजस्वीनि जीवनचरितानि च स्वशैशव एव श्रोतुं सदवसर मधिगच्छति स्म; अतस्तस्य मनसि देशभक्तेः भावनाः उत्थिता भवितु मारभन्त। यदा हि स दशवर्षवयस्क आसीत् तदा प्रभृत्येव पिता तं भगवत्या दुर्गाया वरिवस्यायां प्रवर्त्तयामास। सोऽपि श्रद्धया भक्त्या च दुर्गामातर मुपास्ते स्म। तस्य तत्र भक्तिभावं वीक्ष्य तत्पिता भृशमप्रीयत। जगदम्बार्चना सच्चरितानां महामानवानाञ्च पावनकथा स्तस्मिन् वाले मङ्गलमयं प्रभावं प्रातिष्ठिपन्। स्वदेशं पराधीनं विज्ञाय सोऽर्भकः स्वराष्ट्रं परतन्त्रतात उन्मुक्तं विधातुं मनसि प्रतिज्ञां कुर्वन् प्राप्यत। वाल्य एव सः शौर्य्य प्रियासु क्रीडासु रुचिं दर्शयन् प्रत्यलक्ष्यत। स धनुषा कुन्तेन च क्रीडन् मल्लशालायां मल्लविद्यायाञ्च प्रगाढां प्रीतिं परिगृह्णंश्च अध्यगम्यत। वीरतानुरागं तं वालाः स्वकीयं नेतारममंसत। बाल्ये तस्य, पाठशालां गत्वा तत्र पठनं किञ्च स्वसमवयोभि र्बालैः समं वीरताधायिकासु क्रीडास्वभ्यसन मित्येतत्कार्यद्वयमेवावलोकितमभूत्। एकदा हि ग्रामे महामारी प्रसृता। मृत्यु स्तरुणान् वालांश्च सर्वानपि कवलीकर्तुं मारेभे। आंग्लशासनेन तस्या महानाशकारिण्या रुजाया ग्रामं पातुं न कोऽप्युपायोऽवलम्बितः। तस्माद् देशभक्ताः केचन रुष्टा भूत्वा आंग्लमधिकारिण मेकं निजघ्नुः। ते देशभक्ता 'चाफेकर बन्धवः' इत्येतया ख्यात्या ख्याता आसन्। तत्कृता सा हिंसा आंग्लशासनं कोपाविष्टं कृतवती। चाफेकर वन्धवस्तेनागृह्यन्त शूले चारोप्य व्यापाद्यन्त। समाचारपत्रेभ्य इदं सर्वमपि ज्ञात्वा स्ववयस्यैः सह स निष्क्रयार्थं प्रत्याशुश्राव। तदेवं तस्मिन् पृथुके देश-प्रेम भावना विकासं प्राप्नुवन्ती वृद्धिञ्च गच्छन्ती वीक्षिताभवन्।

यदा हि सावरकरः कालेजस्य छात्र आसीत्, स 'मित्रमेला' इत्येतदाख्यां संस्थामसृजत्। तस्याः संस्थाया स्त एव सदस्या भवितु मार्हन् ये वपुषा मनसा धनेन च, एतावतैव न सर्वस्वेनापि देशं सेवितुं तत्पारतन्त्र्यञ्च छेत्तुं प्रतिज्ञा मगृह्णन्। सदस्येषु देश-प्रेम समुत्पादयितुं लोकमान्यतिलकसम्पादितं 'केसरी' पत्रमन्यानि च राष्ट्रियाणि

पत्राण्याकारितान्यजायन्त; देशभक्तानां महापुरुषाणां जन्मदिनानि ससमारोह मुत्साहेनायोजितान्यभूवन्, भाषणानि चायोज्यन्त संस्थया। संस्थाया सदस्याः स्वनेतुः सावरकरस्यादेशे स्वकीयं शिरोऽपि समर्पयितु मुद्यता अदृश्यन्त।

२२. १. १९०१ तमेशवीय दिनाङ्के इङ्गलेण्डस्य महाराज्ञ्यां विक्टोरियाया मुपरतायां सत्यां सावरकरः 'तात्या' इत्येतेनोपनाम्नाख्यातो मित्रमेलायां सभा माजुहाव। तत्र सः 'इङ्गलेण्डस्य राज्ञी अस्मदरातेः राज्ञ्यस्ति; अतः कस्माच्छोकः कृतः स्यादि'ति ब्रूते स्म। उदन्तमिमं समाचारपत्रेभ्यो ज्ञात्वा आंग्लशासनं संरम्भ मगमत्। सावरकरो फर्ग्यूसन कालेजान्नि सारितोऽभवत्। लो० तिलक एतत् सर्वमपि यदा विदितमकरोत् सहसा तन्मुखात् 'महाराष्ट्र प्रदेशे, मन्ये, पुनः शिवाजिना जन्म गृहीतमस्ति' इत्येतद् वाक्यं निरगमत्। लो० तिलकस्तं शुभाशिषानुगृह्य स्वकीयं सर्वविधं साहाय्यं प्रदातुं वचनं प्राददात्। सावरकरस्य वैदेशिकवासोदहनसम्बन्धिनीं योजनां लो० तिलकोऽनुमेने। तस्येमां योजनां कार्यपरिणतां वीक्ष्य सः (तिलकः) एष हुतभुक् वैदेशिकं साम्राज्य मप्येवमेव (वैदेशिकाम्बरराशिमिव) भस्मीकृत्यैव शान्ति प्राप्स्यती'ति वचो व्याहरत्। वैदेशिकानि वस्त्राणि, कोट-पेण्टटाय्यादिवेशविन्यासश्च दासतायाश्चिह्नमात्रमतो हेयं तदित्येतदुद्दिश्य सः (सावरकरः) तां योजनां देशस्य पुरो न्यदधात्। तत्र सः स्तुत्यां सफलतामपि लेभे। वैदेशिकपटदहनं समग्रेऽपि भारते दासताम्प्रति तीव्रां घृणा मुत्पादयामास।

फर्ग्युसनकालेजाद् 'बी. ए.' परीक्षामुत्तीर्य सावरकरो वैधीं विद्यामध्येतुं लन्दन मगात्। तत्र सः विश्रुतदेशभक्तश्यामकृष्णस्य सन्निकृष्टतां प्राप। स तस्माद् वासादिविषयिणीं सहायतां तु प्राप्नोदेव परं ततोऽपि महीयसीं गरीयसीं च देश-प्रेरणामपि प्राप्तवान्। तत्र स भारतीयेतिहासस्य यथार्थं स्वरूपं निधातुं बहून् ग्रन्थानजग्रन्थत्। तल्लिखितौ '१८५७ तमाब्दस्य स्वातन्त्र्य युद्धं' किञ्च 'सिक्खानां प्रेरणाप्रद इतिहासः' इत्येतौ द्वौ ग्रन्थौ भृशं लोकप्रिया वभवताम्। एतौ ग्रन्थौ भारतीयजनताया उपरि महान्तं प्रभाव मक्षिपताम्। स०भगतसिंहो नेता सुभाषचन्द्रश्च इत्येतौ च ग्रन्थौ विशाल संख्यायां विना मूल्यं जनतायां प्रदत्तावभूताम्। आंग्लशासनं तयो र्विलोपाय प्रायतिष्ट; परं नितरां न्यूनान्येव तानि पुस्तकानि प्राप्तान्यभूवन्।

सावरकर इटली-जर्मनी-रूसदेशानां क्रान्तिकृद्भ्योहि प्रेरणां विन्दमानस्तत्साहित्यञ्च धीमान् इङ्गलेण्डवासकारिषु भारतीयेषु जागृति मुत्पादयितुं बहूनुपायानशिश्रियत्। सः १८५७ तमेवर्षे सञ्जाते स्वातन्त्र्यसंग्रामे दत्तप्राणाहुतीनां कुंवरसिंहमंगलपाण्डे-लक्ष्मीबाई प्रभृतिहुतात्मनां स्मृतिदिनमायुयोज; विश्वविद्यालयीयच्छात्रेषु च सः '१८५७ तमवर्षस्य हुतात्मानो विजयन्ताम्' इत्येतद्वाक्याङ्कितं प्रपदकं स्वस्वान्त-

रीयेलम्बयन्त्विति प्रार्थयति स्म। लन्दने जातेयं घटना निखिलामपि जगतीं विस्मापयामास। अधिकारिणामाज्ञया गुप्तचरास्तत्सर्वमपि कार्यकलापं वीक्षितुं संलग्ना अभवन्। तत्रैव कार्यं मनुतिष्ठतस्तस्य सकाशे तेष्वेवदिनेषु, मदनलाल ढींगरा आययौ। सोऽपि प्रज्वलितदेशप्रेमानलमना आसीत्। सावरकरस्य सन्निधिस्त मग्निमुददीपयत्। तौ द्वावपि देशभक्तौ भारतीयजनताया उपरि भयङ्करात्याचार कारिणामांग्लाधिकारिणामग्रेसरं 'वायलीं' निहन्तुं निश्चयं चक्रतुः। योजना शीघ्रमेव रचिताभूत्। 'जहाँगीरहाल' स्थाने, सति समुपस्थिते महति जनसम्मर्दे, सहसा गोलिका भयानकेन शब्देन भवन मापूरयन्ती वायलीं कीनाशनिकेतनातिथिं चकार। यो हि ढींगरां धर्तुमधावत् स आंग्लोऽपि तेनैव ढींगरादेशभक्तवीरेण धराशायी कृतः। इत्थं निर्यातन कर्म निष्पाद्य स आत्मानं ग्राहयामास। १६।८।१९०९ तमेशवीयवर्षे सः वीरः शूलमारोपितः। भारतमातृभक्तस्य 'ढींगरा' वीरस्य तत्कार्यं निन्दितुं सर आगाखाँ-आयोजितायां शोकसभायां 'कार्यमेतन्निन्दनीयं हिंसापरकं सर्वसम्मत्या निन्द्यते' इत्येतत्-प्रस्तावे पठिते सति; सावरकर उत्थाय दृढतापूर्वकं 'सर्व सम्मत्या न' इत्येतदभिधाय प्रस्तावं व्यरौत्सीत्। 'सावरकरस्यैव' प्रेरणया वायली-हत्या संवृत्तास्तीत्येतत् तेन व्यतिकरेण निश्चिक्युरांग्लाः। तत्र अवस्थाने सति दुष्करेऽतितरां सावरकरः स्वमित्राणां सम्मत्या शीघ्रमेव पेरिसं प्रतस्थे। परं तत्र न चिरं तस्थौ; ततो यदा स लन्दनमागतः, आरक्षिभिः परिगृहीतः। २३।१।१९११ तमदिनाङ्के आजन्मकारावासदण्डेन सोऽदण्डयत। परं तस्य लेखा भाषणानि च इङ्गलेंडस्य जनताया मपि बलीयांसं प्रभावं पातयितुं प्राभूवंस्तस्मात् भूयांस आंग्ला अपि भारतस्य स्वतन्त्रतान्दोलन मन्वमन्यन्त। ते तम्प्रति प्रदत्तं कारावासदण्डं व्यरौत्सुः। परं तत्रत्यं शासनं विरोधमवज्ञाय तं मेरियापोतेन भारतं प्राहिणोत्। पोतस्थितः सः नाहं कारागारे निपत्य स्वदेशं सेवितुं शक्नुया मतोऽस्मात् पोतान्निर्गमनं केनापि प्रकारेण कर्त्तव्यमित्येतन्निश्चित्य स आत्मानं रक्षिभ्यः संरक्ष्य समुद्रेऽकूर्दत। तरन् सागरं स फ्रान्साधीनद्वीपतटमात्मानं प्रापयति स्म परं हन्त, तत्रत्यै रारक्षिभिः सः पुनः आंग्लदेशस्यारक्षिभ्यः समर्पितः। तेनैव जलयानेन स भारतं नीतोऽभूत्। भारताधिकरणेन कालपानीयकठोरदण्डेन सोऽदण्ड्यत। दण्डं भोक्तुं सः अण्डमान निकोवर-राजधानीं पोर्ट ब्लेअरम्प्रति प्राहीयत। सावरकरेण आत्मकथायां तत्रत्यस्य कारालयजीवनस्य यद् वर्णनं कृतमस्ति तत्पठनेन स्वतन्त्रतोन्मादमत्ता उपासका स्वदेशस्य दासतां समूलमुन्मूलयितुं याः याः परमासहनीयाः कठोरतमाः व्यथाः हसन्तो हसन्तोऽसहन्त तासां भवति सम्यगवगतिः। आशुतोष लाहिड़ी-हृदयरामसिंह-भाई परमानन्द-पण्डित परमानन्द झाँसी वासिप्रभृत्यनेकक्रान्तिकारिणो यस्मिन् कालकोष्ठेऽसंख्यातानि हृदयविदारणदक्षाणि कष्टानि सेहिरे तस्मिन्नेव सोऽप्युषित्वा क्षुधां तृषां च सहमानः प्रभाततः सायं यावत् तैल-यन्त्रं चालयन्, अन्याश्च बहुविधा अरुन्तुदवेदना

उपभुञ्जानोऽनेहसं निनाय। भीषणानि कष्टानि सहमानोऽपि स जीवनं निराशाग्रस्तं न व्यदधात्। मातृभूमि निमित्तेन कष्टानि सस्मितं सहनीयानीत्येतदेव सः स्वकीयानन्यान् वन्दिनः सहचरानुपादिशत्। तत्रैव स. स्वज्येष्ठबन्धुं गणेश सावरकरं, सोऽपि देश-सेवापराधादेव तत्र वन्दिजीवन कष्टानि भोक्तुं निहित आसीत्, लोचनगोचरं कृतवान्। उभावपि अकस्मादेवान्योऽन्यं दृष्ट्वा आश्चर्यितौ भवन्तौ प्रीत्या अश्रुसम्पृक्तनयनावभूताम्। कारागार कठोरनियन्त्रणात् तौ न परस्पर मेकत्र स्थातुमपि समर्थावास्ताम्। येन केनापि प्रकारेण तौ स्वस्वपत्रे यं भावमानङ्क्तुः स आसीद् हृदय मर्म्मस्पर्शी। सावरकरस्तानि प्रचण्डानि कष्टानि सहमानोऽपि यदा तदा समये प्राप्ते सति कविताश्च मनोविनोदयितुं प्रणिनाय। हन्त, आश्चर्यं महत्; ता भयानक यातनाः अपि तस्य कविहृदयं न निर्वापयितुं क्षमा अजायन्त। कारागाराधिकारिण स्तत्र नानाविधै नव-नवैरुपायै र्वन्दिनः प्रपीडयन्ति स्म; कदापि यवन कर्मचारिभिस्ते हिन्दुवन्दिनः कदर्थयन्ति स्म, कदापि च प्रहरभिस्ते तान् दुन्वन्ति स्म।

दश वर्षाण्यनिशं सावरकर स्तत्रत्यान् अत्याचारान् सहते स्म। २१।१।१६२१ तमेशवीयदिनाङ्के सः कालकठोराद् दण्डान्मुक्तिं प्र प। सः स्वज्येष्ठबन्धुगणेशसावरकरेण साकं पोतेन भारतमाजगाम। परं क्षिप्रमेव तौ द्वावपि बन्धू धृतौ रत्नागिरौ च स-प्रतिबन्धं न्यधायिषाताम्। न तौ राजनीतिक कार्ये भागं ग्रहीतुं न च सभासु भाषितु मादिष्टावास्ताम्। परं सावरकरस्तस्यामपि स्थित्यां बहूनि पुस्तकानि लिलेख। भारतीयेषु राष्ट्रियभावनाः सञ्चारयितुं, संवर्द्धयितुं प्रबलीकर्तुं च देशप्रेम, सः पत्रिकासु पत्रेषु च लेखानलेखीत्। तत्प्रेरणयैव तदीयः कनीयान् भ्राता नारायणरावः 'श्रद्धानन्द' इत्येतन्नामकं साप्ताहिकं पत्रं सञ्चालयामास। सः कल्पितेन नाम्ना तत्रापि लेखान् प्रकाशयाम्बभूव। तेषां लेखानां प्रभावात् समग्रेऽपि देशे राष्ट्रियतास्फुलिङ्गा वर्षितु मारभन्त। जना उद्बुध्यन्ते स्म।

सावरकरस्यैव प्रेरणया 'हिन्दूमहासभा' इत्येतन्नाम्ना राजनीतिकसंगटन माथोजितमभूत्। इयं हिन्दू महासभा एकतः आंग्ल-शासन मुत्सादयितुं सशस्त्रक्रान्ति प्रचारे प्रवृत्ताभवदेकतश्च ईसाईधर्मप्रचारकै रीसाईत्वं नीतान् हिन्दून् पुनः ईसाईत्वाद् धिन्दूत्वं नीतवती। शासनं शुद्ध्यान्दोलनं संवरीतुं सावरकर मादिशत्, परं सावरकरो 'यावदीसाइधर्मावलम्बिप्रचारका ईसाईकरणान्न विरंस्यन्ति तावत् शुद्धिकार्यमपि न विरतं स्याद् इत्येतदुत्तरं प्रददौ। शासनं किमपि न ततः कर्तु मशकत्। षोडशवर्षाणि रत्नागिरौ सः वन्दिन्यां दृष्ट्यां जीवन मनैषीत्। तद्बन्धनात् मुक्ते सति तस्मिन्, सहस्रशो जना स्तं वर्धापयन्ति स्म।

महात्मनो गान्धिनोऽनुरोधात् यदा सुभाषचन्द्र आत्मानं राष्ट्रियमहासभाया (कांग्रेसस्य) अध्यक्षतातो दूरीकृतवान्, सावरकरस्तत्पदमङ्गीकर्तुं प्रार्थितोऽभूत् परं स 'नाहमहिंसासिद्धान्तेषु विश्वसिमि' इत्युक्त्वा तत्प्रार्थनाङ्गीकरणे स्वकीयमसामर्थ्यं प्रादर्शयत्। सुभाषचन्द्रे सावरकरस्य ते विचाराः स्वप्रभावं प्रातिष्ठिपन्। सः 'अतः परस्तात् राष्ट्रियमहासभया सह कमपि सम्बन्धं न निधास्यती'त्येतां प्रतिज्ञां कृत्वा सशस्त्रक्रान्त्यामात्मानं कृत्स्नतया प्रावीवृतत्। सः (सुभाषचन्द्रः) स्वयोजनाया अवतारणातः प्राक् सावरकरेण सह वार्तां कर्तुं मुम्बईं ययौ। सः स्वयोजनां निदधत् तमचकथत्—

'जनतायाँ जागृति मुत्पादयितुं वयं देशस्य प्रमुखेषु नगरेषु स्थापितानां वैदेशिकशासकप्रतिभानां विध्वंसनं विदधीमहीत्येतदहं विचारयामि। कार्यमिदं कलिकातायां 'हालवेल' प्रतिमां भङ्क्त्वा प्रारब्धं स्यात् ··· ···' सावरकरो ध्यानपूर्वकं सुभाषचन्द्रस्य विचारं निशम्य गम्भीरतया प्रावोचत्—'हालवेलादि प्रतिमाः उत्साद्य चेद् भवादृशां कुशलनेतृणां जीवनं वर्षाणि यावत्, कारागारे प्रक्षिप्येत चेत्, तदा कदापि न तद् वरम्। भवान् देशान्तरं गत्वा तत्रत्यान् भारतीयान् संगठनसूत्रेण निबध्नातु; सशस्त्रक्रान्तिसन्देशं वितनोतु, समये भारत-देश भक्ताश्च भवदीयां सहायतां कर्तुं सन्नद्धाः स्युः।' नेता सुभाषचन्द्रस्तत्कथितं सम्यग् गम्भीरतया विचार्य सत्वरमेव आंग्लान् विप्रलभ्य देशान्तरं प्रस्थितः। तत्र सः स्वौद्देश्यपूर्तौ संलग्नोऽभवत्। सावरकररचितग्रन्थांश्च स्वयमेव मुद्राप्य स्वतन्त्र भारतचम्वै व्यतरत् तान्।

प्रतिबन्धे दूरीभूते सति सावरकरः समग्रेऽपि स्वकीये भारतदेशे बभ्राम। स्थाने स्थाने सभां कृत्वा जनेषु सशस्त्रक्रान्तिद्वारेण स्वाधीनता-प्राप्ति विषयकं सन्देशं व्यतानीत्। भागलपुरे समायोजितं हिन्दू महासभाधिवेशनं सम्भावयितुं स यदा गच्छन् आसीत्, आंग्लशासनं तस्मिन्नधिवेशने प्रतिरोधं समस्थापयत्, परं सः तं प्रतिरोधमवमत्य उपासरत्। अतः स गया स्टेशने आरक्षिभिरध्रियत्। धृतोऽपिसोऽधिवेशने नियते समये भवितेत्युदघोषयत्। समुपस्थापितेऽपि महती प्रत्यवाये, जनितेषु सत्स्वप्युपप्लवेषु जनता, महासभायाः सदस्याश्च सावरकरस्य भाषणं, यत् तिलक-पौत्रेण नियते स्थाने, नियतेचानेहसि श्रीकेतकरेण पठितम् अश्रौषुः श्रीकेतकरोऽन्ये च शतशो जना अध्रियन्त परं तस्मिन्नेव नियतेऽहनि (२५।१२.'४१,भागलपुरकारालये च तदधिवेशन कार्यं सम्पन्नतां नीतमभूत्। सकलोऽपिदेशः सावरकरस्य तेजसा अभ्यभावि। पाकिस्तानदेश-योजनाया अपि दृढ़तया विरोधो वीरदेशभक्तेन कृतः। स जिन्नाभिमतां तां योजनां न देशहिताय युक्काममंस्त। सप्तचत्वारिंशदधिकैकोनविंशतिशततमेशवीयेऽब्दे अगस्त मासे पञ्चदशे दिनाङ्के देशो यदा स्वातन्त्र्यसमीरे श्वसिति स्म तदा सञ्जातो हि स रक्तपातः, यस्मिन् यवनाः

सहस्रशो जनान् व्यापादितवन्तः, सहस्रशो नार्यो बालाश्च अपाह्रियन्त, सहस्रेभ्योऽप्यधिका गेहा अदह्यन्त, सहस्रशोऽबोधा बालाः क्रूरतया अहन्यन्त, सावरकरस्य हृदयमच्छिनत् । सः 'देशरक्षार्थं शत्रुभ्यः, सीमायां विशाला सेना नियुक्तीकृता स्याद्' इत्येतद् भारत-शासनमवाबोधयत् परं न तत् तत्र ध्यान माचकर्ष । अचिरेणैव तत्कृता भविष्यवाणी सत्यतां गता । पाकिस्तानेन काश्मीरोपरि आक्रमणं कृत्वा तस्य बहुभूभागः स्वाधिकारे कृतः । तस्मिन् काले सरदार भाई पटेलः पाकिस्तान सेनाकृत मुन्मादं चूर्णयितुं स्वकीयां भारतीयसेनां प्राहिणोत्–इत्येतत् तदीयं कार्यं तमतूतुषत् । श्री पटेले तदीयो विश्वासोऽवर्धत । स (पटेलः) एव देशं मज्जनाद् रक्षितु मर्हेत् इत्येतां धियं स तत्र निबबन्ध । सर्वेषामपि देशीयराज्यानां निलयने तत्कृतं कार्यन्तु तं (सावरकरम्) भृशमप्रीणयत् । परं यस्मिन् महामानवे स दृढीयसीमास्थां न्यदधात् तस्य, १५।१२।'५० दिनाङ्के, जातं निधनं तस्य (सावरकरस्य) हृदयोपरि कठोरं प्रहारं व्यदधात् । यं हि वीरं कठोरकठोरतरकारागारकष्टानि न विचलितं कर्तुं मशकन् स एव तन्निधनात् विचचाल; रुरोद च नेत्राभ्यामश्रुधारां वर्षन् भृशम् । अथ च स चीनेन सह भारतस्य वर्धमानां मैत्रीं दृष्ट्वा शासनं यद्यपि सावधानं चकार परं १९६२ तमेशवीयवर्षेतत्कृतेनाक्रमणेन तत्स्वप्नभङ्गो भवितुमशकत् । चीनदेशो भारतस्य पर्याप्तं भूभागं स्वाधिकारे कृतवान् । एताः स्थितय स्तस्य स्वास्थ्यमहिनत् । १९६५ तमेशवीयाब्दे पाकिस्तानकृताक्रमणे सति भारतीय सेनां संग्रामाजिरेऽवतार्य प्रधानमन्त्री लालबहादुर शास्त्री पाकिस्तानं यदा पराजितं कृतवान्, सः (सावरकरः) प्रसन्नमनाभवन् शास्त्रिणं मुहुः प्राशंसदवर्धापयच्च । ताशकन्दव्यतिकरस्तु हा, तस्य जीवनमेव २६।२।१९६६ दिनाङ्के पञ्चत्वं नीतवान् ।

श्लाघामहै तं विधिना हि केन, स्वातन्त्र्यहेतो र्निजमातृभूमेः ।
हिन्दू जनानां च हिताय वीरः, कष्टानि यः सन्ततमेव सेहे ॥



# डॉ. भीमराव अम्बेडकरः

असकृत् सवर्णैर्भारतीयै र्योऽसवर्णो भारतीय आहतोऽभूत् परं यो न्याय्यात् सत्पथात् कदापि नात्मानमस्त्रंसयत्, न च धैर्य्यमेव कदापि योऽमुञ्चत् अपितु यः स्वकीयं प्रियं लक्ष्यमधिगन्तुं सततं कठोरतमं संघर्ष मन्वतिष्ठन्नेव पर्यलक्ष्यत; यस्तस्मिन् समये स्वकीयं संघर्षमारभत यस्मिन् समये अस्पृश्यानामुद्धरणस्य सर्वा अपि सम्भावनाः समाप्ति मुपेताः; तदर्थं कृतप्रयत्नानां प्रयतमानानां महतां महतामपि पादाः प्रावेपन्त; तेषामास्था धूततां साहसञ्च क्षीणता मुत्साहश्च क्लान्ततां प्रापद्यन्त; परं सत्यामप्येतादृश्यां शोचनीयायां स्थित्यां, यो बाधाः पराभवन्, प्रत्यवायान् अभिभवन्, व्यवधानानि निराकुर्वन्, परिपन्थि-समुपस्थापितानन्तरायान् सञ्चूर्णयन्ननारत मस्पृश्यानामधिकारार्थं, सामाजिके आर्थिके राजनीतिके शैक्षणिके च क्षेत्रे तेषां प्रतिष्ठापनार्थं प्रयस्यन् यदुल्मुकं प्राज्वालयत् तदद्यापि न निर्वापितं, न न यदद्यापि कृशतां मलिनतां वा न गतमस्ति। स्वातन्त्र्यालोके समग्रस्यापि भारतीयस्येतिहासस्य यन्मन्थनं विहितमभूत् विहिताच्च मन्थनादुद्भूता हि चेतना जातीया प्रतिष्ठा च यद् दृढं बलं प्रबलञ्च संरक्षणमवाप्नुतातां, यो हि तत्कर्तृत्व सौभाग्यमभिविन्दन् साम्प्रतमपि स्वीयेनाध्यात्मिकेन प्रकाशेन देदीप्यते; यः स्वकीययैव शक्त्या मत्या विदग्धतया निपुणतया च नैजे ऽभिमते साध्ये सफलतामध्यगमत्, यो धर्मस्य सनातनस्य विशदां व्याख्यां व्यदधाद् यस्य च जातीयतायाः परिकल्पनासीदतितरां विशङ्कटा। यश्च कोटिशः प्रपीडितानस्पृश्यान् भुवः पुत्रान्, ये मानवशरीरं बिभ्राणा अपि ग्रामाद् बहि र्जीर्णशीर्णासु पर्णशालासु निवसन्तो नाना दुःखाकुल जीवनं वोढुं सप्रसभं क्षेपिता भवन्तोऽद्यापि प्राप्यन्ते; ये निरन्तर मविरामं परिश्रमं कुर्वन्ति परं कृतस्य परिश्रमस्य विनिमयेऽनिशं प्रताडनमुत्पीडनं भर्त्सनां चावमाननामश्नुवते, येचाजस्र ममानवीया मसहनीयां यातनां सहन्ते, उद्धर्तुं परुषां चेष्टां कृतवान्, यः स्वकीयै रेव देशवासिभि र्भृशमसकृच्च न्यक्क्रियमाणोऽपि राष्ट्रस्य गरिमाण मेकताञ्च विघटनानलात् सदा गोपायति स्म सोऽस्ति माननीयो भीमरावोऽम्बेडकरः।

श्री डॉ० भीमरावस्य अम्बेडकरस्य जन्म महाराष्ट्र प्रदेशे रत्नागिरि ग्रामे महार्का (महार) भिधानेऽस्पृश्य जाति परिवारे पञ्चनवत्यधिकाष्टादशशततमेशवीयवर्षे अप्रैल मासे चतुर्दश दिनाङ्के बभूव। सञ्जातस्तु सोऽस्पृश्यकुले परं स भारतभाग्यविधातृषु महामानवेष्वन्यतमो भूत्वा वस्तुतोऽवततार भारतवसुन्धरायाम्। मातृपितृकृतं

नाम 'सकपाल' इत्येतदासीत् परं कालान्तरेण सः सकपालो 'भीमरावरामजी अम्बेडकर' इत्येतेन नामधेयेन प्रथितोऽभवत् ।

सकपालः—भीमरावोऽम्बेडकरः १६०७ ममेशवीयवर्षे मैट्रिक परीक्षाम्, १६११ तमेशवीयवर्षे बी. ए. परीक्षाम्, १६१५ तमेशवीयाब्दे एम. ए. परीक्षामुदतरत् । मेधावी कुशाग्रबुद्धिः सः परमव्युत्पन्नत्वादुज्ज्वलप्रतिभावत्वाद् बड़ौदानरेशात् पठनार्थं छात्रवृत्तिं परिगृह्य अमेरिकां ययौ तत्र सः कोलम्बियाविश्वविद्यालयात् 'एम. ए.' इत्येतमुच्चतममुपाधिं प्राप्य लन्दनमगमत् । विद्यानुरागी स तत्रोषित्वा एम. एस-सी.; डी. एम-सी., बार एट ला च प्रथम श्रेण्यां बभूव । तदनन्तर ञ्च स अमेरिकां गत्वा 'पी-एच. डी.' इत्येतमुपाधिं परिजग्राह ।

भवन्ति ये युवानो विद्याव्यसनिनो गुणग्राहिणोऽध्यवसायशीलास्ते सन्तोऽपि दारिद्रयवन्तोऽस्पृश्यवंशोद्भवाश्च प्रायेण जायन्ते विद्वदग्रेसरा लोकोत्तर वैचक्षण्य भाजो मनीषिमौलिमणयो गुणिगणवन्दनीयाः । अत्र प्रत्यक्षं विद्योतमानं निदर्शन मस्त्यस्मदीयश्चरितचारूवन्धुरः श्री डॉ. भीमरावोऽम्बेडकरः । अस्पृश्यकुलोत्पन्नत्वान्निःस्वत्वाच्च विद्यार्जनपथे तस्य पुरः प्रबलतमा दारुणदारुणतरा बाधाः समतिष्ठन्त । हिन्दु समाजः पदे पदे तं मनस्विनं नवतरुणं तिरश्चकार; हृदयमर्म्मस्थल वेधिनीभिः पीडाभिः स तं भृश न्यपीडयत् परं स मनस्वी धैर्य्येण तां तामसहनीया मवज्ञा मवमाननाञ्च सहमानो विद्यासूच्चतमां योग्यता मधिगन्तुमजस्रं पुरः प्रधावन्नेव समलक्ष्यत । न तावत् स विरराम यावत् स्वाभिमतं लक्ष्यं नावेधयत् । वस्तुतोऽम्बेडकरनीकाशानेव मनस्विनो मनीषिणोलक्ष्यीकृत्य केनापि कविनाभिहितमिदम्—

"गुरुन् कुर्वन्ति ते वंश्यान् अन्वर्था तै वंसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दु मण्डलम्" ॥

नात्र संशयः —

विद्वत्ता प्रतिभा चापि नापेक्षेते कुलं धनम् ।
तदर्थं शुभसंस्काराः कांक्ष्यन्तेनितरां सदा ॥

अम्बेडकरः स्वकीयेन परमकठोरेण परिश्रमेण, अद्भुतयोज्ज्वलया प्रतिभया, प्रकृष्टेनोत्साहेन, साहसेन च स्पृहणीयेन विद्याधनमुपार्ज्य जगति बुधवराणां मान्योबभूव ।

श्रीमान् अम्बेडकरोदेशान्तरादुच्चतमां शिक्षामधिगम्य ख्यातिञ्चोपार्ज्य यदा ज्ञानस्या गाधं शेवधि मादाय स्वदेशं निववृते स्वकीयं जीवनमादावध्यापने प्रावीवृतत्।

स ला कॉलेजे प्राचार्योऽभवत् परं क्षिप्रमेव तत्पदं हित्वा स आत्मानं प्राड्विवाक्क्षेत्रे प्रवर्तयामास। स तत्र कार्यं विदधत् प्रभूतं धनमुपार्जयन् यशश्चापरिमितमधिगच्छन् न तुतोष। सः पीडितानां शूद्राणामस्पृश्याणाञ्च पातितानां जनानां कृते मानवाधिकारं प्रदापयितुमभियानञ्चालयामास। हिन्दू समाजे येश्वपचाश्चर्मकाराः शूद्राश्च कथ्यन्ते तेषामुपरि कीदृशा निन्दनीया अत्याचारा अन्यायाश्च घोरा भवन्ति तान् निवारयितुं स न केवलं प्रचण्डमान्दोलनमारेभे, न केवलं स्वर मुत्थापयामास ग्रन्थांश्चानेकानजग्रन्थत्। स न केवलं तद्विषयेऽन्येषु च विषयेषु गवेषणापूर्णानि महान्ति महान्ति पुस्तकान्यररचत्। तद्रचितसाहित्याध्ययन मात्रेण श्री डॉ० अम्बेडकरः कीदृशीं प्रगाढां चिन्तन शक्ति, कींदृशी विस्मयावहां विद्वत्तां, कीदृशञ्चागाधं ज्ञानभाण्डागारं न्यदधादित्येतत् सम्यक् ज्ञाततां गच्छति। वस्तुतः सः स्वसमयस्य प्रखरतरमेधाशक्तिभृन्महान् मानव आसीत्। आसीत् स उच्चकोटिगतो लेखकः। यस्मिन्नपि विषये स्वां लेखनीं प्रवर्तयाम्वभूव तं पूर्णविशदव्याख्यापूर्वकं निदधौ। तद्रचितग्रन्थास्तदीयमध्ययनशीलत्वं पटुत्वञ्च प्रकटीकुर्वन्ति। तत्कृतानां केषाञ्चन ग्रन्थानामिह नामानि प्रस्तूयन्ते—

१. Manifesto-Sheduled caste federation (मैनीफेस्टो-सेड्य ल्ड कास्ट फेडरेशन)

२. Cast in India. (कास्ट इन इण्डिया)

३. What Congress and Gandhi have done to the untonchables (व्हाट कांग्रेस एण्ड गान्धी हेव डन टू दी अन्टचेबिल्स)

४. Who were the Shudras. (हू व दी शूद्राज़)

५. The untonchadles. (दी अन्टचेबिल्स)

६. Ranade, Gandhi and Jinnah. (रानाडे, गान्धी एण्ड जिन्ना)

७. The Buddha and his Dhamma. (दी बुद्ध एण्ड हिज धम्म)

८. Need for checks and Balances.
(नीडफॉर चेक्स एण्ड बेलेन्सेज़

९. Buddha and the future of his religion. (बुद्ध एण्ड दी फ्यूचर आफ़ हिज़ रिलीजन)

१०. Thoughts and linguistic states. (थॉट्स एण्ड लिङ्गस्टिक स्टेट्स)

नूनं डॉ० अम्बेडकरो महान् कर्मठो वाग्मी विद्वान् लेखकसत्तम मानव आसीत् तस्य जनु रन्यायप्रपीडितात्याचार कदर्थित दीनहीनजनोद्धाराय बभूव। आसीदसावन्वर्थः पुमान्—

स पुमान् अर्थवज्जन्मा यस्य नाम्नि पुरः स्थिते।
नान्या मङ्गुलि मभ्येति संख्यायामुद्यताङ्गुलिः॥

महाराष्ट्र प्रदेशे महार जाते विशालमधिवेशनमुद्घाटयन् डॉ० अम्बेडकरो यदाह तस्य कश्चनांश इह निधीयते—

"…… यावद् वयं हिन्दवस्तावदन्यायं प्रतिकर्तुं न क्षमाः। तन्निरसनाथ वल मपेक्ष्यते—मनुष्यबलं, द्रव्यबलं, मानसिकं बलम्। एषु बलेषु नैकमपि बलं वयं निदध्मः। हिन्दूधर्मस्य रचना वर्णकल्पनाधारास्ति। केन प्रकारेण मानवः परस्परं व्यवहरेत् इत्येतत्तु तत्र प्रतिपादितं परं कं व्यवहारं मानवो मानवे न विदधीत इत्येतत् तत्र न निरूपितम्। योधर्म एकन्तु विज्ञं तदन्य ञ्चाविज्ञं चिकीर्षति, न स धर्मः। यो धर्म एकन्तु शस्त्रवन्तमपरञ्च निःशस्त्रमेव कर्तुं माकाङ्क्षति, न स धर्मः।……. यो धर्मः केषाञ्चन जनानां कृते धनप्राप्तिमार्गमुन्मीलयति; तद्भिन्नानाञ्च जीवनं पराबलम्बि विदधाति न स धर्मः, अस्ति स्वार्थपरायणता। ….ईदृशोधर्मो न ममप्रियः।….एवँविधाया दासताया उन्मुक्ति स्तदैव सम्भवा यदा धर्मान्तरं गृहीतं स्यात्।……..यो धर्मो मन्दिरप्रवेशादस्मान् न्निबारयति तं धर्मं कथं वय मवलम्बेमहि? यो धर्मोऽस्माकं कृते जल मपि पातुं प्रतिषेधति तं धर्मं वयं कथं संश्रयेम? यो धर्मः शिक्षा ग्रहणात् वर्जयति नः, तं धर्मं कथं वयमुपजीव्य सन्तिष्ठेमहि? यो धर्मोऽस्माकं कृते भृत्यताप्रदानेऽपिन सहमतो यश्च धर्मोऽनुपद मस्मानवजानाति तं धर्मं कथं वयं श्रयेमहि"?

डॉ० भीमरावोऽम्बेऽकरो यस्मिन् कण्टकाकीर्णे मार्गे चलित्वा स्वोद्देश्य मासादयितुमचीकमत तत्र सः सफलतामधिजगाम। तस्य संघर्षमयं जीवनं तं सुखप्रदमनेहस मपि प्रैक्षिष्ट यदा ब्रिटिशस्य कुशासनस्यावसानमभूदस्पृश्यताऽभेद्यभित्तिरपि सिद्धान्ततया न्यपप्तत्। हरिजनाः (अस्पृश्याः) अपि तमधिकारमवाप्नुवन् योऽधिकारस्तेषां, चिरात् तेभ्योऽपहृतः। अमानवीयञ्च जीवनं नेतुं ते बलादबाध्यन्त तस्मात् कालाद् यस्यकालस्यातीतस्य सहस्रशोवर्षाण्यतिक्रान्तानि।

श्री डॉ० अम्बेडकरः स्वकीयस्य देशस्य कणे कणेऽस्निह्यत्। देशप्रेम तदीयायां धमन्यां धमन्यां सरयं प्रवहमान मासीत्। स देशस्य न वर्तमान एव भाविषु परिवर्त-

नेषु भविष्यति च विकासे आस्थां न्यदधात्। सः स्वतन्त्रस्य संगठितस्य शक्तिमतो भारतस्यासीन्निर्माणकृत् । राष्ट्रियाया एकतायाः स महान् समर्थको बभूव । एकस्मिन् स्वकीये लेखेसोऽलिखत्—" ....बहुसंख्यकानां जनानां कर्त्तव्यमस्ति महनीयं यत् ते भारतवासिनः सर्वामपि वर्गानैक्यसूत्रेण निबध्नीयुः" ।

अम्बेडकरमहाभागो महान् देशभक्तो महापुरुषोबभूव । सः स्वकीयेनैव देशेन स्वकीयै स्वेदेशवासिभिरसकृदवज्ञातोऽभवत् परं कदापि राष्ट्रस्य गुरुता मेकताञ्च विघटनोन्मुखीं द्रष्टुं नैच्छत् । स तथा प्रायतत यथा देशस्य गौरवं वर्धेत, एकता च परिपुष्येत् । स मनसि कर्मणि वचसि च राष्ट्रवादी आसीत् ।

श्री डॉ० अम्बेडकरस्य विधिवैदुष्यं देशानुरागं वृद्धिमत्त्वञ्च पं० जवाहरलाल नेहरू सम्यगजानात् । स तमपृच्छत यदा देशः स्वतन्त्रोऽभवत् । "अपि किं भवान् स्वतन्त्रभारतस्य प्रथमे मन्त्रि मण्डले विधिमन्त्रि पदं स्वीकुर्वीत ? स नेहरो रुदारां प्रवृत्तिमाद्रियत मन्त्रिमण्डले च सञ्जातः समाविष्टः । सः संविधाननिर्माण कारिण्याः समिते रध्यक्षोऽभून्मनोनीतः । स तदुत्तरदायित्वं समीचीनतया पूर्णयाश्रद्धयाऽवहत् । आधुनिकस्य च भारतीयस्य संविधानस्य प्रणयनं योऽकार्षीत् सोऽस्त्यादरणीय उपश्लोकनीयविधिवैशारद्यः श्रीमान् डॉ० अम्बेडकरः । तत्कृतं भारतीयं संविधानं न केवलं भारतस्य विधिपण्डिताः संसारस्य सर्वेऽपि विधिविद्वांसःप्राशंसन् भृशम् ।

डॉ० अम्बेडकरो हिन्दूधर्मे समागतान् दोषान् पुनः पुनः आलोचयामास । तेषु तेषु दोषेषु सत्सु न समाजस्य सर्वेऽपि वर्गा उन्नतिं कर्तुं शक्नुवन्ति । "ये जना भारते ऽस्पृश्या मताः सन्ति ते तु कदापि अस्मिन् वर्तमाने हिन्दुधर्मे तानधिकारात् प्राप्तुं न शक्नुवते येषामधिगमने तेषां (हरिजनानाम्) जन्मसिद्धोऽधिकार इति निगदन् स एकदा ब्रवीत्—" दुर्भाग्यादहं हिन्दु समाजे समुत्पन्नोऽभवम् । न तत्र मम गति रासीत् परं हिन्दु समाजे स्वां स्थितिं नाहंनिधास्यामीत्यत्र मम सर्वथैव गति वर्तते । अहं प्रतिजानामि यदहं हिन्दुः सन् नासूंस्त्यक्ष्यामि" । हिन्दुसमाजं मानवताविरोधिनं प्राप्य स बौद्धधर्मं स्वीकृतवान् ।

देशस्य भारतस्य दुर्भाग्यमेव बलीयो यद् डॉ० अम्बेडकरोऽपि—महान् आत्मानाना पमान कारिणीः यातनाः सोढुं बाधितोऽभूत् । हा, जनैः स आत्मा हिन्दुधर्मद्रोही, सवर्णशत्रु रित्येतदादिभि र्निन्द्यैः शब्दै राकारितोऽभवत् । परं डॉ० अम्बेडकरो विषमिव निपीय तत्सर्वं, सकला अपि बाधास्तरन् देशस्य मनुष्यतां निषेवितुं यानि यानि कष्टानि सेहे न कोऽप्यन्यस्तानि सोढवान् । सः वस्तुतंस्तु महान् मानवः, महान् आत्मा, आसीत् ।

५।१२।१९५६ तमेशवीयदिनाङ्के भुवमिमां भारतीयां, मन्ये, मानववासायोग्यां मत्वा दिवं प्रययौ ।

उदार चेता स न्यधात् स्वशेमुषीं
सदैव शूद्रोद्धरणे महान् बुधः
स संविधानं व्यदधान्महोज्ज्वलं
स्मरेच्चिरं तं भरतक्षिति भूंशम् ॥

अवेक्ष्य सोऽम्बेडकरो बुधाग्रणीः
जनेषु शूद्रेषु सवर्ण मानवैः
कृतं दुराचार मदूयतानिशं
भवन्ति सन्नीतिपरा हि सज्जनाः ॥

—: ० :—

# श्यामाप्रसाद मुखर्जी

या हि वङ्गप्रदेशस्य गौरवमयी वसुन्धरा कृष्णभक्तं चैतन्यं महाप्रभुं, योगिनम् अरविन्दघोषम्, कवीन्द्रं रवीन्द्रनाथ ठाकुरं, देशबन्धुं चितरञ्जनदासम्, नेतारं सुभाषचन्द्रबोसम् अजीजनत् सैवैकमीदृशं मानवकेसरिणमजनयत् यः साम्प्रतिके युगे देश-विच्छेदोद्भूतभयङ्करानलज्वालाभ्यो हिन्दुजनता मगोपीत् स आसीत् श्यामाप्रसाद मुखर्जी।

कलिकातायां ६·७·१६०१ तमेशवीय दिनाङ्के श्यामाप्रसाद मुखर्जी जनुरग्रहीत् कलिकाता विश्वविद्यालयस्य जीवनं श्रीमाननीय आशुतोष इवाशुतोषः तस्य पिता, माता च तदीया योगमायेव योगमाया आस्ताम् ।

श्यामाप्रसाद मुखर्जी भवानीपुरस्थ मित्र इंस्टीट्यूटात् सप्तदशाधिकैकोनविंशतिशततमेशवीयाब्दे प्रथम श्रेण्यां मैट्रिकपरीक्षाम्, एकविंशत्यधिकैकोनविंशति शततमेशवीयवर्षे प्रेसीडेंसी कालेजात् बी. ए. परीक्षाञ्चोदतरत् । समस्तेऽपि विश्वविद्यालये स एव तत्र प्रथमां श्रेणी मलभत । त्रिविंशत्यधिकैकोनविंशतिशततमेशवीय वर्षे च स वङ्ग साहित्ये एम. ए. परीक्षायां प्रथमश्रेण्यामुत्तीर्णोऽभवत् । बी. एल. परीक्षायामप्यसौ प्रथमश्रेणीं प्राप्नोत् । अब्दद्वयानन्तरं स इङ्गलेण्ड मगमत् । तत्र निवासं विधाय वैधीं परीक्षामुदतरत् । भूत्वा च विधिविद्वान्, स ततः स्वदेशं न्यवर्तत । सः स्वसमयस्य महान् गणितज्ञोऽप्यासीत् । लन्दनस्य मैथेमेटिकल सोसायट्याः सः सदस्योऽप्यत आसीत् । यदा हि स श्चतुर्विशतिवर्षवयस्क आसीत्, कलिकाता विश्वविद्यालयीय परिषदः सदस्यत्वेन वृतोऽभवत् । वसु-गुण-नन्द-चन्द्राब्दे कलिकाता विश्वविद्यालयो डी. लिट्. इत्येतेनोपाधिनातमाद्रियते स्म । तस्मिन्नेव वर्षे बनारस हिन्दू विद्यालयश्च तम् एल-एल. डी. इत्येतेन चोपाधिना व्यभूषयत् ।

१६२२ तमेशवीय वर्षे सः सुधादेवीमुपयेमे । तस्यां च स द्वौ तनयौ द्वे च तनयेऽविन्दत । गुणगुणग्रहग्लौरब्दैस्तवत्सरे भार्योपरेमे । तस्मात्कालात् सोऽजस्रं स्वं देश-सेवायामयूयुजत् । १६२४ तमेशवीयात् स यद्यपि कलिकातोच्चाधिकरणे वाक्कीलतां प्रारभत परं विश्वविद्यालयीयकार्याणां मध्ये तस्य भूयान् समयो व्यत्येति स्म । अहर्निशं विश्वविद्यालयकार्ये तदुन्नतौ च संलग्नत्वात् तस्य, जनः 'योग्यस्य पितुर्योग्यः पुत्र' इत्युक्त्वा तमश्लाघन्त । अनेकानिवर्षाणि यावत् स उपकुलपति पदञ्चाध्या-

साञ्चक्रे । तत्पदाधिष्ठितोभूत्वा स विश्वविद्यालयं भृश मुत्थापयामास । पाण्डेचर्याम् अरविन्द विश्वविद्यालय-प्रतिष्ठापने च तस्य उल्लेखनीयं योगदानमासीत् । चिरं सः पोस्टग्रेजुएट कौसिल-ऑफ आर्ट एण्ड साइन्स इत्येतस्य प्रधानोऽपि सन् कार्यं व्यदधात् । अष्टत्रिंशदधिकैकोनविंशतिशततमेशवीयवर्षे सः कमेटी ऑफ इण्टैलैक्चुअल कॉ·ऑपरेशनप्रयोजनेन 'लीग ऑफ नेशन्स' इत्येतन्नामधेयसंस्थाया अधिवेशनं सम्भावयितुं प्रतिनिधित्वेन प्रेषितोऽभूत् । भारतीयोऽयं प्रथमः, यम्प्रति प्रदत्तमभूत् सम्मानमेतत् ।

श्यामाप्रसाद मुखर्जी बंगाल विधानसभायाः सदस्यो भूत्वा जनतायाः अभिनन्दनीयां सेवां कृतवान् । यदा यवनाततायिन श्चटगाँव-मुंशीगंजकेसरगंज-पवना-ढाकाख्येषु नगरेषु हिन्दूनां सम्पदो यथेच्छं जह्रुः किञ्च महिलाना मपमानं चक्रुस्तदा राष्ट्रियमहासभायाश्च सदस्यांस्तत्कृतांस्तांस्तानत्याचारान् तूष्णीं सहमानान् विलोक्य मुखर्जी नितरामदूयत । स विधानसभायां मुस्लिमलीगं राष्ट्रियमहासभाञ्च निनिन्द । तेष्वेव दिवसेषु मः राष्ट्रियस्वयं सेवकसंघस्य संस्थापकं डॉ० केशव बालीराव हेडगेवारं वीरं सावरकरं च हिन्दूजातिं रक्षन्त मदर्शत् । तस्मात् हिन्दूमहासभा तं स्वदिशि आवर्जभितुं प्राभवत् । व्योम-वेद-गृह-चन्द्रा (१९४०) ब्देशवीये स भारतवर्षीय हिन्दू महासभायाः प्रधानः कृतोऽभूत् ।

एकचत्वारिंशदधिकैकोनविंशतिशततमेशत्रीयाब्दे श्यामाप्रसादो बङ्गेषु मन्त्रिमण्डले अर्थमन्त्रिपदमध्यास्त । १६-१०-१९४२ तमेशवीय दिनाङ्के मिदनापुरमण्डले भयङ्करं सामुद्रजलमहाप्लव उल्लोलो भवनुत्थितः । सहस्रशः स्त्रियः पुरुषाः बालाश्च तेन स्वोदरे निलीनीकृताः । सहस्रशो गृहा जले मग्ना अभूवन् । याश्च सम्पदो हि तेन विनाशिताः अनेकलक्षरूप्पकमूल्या स्तास्तु पृथगेव । आंग्लशासनं तं सकलमपि विनाशं सुखपूर्वकमपश्यत् । तन्मण्डलजनानां स्वतन्त्रता संग्रामकार्यकारित्वात् तद्-विनाशमेव द्रष्टुं तदुत्सुकमासीत् । डॉ० मुखर्जी नेदं सर्वं द्रष्टुमशकत् । अर्थमन्त्रित्वात् स मण्डलभ्रमणाधिकारं निधत्ते स्म । स ग्रामं ग्रामं गत्वा जनान् प्रति महतीं सहायतां प्रददौ । तान् सर्वथैव स आश्वासयति स्म । स मन्त्रिमण्डलात् पृथग्भूय दिवाशंनि दुःखितान् जनान् न्यषेविष्ट ।

१९४३ तमेशवीय वर्षे भयङ्करदुर्भिक्षेण पञ्चत्रिंशल्लक्षजनानां प्राणा गृहीताः। जनाः क्षुधया प्रपीड्यमाना भूत्वा असहनीयया वेदनया सह अम्रियन्त । शासनेन समाचारपत्रेष्वेतत्समाचारप्रकाशनाय आज्ञापि न दत्तासीत् । श्रीश्यामाप्रसादेन महा-वोधिसोसाइटी-रामकृष्ण मिशन-मारवाड़ीरिलीफ सोसाइटी प्रभृति संस्थानां सहायतया देशाच्च समस्तादन्नं धनं च महत् संगृह्य पीडितानां बन्धूनां कष्टानि हृतानि । तेष्वेव

दिनेषु ढाकानपरे भयङ्कराः साम्प्रदायिका उपद्रवाः प्रास्फुटन् । श्रीमुखर्जी क्षिप्रमेव वायुयानेन तत्र गतः । तदीयेन कठोरेण प्रयत्नेन उपद्रवाः शान्ता अभूवन्; हिन्दवः सुखश्वासं गृहीतवन्तः ।

१९४६ तमेशवीयवर्षे मुस्लिमलीगस्य ध्वजच्छायायां जिन्ना हिन्दू-विरोधि प्रचारं विततान । पञ्चालेषु रावलपिण्डीं समया हिन्दूनामेकैको ग्रामोऽग्निसात् कृतः । कलिकातायां हिन्दूजनं विचित्य विचित्य यवना व्यापादयन्ति स्म । मुखर्जी वीथ्यां वीथ्यां परिभ्रम्य त्रस्तान् प्रपीडितां श्च रक्षितवान् । तस्मिन्नेव वर्षे नोआखाल्यां हिन्दूषु महान्तो महान्तो नृशंसा अत्याचारा यवनै रक्रियन्त । समाचारनिरोधाय तारस्तम्भा अपि निपातिताः । यदा डा० मुखर्जी स्वबन्धूनां कष्टानि ज्ञातान्यकार्षीत् स तत्काल एव नावा नोआखलीमगमत् । स्वजीवनमपि सङ्कटे निपात्य स मुस्लिमनेतृणां सबिधे गत उपद्रवां स्तथात्याचारान् न्यरोधयत् ।

देश-विभाजनं यदा राष्ट्रिय महासभयाऽङ्गीकृतं; समस्त-पञ्जाब-बंगाल-आसाम-सिंध सीमाप्रान्तानां मुस्लिमलीगस्योत्सङ्गे निपातनञ्च यदा निश्चिततां नीतमभूत् तदा श्रीमुखर्जी महाभागस्य हृदयं सदु;खं प्राकम्पत । प्रथमन्तु सः देश-विभाजनमेव व्यरौत्सीत् । सफलताया मप्राप्तायां सत्यां, स महात्मगान्धिप्रभृति सर्वप्रमुखनेतृणां समीपे गतः; आंग्ल-शासनाधिकारिष्वप्यमिलत् । सः स्वकीयकठोरश्रमेण पञ्जावस्य बंगालस्थ च अर्द्धं भागं मुस्लिमलीग-हस्तनिपतनाद् रक्षितुमशकत् । एताव-देव न, पाकिस्ताने कृतवसतीनां हिन्दूनां मुस्लिमलीगात् सुरक्षाकरणीया; अन्यथा भारतशासनं समुचितं कार्यं कर्तुं पूर्णमधिकारं निधास्यति; अनेनैव प्रकारेण यवनानां सुरक्षाया भारो नेहरूशासनेन स्वस्कन्धोपर्यारोपणीय इत्येतदर्थं सः प्रायस्यत् ।

१५-८-१९४७ तमदिनाङ्के भारते सति स्वतन्त्रे, इतः स्वातन्त्र्यसमारोहः सोल्लासं सातिशयमोदं स्थाने स्थाने महनीयानि महांसि च समायोजितान्यासन्, ततः बंगाल-पंजाब-सिन्ध-सीमाप्रान्तवर्तिनां हिन्दूनाँ सम्पदोलुण्ठने हिन्दूमहिलानामवमानने आततायिनः स्वैरिणः संलग्ना आसन् । एतत् सर्वमपि नितरां श्यामाप्रसाद-मानसम-पीडयत् ।

स्वतन्त्र भारतस्य प्रथमे मन्त्रिमण्डले डॉ० श्यामाप्रसाद मुखर्जी वाणिज्य मन्त्रिपदे आसीनोऽभूत् । त्रिंशन्मासान् यावत् पदे तस्मिन् स्थितो भूत्वा कुश लतया श्रमेण च देशं स न्यषेवत । बंगलौरस्थ वायुयानानां, विजयापट्टमस्थ जलयानानां, विहारस्थावकरादिसामग्रीणां, चितरञ्जन ( बंगाल ) स्थरेलेञ्जनानां कर्मान्ताः कर्म-शालाश्च तद् योग्यतायाः जीवज्जागृतृज्वलत्प्रमाणम् ।

निजामस्य हैदरावादे यदा हिन्दूना मवस्थानं नितान्तं दुर्भरमभूत् तेष्वत्याचारा दिनानुदिनं वर्द्धिता अजायन्त तदायं मुखर्जी आसीद्, येन तथा प्रयत्न उपायश्च कृतो येन तेभ्योऽत्याचारेभ्यो हिन्दूनां रक्षणात्मकं कार्यं सरदार पटेलाधीनतांनीतमभूत् । सर्व एव विदन्ति इदं यत्पटेलो बुद्धिमत्तया अमोघां नीतिमवलम्ब्य अन्यदेशीयराज्यानीव हैदरावादराज्य मपि यथा वशंगतं चकार तथैव स आततायिजनितोपप्लवांश्च व्यरीरमत् ।

पूर्वीय बङ्ग प्रदेशे ( पाकिस्ताने ) हिन्दून् निहन्तुं तान् सर्वथैव विध्वंसयितुं सहस्रबाहवो भूत्वा यवनाधमाः संलग्ना अभूवन्, सहस्रशोनार्योऽपहृता; स्तासां सतीत्व ञ्च दूषितं; हिन्दूजगति महान् हाहाकारो य उत्थित स्तेन सकलोऽपि संसारो दुःखाकुलः कृतः । हिन्दूनां प्रयुतविंशतिकं भारतं शरण मगृह्णन् । पञ्चाशदयुतं च तेषां व्यापादितम् । एताः शोचनीयाः घटनाः श्रीश्यामाप्रसादस्य नयनेऽश्रुपरिपूर्णेऽकुर्वन् । स भारतशासनस्य पुरः हिन्दूनां दयनीयां दशां चित्रितांकृतवान् । यदा कृते सत्यपि महति प्रयासे भारतीयं शासन मत्याचारप्रपीडितान् हिन्दून् प्रति उपेक्षामेवअदर्शयत्, तदा श्री मुखर्जी मन्त्रिमण्डलादात्मानं पृथक् कृतवान् । सः स्वकीयं त्यागपत्रं प्रास्तावीत् । सरदार पटेलोऽसकृत्, तं भवति सति यत्कार्यं सम्पद्यते तदपि हतगतिकं भवेत् यदि भवान् नात्र स्थास्यति' इत्यवोचत् परं स यथानिश्चयं १६।४।१९५० तमेशवीयदिनाङ्के मन्त्रित्वपदादात्मानं दूरीकृत्य हिन्दू जाति सेवायां रतोऽभवत् ।

श्री श्यामाप्रसाद मुखर्जी शासनस्य नीति मालोचयामास । प्रजातन्त्रात्मकं शासनं तदैव समुचिततया न्याय्यया पद्धत्या कार्यं मनुष्ठातु मर्हति यदा विरोधिपक्षोऽपि भवति बलीयान् । तद्यत्नेन २१।४।१९५१ तमेशवीयदिनाङ्के भारतीय जनसंघः प्रतिष्ठापितोऽभूत् अस्मिन्नेवान्तराले मुखर्जी राष्ट्रिय स्वयं सेवक संगठनात् तत्कार्याच्च भृशमतुष्यत् । स तत्संघस्य सत्पुत्रान् जनसंघेऽन्तर्भावयितुं प्रायस्यत्, परं न ते तदर्थं मुद्यता अजायन्त ।

श्री मुखर्जी २८।३।१९५२ तमेशवीयदिनाङ्के हिन्दूमहासभा-रामराज्यपरिषद् अकालीदलादिकं संयोज्य नैशनल डेमोक्रैटिक दलस्य निर्माणं व्यदधात् । तस्य सदस्या आसंस्त्रिशत् ११।५ तो नवा संसत् कार्यं मारभत । श्रीमुखर्जी समये समये भारतशासनस्य वैदेशिकीं नीतिमेकतोहि प्राशंसदेकतश्च पाकिस्तानसम्बन्धे तत्कृतास्त्रुटीः प्रदर्श्य तस्यघोरं विरोधञ्च विहितवान् ।

भारतीयसंसदि श्रीश्यामाप्रसादेन भारतस्य वैदेशिकीं नीति मधिकृत्य असकृत विचारा अभिव्यक्तीकृताः । उक्तञ्च तत्र तेन पाकिस्तानम्प्रति यास्मदीयशासनस्य

नीति रस्ति सास्यदेशस्य हितमेव हिनस्ति । यथा यथा वयं स्वकीयं सौहृदपूर्णं हस्तं प्रसारयामस्तथा तथा पाकिस्तानदेशोऽस्मासु स्वशात्रवं प्रबलयन् उपसरति । भारत-हिताय शासन मालोचयता तेन यद् यद् उदीरितं तत्सर्वमपि भारतीय जनतायामिमं विचारं समुदपादयत्—भारतीय संसदि यदि कश्चिदीदृशो जनोऽस्ति यः शासनस्य दुर्बलां नीति स्पष्टतया प्रत्याख्यातुं साहसं निदधाति तर्हि सोऽस्ति भारतकेसरी श्री श्यामाप्रसादमुखर्जी ।अयमेव सः यस्य गर्जनं समग्रमपि संसद् भवनं धूनयति ।

देशे सस्यस्य न्यूनतया रायलसीमायां प्रतीच्ये बंगप्रदेशे च जना क्षुधया असूं-स्त्यक्तु मारभन्त । श्रीमुखर्जी 'शासनं' पूर्णयाशक्त्या जनतां रक्षेदिति सानुरोधं न्यवेदयत् । सः संसत् सदस्यान् अगादीत्—'ते प्रत्यहं रूप्यकाणि चत्वारिंशल्लभन्ते; तेषु रूप्यकाणि दश क्षुधितानां कृते ददीरन् येन ते ( क्षुधिताः ) स्वोदरभरणे क्षमाः स्युः' । परं न ते किं तदीय मिदमपि वच उपैक्षिषत ?

श्रीश्यामाप्रसाद मुखर्जी भारतस्य बौद्धधर्मावलम्बिन्या महाबोधि सभाया प्रधान आसीत् । तत्प्रयत्नात् तेऽवशेषा ये साञ्चीस्तूपाद् गृहीता अभूवन् आंग्ल शासनानेहसि ते पुनः इंगलेण्डात् भारतेन प्राप्ताः श्री नेहरूणा १४।१।१९४९ तमे-शवीयदिनाङ्के कलिकातायां महासमारोहे तेऽवशेषाः श्रीश्यामाप्रसादाय प्रत्यर्पिताः । बौद्धधर्मावलम्बिनः मुखर्जीकृतं तं प्रयासमतितरां प्राशंसन् । ते तान् अवशेषान् स सम्मानमपूजयन् मुखर्जी महाभागञ्च तदर्थमुपाश्लोकयन् । तदवशेष सन्दर्भं एव वर्मादेशं यदा श्रीमुखर्जी गतस्तदा तत्रत्यः प्रधानमन्त्री श्रीथाकिनन् 'रङ्गून मागम्य भवतास्मद्राष्ट्रस्य महती सेवा कृतास्ति ·········अस्मद् देशस्य जना भवन्तं नैजा-त्मानं मन्यन्ते' इत्येतदादिशब्दैस्तमार्चीत् ।

द्विपञ्चाशदधिकैकोनविंशतिशततमेशवीयेऽब्दे यदा पाकिस्तान देशस्य यावनं शासनं 'पूर्वबंगस्य (पूर्वीयपाकिस्तानस्य) हिन्दूजनतां ध्वंसयितुं, तस्याः संख्यां न्यूनी-कर्तुं च गुप्ताज्ञाप्रपत्रं स्वकीयाधिकारिणां सविधे प्रेषितं चकार; हिन्दवश्च नाना अस-हनीयानि कष्टानि सहमानाः अपहृतधनधराधामादिका भूत्वा पुनः भारतं, स्वजीवन-रक्षार्थं, स्वमातृभूमि ( पूर्वीय पाकिस्तान ) तः पलायन्ते स्म, श्रीमुखर्जी स्वकीयान् दुःखितान् बन्धून् सेवितुं तेषां कृते सहायतां प्रदातुं च कलिकातामागच्छत् । हिन्दू महासभामजदूरसंघाद्यखिलसंगठनानां प्रतिनिधय आहूता अभूवन् । एतस्यां महत्यां सभायां 'पाकिस्तानं प्रति दीयमाना सहायता, तदर्थं प्रेष्यमाणाः सर्वविधा अपि परि-च्छदा निरोद्धव्याः; येन स देशः सभ्य देश इव हिन्दुषु व्यवहरेत्···· " इत्येतदाशयकः प्रस्तावः पारितोऽभूत्; स च भारत शासन सेवायां सम्प्रेषितः । अन्ततश्च श्री

मुखर्जी जनतां प्रार्थयत् यत् २३।११ दिनाङ्के समग्रेऽपि देशे विरोध-दिवसो मानितः स्यात्। श्रीमुखर्जी तत्र अन्याश्च सभाः आयूयुजत। तासु सः मानवतार्थ मस्माभिः पाकिस्तान द्वारेण क्रियमाणेषु अन्यायेषु घोरोविरोधः प्रकाशनीय इति समभाषत।

निर्दिष्टाया विपदोऽवसानात् प्रागेव 'जम्मू' इत्येतदाख्य स्थानात् हिन्दूनां करुणाह्वानं श्रीमुखर्जी महामनसः श्रवणगोचरमभूत्। 'भारतस्य राष्ट्रियध्वज इहापि उद्धुन्वीत; भारतस्य विधानमिहापि कार्यान्वितं भवेत्, जम्मू कश्मीरराज्यं भारतस्याङ्गत्वाय कल्प्येत' इत्येतत् तत्रत्याया जनताया इष्ट आसीत्। परं शेख अब्दुल्ला मन्त्रिमण्डलेनतु सत्याग्रहिणः कारागारे क्षिप्ताः बहवश्च गोलिकाभि निहताः। अन्ये चानेके अत्याचाराः कृताः। एतां दुःस्थितिं दृष्ट्वा श्रीमुखजी जनतां वस्तुस्थितिमधिकृत्य परिचितां विधाय तां तद्विरोधाय प्रार्थयत अधिवेशनान्यपि स्थाने स्थाने कृत्वा प्रस्तावान् पारितान् अकारयत्। सः पं० जवाहरलाल नेहरोः अब्दुल्ला शेखस्य च सकाशे अत्याचारान् दूरीकर्तुं, जनताया न्याय्यं मतं पूरयितुं च पुनः पत्राणि प्राहिणोत्। परं हन्त, भारतशासनेन श्रीमुखर्जी श्री एन. सी. चटर्जी श्रीमौली चन्द्र शर्माद्यै कोनविंशतिनेतृभिः सह वन्दीकृतः। यदा सः वन्दित्वान्मुक्तः कृतः पुनः जम्मू-कश्मीर जनताहितार्थं सततमुद्योगं कृतवान्। सः जम्मूं च प्रतस्थे; पदं तत्सीमायां यदैव प्रविष्टो वन्दीकृतः। कारागारे सोऽस्वस्थतां गतः। शरीरं च नश्वरं स महान् आत्मा तत्रैव तत्याज। भारतेतिहासे स महान् आत्मा सदैव आदरेण सह स्मृतः स्यात्।

श्यामाप्रसाद-करुणार्द्रमना मनीषी, हिन्दूनृणां नयविशारदतिग्मबुद्धिः।
कष्टानिकिञ्च विपदोऽप्यनिशं निरस्तुं, कुर्वन्प्रयास ममितं ह्यजहोदसून् स्वान्॥

---

# गुरुदेव गोलवलकरः

स वर्तमान युगस्यासीदनिकेतो धृतश्वेताम्बरः संन्यासी। सोऽविरामगत्या निरन्तरं स्वधर्मं संस्कृतिञ्चाधारीकृत्य निजदेशस्य गौरवमयसमुज्ज्वलभाविकालनिर्माणार्थं सत्प्रेरणाप्रदायको महान् पुरुष आसीत्। त्रिंत्रिशदब्दपर्यन्त मजस्रं स देशस्य चतसृणामपि ककुभामादितोऽन्तं यावत् स्वकीयायामोजस्विन्यां वाण्यां 'संघे शक्तिः कलौ युगे' इत्येतं मन्त्रं सर्वत्र सर्वेषामपि कर्णकुहरेषु प्रतिष्ठापयितुं यतते स्म। रेलयान मेव तदीयस्थायिवासस्थलतां गतमासीत्। भारतीयान् भावान् प्रतिजनमानसधरातले विकिरितुं समग्रेऽपि देशे प्रत्यब्दं विचचार। स जीवनस्य लक्ष्यं समक्षे निधाय लक्षशो यूनश्चरित्रचारून् सुशिक्षा-सुसंस्कृतान् संगठितान् अनुशासननिबद्धांश्च विदधत् भाषा-प्रदेशविषयिणीं सङ्कीर्णतां संश्लथयन् जीवनस्य सकलेष्वपि क्षेत्रेषु नवमेव पावन जीवनं सञ्चारयन् तमाशावादं, तं विश्वासं जने जने जागरयाम्बभूव येन देशोऽजेयं बलमधिगन्तु मर्हति। सुदृढ-सबल-वैभवविभूषितसमाज निर्माणार्थं येन कठोरं व्रतं गृहीतमासीत् स आसीत् श्री माधवराव सदाशिवराव गोलवलकरः।

श्री गुरु गोलवलकरः प्रखरराष्ट्रवादस्य प्रवक्ता राष्ट्रस्य पुनरुत्थानार्थं चेष्टमानाया स्तरुणश्रेण्या मान्यो नायक आसीत्। यदा हि तदीयादिनचर्या, तदीय आशोवासश्च, तदीय आचारो विचारश्च, तदीयाश्चरित्रगता विशिष्टताश्चानुशील्यन्ते तदा तस्य स्फुटतयैव आध्यात्मिकविभूतित्वं सिद्ध्यति। आध्यात्मिकाधारोपर्येव तस्य समग्रमपि व्यक्तित्वं सृष्टमभूत्। अत एव सः गुणगुणाब्दान् यावल्लक्षशः उच्चशिक्षा-वाप्तानां तरुणानां हृदयासनासीनो भूत्वा देशस्य यूनां मण्डलम्प्रति त्यागमयंसेवानिष्ठं जीवनं गमयितुं प्रेरणां प्रदातु मशकत्। अनेकदिव्यसद्गुणविभूषितत्वात् निर्मलनिःस्वार्थाहंभावशून्यध्येयनिष्ठ जीवनत्वाच्च तस्य कियन्तो हि उदीयमाना युवान आकृष्टा मुग्धाश्च भूत्वा स्वव्यक्तिगत जीवन-प्रग्रहं तस्यैव कृते समर्पितवन्तः; किञ्च स्वकीयाः समस्ता अपि आकाङ्क्षाः आशाश्च सुख स्वप्नानपि सर्वान् उत्सृज्य ते श्रीगुरोः सङ्केते किमपि कर्तुं सर्वदा प्रस्तुता एव अदृश्यन्त।

प्रत्यूषतो निशीथकालं यावत् समज्यानामायोजने, शाखानां निरीक्षणे, भाषणे, पत्रलेखने, स्वाध्याये अन्यान्येषु च विविधेषु कार्येषु नितरां संलग्नः सन्नपि संध्योपासनायां नित्यपूजायां च कस्मादपि कारणाज्जनितं कमपि व्यतिक्रमं श्री गुरुर्न सहते स्म। स्थितस्योच्चलितस्य निषण्णस्य वा तस्य मुखाद् गोविन्द-गोपाल-श्रीकृष्णादि-

भगवन्नामानि सभक्तिभावंनिःसृतानि प्रायेण अश्रूयन्त। सः श्रद्धाजुषा मनसा तथा व्यवस्थां कृतवान् यथा तस्य मातापितरौ सुखपूर्वकं चतुर्धामयात्रां कर्तुं शक्नुयुः। स्वयं च सः तीर्थेषु तेषु श्रद्धया व्यचरत्। श्रीवदरीनाथधाम्नि पञ्च दिनानि स न्यवसत्। तदानीं श्री प्रभुदत्त ब्रह्मचारिणो हि श्रीमद्भागवत कथाश्रवणानेहसि ब्रजं विहाय श्रीकृष्णस्य मथुरागमनसन्दर्भे प्राप्ते सति तस्य नयनाभ्या मविरलाश्रुप्रवाहः प्रवृत्तोऽभवत्।

श्री गुरुदेवस्य समग्रमपि जीवनं, भावा भावनाश्च, विचारा आचाराश्च व्यक्तित्वं च भगवदास्था-धरामभिव्याप्य समतिष्ठन्त। तन्नेतृत्वसञ्चालितदेशोत्थान-कार्यपरकचिन्तनधारायां कार्य-प्रणाल्यामपि च तस्याध्यात्मनिष्ठत्यागमय तपः पूत जीवनस्य भावावदाततायाश्च प्रभावः स्फुटतभैव पर्यलक्ष्यत। गतेषु शतकेषु संसारस्य भूयोभि र्देशै र्नैजोत्थानप्रयोजनेन रक्ताञ्चिताः क्रान्तयः एकाधिनायकसैनिकत्वम्; औद्योगिक-सामाजिक-विपर्यासः, प्रचण्डयन्त्राविष्कारो भौतिक्यो बहुला विचारधाराश्च प्रदर्शिताः सन्ति। गुरुदेवस्तेषां सर्वेषाभपि गम्भीर मध्ययनं विवेचनं च विधाय भारतस्य पुनर्जीवननिमित्तेन तत्प्रकृतिं सम्यग् विचिन्त्य तद् आध्यात्मिकं जीवनदर्शनं यत् मनुष्य त्वाद् देवत्वंनयति, अनुसृत्य शाश्वत सद्गुणसम्पन्नमनुष्य निर्माणमेव स्व-ध्येयस्य पाथेयत्वेन स्वीकुरुते स्म। तदीया रसना 'सर्वे भवन्तु सुखिनः', 'तेन त्यक्तेन भुञ्जीथाः' इत्येतदादिकान्युपनिषत् वाक्यानि प्रयुञ्जाना दृष्टाऽभवत्। भगवद्गीतां रामचरितमानस मन्यांश्च धर्मग्रन्थान् अध्येतुं सः स्वकीयान् कार्यकर्तॄन् सदैव अनू-नुदत्। तस्य कार्यपद्धते रनिवार्याण्यङ्गानि जातान्येतानि—विविधेषु सामूहिकेष्वायो-जनेषु, संघीयशिक्षावर्गेषु कार्यालयेषु च भगवद्गीतायां द्वादशस्याध्यायस्य पाठः, प्रात स्मरणीयानां महापुरुषाणां प्रतिदिनं पुण्यस्मरणं, देववाण्याः संस्कृतस्य-च प्रयोगः। धूम्रपान-मद्यपानाभक्ष्यभक्षणादौ वैधानिक्या दृष्टया कस्यापि प्रतिबन्धस्यासद्भावे सत्यपि निःशेषेऽपि संगठने सामान्यतस्तादृशीनां कुप्रवृत्तीनां प्रतिषेधस्य स्वस्थां परम्परा मति-तरामुच्चभूम्यां यद् ब्यापकतया प्रातिष्ठिपत् तदस्ति गुरुदेवस्य सदाचारनिष्ठं जीवनम्। अथ च समाज-हिताय व्यक्तिगतं जीवन मुत्सृज्य आजीवनं च ब्रह्मचर्य्यमङ्गीकृत्य स्वकीयानां सर्वेषामपि कार्याणां किञ्च बुद्धि-शक्ते र्विनियोगं समाज-सेवायै विदधतां कार्यकर्तॄणां निर्माणमपि तस्य समाजसमर्पित जीवनस्यैव सत्फलं वर्तते।

संघस्य स्वयंसेवकै र्व्यक्तिगततया संगठिततया च राजनीतिकाभिरुचगां गृह्य-माणायामपि गुरुदेवः स्वकीयं कार्यं राजनीत्याः प्रभावात् सर्वथैव अगौप्सीत्। समाजं राष्ट्रञ्च दूषयतां राजनीतिकवर्गाणां प्रयासानत्यन्त तीक्ष्णवलवत्तरभाषया प्रति-रुन्धानोऽपिगुरुदेव आत्मानं राजनीत्यां न लिप्तं कृतवान्। वहुभिः प्रलोभनै रनुरुध्य-

मानोऽपि सः सर्वथैव राजनीतिकर्दमाद् दूर एव समतिष्ठत। एकदा कश्चिल्लब्धप्रतिष्ठः स्वजनो गुरुदेव म्प्रति नितरा मेव व्यदधादनुरोधं राजनीत्यां भागं ग्रहीतुं; स तत्र 'राजनीति र्भवतु नाम विषं परं दैवीं शक्तिं पातुं यथा शङ्कर स्तत्पानं कृतवां स्तथैव सोऽपि तस्य पानं विदधीत' इत्येतां युक्ति युक्ता मुक्तिं निदधत् तमन्वरौत्सीत्। परं परमविनम्रभाषायां गुरुदेव उदतरदित्थम्—"विषं पक्त्वा तस्य कण्ठाभूषणत्वे परिणमनं तु शङ्कर एव कर्तुं शक्नोति; नाहं शङ्करः; सामान्यप्राण्येवाहम्, अतः जनोऽयं क्षम्यताम्"।

गुरुदेवो धर्मजागरणविषयकविविधप्रयासानां साफल्याय नैज मुन्मुक्तं साहाय्यं प्राददात्; तेषां सफलतार्थं प्रवासं च स्वीचकार; एतावदेव न, आत्मानमपि तत्र प्रवर्त्य उक्तप्रयोजनेनैव अनुयायिनश्च नुदति स्म। सुदुरपर्वतीयक्षेत्रेषु धर्म जागरणं, स्वामिविवेकानन्दस्मारकनिर्माणं, जगति प्रसृतानां भारतीयानां (हिन्दूनाम्) तदीयसन्ततीनाञ्च भारतीयैः संस्कारै र्दीक्षितीकरणं, बलीयः साधनमवलम्ब्य संगठनात्मकस्य कार्यस्य प्रबलीकरणं किञ्च भारतीय मात्रस्य मानविन्दुभूतगोमातृ रक्षणं नैजजीवनस्य प्रयोजनं मन्यमानोऽसावनारतं प्रायस्यत्। देशे शतशो यानि बालमन्दिराणि, यत्र शिशूनां सम्यक् पालनं निरीक्षणञ्च भवतः, प्राप्यन्तेः, तेषां समेषामपि निर्माणं तदीय सदभिल.।।त्र सम्भवमभूत्।

एकदा वर्धां निकषा 'सिन्दी' ग्रामे संगठनस्य सर्वानपि प्रमुखान् कार्यकर्तॄन् अवगमितस्वविचारान् विधाय प्रशिक्षण हेतवे विशिष्टमायोजनमारचितमभूत्। तस्मिन् समये स्वकीयया तेजस्विन्यागिरया गुरुदेवः सर्वेषामपि कार्यकर्तॄणां मानस-पटले अजेयायाः अभेद्यायाः संगठनकर्मक्षमायाः शक्ते र्मनोमुग्धकरं चित्रमालिखत्। नूनं सा शक्ति र्देशं समुन्नमयन्ती, प्रत्नानां भारतीयाना मृषीणामादर्शं पुरो निदधती, अखिलेऽपि जगति भारतीयतत्त्वचिन्तनस्य विजयपताका मुद्धूनयन्ती, अदमनीयाकाङ्क्षया चाभिभूता भवन्ती अविचलोत्साहेन विद्योतिष्यते। तच्छक्तिश्च एकभावानुप्राणितम् एक मेव लक्ष्यं परिगृह्य एकस्मिन्नेवादेशे वा निर्देशे स्वकीयं सर्वस्वमपि पणीकर्तुमुद्यतमुच्चरत्यागमयं निष्ठावत् सद्गुणसम्पन्नं यूनां निकुरम्बम् विनयन्ती राजेत। भाषणे उपसंहृते सति अटलबिहारी बाजपेयी गुरुदेवं 'भवद्वर्णिता प्रचण्डशक्ति र्न किं पाशवे सक्ता स्यात्' इत्येतत् पप्रच्छ। तत्क्षण एव भावभावितायां मुद्रायां सः "यस्याः शक्ते रधिष्ठान माध्यात्मिकं भवति न सा कदापि पाशत्रं शरव्यीकरिष्यति; न भवेदस्मदीय मिदमधिष्ठानं भग्नमित्येतदेव चिन्तनीयम्" इत्युदतरत्। तदीयास्ते शब्दा अद्यापि तत्कालोपस्थितमानव-मानसेषु कूजन्ति।

तस्मिन्नेव सन्दर्भे गुरुदेवः समस्तानपि स्वकीयान् कार्यकर्तॄन् विनेतुं प्रोवाच, यदा हि अस्मन्मानसे कर्तृत्वाभिमानः समुत्पद्येत तदास्माभिः स्वकीया दृष्टि र्जगद्गुरु

शङ्कराचार्यस्याद्यस्य जीवने क्षेप्तव्या । नूनमस्माक महङ्कारः समग्रो भवेद्धराशायी । स दण्डधारी संन्यासी एकाकी एव स्वकीयेऽल्पीयस्मेव जीवने सम्पूर्णमपि समाज मेक्यसूत्रेण निबद्धीकर्तुं समग्रमपि देशं स्व चरणाभ्यामेव मिमीते स्म; चतसृष्वपि दिशासु चतुरो मठान् संस्थापयामास; सिद्धान्तग्रन्थांश्च रचयामास । एतावत् प्रभूतं महनीयतमं गुरुतमं च कार्यं स द्विंत्रिशद्वर्षवयस्येव पूर्णतया सम्पाद्य स्वजीवनलीलां च संववार । यदा हि वयं तमीक्षामहेऽस्माकमखिलोऽप्यवलेपो भस्मीभवति ।

गुरुदेवोऽध्यात्मनिष्ठ जीवनस्योच्चस्थितिमध्यास्ते स्म । तदाभास स्तदीयव्यक्ति-गतादर्शजीवनस्य व्यवहारस्य चावलोकनेन प्राप्तो जायते । अनुशासननिबद्धानां स्व-कीयानुयायिनां नेता स निर्णायिकासु घटीषु समये समये यान् महत्त्वमहनीयान् निर्णयान् प्राददात् विचारान् वा अभिव्यानक् ते वस्तुत स्तदीयस्वरूपस्थित्यामधिकतरं प्रकाशं निपातयन्ति । गम्भीरतमे सङ्कटे भीषणतमोत्तेजनाभृत्सु क्षणेषु शान्ति धृति रक्षुब्धता च तत्र अदृश्यन्त । तस्मिन् विषमे काले सम्पूर्णमपि संघठनं शान्तं किञ्चानु-शासनपरं निधातुं स यद् अद्भुतं सामर्थ्यं प्रादीदृशत् तदस्ति वस्तुतोऽतितरां श्लाघनीयम् ।

निर्भीकता सत्यं, सिद्धान्तनिष्ठा च तस्यैकैकस्यां धमन्यां मान्तिस्म । संगठने आरोपितं प्रतिबन्धं विनिवारयितुं गुरुदेवस्तत्कालवर्तिनं प्रधानमन्त्रिणं जवाहर लालं, गृहमन्त्रिणं सरदार पटेलं किञ्चान्यान्यान् भारतीयशासनोच्चाधिकारिणः प्रति यया दृढतया निर्भीकतया च पत्र-व्यवहारं व्यधात् सा तस्य नित्याभयस्थितत्वं विनिगमयति ।

समाजे सर्वतः प्रसृतान् सहस्रशः क्षुधितान् निराश्रयान् जनान् वीक्ष्य स 'दरिद्र नारायणस्य' दीनहीन दशां वर्णयन् करुणाविगलितहृदयोऽवरुद्धकण्ठश्च भवन् गुरुदेव इद मभिदधत् प्रायेण प्राप्तोऽभूत्, "अस्माकं चतुर्ष्वपि भागेषु सहस्रशः सन्ति प्राणिनस्ते ये सन्ति क्षुधिता निरवलम्बाश्च । ते जीवनस्य निम्नतमात्ययिकताः अपि हन्त, पूरयितुं न क्षमाः सन्ति । हा ते तत्रापि विप्रलभ्यन्ते । तेषां कष्ट कथाः पाषाण कठोराणि च हृदयानि क्लेदयन्ति । नूनमीश्वर एव तद्रूपेष्वात्मानं परिणमय्य समुपस्थितोऽस्ति ।.... तत् किं यत् सोऽस्मत्सकाशादिच्छति ? सः स्वसेवायाः कृते अस्मान् प्रति सदवसरं प्रदातुं तत् तद् रूपं धारयित्वा आयाति ...." । तदीयैस्तै र्हृदयोद्गारैः सम्पूर्णेऽपि देशे दीनहीनदरिद्राणां हिताय सेवा-शिक्षा-चिकित्साकेन्द्र-निर्माणाय संचालनाय च तेषां केन्द्राणां सत्प्रेरणा च दत्तास्ति ।

गुरुदेवो हिन्दू संस्कृते रमरत्वस्य च रहस्य मुन्मीलयति स्म— "....अस्मद् राष्ट्रियास्तित्वस्याधारो राजकीयसत्ता कदापि नासीत् ... राजकीयसत्ताधारिणोऽस्मत्समा-

जस्य न कदाप्यादर्शत्वेन मता अभूवन् । .. सम्पत्सत्ता-प्रलोभनात् ये सदैव परा आसन् येषु उत्तमोत्तमा गुणाः सन्ततं व्यराजन्त, ये हि समाजमेकात्मतायां समुपस्थापयितुं सर्वथैव क्षमतां निदधुस्ते सन्तो महात्मान एव तत्पथप्रदर्शका आसन्.... ।

आसीद् वस्तुतो गुरुदेवो मेधावी निर्भ्रान्तः क्रान्तदर्शी । तद्विधं महात्मानं समाजः पुण्यै रेव प्राप्नोति । सोऽनेकभाषास्वसाधारणं प्रभुत्वं न्यदधात् । सः प्रत्ननूत्न-विचारधारासु पारङ्गतः सदाचार-सुचारुः सद्गुणसण्डितः पण्डित ओजस्विन्या वक्तृत्वशक्ते र्धनी आसीत् ।

भारतीयगगनमण्डलस्य ज्योतिर्मयनक्षत्रमसौ पञ्चमे दिनाङ्के जूनमासे त्रिसप्तत्यधिकैकोनविंशतिशततमेशवीयाब्दे तिरोहिततामगात् ।

ओजस्विवक्ता शुचि साधु वृत्तो
निर्भीकचेता धृतधर्मनिष्ठ
उत्थापकः संस्कृति चारुतायाः
भक्तोऽभवत् सः प्रियभारतस्य ॥



अनारतं विबुधवचो महीयतां
दिवानिशं भुवि नितरां तदेधतां
स्वदेशभक्ति रिह जनेषु वर्धतां
पुरारिणा च मयि कृपा विधीयताम् ॥

# परिचयः

ख्याते धौलपुरे तपोनिधिकुले श्रीकान्यकुब्जाभिधे
रत्नैस्तेऽब्दे जनुरग्रहीदिति निधिव्योमग्रहेन्दुश्रिते
नित्यं देवगवीं जगद्धितकरीं संसेवमानो मुदा
नैजं योऽयगमयत् सदा च समयं भक्त्या हरिं संस्मरन्

भक्तो यस्य बभूव साधुहृदयो गीर्वाणवाण्याः प्रधीः
वेलां स्वां गुरुदेवसंज्ञकपिता काव्यानि कुर्वन् कवि
र्भूत्वा स्टेशनमास्टरः शुचिमति विद्वान् विभागोत्तमे
रेलाख्ये विदितेऽनयच्च, जननी यस्याभवद् धर्मधीः.

प्रेक्षावन् प्रियराष्ट्रभक्तसरलश्चिन्तामणिश्चानुजः
शुक्लः शास्त्रिमनोरमा च भगिनी ज्येष्ठा गुणालङ्कृता
पत्नी रामकली हरेश्चरणयो र्भक्तिं दधाना भृशं
शुक्लो डॉक्टर देवशङ्कर सुतो यस्यास्ति विज्ञानवित्

आयुष्मान् मनुसंज्ञकश्च विनयी शुक्लोऽनुरागः प्रियः
पौत्रौ शीलसुशोभितौ, मतिमती सौभाग्यशुभ्रा स्नुषा
सन्तोषप्रथिता, शिवस्थहृदया यस्यात्मजा माधवी
विद्वान् यस्य च शुक्लडॉक्टर सुहृच्छ्रीकृष्णकान्तः प्रियः,

पुण्यश्लोकपुनीतचारुचरितोदात्तद्युतिद्योतित-
श्रीमच्छ्रेष्ठमहात्म-वीर-कवयो गीता हि तेनाञ्जसा
स्वग्रन्थेऽत्र मनोज्ञसंस्कृगिरि प्रीत्यार्द्रचेतोजुषा
शुक्लोपाह्वरमेशचन्द्रकृतिना श्रेयोऽभिकाङ्क्षाभृता

सांख्ये कापिलदर्शने सुविदिते योगे च पातञ्जले
साहित्ये समवाप्य मान्यपदवी माचार्यनाम्नीमयं
भूत्वा मास्टर ऑफ आर्ट च ततः पी-एच. डी. सत्वरं
विज्ञाना मनुगोऽनयच्च सकलं ह्यध्यापने जीवनम्

नो ज्ञानं न च शेमुषीं न च कलां धत्ते न कश्चिद गुणं
सोऽयं मन्दमति र्जनोऽस्ति सुजना जानन्त्विति ज्ञानिनः
तस्मात् ताः सकला हि पुस्तकगताः शोच्याः अशुद्धी र्बुधाः
मार्जन्तु स्वदयामयेन मनसेयं प्रार्थना सादरम्,



# राष्ट्रिय गान



जन-गण-मन-अधिनायक जय हे
भारत-भाग्यविधाता
पंजाब-सिन्धु-गुजरात-मराठा-
द्राविण-उत्कल बंग
विन्ध्य-हिमाचल यमुना गंगा
उच्छल जलधि तरंग ।
तब शुभ नामे जागे,
तव शुभ आशिष मांगे ।
गाहे तव जयगाथा ।
जन-गण-मंगलदायक जय हे
भारत-भाग्यविधाता ।
जय हे, जय हे, जय हे !
जय जय जय जय हे ।।



## आचार्य डा० रमेशचन्द्र शुक्लस्यान्याः कृतयः–

१. प्रबन्ध रत्नाकरः
२. नाट्य-संस्कृति-सुधा
३. गान्धि गौरवम् ( उत्तरप्रदेशशासनपुरस्कृतम् )
४. लालबहादुरशास्त्रि चरितम्
५. भरतचरितामृतम् (उत्तरप्रदेशशासनपुरस्कृतम्)
६. विभावनम्
७. बंगलादेशः
८. गीतमहावीरम् ( उतरप्रदेशशासनपुरस्कृतम् )
९. संस्कृत वैभवम्, सम्पादितो ग्रन्थोऽभिनन्दनात्मकः
१०. संस्कृत प्रबन्ध प्रभा
११. इन्दिरा यशस्तिलकम्

प्राप्तिस्थानम्–

**(अ ) सुधाकमल ग्रन्थालयः,**
२६३, उत्तरी गान्धी कॉलौनी,
मुजफ्फर नगर, (उ. प्र.)

**(आ) वाणी-परिषद्, आर-६,**
उत्तम नगर, वाणी-विहार,
नई दिल्ली-११००५९